एतेषां तातपादाः हारीतगोत्रजाः, सर्वक्रतुयाजिनः पुत्रवर्याः केशवसोमयाजिनामानः; 'आसुरि' इति प्रख्यातवंशजाः। अम्बा च शठमर्षणगोत्रसम्भवस्य श्रीनाथमुनिवंश्यस्य श्रीशैल-पूर्णस्य (तिरुमलैनम्बि) सहोदरी कान्तिमती (भूदेवी) नाम्नी। अभिजन-मातापितॄणां विषये मङ्गलश्लोकाल्लभ्योऽयमंशः—

'श्रीमन्महाभूतपुरे श्रीमत्केशवयज्वनः।

कान्तिमत्यां प्रसूताय यतिराजाय मङ्गलम्॥' इति।

एतच्छिष्यप्रवराणां श्रीमतामान्ध्रपूर्णनाम्नाम् (वडुहनम्बि) आचार्याणां श्लोकेन—

'कान्तिमतीसुकुमारकुमारं केशवसिंहकिशोरमुदारम्।

रामानुजमहिराडवतारं मूकान्धानपि मोक्षयितारम्॥'

इति। अनेन श्लोकेन मातापितरौ, नाम, अवतारस्वरूपम्, जीवनस्य परमं लक्ष्यम् इतीमे अर्थाः एकत्र ज्ञापिताः। एतेषाम् आचार्याः महापूर्णार्याः (पेरियनम्बि)। प्राचार्याश्च नाथमुनिनाम्नः परमयोगिनः पौत्राः भगवद्यामुनमुनयः (आलवन्दार्)। अयमंशः—

'यत्पदाम्भोरुहध्यानविध्वस्ताशेषकल्मषः।
वस्तुतामुपयातोऽहं यामुनेयं नमामि तम्॥'

इत्यनेन भगवद्गीताभाष्यारम्भगतेन तेषामेव श्लोकेनावगम्यते। श्रीकाञ्चीपूर्णनामानः (तिरुकच्चि-नम्बि) पारमार्थिकानां केषाञ्चिदर्थानाम् अन्तरङ्गभावेनोपदेष्टारः हार्दगुरवः। परमसिद्धान्त-भूतोऽर्थश्च तेषामान्ध्रपूर्णानां श्लोकेनैवावगम्यते—

'गुण-गुणिनोर्भेदः किल नित्यः चिदचिद्द्वयपरभेदः सत्यः।

तद्द्वयदेहो हरिरितिसत्यं पश्य विशिष्टाद्वैतं तत्त्वम्॥' इति।

एतेषां भगवदेकपरतात्मकं वैराग्यं तत्प्रपत्तिश्लोकादित्थमवगम्यते—

'योनित्यमच्युतपदाम्बुजयुग्मरुक्मव्यामोहतस्तदितराणि तृणाय मेने।

अस्मद्गुरोर्भगवतोऽस्य दयैकसिन्धो रामानुजस्य चरणौ शरणं प्रपद्ये॥'

इति। सर्वेषामपि विषयाणां व्यामोहः कथञ्चित् सुत्यजो भवेत्, रुक्म (सुवर्ण)व्यामोहः परं; सर्वथा

केनापि नैव परित्यक्तुं शक्यते । तद्वत् एतेषामाचार्याणामपि रुक्मव्यामोहः दुस्त्यज एवासीत् । को विशेषस्तर्हि संसारिणामेतेषांच ? इति चेत् !

सत्यमेतेषां रुक्मव्यामोहः आसीदेव । परं तु न लौकिकस्य च्युतिमतो रुक्मस्य व्यामोहस्तेषांम् ; किन्तु अच्युतपदाम्बुजयुग्मरुक्मव्यामोहः । स च सर्वस्यात्मनः स्वभूतः स्वरूप-स्वभावानुगुणः । अध्रुवे धने रागं परित्यज्य, ध्रुवे धने रागः कार्यः, इत्येतदेव वैराग्योपदेशस्य परमं लक्ष्यम् । ईदृशश्च रागः रामानुजाचार्येषु समीचीन आसीदिति, सा च रीतिः उज्जिजी-विषुभिः आश्रयणीयेति च अयं श्लोकोऽस्मान् शिक्षयति । एते रामानुजाचार्याः सर्वाणि शास्त्राण्यधीत्य गृहस्थाश्रममपि स्वीकृत्य अनिर्वाच्येन भगवतः सङ्कल्पेन स्वीकृततुर्याश्रमाः, सर्वचेतनोद्दिधीर्षया यावदायुपकृतपरिश्रमाः आसन् ।

अयं चैतेषां ग्रन्थगतः असाधारणोऽतिशयः ; यत् कथञ्चित् विचारमध्येऽपि भगवन्नाम्नां तद्गुणानां च अत्यन्तप्रीतिकृतम् पुनः पुनः आम्रेडनम् । एतेषां भगवद्रसानुभवं विना केवलः शुष्को विचारः न कुत्राऽपि दृश्यते इति ।

एतेषां (निर्वाण) परमपदप्राप्तिः (क्रि.श. 1137) दुर्मतिसंवत्सरस्य माघशुक्लदशम्याम् आर्द्रानक्षत्रयुते दिने एवेति, आयुःकालः 120 वर्षाणीति च निर्णीयते विमर्शकैः ॥ आयुः— 'शरच्छतं व्यतीयाय सविंशमधिकं प्रभोः' इति वत् ।

हितार्था तदीया आज्ञा—१. पठित्वा भाष्यं तत्प्रवचनम्, २. अशक्तौ शठरिपोर्गिरि श्रद्धा, ३. वासः प्रभुपरिचितस्थाननिवहे, प्रभोः कैङ्कर्यं वा, ४. प्रपदनमनोरर्थमननम्, ५. प्रपन्नानां वा मे भवतु परिचर्यापरिचयः, ६. कुटीरं कृत्वाऽस्मिन् यदुगिरितटे नित्य-वसतिः, षडर्थाः श्रीशस्य प्रपदनविधौ साधकतमाः—इति ।

एतेषां शिष्य-प्रशिष्यसमृद्धिः, जीवने साधितोंऽशः, इत्यादिः सर्वोऽपि गुरुपरम्परा-प्रभावादेरेवावसेयः ।

तेषां केवलमाहात्म्यचिन्तनादपि, तत्कृतीनां चिन्तनं, तदनुरोध्याचरणं च तेषामत्यन्त-सम्मतमिति विमर्शकानां प्रतिभाति ॥

तैःकृताश्च ग्रन्थाः-

१. वेदार्थसंग्रहः।

२. भगवद्गीताभाष्यम्।

३. (शारीरकमीमांसाभाष्यं) श्रीभाष्यम्।

४. वेदान्तदीपः।

५. वेदान्तसारः।

६. शरणागतिगद्यम्।

७. श्रीरङ्गगद्यम्।

८. श्रीवैकुण्ठगद्यम्।

९. नित्यग्रन्थः। इति नव॥

तदुक्तं गुरुपराम्पराप्रभावे—

'गीताभाष्यं भूष्यवेदान्तभाष्यं सारं दीपं किं च गद्यत्रयं च।
वेदार्थानां सङ्ग्रहं नित्ययोगं प्राहैतान् यस्तं यतीन्द्रं भजेऽहम्॥' इति॥

## [श्रीभाष्यग्रन्थपरिचयः]

पूर्वतनैराचार्यैः तत्त्वहितपुरुषार्थविषये सम्यग्विचारपूर्वकनिर्णयोपदेशादिभिर्निर्णीतमर्थं मनसिकृत्य भगवद्बादरायणकृतानां शारीरकसूत्राणाम् उपवर्ष—भगवद्बोधायनादिभिः समीचीना महती वृत्तिः आरचिता समवर्तत। सा च पूर्वाचार्यैः (टङ्क) ब्रह्मनन्द्यादिभिः अर्थतो ग्रन्थतश्च समक्षिप्यत च। तत्र बोधायनीयायाः वृत्तेः कृतकोटिनाम्न्याः समीचीनताम् अत्यन्तविस्तारेण ग्रहणधारणविदूरतां लुप्तप्रायतां च विचिन्तयद्भिः, भगवदाज्ञासम्प्राप्तसमीचीनजन्मभिः सर्वचेतनहितैषिभिः भगवद्रामानुजाचार्यैः; स्वीयपरमाचार्यस्य यामुनमुनेः आज्ञां शिरसि धारयद्भिः, महता प्रयत्नेन कथञ्चिदेकवारं काश्मीरशारदापीठगतं तं वृत्तिग्रन्थं समवलोक्य, सन्धार्य च मनसा,स्वास्त शिष्यस्य कूरेशस्य (कूरत्ताल्वान्) साहाय्यमवलम्ब्य श्रीभाष्यापरनामधेयम् अक्लेशेन सूत्राक्षरार्थ-

विवरणपरं सम्प्रदायागतार्थानुसारि, शारीरकमीमांसासूत्रभाष्यं निरमायि। येन च एतत्सम्पादितेन महता उपकारेण, नाथोपज्ञं प्रवृत्तमप्येतद्दर्शनं रामानुजदर्शनप्रथामवाप।

इदं च श्रीभाष्यं पठन-पाठनपरम्परया सार्वकालिकं कर्तुं स्वयमेव श्रद्धया महान्तं प्रयत्नमाश्रित्य बहून्याचार्यपीठानि(74) च आरचय्य प्रवचननिर्मापणेन समभिवर्धितवन्तः त एव रामानुजाचार्याः। येन प्रयत्नेन भगवतां रामानुजाचार्याणाम् इयं प्रथा समजनि—यत् रामानुजाचार्या भुवः सकाशात् श्रीवैकुण्ठं परमपदं प्रति अकुण्ठितं सोपानं निर्मितवन्तः सर्वभूत-हितैषिणो महापुरुषाः इति। तच्च सोपानं चतुर्विंशतितत्त्वात्मकं (विवेक वैराग्यादिकं वा निष्कम्पग्रथनं परंपदमारुरुक्षूणामक्लेशाभयप्रदानेनात्यन्तोपकारि जातम्। यत्र च आरोढा पुरुषः, सर्वतत्त्वात्मकस्य सर्वधारकस्य सर्वनियन्तुः समस्तकल्याणगुणाकरस्य दयाजलधेः सत्यसङ्कल्पस्य सर्वज्ञस्य सर्वशक्तेः शरणागतवत्सलस्य अर्थितार्थकल्पतरोः सर्वकारणस्य परमपुरुषस्य श्रीनिवासस्य परस्य ब्रह्मणः प्रतिपदं चिन्तनेन, कुसुमशयने इव अक्लिष्टां ब्रह्मपथे गतिं सुखं लभेतेति॥

इदं च श्रीभाष्यं नवसहस्रग्रन्थात्मकमिति अक्षरसङ्ख्यानेन परिगणय्य निर्णीतमास्ते। शैली च अत्यन्तं सरला सती प्रविविक्षूणां हृदयङ्गमा, यथा यथा आस्वाद्यते तथातथा अपरि-मितानन्ताश्चर्यविचारबहुला नवं नवं तत्त्वार्थनिर्णयरसम् असन्दिग्धमन्यूनमनुभावयन्ती विजृम्भते। आनन्दमाशंसमानानां भगवद्गुणविग्रहविभूत्यादिविषयकास्खलितनिर्मलचिन्तनप्रदानेनानन्दं, वाद-कथाकुतूहलिनां कथाकौशलप्रदानेन तुष्टिं च सम्पाद्य ईप्सितप्रदं सत् कल्पतरुरिव शोभते इदं श्रीभाष्यम्।

अस्य च निर्विशेषाद्वैतदर्शने एव महान् कटाक्षः; यत्र औपनिषदीषु विविधासु विद्यासु ध्येयतयोपदिष्टस्य भगवतो गुणविग्रहविभूत्यादेः अपलाप एवान्ततः पर्यवस्येदिति एतेषामाशयः समजनि। तस्य च दूरीकरणं विशिष्टा(सविशेषब्रह्मस्वरूपा)द्वैतचिन्तकानामेतेषाम् अवर्ज-नीयमापतितम्।

अस्मिंश्च ग्रन्थे लेशतोऽपि न मतान्तरप्रद्वेषप्रवणतेति, ग्रन्थमवगाह्य अर्थचिन्तकानां सुनिर्णयम्। यतः अत्र पूर्वपक्षतया यानि यानि मतान्युल्लिख्य निरस्तानि तत्तन्मतप्रवर्तकानां

नामानि न कान्यपि निर्दिष्टानि । व्यक्तितिरस्कारादेः सर्वथा नावश्यकतेति, प्रत्युत तिरस्कारो नैव कार्य इति च एतेषाम् आदर्शः अस्माकं शिक्षक इति भाति ।

अस्य च श्रीभाष्याख्यस्य विशिष्टाद्वैतपरस्य शरीरकमीमांसाभाष्यस्य स्वोपज्ञत्वशङ्का तैरेव निराकृता दृश्यते ग्रन्थारम्भे एव—

'भगवद्बोधायनकृतां विस्तीर्णां ब्रह्मसूत्रवृत्तिं पूर्वाचार्याः संचिक्षिपुः ।

तन्मतानुसारेण सूत्राक्षराणि व्याख्यास्यन्ते—इति ।

तथैव अस्य दर्शनवर्त्मनः अनर्वाचीनता प्राचीनाचार्यपरम्परासिद्धत्वमपि च तैरेव विरचिते वेदार्थ-सङ्ग्रहनामके ग्रन्थे स्पष्टीकृते इति स्फुटम् । .

## [ग्रन्थनामविचारः]

अत्र 'श्रीभाष्यम्' इत्ययं श्रीशब्दघटितः ग्रन्थवाचकः शब्दः, पश्चात्तनैर्विद्वद्भिः भाष्ये स्वीयगौरवभावप्रदर्शनाय योजित'श्री'शब्दको वा ? ग्रन्थकारैरेव तथा प्रयुक्तो वा ? यदि तथा प्रयुक्तः, तर्हि तस्य को वा आशयः स्यात् ! इत्यादयः प्रश्नाः समुल्लसेयुः । तत्रैवमुत्तराणि श्रूयन्ते सम्प्रदायतः—

अस्यैव भाष्यस्य 'अव्याहतभाष्यम्' इति नामान्तरस्य यामुनार्यसंनिधिकृतप्रतिज्ञानु-गुण्येन सिद्धत्वात्, तस्याश्च श्रुत्याद्यखिलप्रमाणाव्याहतिरूपायाः श्रियः (श्रीशारदावरप्राप्तायाः) एतदसाधारणत्वात् श्रीभाष्यमिति ग्रन्थनाम्न्येव ग्रन्थकर्तृभिरेव योजितः श्रीशब्दः इति ।

अन्यच्च—'मोक्षोपायतया श्रुतिविहितभक्तिपदवाच्योपासनविषयभूतं ब्रह्म, श्रियः पतित्वविशिष्टमेव; न केवलम्' इत्यस्यार्थस्य ग्रन्थादिभूतमङ्गलश्लोकगतेन—

'ब्रह्मणि श्रीनिवासे भवतु मम परस्मिन् शेमुषी भक्तिरूपा'

इति पद्यभागेन श्रीपदघटितेन स्फुटं प्रतिपादनात् इदं श्रीभाष्यमिति । नहि निरुपपदं 'भाष्यम्' इत्येतत् केवलं नाम ग्रन्थकृता निर्दिष्टं स्यादिति ग्रन्थकृद्भिरेवायं प्रयुक्तः श्रीभाष्यशब्दः इति च ।

अपरं च 'सत्यैकालम्बि भाष्यम्' इति रीत्या, अद्वैतिभिरिव एतैः मिथ्यार्थानवलम्बितया

गुणविग्रहविभूत्यादिसत्यार्थविशिष्टस्यैव भगवतः उपास्यत्वस्थापनमपि भाष्ये भाषिता श्रीः। न ह्येतैः सगुण-निर्गुणाख्यं ब्रह्मद्वयमङ्गीक्रियते। यैस्तु तदङ्गीकृतं, तैः ब्रह्मणि वस्तुतोऽसतां मिथ्यात्मकानां गुणानामेव उपासनकाले चिन्तनार्थमङ्गीकारावश्यकता स्यात्। तस्मादपि इदं श्रीभाष्यमिति।

यथा वा व्याकरणशास्त्रस्य पतञ्जलिकृतं भाष्यमेव 'महाभाष्यम्' इत्युच्यते नाऽन्यत्; तथैव, शारीरकमीमांसाभाष्येष्वपि इदमेकमेव भाष्यम् 'श्रीभाष्यम्' इत्युच्यत इति वैशिष्ट्यं ज्ञेयम्।

## [ अस्य भाष्यस्य प्रणवसादृश्यम् ]

अस्य च श्रीभाष्यस्य अपरो विशेषः; यत् श्रीरङ्गविमानस्येव प्रणवाकारत्वम् अनुसंहितं श्रुतप्रकाशिकारम्भे—

'प्रपद्ये प्रणवाकारं भाष्यं रङ्गमिवापरम्।
परस्य ब्रह्मणो यत्र शेषित्वं स्फुटमीक्ष्यते॥'

इति। यथा श्रीरङ्गविमानं ऋग्यजुस्सामाथर्वाख्यवेदशृङ्गचतुष्टयात्मकेन ज्ञापकेन प्रणवतद्विकासरूपैः सर्वैर्वेदैर्वेद्यं, तद्विहितैः कर्मज्ञानात्मकैः सर्वैः आराधनैः आराध्यम्, अमृतं श्रियोऽपि श्रियं, श्रीरङ्गनाथं, सम्पुटात्मकस्य स्वस्य अन्तर्निहितं शृङ्गग्राहिकया ज्ञापयति—

'तस्य प्रकृतिलीनस्य यः परः स महेश्वरः'

इति; तथैव इदं श्रीभाष्यमपि, तापत्रयातुरैः अमृतत्वाय जिज्ञास्यं श्रीरङ्गनाथाख्यं परं ब्रह्म, निखिलवेद-वेदान्ताख्येन शब्दब्रह्मणा कर्मज्ञानादिभिराराध्यत्वेन प्रतिपाद्यतया स्फुटं बोधयतीति।

## [ अस्य ग्रन्थस्य प्रार्थनीयदेवतात्मकता ]

इदं च श्रीभाष्यं सम्प्रदायागततदर्थास्वादनतत्परैः अध्यात्मचिन्तकैः न केवलं सामान्यग्रन्थत्वेन भाव्यते; अपि तु देवतात्मकचेतनबुद्ध्येति अयं विशेषः अत्यद्भुतः अवगम्यते—

'अविस्तृताः सुगम्भीराः रामानुजमुनेर्गिरः ।
दर्शयन्तु प्रसादेन स्वं भावमखिलं दृढम् ॥' इति ।

### [ श्रीभाष्यव्याख्याः तत्कर्तारश्च ]

श्रीभाष्यग्रन्थस्यास्य प्राक्तन्यः अर्वाक्तन्यश्च बह्व्यो व्याख्याः अजायन्त । तासु साक्षाद्व्याख्या एव ज्ञाताः अत्र उल्लिख्यन्ते ।

| | |
|---|---|
| १. श्रीभाष्यविवरणम् ( लुप्तम् ) | श्रीराममिश्राः ( सोमाशियाण्डान् )। |
| २. श्रीभाष्यविवरणम् ,, | श्रीविष्णुचित्तार्याः (एङ्गलाऴ्वान्) । |
| ३. नयप्रकाशिका | श्रीमेघनादारिसूरयः । |
| ४. श्रीभाष्यभावप्रबोधनम् | ,, |
| ५ वेदान्तन्यायसुदर्शनम् | श्रीवरदनारायणभट्टारकाः । |
| ६. श्रुतप्रकाशिका | श्री सुदर्शनसूरयः (व्यासार्याः) |
| ७. श्रुतप्रदीपिका | ,, |
| ८. तत्त्वटीका | श्री वेदान्ताचार्याः । |
| ९. मूलभावप्रकाशिका | श्री रङ्गरामानुजमुनयः । |
| १०. श्रीभाष्यभूषणम् | लक्ष्मीपुरं श्रीनिवासाचार्याः । |
| ११. गूढार्थसङ्ग्रहः | श्री अभिनवरङ्गनाथब्रह्मतन्त्रपरकालस्वामिनः । |
| १२. भाष्यार्थदर्पणः | श्री उत्तमूर् वीरराघवाचार्याः । |

अधिकरणसारावल्याद्याः अन्यान्ये अर्थानुवादरूपाः परिष्कृतनिष्कृष्टार्थबोधकाः अन्ततः श्रीभाष्यव्याख्यारूपा एव सत्योऽपि न ताः अत्रोल्लिखिताः । प्रतीकधारणपूर्वकम् श्रीभाष्यग्रन्थाव्याख्यानात् इति शुभम् ।

### [श्रीभाष्यमुद्रणप्रस्तावः]

उपाह्रियते चेदं परिष्कृत्य सम्पादितं श्रीभाष्यस्य प्रथमं सम्पुटं चतुस्सूत्र्यन्तं सानुबन्धं, ग्रन्थतदर्थजिज्ञासूनामध्येतॄणां करकमलयोः । वत्सरत्रयादर्वागेव प्रारब्धमुद्रणस्यास्य ग्रन्थस्य मुद्रणालयीयैः

विविधैरन्तरायैः प्राप्तविलम्बस्य, एतावता च कालेन प्रकाशावस्था सञ्जातेत्येतत् अस्माकं प्रमोदस्थानम् ।

भगवद्रामानुजीयान् सर्वानपि ग्रन्थान् आवश्यक्या टिप्पण्या, मध्ये मध्ये शीर्षिकाभिः, पाठान्तरैः, आवश्यकैरनुबन्धैश्च सह परिष्कृत्य सम्पाद्य समुद्रितान् कर्तुं, यादवगिरि (तिरुनारायणपुरम् मेलुकोटे) प्रतिष्ठिता संस्कृतसंशोधनसंसत् प्रवृत्ताऽस्ति । इदं प्राचीनानां विचारपूर्णानां दार्शनिकग्रन्थानाम् अध्येतॄपयोगि सम्मुद्रणं, महाजनैः राजाधिराजैर्वा सिद्धसम्पद्भिः साध्यं सत्, अस्मादृशामचिन्तनीयमापतितम् ;

'बोद्धारो मत्सरग्रस्ताः प्रभवः स्मयदूषिताः । अबोधोपहताश्चान्ये' इति न्यायेन एतादृशप्रवृत्तेरेव दुर्घटत्वात् । एवं स्थिते पूर्वोक्ता संसत् राष्ट्रसर्वकार-राज्यसर्वकाराभ्यां महतो धनस्य अनुदानेन पोषिता सती, महान्तमिमं मतिजीविपुरुषमोदावहं कर्म आरब्धवतीति अपरिमित एव सन्तोषोऽनुभाव्योऽस्माभिः ।

यद्यपीमे सर्वे ग्रन्थाः इतः पूर्वमेव भारतराष्ट्रान्तर्गतनानादेशीयैर्दर्शनाभिमानिभिः विद्वद्भिश्च विविधासु लिपिषु विविधाभी रीतिभिः मुद्रितचरा एव; तथापि अद्यत्वे तेषां पुस्तकानाम् अलाभः, कालानुगुणपरिष्कारविदूरता च संसदीयाया अस्याः प्रवृत्तेः निदानमिति आवेदयामः ।

रामानुजग्रन्थानां मुद्रणे प्रवृत्ता इयं संसत्, विशिष्टाद्वैतदर्शनमहाभवनस्य मूलस्तम्भायमानम् इमं श्रीभाष्यग्रन्थमेवादौ परिष्कृत्य प्रकाशयितुं मां नियोजितवती । आत्मन्यप्रत्ययवानप्यहं, श्रीरामानुजाचार्याणां कृपां पुरस्कृत्य, तथा संसदीयकुलसचिवानां निर्भरं विश्वासमवलम्ब्य च, महत्यस्मिन् कर्मणि प्रवृत्तोऽस्मि । अत्रत्याश्च न्यूनताः प्रीत्या ज्ञापिताः सत्यः, पश्चात्तने संस्करणे परिशुद्धयाय कल्पेरन् इति सप्रश्रयं निवेदयामि ।

अस्माभिश्च प्रायशः आन्ध्र-ग्रन्थ-देवनागरी-कर्नाटकाख्येषु लिपिषु मुद्रितानि मूलमात्रात्मकानि, सव्याख्यादिनि, द्रमिड-कर्नाटक भाषानुवादयुतानि च श्रीभाष्यपुस्तकानि, प्रायः पञ्चविंशत्यन्यूनानि दृष्टानि ।

तेषु च तत्तत्कालानुगुणं तदानीन्तनवैज्ञानिकसहकारसौलभ्यानुगुणं च यथायोग्यं पठन-

पाठनसौकर्यं सम्पादितं यद्यपि ; अथाऽपि तेषु परिदृश्यमानानि वाचकजनसौलभ्यविरोधीनि विधानानि नैकविधानि सम्यगालोच्य तदपेक्षया अत्यन्तमानुकूल्ययुक्तं विधानम् अस्मिन् संस्करणे योजयितुमुद्युक्ता वयम् ।

तत्र परिदृष्टाः अध्ययनसौलभ्यविरोधिनोऽशाश्च स्थूलरूपेण दिग्दर्शनतया एवं निर्देष्टुं शक्यन्ते—

१. अवान्तरप्रकरणानां पृथक्करणाभावः ।

२. प्रश्नोत्तरात्मकानां विरुद्धकोटितया विकल्पितानां चार्थानां विशिष्य ज्ञानविरोधि-पङ्क्त्यैक्यम् ।

३. आक्षेप-समाधानपरयोर्ग्रन्थयोः अपृथङ्निर्देशः ।

४. जटिलतया सन्देहजनकेषु स्थलेषु ससन्धिको निर्देशः ।

५. पृथक् निष्कृष्टतया ज्ञातव्यविषये पार्थक्यगमकचिह्नानां [ " " ] एतादृशानामभावः ।

६. सन्धीनाम् अवर्जनीयत्वे प्रश्लेषद्योतकानां [ ऽ, ऽऽ ] चिह्नानामभावः ।

७. अनुवाद्यार्थस्थले अनुवाद्यांशनिष्कर्षकाभावः ।

८. प्रमाणतया उपात्तस्य भागस्य इतराभिः पङ्क्तिभिः सहैक्यम् ।

९. प्रमाणस्थानबोधकस्य आकरनिर्देशस्याभावः ।

१०. विषयसारज्ञापकशीर्षिकाद्यभावः ।

११. प्रमाणार्थचिन्तनाय पुस्तकान्तरस्यान्वेषणीयता ।

१२. विमर्शनानुगुणस्य पाठान्तरस्य अनिर्देशः ।

१२. पादविराम-अर्धविरामादीनाम् अङ्कनाभावः ।

१४. आवश्यकानामनुबन्धानामभावः ।

इत्यादयः । एतांश्च दोषान् प्रमार्ष्टुम् अस्माभिर्यत्नः कृतः । इदंप्रथमत्वाच्चास्य यत्नस्य,

किञ्चिदिव वैपरीत्यमपि कुत्रचित् अवशतया प्रमादतो जातं सम्भाव्येताऽपि । तत्र विदुषामध्ये-तणां च सौहार्दयुतं गुणदोषग्रहणं तज्ज्ञापनं च प्रार्थयामः ।

एवमत्र प्राङ्मुद्रितपुस्तकगतानां अध्ययनदौर्लभ्यापादकानामंशानामुद्भावनं, न तत्र दोषचिन्तनार्थम् ; तैरपि बहूनां विदुषामध्ययनस्य जातत्वात् । किन्तु न्यूनतानां ग्रहणे सति, एतत्पुस्तकगतानि आनुकूल्यकराणि विधानानि प्रयोजनवन्ति भवेयुरिति ज्ञापनार्थमेव ।

अनया च दृष्ट्या परिष्कृतमिदं पुस्तकम् । तेन च विषयविभागानुगुणं तत्र तत्र प्याराग्राफ्) विभागः कृतः । श्रुतप्रकाशिकादिव्याख्यानान्यालोक्य, क्वचित् स्वयं च आलोच्य साररूपेण शीर्षिका (Heading) दत्ताः । मध्ये मध्ये योग्या विरामाः निर्दिष्टाः । पद-सन्धयश्च अर्थचिन्तनानुकूल्याय वियोजिताः । प्रश्नोत्तरादिकं पृथक् पङ्क्त्या मुद्रितम् ; येन तयोः पार्थक्यं स्फुटं प्रतिपद्येत । प्रमाणानां प्रमाणभागानां च पङ्क्तिभिः अमिश्रणं, च पुरत एव आकरनिर्देशः कृते । पूर्वतनेषु पुस्तकेषु प्रमाणाकरनिर्देशे भ्रंशो यत्र कुत्रचित् प्रामादिकः आपतितश्चेत् सोऽपि यथोपलम्भं समीकृतः ।

## [ टिप्पणीसंयोजनम् ]

अस्मिन् सम्पादनकर्मणि प्रवृत्तेन मया, लघुसन्दर्भायाः टिप्पण्या योजनमपि संसदः लक्ष्यमासीत् । तेन च श्रुतप्रकाशिकादीन् व्याख्याग्रन्थानवलोक्य तत्र तत्र आवश्यकानां पदानामर्थाः, आवश्यका विचाराश्च योजिताः । परं व्याख्याग्रन्थेषु परिदृश्यमानं 'ननु' इत्यारभ्य 'इत्यतआह' 'इत्याऽऽह, इत्यत्राऽऽह' इत्याद्यवतरणविधानं नाऽनुसृतम् ; येन परिष्करणविधाने नूलता न सिध्येत्, तदर्थं च क्वचित् मूलस्थं प्रतीकं व्याख्यायां धृतमधृतं वा अपेक्षितमुद्धृत्य, आदौ 'अनेन' इति स्वकीयमेव पदं संयोजितम् [ ] एवं कुण्डलितं च । अन्यत्र क्वचित् अन्ते 'इत्यत्रोत्तरम्' इत्यादि पूरितम् । मूलगतं [Paragraph] अनुसृत्य टिप्पण्यामपि पृथक्करणं कृतम् । प्रतिपुटम् अधः पाठान्तरनिर्देशः कृतः । एतदर्थं मूले ग्रन्थभागस्य यावानंशः पाठान्तरम् इति स्पष्टीकरणाय निर्देश्यस्य भागस्योभयपार्श्वयोः [11]इत्यादिकयारीत्या सङ्ख्यानिर्देशःकृतः ।

यत्र च अध्याय-पादाधिकरणारम्भः, तत्र तत्तत्प्रतिपाद्याः अर्थाः, अधिकरणविचार्या विद्याश्च निर्दिष्टाः । यत्र मूले सूत्रं प्राप्तं, तत्र स्वीयया सरण्या सूत्रार्थविवृतिः कृता भाष्याद्यविरोधेन । अनुपदमेव च 'ब्रह्मसूत्रार्थपद्यमालिका' दत्ता ; येन गृहीतोऽर्थः श्लोकेन सुधार्यो भवेत् । टिप्पण्यामपि योंऽशः यस्माद्व्याख्यानग्रन्थादुद्धृतः, तज्ज्ञापनाय (श्रु. प्र.) श्रुतप्रकाशिका, (मू प्र) मूलभावप्रकाशिका, (त.टी) तत्त्वटीका इत्यादि दत्तमस्ति ; प्रामाणिकत्वसंरक्षणाय असाङ्कर्येण तत्तद्व्याख्यासु विशेषांशान्वेषणसौकार्याय च ।

## [ अनुबन्धसंयोजनम् ]

ग्रन्थमात्रदर्शनमेव यस्मिन् काले दुःशकममासीत् , तदा का कथा अपेक्षितानुबन्धसंयोजनविषये परम् अद्यत्वे, विद्यार्थिनां ग्रन्थाध्ययनं सर्वमपि अनुबन्धायत्तमभवत् । एतादृशीं परिस्थितिं जानद्भिः संसदीयैः अधिकारिभिः व्यासङ्गसौकर्यानुगुणम् आवश्यका अनुबन्धा ग्रन्थान्ते योजनीयाः इति चोदिता अभूम । तेन च अस्मिन् चतुःसूत्र्यन्ते भागे पञ्चाऽनुबन्धा योजिताः अस्माभिः । आद्ये अनुबन्धे श्रीभाष्यगृहीतस्यार्थस्य सङ्क्षेपविस्तराभ्यां ग्रहण-धारणयोः अत्यावश्यकतां सञ्चिन्त्य, कालतः क्रममनुरुध्य च, आदौ सेनेश्वरार्यकृतः 'शारीरकन्यायकलापसङ्ग्रहः, आयोजितः । पश्चात् वात्स्यवरदाचार्यकृतः 'तत्त्वसारः' । अनन्तरं च एतदपेक्षया किंचिदिव विस्तृतः वेदान्ताचार्यविरचितः अधिकरणसारावलीग्रन्थः । न्यायकलापसङ्ग्रहस्य विवृतिः नैवाऽसीदित्यतः सुलभया रीत्या केवलं पदार्थविवृतिः यथाश्रुततया अस्माभिरेव विरच्य ग्रथिता । तत्त्वसाराधिकरणसारावल्योस्तु प्राक्तन्योः व्याख्ययोर्द्वयोः तत्त्वसारास्वादिनी-रत्नसारिण्योः, अधुनाननायाः वात्स्यवरविरस्यायाः, तथा चिन्तामणि-पदयोजनयोः सारार्थरत्नप्रभायाश्च, सत्त्वेऽपि विस्तृतत्वात्, पदार्थचिन्तनाय अन्वेषणीयत्वाच्च, तयोरपि यथाश्रुता शब्दार्थविवृतिः व्याख्यानानुरोधेन सङ्ग्रथ्य अस्माभिरेव निबद्धा योजिता च । तदनु महाचार्यविरचितः अधिकरणार्थसङ्ग्रहः तस्य अत्यन्तं सरलत्वात् निष्कृष्टसङ्ग्रहवाक्यरूपत्वाच्च स तथैव योजितः । अनन्तरं च पूर्वोत्तराधिकरणयोः सङ्गतिज्ञानाय श्री.उ. लक्ष्मीपुरं श्रीनिवासाचार्यैर्विरचिता 'नयसङ्गतिमालिका' श्लोकरूपा स्फुटत्वात् तथैव संयोजिता ।

द्वितीयेऽनुबन्धे — उपनिषद्भाष्य-विष्णुपुराणव्याख्या-भगवद्गीताभाष्यादीनां ग्रन्थानाम्

अन्वेषणक्लेशं दूरीकर्तुं चतुःसूत्र्यन्ते श्रीभाष्यभागे प्रमाणतयोपात्तानां सर्वेषां श्रुत्यादिवचनानां तत्तद्भाष्याद्यनुसारी संक्षिप्तः अर्थानुवादः संयोजितः ।

तृतीये चाऽनुबन्धे—धारणोपयोगी त्रिविधः पदार्थकोषः संयोजितः । आद्यः श्रीभाष्ये भाष्कारैरेव विवृतानां पदार्थानां सङ्ग्रहात्मकः । पश्चात् श्रीभाष्यगतानां केषांचित्पदानां व्याख्यादिषु अर्थान् सङ्गृह्य सम्पादितः । तृतीयश्च ब्रह्मसूत्रगतानां विशिष्टानां पदानां विशिष्टाद्वैतिसंमतया रीत्या संगृहीतः अर्थकोषः । तदनु भाष्यकाराभिमतानां अर्थानां निष्कृष्य-धारणार्थं श्रीभाष्यगतानि सिद्धान्तोक्तिरूपाणि वाक्यानि संगृह्य मुद्रितानि । ततः लोकोक्तिरूपाणि वाक्यानि, अनुमानप्रयोगात्मकानि वाक्यानि च तत्रत्यानि सङ्गृह्य आयोजितानि । अवशिष्टं स्पष्टम् ।

चतुर्थेऽनुबन्धे—भाष्य-सार-दीपादीन् ग्रन्थान् अवलोक्य, अध्ययनसुकरतायै सम्पूर्णस्य शारीरकसूत्रस्य प्रतिपदार्थविवृतिः सम्पाद्य संग्रथ्य योजिता । पश्चात् शास्त्राध्यायपादाधि-करणानामर्थसंक्षेपः कृतः । अधिकरणार्थचिन्तनस्य भगवदाराधनरूपत्वसौकर्याय श्री उ. वे. अनन्तार्यैः विरचिता शारीरकाधिकरणार्थभगवन्नामावलिः मुद्रिता । अनन्तरं विद्याधिकरण-श्रुत्यादिविभागानां निष्कृष्य धारणाय प्रयत्नः कृतः । शिष्टं स्पष्टम् ।

पञ्चमेऽनुबन्धे—श्रीभाष्याध्ययनोपयोगीनि श्रीविष्णुपुराणवचनानि मुद्रितानि । प्रमाण-प्रमेयादीनां परिचयाय धारणाय च श्री. उ. बुच्चि वेङ्कटाचार्यैर्विरचिता वेदान्तकारिकावली समायोजि । ततः मुद्रितावशिष्टानां पाठान्तराणाम् निवेशनम् कृतम् । अत्यन्तमवधानेन शोधनेऽपि सीसकाक्षरयोजनवेलाकृतस्खालित्यादितः प्राप्तानां वर्णभ्रंशस्खालित्यादिनां शोधनिका च अन्ते दत्ता ।



अत्र श्रीभाष्यग्रन्थे पाठभेदानां सङ्ग्रहणार्थं संस्कृतसंशोधनसंसदा स्वीकृतानीमानि श्रीभाष्यपुस्तकानि । तेषां च सङ्केत एवं दत्तः ।

| | पुस्तकनाम | लिपिः | पुस्तकोपलब्धिस्थानम् | सङ्केतः |
|---|---|---|---|---|
| १. | श्रीभाष्यम् मूलमात्रम् तालपत्रम् | ग्रन्थलिपिः | विद्वान् अरयर् श्रीरामशर्मा मेलुकोटे | अ |
| २. | " " " | " | विद्वान् जग्गुसुदर्शनाचार्यः मेलुकोटे | आ |
| ३. | " श्रुतप्रकाशिकाव्याख्योपेतं कागदपत्रम् | तेलुगु " | संस्कृतकालेज् मेलुकोटे | इ |
| ४. | " " " | " | विद्वान् मुडुम्बै नरसिंहाचार्यः मेलुकोटे | ई |
| ५. | रामानुजग्रन्थमाला | " | काञ्ची प्र. भ. अण्णङ्गराचार्यः | क |
| ६. | श्रीभाष्यम् श्रुतप्रकाशिकाव्याख्योपेतम्' | तेलुगु | मदरास् चेङ्गल्वरायः | ख |
| ७. | " " " | " | मैसूर् धर्माधिकारि चक्रवर्त्यैय्यङ्गार्यः | ग |
| ८. | " श्रुतप्रकाशिका, तत्त्वटीका, भावप्रकाशिकाव्याख्याभिः सह | दे लिपिः | बृन्दावनम् धरणीधरशास्त्रिणः | घ |
| ९. | " श्रुतप्रकाशिकाव्याख्योपेतम् | " | श्री. उत्तमूर वीरराघवाचार्यः मद्रास् | ङ |
| १०. | " मूलमात्रम् | " | अ. वी. नरसिंहाचार्यः मद्रास् | च |
| ११. | " श्रुतप्रकाशिकाव्याख्योपेतम् | ग्रन्थ | भारद्वाजरामानुजाचार्यः काञ्ची | छ |
| १२. | द्रमिडभाषानुवादेन सहितम् | ग्रन्थलिपिः | ए. वि. गोपासाचार्यः कुम्भघोणम् | ज |
| १६. | " श्रुतप्रकाशिकाव्याख्योपेतम् | दे.लिपिः चतुस्सूत्रीपर्यन्तम् | निर्णयसागरप्रेस् बाम्बे | झ |
| १४. | रामानुजग्रन्थमाला | " | पि. बि. अण्णङ्गराचार्यः कांची | ञ |
| १५. | श्रीभाष्यम् श्रुतप्रकाशिका-गूढार्थसंग्रहाभ्यां सहितम् | " | ब्रह्मतन्त्रपरकालमठास्थानम् मैसूर | ट |

| | | | |
|---|---|---|---|
| १६. मूलमात्रम् | ,, | पं. धनीरामशास्त्री मथुरा | ठ |
| १७. " कर्नाटकभाषानुवादेन सहितम् कन्नडलिपिः | | होलेनरसीपुर (हासनजिल्ला) | ड |
| १८. हिन्दीभाषानुवादेन सहितम् दे. | ,, | वङ्गुवूर् रङ्गनाथाचार्यः प्रयागः | ढ |
| १०. हस्तलिखितम् | " | पं रामचन्द्रजीस्वामिग्रन्थालयः अलवार-राजधानी | थ |
| २०. श्रीभाष्यम् मूलमात्रम् | दे. लिपिः | महाराजग्रन्थसंग्रहालयः विकानेर् | द |
| २१. श्रीभाष्यम् 1-2-4 पर्यन्तम् | ,, | कलकत्ता | ध |
| २२. " श्रुतप्रकाशिकाव्याख्योपेतम् | " | काशी | न |
| २३. श्रीभाष्यम् मूलमात्रम् | ,, | ,, | ण |
| २४. " ,, | " | वासुदेवशास्त्री अभ्यङ्करः पूना | वा |
| *२५. " श्रुतप्रकाशिकादीपसारादिभिः सहितं सप्रमाणाकरम् तेलुगु लिपिः | | श्री पेरुंबूदूर | |

[वि. सू. वासुदेवशास्त्रिसम्पादितपुस्तके B,C,D इति दत्तान्येव पाठानि अत्र थ, द, न, इति सङ्केतितानि इति ज्ञेयम् ।]

[*इदमेव च पुस्तकं प्रायः अस्माभिर्मुद्रितस्य पुस्तकस्य मातृकाभूतम् ।]

———

चतुस्सूत्रीपर्यन्तस्य सटिप्पनस्य सानुबन्धस्य अस्य नूतनस्य
श्रीभाष्य संस्करणस्य सम्पादनाय उपयुक्तानि इमानि पुस्तकानि ।

१. श्रीभाष्यम् — श्रुतप्रकाशिका-दीपसारादिभिः सहितम् [श्रीपेरुम्बूदूर]

२. श्रीभाष्यम् — दशभिर्व्याख्याभिः सह श्री. वि. कृष्णमाचार्यैः सम्पादितम् [मद्रास्]

३. " — श्रुतप्रकाशिकया सह उपोद्घातादिभिश्च श्री.उ.वे. उत्तमूर वीरराघवाचार्यैः

४. " — भाष्यार्थदर्पणाख्यव्याख्यया सह " " "

५. " — श्रुतप्रकाशिका-तत्त्वटीका-भावप्रकाशैः सह । बृन्दावनम् [उत्तरप्रदेशः]

६. " — श्रुतप्रकाशिकया [तेलुगु] धर्माधिकारि चक्रवर्त्यैय्यङ्गार्यैः " [मैसूर]

७. " — श्रुतप्रकाशिका-गूढार्थसङ्ग्रहाभ्यां सह श्री श्री उ.वे परमहंसपरिव्राजकाचार्यैः अभिनवरङ्गनाथब्रह्मतन्त्रपरकालस्वामिभिः " [मैसूर]

८. " — तत्त्वटीकाव्याख्यासहितम् । देशिकग्रन्थमाला श्री.उ.वे. अण्णङ्गराचार्यैः [काञ्ची]

९ " — मूलमात्रम् श्री.उ.वे.अ वी नरसिंहचार्यैः [आनन्दमुद्रणालयः] [मद्रास्]

१०. " — रामानुग्रन्थमाला [तेलुगु] श्री.उ.वे.प्र. अण्णङ्गराचार्यैः [काञ्ची]

११. — " " [देवनागरी] " " "

१२. " — मूलम् पाठान्तरेण सह श्री वे. ब्र. अभयङ्करवासुदेवशास्त्रिभिः [पूना]

१३. श्रीभाष्यव्याख्या श्रुतप्रदीपिका — श्री. उ.वे. श्रीनिवासराघवन् महोदयैः सम्पादिता [पुदुकोट्टै]

१४. श्रीभाष्यप्रकाशिका — तिरुमलैशै श्री.उ.वे. श्रीनिवासाचार्यैः विरचिता मानुस्क्रिप्ट् लैब्रेरि [मद्रास्]

१५. श्रुतप्रकाशिकाव्याख्या भावप्रकाशिका — टि.टि देवस्थानम् [तिरुपति]

१६. वेदान्तदीपः — श्री. उत्तमूर् वीरराघवाचार्यैः सम्पादितः [मद्रास्]

१७. " — रामानुजग्रन्थमाला P. B. अण्णाङ्गराचार्याः [कांञ्ची]

१८. वेदान्तसारः — " "

१९. शारीरकशास्त्रार्थदीपिका—श्री. वे. व. न. कृष्णामाचार्यैः सम्पादिता [कुम्भघोणम्]

२०. नयमयूखमालिका— ,, ,, ,, ,,

२१. दर्शनोदयः—लक्ष्मीपुरं श्रीनिवासाचार्यैः विरचितः [मैसूर]

२२. शारीरककारिकावलिः—श्री. उ. वे. कोंळियालं शठकोपाचार्यैः ,,

२३ शारीरकाधिकरणरत्नमाला—कपिस्थलं श्री. उ वे. देशिकाचार्यैः सम्पादिता [तिरुपति]

२४. शारीरकन्यायकलापसङ्ग्रहः— [पुदुकोट्टै]

२५. तत्त्वसारः—मूलमात्रम् उभयवेदान्तप्रवर्तनसभा। [वेङ्गलूर]

२६. ,, सारास्वादिनीन्याख्या व्याख्या। [कुम्भघोणम्]

२७. ,, —रत्नसारिणीव्याख्या श्री. उ. वे. कार्पङ्गाडु वेङ्कटाचार्यैः सम्पादिता [मानुस्क्रिप्ट्स् लैब्रेरि] [मद्रास्]

२८. ,, —वात्स्यवरिवस्याव्याख्या श्री. उ. वे. वीरराघवाचार्यैः ,, ,,

२९. अधिकरणसारावलिः—चिन्तामणि-पदयोजनाभ्यां सह श्री अहोबिलमठास्थानम् [श्रीरङ्गम्]

३०. ,, —चिन्तामणि-सारार्थरत्नप्रभाभ्यां सह। श्री. उ. वे. वीरराघवाचार्यैः सम्पादित

३१. ईशावास्योपनिषत्—वेदान्ताचार्यभाष्यसहिता ,, ,,

३२. केनाद्युपनिषदः—रङ्गरामानुजभाष्यसहिताः ,, ,,

३३. बृहदारण्यकोपनिषत्— ,, ,,

३४ तैत्तिरीयाद्युपनिषदः— ,, ,, ,,

३५. तैत्तिरीयोपनिषत्—[1–2 प्रश्नौ] कूरनारायणीयेन सह। [काञ्ची]

३६. ईशाद्युपनिषदः—गोपालानन्दस्वामिभाष्ययुताः। [बरोडा]

३७. अष्टाविंशत्युत्तरशतोपनिषदः। निर्णयसागरप्रेस [बाम्बे]

३८. वेदार्थसङ्ग्रहः—तात्पर्यदीपिकायुतः [काशी]

३९. गीताभाष्यम्—तात्पर्यचन्द्रिकायुतम् श्री. श्री. स्वामिनारायणजीयर् महोदयैः सम्पादितम् [आन्ध्रप्रदेशः]

४०. श्रीविष्णुपुराणम्—व्याख्याद्वययुतम् [तेलुगुलिपिः]

४१. " —हिन्दीभाषानुवादेन सह । [दे.लिपिः] [गोरखपुर्]

४२. तैत्तिरीयसंहिता—भट्टभास्करभाष्येण सह । ओ.आर्.पे. [मैसूर्]

४३. " —सायणभाष्येण सह । आनन्दाश्रमः [पूना]

४४. तैत्तिरीयब्राह्मणम्—भट्टभास्करभाष्येण सह ओ. आर्.पे. [मैसूर्]

४५. तैत्तिरीयारण्यकम्— " " " "

४६. ब्रह्मसूत्रार्थपद्यमालिका—अहोबिलमठास्थानम् [श्रीरङ्गम्]

४७. सिद्धित्रयम्—तिरुनाङ्गूर् प्र. अणङ्गराचार्यैः स्वीयव्याख्यासह सम्पादितम् [बरोडा]

४८. दशोपनिषच्छाङ्करभाष्यम्—मोतीलालबनारसीदास् [काशी]

४९. श्वेताश्वतरोपनिषच्छाङ्करभाष्यम्—आनन्दाश्रमः [पूना]

५०. भगवद्गीताशाङ्करभाष्यम्—ओ.आर्.पे. [मैसूर्]

५१. सनत्सुजातीयम् शाङ्करभाष्यम्— " "

५२. न्यायपरिशुद्धिः—शताव्रधानं श्रीनिवासाचार्यैः सम्पादिता [श्रीरङ्गम्]

५३. न्यायसिद्धाञ्जनम्—रङ्गरामानुजीयव्याख्यायुतम् (क.देशिकाचार्यः)

५४. तत्त्वमुक्ताकलापः—उत्तमूर् वीरराघवाचार्यैः सम्पादितः [मद्रास्]

५५. यतीन्द्रमतदीपिका—वासुदेवशास्त्री । [पूना]

५६. मानमेयरहस्यश्लोकवार्तिकम् ल. श्रीनिवासाचार्यैः सम्पादितम्ः [मैसूर्]

५७. शारीरकारायनम्—चक्रवर्ती श्री. उ.वे. तिरुमलाचार्यैः सम्पादितम्
(म.सं. कालेज्) मैसूर्]

५८. मीमांसादर्शनम्—शाबरभाष्ययुतम् [काशी]

५९. वाक्यार्थरत्नम्—सुवर्णमुद्रिकायुतम् ओ. आर्. पे. [मैसूर्]

६०. शास्त्रदीपिका—सव्याख्या । निर्णयसागरप्रेस् । [बांबे]

६१. अध्वरमीमांसाकुतूहलवृत्तिः—राष्ट्रीयसेवासंस्थानम् । [दिल्ली]

६२. मीमांसान्यायप्रकाशः—अभ्यङ्करवासुदेवशास्त्री । [पूना]

६३. जैमिनीयन्यायमालाविस्तरः—आनन्दाश्रमः । "

६४. काशिकावृत्तिः—I, II चौखाम्बाप्रेस् । [काशी]

६५. सिद्धान्तकौमुदी—बालमनोरमायुता । [ट्रिप्लिकेन् मद्रास् ]

६६. अमरकोशः—सटीकः । चौखाम्बाप्रेस् । [काशी]

६७. वैजयन्तीकोशः—मूलम् । " "

६८. हलायुधः—हिन्दीसमीति । [लखनऊ]

६९. शब्दकल्पद्रुमः—चौखाम्बाप्रेस् [काशी]

७०. यास्कनिरुक्तम्—आनन्दाश्रमः [पूना]

७१. उपनिषद्वाक्यकोशः—खेमराजकृष्णदासैः सम्पादितः [बाम्बे]

७२. " —कोलानेल् जि. ए. जाकब् [डेल्लि]

७३. वेदान्तकारिकावली—वि. कृष्णमाचार्यैः सम्पादिता अडैयार् लैब्रेरि [मद्रास्]

७४. " —आन्ध्रलिपिस्था [शीर्णपत्रात्मिका] "

७५. प्रकरणपञ्चिका—चौखांबा प्रेस् [काशी]



## [ कार्तज्ञ्यप्रकाशनम् ]

एवं भगवत्प्रीतिं संलक्ष्य प्रवृत्तैः अस्माभिः यथाशक्ति, सर्वेषां साहाय्येन च अयं चतुः सूत्र्यन्तभागात्मकः श्रीभाष्यग्रन्थः एवंरूपतां प्रापितः ।

अस्माकं श्रीभाष्यग्रन्थगतपाठभेदसम्पादनकार्ये आदरातिशयेन सुबहूपकृतवतां, श्रीउवे श्रीरङ्गं नरसिचार्याः (अध्यक्षाः, वेद--वेदान्तबोधिनी संस्कृतविद्याशाला मेलुकोटे) इत्येतेषां वेदान्तादिशास्त्रविदुषां प्राप्तपरमपदानां महती उपकृतिः सकार्तज्ञ्यं स्मर्यते ।

तथा अस्मदागमनात्पूर्वम् अस्यां संसदि संशोधकभावं स्वीकृत्य रामानुजीयग्रन्थसम्पादन-निगमे श्रीभाष्यग्रन्थसम्बन्धि बहुकार्यमाचरितवतां श्री. उ. वे. एम्. के. नारायणैय्यङ्गार्याणाम् , यथा श्री उ. वे. एन्. एस्. वेङ्कटनाथाचार्याणामपि इयं संसत् कार्तज्ञ्ययुतामभिनन्दनां प्रकाशयति ।

अधुना च एतन्निगमसहायसंशोधकानां सताम् आयुष्मताम्, उमाकान्तभट्टः, के. एस्. राघवेन्द्रः, के. श्रीनिवासः, एम्. ए. रुक्मिणियम्मा इत्येतेषां मुद्रणप्रतिलेखन–तारतम्य-समीक्षण–मुद्रितसंशोधनादिषुकर्मसु तथा प्रमाणसङ्ग्रहादिकर्मसु च निरंन्तरं साहाय्यं कृतवताम्, तथा विशेषतः मुद्रितसंशोधन (प्रूफ् करेक्षन्) कर्मणि अहर्निशं साहाय्यं कृतवतः श्रीमतः एन्. वेङ्कटाचार्यस्य च संसदीयविशिष्टाद्वैतकोशनिगमविभागीयसंशोधकस्य आशीःपूर्विकाः कृतज्ञतायुता अभिनन्दनाः ।

सुन्दरयोजनायुतेन, मुद्रणेन ग्रन्थं संमुद्र्य अस्माकं ध्येयं कार्यरूपमासादितवतां श्री जयन्तीमुद्रणालयनिर्वाहकाणां तथा विवेकमुद्रणालयनिर्वाहकाणां च सकार्तज्ञ्यमभिनन्दनं मुक्तकण्ठं प्रकाश्यते ।

एतावति महति कार्ये कालोचितेन विचारपूर्वकनिर्णयाधानादिना युक्तं साहाय्यं निर्व्यूढवत्याः संसदीयकार्यनिनिर्वाहकसमितेः अभिमानपूर्वकं, आवश्यकं सर्वविधं साहयम् उचिते

काले कृतवतां संसदः कार्यदर्शिनां धर्मादाय-दत्तिविभागीयप्रमुखाधिकारिणां च विषये अनति-क्रमणीया महोपकारस्मृतिः निवेद्यते ।

अस्याः संस्कृत संशोधन संसदः प्राक्तनाध्यक्षवर्याणां श्रीमतां डा॥ बि. आर. शेषाचार्य-महोदयानां, तथा अधुनातनाध्यक्षाणां, श्रीमतां M.A.S. राजन् महोदयानां च अनवरतं संसच्छ्रेयःकांक्षया समालोचन पूर्वकं उचितस्फूर्तिप्रदानेन कार्यकलापस्य सामीचीन्यमापादितवतां सप्रश्रयाः धन्यवादाः ।

संसद्विभागीय सर्वकार्यान्वीक्षकविशिष्टसमितिसदस्यानां, पण्डितवरेण्यानां च, तथा कार्येषु न्यूनातिरेकौ विविच्य ज्ञापयित्वा कार्यपरिष्करणतत्पराणां च सर्वेषां हार्दाः अभिनन्दनाः ।

तथा अस्य सर्वस्य कार्यकलापस्य योग्यं निर्देशनं प्रदाय, आवश्यकं प्रोत्साहनमासादि-तवतां श्रीमतां संसदीयकुलसचिवानाम् श्री. उ. वे. विद्वान् लक्ष्मीताताचार्यः M.A. इत्येतेषामपरिमितं साहाय्यं सप्रश्रयमभिनन्द्यते ।

[ आशंसनम् ]

वर्णाः सर्वे नियतिनियतस्वस्वधर्मैः सुतृप्ताः
अन्योन्यं चाप्यकलुषधियः क्ष्मामिमां संश्रयन्तः ।
श्रद्धावन्तः सकलशुभदं शाश्वतं धर्मवृक्षं
संरक्षन्तः परहितरताः पूर्णकामा भवन्तु ॥

संस्कृत-सस्कृत्यादेः संशोधनतो बहूपकारमादधती ।
संस्कृतशोधनसंसत् जीयाच्चिरं यदुगिरौ स्थितिं प्राप्ता ॥
इत्येवमत्र शोधनकर्मण्युद्युक्तसन्मनोयुक्तः ।
श्रीरामभद्रनामा विदुषां परवान् समाशास्ते ॥

इति

क्रोधनवत्सरः
वैशाखबहुलदशमी
14-5-1985

सम्पादकः, रामानुजीयग्रन्थसम्पादननिगमाध्यक्षश्च
क्रतुनाथ ( सोमाशियाण्डान् ) वंश्यः
**एन्. एस्. रामभद्राचार्यः**
अधीतवेदवेदान्तः
प्राच्यनव्यायालङ्कारविद्वान्
संस्कृतसंशोधनसंसत्–मेलुकोटे

## एतत्पुस्तकस्थानां विषयाणां सूचनी



### अनुबन्धः १ [361-422]

## अनुबन्धः २ [423-515]



## अनुबन्धः ३ [517-620]



## अनुबन्धः ४ [621-774]

## अनुबन्धः ५ [775-840]



[ इति सामान्यविषयसूची ]

॥ श्रीः ॥

............

॥ श्रीः ॥

## श्रीभाष्यचतुःसूत्र्यन्तभागगतानां विषययाणां सूचनी



### I लघुपूर्वपक्षः [8-13]



### II लघुसिद्धान्तः [13-34]

## III महापूर्वपक्षः [25-56]

## IV महासिद्धान्तः [57—253]

## I महासिद्धान्ते श्रुतिघट्टः [124–137]

## II महासिद्धान्ते स्मृतिपुराणघट्टः [137–166]



## III महासिद्धान्ते अविद्यायां सप्तविधा अनुपपत्तयः [167–252]

## II जन्माद्यधिकरणम् [271-284]



## III शास्त्रयोनित्वाधिकरणम् [285–305]

## IV समन्वयाधिकरणम् [306-354]

—इति श्रीभाष्यचतुःसूत्री विषयसूचनी—



श्रीः

[शारीरकशास्त्रार्थः]

निरस्तनिखिलदोषगन्धम्, अनवधिकातिशयासङ्ख्येयकल्याणगुणगणाकरं, निखिल-जगदेककारणं परंब्रह्म, मुमुक्षुभिः अमृतत्वाय जिज्ञास्यं ज्ञातव्यं च। तच्चज्ञानं असकृदावृत्तस्मृति-सन्तानरूपम् उपासनात्मकं, मोक्षसाधनम्। उपासनफलं च—अर्चिरादिना पथा परं ब्रह्मोपसम्पद्य, स्वस्वरूपभूतज्ञानादिगुणाविर्भावपूर्वकः अनन्तमहाविभूतेः अनवधिकातिशयानन्दस्य परस्य ब्रह्म-णोऽनुभवः अपुनरावृत्तिरूपः।

[तत्र प्रथमस्य समन्वयाध्यायस्यार्थः]

सर्वं वेदान्तवाक्यजातं, सार्वज्ञ्य-सत्यसङ्कल्पत्वादियुक्तं ब्रह्म जगत्कारणमेव; ब्रह्मैवच जगत्कारणमिति प्रतिपादयतीति स्थापनम्।

[तत्राद्यस्य अयोगव्यवच्छेदपादस्यार्थः]

सर्वे वेदान्ताः, प्रधान-पुरुषावेव जगत्कारणतया प्रतिपादयन्तीत्याशङ्क्य, सर्वज्ञं सत्यसङ्कल्पं परं ब्रह्मैव निरवद्यं समस्तकल्याणगुणाकरं, जगत्कारणमेवेति प्रतिपादयन्तीति समर्थनम्।

[तत्र चतुःसूत्र्या अर्थः]

वेदान्तशास्त्रस्य ब्रह्मप्रतीतिजनकत्वाबाधात्, प्रमाणान्तरागम्य(अपूर्व)स्वतः पुरुषार्थ-(सफल) ब्रह्मरूपार्थबोधकत्वाच्च ब्रह्मविचारशास्त्रम् आरम्भणीयमेवेति साधनम्॥

[तत्र प्रत्यधिकरणमर्थाः]

१ **जिज्ञासाधिकरणम्**—सिद्धेऽप्यर्थे शब्दशक्तिग्रहसम्भवात्, वेदान्तानां ब्रह्मणि प्रामाण्यसत्त्वेन, ब्रह्मविचारात्मकं शारीरकशास्त्रमारम्भणीयतामर्हति—इति।

२ **जन्माद्यधिकरणम्**—जगज्जन्मस्थितिलयानां उपलक्षणत्व-विशेषणत्वाभ्यां ब्रह्मलक्षण-तासम्भवेन, लक्षणतः ब्रह्म प्रतिपत्तुं शक्यत एवेति, ब्रह्मविचारशास्त्रमारम्भणीयम्—इति॥

३ **शास्त्रयोनित्वाधिकरणम्**—जगज्जन्म-स्थिति-लयकारणं ब्रह्म, इतरप्रमाणागोचरत्वात् शास्त्रप्रतिपाद्यत्वाच्च शास्त्रैकप्रमाणकमिति, ब्रह्मविचारशास्त्रमारभ्यम्—इति॥

४ **समन्वयाधिकरणम्**—परस्य ब्रह्मणः परिनिष्पन्नतया प्रवृत्ति-निवृत्त्यन्वयविरहेऽपि, स्वरूपतः परमपुरुषार्थभूते तस्मिन् वेदान्तवाक्यानां प्रतिपादकतया सम्यगन्वयसत्त्वात्, शास्त्र-प्रमाणकत्वमबाधितमिति ब्रह्मविचारशास्त्रम् आरम्भमर्हति—इति॥

श्रीः

श्रीः

गुरुपरम्परास्तुतिः

श्रीमते रामानुजाय नमः। श्रियै नमः। श्रीधराय नमः।

लक्ष्मीनाथसमारम्भां नाथयामुनमध्यमाम्।
अस्मदाचार्यपर्यन्तां वन्दे गुरुपरम्पराम्॥

अस्मद्देशिकमस्मदीयपरमाचार्यानशेषान् गुरून्
श्रीमल्लक्ष्मणयोगिपुङ्गव-महापूर्णौ मुनिं यामुनम्।
रामं पद्मविलोचनं मुनिवरं नाथं शठद्वेषिणं
सेनेशं श्रियमिन्दिरासहचरं नारायणं संश्रये॥

योनित्यमच्युतपदाम्बुजयुग्मरुक्म-
व्यामोहतस्तदितराणि तृणाय मेने।
अस्मद्गुरोर्भगवतोऽस्य दयैकसिन्धोः
रामानुजस्य चरणौ शरणं प्रपद्ये॥

स्वाचार्यप्रभृति रामानुजाचार्यपर्यन्तं स्वस्वसम्प्रदायानुगुण्येन गुरुपरंपरामनुसन्धाय रामानुजाचार्यप्रणतिपद्यमनुसन्धाय पुनः भगवत्पर्यन्तं यथा सम्प्रदायं श्लोकाः अनुसन्धेयाः

अस्मद्गुरुपरम्परायै नमः

श्रीः

ॐ

॥ अनुसन्धेयाः शान्तिपाठाः ॥

ओम् ॥ वाङ्मे मनसि प्रतिष्ठिता, मनो मे वाचि प्रतिष्ठितम् । आविरावीर्म एधि । वेदस्य म आणी स्थः । श्रुतं मे मा प्रहासीः । अनेनाधीतेनाहोरात्रान् सन्दधामि । ऋतं वदिष्यामि सत्यं वदिष्यामि । तन्मामवतु तद्वक्तारमवतु । अवतु माम् । अवतु वक्तार-मवतु वक्तारम् ॥ ओं शान्तिः शान्तिः शान्तिः ॥

ओम् ॥ शंनो मित्रः शं वरुणः । शं नो भवत्वर्यमा । शं न इन्द्रो बृहस्पतिः । शं नो विष्णुरुरुक्रमः । नमो ब्रह्मणे । नमस्ते वायो । त्वमेव प्रत्यक्षं ब्रह्मासि । त्वामेव प्रत्यक्षं ब्रह्म वदिष्यामि । ऋतं वदिष्यामि । सत्यं वदिष्यामि । तन्मामवतु । तद्वक्तारमवतु । अवतु माम् । अवतु वक्तारम् ॥ ओं शान्तिः शान्तिः शान्तिः ॥

ओम् ॥ सहनाववतु । सह नौ भुनक्तु । सहवीर्यं करवावहै । तेजस्वि नावधीतमस्तु मा विद्विषावहै ॥ ओं शान्तिः शान्तिः शान्तिः ॥

ओम् ॥ पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते ।
पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ॥ ओं शान्तिः शान्तिः शान्तिः ।

ओम् ॥ आप्यायन्तु ममाङ्गानि वाक्प्राणश्चक्षुःश्रोत्रमथो बलमिन्द्रियाणि च सर्वाणि, सर्वं ब्रह्मौपनिषदम्, माऽहं ब्रह्म निराकुर्याम्, मा मा ब्रह्म निराकरोत्, अनिराकरणमस्तु अनिराकरणं मे अस्तु । तदात्मनि निरते य उपनिषत्सु धर्मास्ते मयि सन्तु ते मयि सन्तु ॥ ओं शान्तिः शान्तिः शान्तिः ॥

ओम् ॥ नमो ब्रह्मणे धारणं मे अस्त्वनिराकरणं धारयिता भूयासं कर्णयोः श्रुतं माच्योढ्वं ममामुष्य ओम् ॥

ओं शान्तिः शान्तिः शान्तिः ॥

ॐ

॥ श्रीः ॥

श्रीमते रामानुजाय नमः । श्रियै नमः । श्रीधराय नमः ॥



# श्री भा ष्य म्

## श्रीभगवद्रामानुजविरचितं शारीरकमीमांसाभाष्यम्

[ शास्त्रार्थसूचनगर्भितं मङ्गलाचरणम् ]

अखिलभुवनजन्मस्थेमभङ्गादिलीले
विनतविविधभूतव्रातरक्षैकदीक्षे ।
श्रुतिशिरसि विदीप्ते ब्रह्मणि श्रीनिवासे
भवतु मम परस्मिन् शेमुषी भक्तिरूपा ॥

[भाष्यप्रणयनप्रयोजनम्]

पाराशर्यवचस्सुधामुपनिषद्दुग्धाब्धिमध्योद्धृताम्
संसाराग्निविदीपनव्यपगतप्राणात्म[1]सञ्जीविनीम् ।

---

॥ नमः परमऋषिभ्यः ॥

**भुवनम्** — कार्यवर्गः । **आदिशब्दः**—अन्तःप्रवेशनियमनार्थकः (श्रु.प्र) । **लीला**— स्वबुद्धिपूर्वकः स्वप्रीत्यर्थः व्यापारः (त.टी) । **विनताः** — न्यासोपासनात्मकाशेषविद्याविशेष-निष्ठाः (श्रु.प्र) । **भूताः**—भगवज्ज्ञानेन लब्धसत्ताकाः । **दीक्षा** —सङ्कल्पः । **श्रुतिशिरसि**— परतत्त्वप्रधानायाम् उपनिषदि (श्रु.प्र) । **शेमुषी** — शमाद्यङ्गिका बुद्धिः । **भक्तिः** —महनीय-विषयिणी प्रीतिविशेषरूपा धीः (त.टी) ।

**वचः** शब्दस्यार्थे तात्पर्यम् । सुधेव वचः इति उपमितसमासः (श्रु प्र) । **संसारः** — अचिद्भिः आत्मानम् एकीकृत्य जन्मादिप्रवाहप्राप्तिः । **विदीपनम्** — क्लेशकर्मादिज्वालोद्गतिः (त.टी) । **व्यपगतप्राणाः**—नाशितात्मसत्ताकाः । **सञ्जीवनी** —उज्जीवनकरी (न.प्र) ।

---

[1] सञ्जीवनीम्—आ. क. च. छ. ज. झ. ढ.

पूर्वाचार्यसुरक्षितां बहुमतिव्याघातदूरस्थितां
आनीतां तु निजाक्षरैः सुमनसो भौमाः पिबन्त्वन्वहम् ॥ २ ॥

[प्रतिज्ञा]

भगवद्बोधायनकृतां विस्तीर्णां ब्रह्मसूत्रवृत्तिं पूर्वाचार्याः सञ्चिक्षिपुः; तन्मतानुसारेण सूत्राक्षराणि व्याख्यास्यन्ते ।

[प्रथमे समन्वयाध्याये, आद्ये अयोगव्यवच्छेदपादे सिद्धे व्युत्पत्तिसमर्थनपरम् ]

जिज्ञासाधिकरणम् (१-१-१)

[ब्रह्मैव जिज्ञास्यम्]

ॐ अथातो ब्रह्मजिज्ञासा ॥ १ ॥

[सौत्रपदानामर्थवर्णनम् ]

अत्र अयम् 'अथ' शब्दः आनन्तर्ये भवति । 'अतः' शब्दः वृत्तस्य हेतुभावे । अधीतसाङ्गसशिरस्कवेदस्य, अधिगताल्पास्थिरफलकेवलकर्मज्ञानतया सञ्जातमोक्षाभिलाषस्य, अनन्तस्थिरफलब्रह्मजिज्ञासा हि अनन्तरभाविनी ।

ब्रह्मणो जिज्ञासा ब्रह्मजिज्ञासा । ब्रह्मणः इति कर्मणि षष्ठी ।
'कर्तृकर्मणोः कृति' (पा. सू. 2-3-65)
इति विशेषविधानात् ।

---

पूर्वाचार्याः—बोधायन-टङ्क-द्रमिडादयः । बहुमतिव्याघातः — स्वारसिकधीविरोधः । दूरस्थिता— अबोधासमग्रबोधान्यथाबोधार्हा (मू.प्र) । आनीता— बुद्ध्यासन्ने स्वार्थे स्थापिता । भौमाः सुमनसः—सारासारविवेकज्ञाः त्रैवर्णिकाः (त.टी) ।

भगवान्—आप्ततमः (श्रु.प्र) । पूर्वाचार्याः—ब्रह्मनन्द्यादयः (त.टी) । सूत्राक्षराणि-अनेन प्रकृति-प्रत्यययोः अक्लेशोऽभिप्रेतः ।

अत्र—वेदोत्तरभागार्थविचारारम्भे । अयम् —एतच्छब्दशिरस्कः ['एतदोऽन्, पञ्चम्यास्तसिल्'] (मू.प्र.) । कर्मज्ञानम् — कर्मनिर्णयः । विद्याङ्गकर्मव्यावृत्त्यै केवलेति (त.टी) ।

यद्यपि सम्बन्धसामान्यपरिग्रहेऽपि जिज्ञासायाः कर्मापेक्षत्वेन कर्मार्थत्वसिद्धिः; तथापि आक्षेपतः प्राप्तात् आभिधानिकस्यैव ग्राह्यत्वात् कर्मणि षष्ठी गृह्यते ।

न च —

'प्रतिपद[1]विधाना षष्ठी न समस्यते' (पा.सू.वा. 2-2-10)
इति [2]कर्मणि षष्ठ्याः समासनिषेधः शङ्कनीयः;

'कृद्योगा च षष्ठी समस्यते' (पा. सू. वा. 2-2-9)
इति प्रतिप्रसव[3]सद्भावात् ।

'ब्रह्म'शब्देन [4]च स्वभावतो निरस्तनिखिलदोषः अनवधिकातिशयासङ्ख्येयकल्याण-गुणगणः पुरुषोत्तमः अभिधीयते । सर्वत्र बृहत्त्वगुणयोगेन हि ब्रह्मशब्दः । बृहत्त्वं च स्वरूपेण गुणैश्च यत्र अनवधिकातिशयम्, सः अस्य [5]मुख्योऽर्थः । स च सर्वेश्वर एव । अतः ब्रह्मशब्दः तत्रैव मुख्यवृत्तः । तस्मादन्यत्र तद्गुणलेशयोगात् औपचारिकः । अनेकार्थकल्पनायोगात् , भगवच्छब्दवत् । तापत्रयातुरैः अमृतत्वाय स एव जिज्ञास्यः । अतः सर्वेश्वर [6]एव जिज्ञासाकर्मभूतं ब्रह्म ।

---

कर्मापेक्षत्वेन—सकर्मकतया प्रथमं कर्माकांक्षाजननस्वाभाव्येन । आक्षेपत इति—'विलम्बितधीहेतोः शीघ्रधीहेतुः बलीयान्' इति न्यायादिति भावः (श्रु.प्र) ।

प्रतिपदविधाना षष्ठी — साक्षात् धातुकारकविशेषोपादानेन विहिता षष्ठी (कैयटः) । प्रतिप्रसवः — अपवादापवादः (श्रु.प्र) ।

अभिधीयते — मुख्यवृत्त्या बोध्यते (त.टी) । मुख्यवृत्तः—शीघ्रप्रतीतिजनकः । औपचारिकः — विलम्बेन प्रत्यायकः । 'अनन्यथासिद्धः प्रयोगः शक्तिं कल्पयति' इति न्यायः (मू.प्र) । अतः — उक्तशब्दार्थसामर्थ्याभ्याम् (श्रु.प्र) ।

---

[1] विधाना च — इ. घ. च. झ.
[2] कर्मषष्ठ्याः — ग.
[3] सम्भवात् —अ. आ. ङ. च. छ. ज.
[4] 'च' इति नास्ति – झ.
[5] मुख्यार्थः – आ.ख.ग.छ.ङ.
[6] 'एव' इति नास्ति – आ.इ.झ.

ज्ञातुमिच्छा 'जिज्ञासा'। इच्छायाः इष्यमाणप्रधानत्वात्, इष्यमाणं ज्ञानम् इह विधीयते। मीमांसापूर्वभागज्ञातस्य कर्मणः अल्पास्थिरफलत्वात्, उपरितनभागावसेयस्य ब्रह्मज्ञानस्य अनन्ताक्षयफलत्वाच्च, पूर्ववृत्तात् कर्मज्ञानादनन्तरम् तत एव हेतोः ब्रह्म ज्ञातव्यम् इत्युक्तं भवति। तदाह वृत्तिकारः —

'वृत्तात् कर्माधिगमादनन्तरं ब्रह्मविविदिषा' (बो.वृ)

इति। वक्ष्यति च कर्मब्रह्ममीमांसयोः ऐकशास्त्र्यम् —

[पूर्वोत्तरमीमांसयोः एकशास्त्रता]

'संहितमेतत् शारीरकं जैमिनीयेन षोडशलक्षणेन इति शास्त्रैकत्वसिद्धिः' (बो.वृ)

इति। अतः प्रतिपिपादयिषितार्थभेदेन षट्कभेदवत् अध्यायभेदवच्च पूर्वोत्तरमीमांसयोः भेदः। मीमांसाशास्त्रम् —

'अथातो धर्मजिज्ञासा' (पू.मी.सू 1-1-1)

इत्यारभ्य,

'अनावृत्तिः शब्दादनावृत्तिः शब्दात्' (ब्र.सू. 4-4-22)

इत्येवमन्तम् सङ्गतिविशेषेण विशिष्टक्रमम्। तथा हि [1]प्रथमं तावत् —

'स्वाध्यायोऽध्येतव्यः' (तै.आर. 2-25)

---

इष्यमाणम् — इच्छायाः कर्मभूतम्। ज्ञानम् — तर्करूपम्। विधीयते — अज्ञातं ज्ञाप्यते (श्रु.प्र)।

ज्ञायमाने तु वेदान्तैः करणैः परमात्मनि।
इमामुत्तरमीमांसामितिकर्तव्यतां विदुः॥ (वे. न्या. सु.)

अवसेयस्य — निर्णेतव्यस्य। ब्रह्मज्ञानस्य — ब्रह्मोपासनस्य (त.टी)।

मीमांसाशब्दः—जिज्ञासाविशेषोत्थाप्ये पूजितविचारे शक्तः (त.टी)। संहितम्— एकव्याख्येयव्याख्यानरूपतया सम्बद्धम्। शारीरकम् — जगच्छरीरकः परमात्मा शारीरः। तं कायतीति प्रतिपादयतीति, ब्रह्ममीमांसाशास्त्रम्। लक्षणम् — अध्यायः (मू.प्र)। अतः — सयुक्तिकात् सम्प्रदायात् (त.टी)। सङ्गतिविशेषः—पाठक्रमादिः (श्रु.दी)।

---

1 रागिग्रहणम् – आ.

इति अध्ययनेनैव स्वाध्यायशब्दवाच्यवेदाख्याक्षरराशेः ग्रहणं विधीयते ।

[अध्ययनस्वरूपप्रकारौ]

तत्राध्ययनम् किंरूपम् ? कथं च कर्तव्यम् ? इत्यपेक्षायाम् —

'अष्टवर्षं ब्राह्मणमुपनयीत तमध्या[1]पयीत' (श. ब्रा)

इत्यनेन,

'श्रावण्यां [2]प्रौष्ठपद्यां वा उपाकृत्य यथाविधि ।
युक्तश्छन्दांस्यधीयीत मासान् विप्रोऽर्धपञ्चमान् ।। (म. स्मृ. 4-95)

इत्यादिव्रतनियमविशेषोपदेशैश्च अपेक्षितानि विधीयन्ते ।

एवं सत्सन्तानप्रसूतसदाचारनिष्ठात्मगुणोपेतवेदविदाचार्योपनीतस्य व्रतनियमविशेषयुक्तस्य आचार्यो[3]च्चारणा[4]नूच्चारणरूपम् अक्षरराशिग्रहणफलम् अध्ययनम् इत्यवगम्यते ।

[अध्ययनविधिः नियमविधिः]

अध्ययनं च स्वाध्यायसंस्कारः । 'स्वाध्यायोऽध्येतव्यः' इति, स्वाध्यायस्य कर्मत्वावगमात् । संस्कारो हि नाम कार्यान्तरयोग्यताकरणम् । संस्कार्यत्वं च स्वाध्यायस्य युक्तम् ; धर्मार्थकाममोक्ष[5]रूपपुरुषार्थचतुष्टयतत्साधनावबोधित्वात्, जपादिना स्वरूपेणापि [6]तत्साधनत्वाच्च ।

---

अध्ययनेनैव—एवकारेण नियमविधित्वम् (मू.प्र) । विधीयते — फलत्वेन बोध्यते (त.टी) ।

युक्तः — अवहितः । अर्धपञ्चमान् — सार्धान् चतुरो मासान् । अपेक्षितानि — प्राथम्यादीनि । स्वाध्यायसंस्कारः — न तु सक्तुहोनवत् पुरुषसंस्कारः (श्रु.प्र) ।

जपादिनेति — जप्यमानेनाक्षरराशिग्रहणमात्रेणापि (श्रु.दी) ।

---

1 पयेत् – आ. ई.
2 प्रोष्ठपद्याम् – अ. आ. इ.
3 गुरूच्चारणा – घ.
4 नूच्चारणम् – इ. झ.
5 'रूप' इति नास्ति – आ.
6 'तत्' इति नास्ति–इ.

एवम् अध्ययनविधिः मन्त्रवन्नियमवदक्षरराशिग्रहणमात्रे पर्यवस्यति ।

[वेदार्थज्ञाने स्वतः प्रवृत्तिः]

अध्ययनगृहीतस्य स्वाध्यायस्य स्वभावत एव प्रयोजनवदर्थावबोधित्वदर्शनात् [1]गृहीतात् स्वाध्यायात् अवगम्यमानान् प्रयोजनवतः अर्थान् आपाततो दृष्ट्वा, तत्स्वरूप-प्रकारविशेषनिर्णयफलवेद[2]वाक्यविचाररूपमीमांसाश्रवणे अधीतवेदः पुरुषः स्वयमेव प्रवर्तते ।

तत्र कर्मविधिस्वरूपे निरूपिते कर्मणाम् अल्पास्थिरफलत्वं दृष्ट्वा, अध्ययन-गृहीतस्वाध्यायैकदेशोपनिषद्वाक्येषु च अमृतत्वरूपानन्तस्थिरफलापातप्रतीतेः, तन्निर्णय-फलवेदान्तवाक्यविचाररूपशारीरकमीमांसायाम् अधिकरोति ।

[उक्तार्थस्य श्रुतिसिद्धता]

तथा च वेदान्तवाक्यानि केवलकर्मफलस्य क्षयित्वम्, ब्रह्मज्ञानस्य [3]अक्षयफलत्वं च दर्शयन्ति —

'तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो
लोकः क्षीयते' (छा.उ. 8-1-6)
'अन्तवदेवास्य तद्भवति' (बृ.उ. 5-8-9)

---

एवम् — विधेयस्वरूपफलादिनिरूपणप्रकारेण । मन्त्रवत्त्वं नियमवत्त्वं च अनूच्चा-रणस्थं तत्फले गृहीतौ उपचरितम् (त.टी) ।

स्वभावत एव — विधिव्यापारमनपेक्ष्य । प्रयोजनवदर्थाः — स्वर्ग-मोक्षादिप्रयोज-नवन्तः यज्ञोपासनादयः । आपाततो दृष्ट्वा — संशय-विपर्ययसहज्ञानेन विषयीकृत्य । स्वरूप-विशेषाः — अङ्गिनः । प्रकारविशेषाः — अङ्गानि (श्रु.प्र) ।

कर्मेति — कर्मस्वरूपे विधिस्वरूपे च (श्रु.प्र) । अधिकरोति — स्वार्थबुद्ध्या तत्र उद्युक्तो भवति (त.टी) ।

---

[1] अध्ययनगृहीतान् – इ. [2] 'वाक्य' इति नास्ति – घ.
[3] चाक्षय – आ.

'नहचक्षुर्वैः प्राप्यते' (कठ. उ. 2-10)

'प्लवा ह्येते अदृढा यज्ञरूपाः' (मुण्ड. उ. 1-2-7)

'परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायात् नास्त्यकृतः कृतेन ।
तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम् ।।

'तस्मै स विद्वानुपसन्नाय सम्यक्प्रशान्तचित्ताय शमान्विताय ।
येनाक्षरंपुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्याम् ।। (मुण्ड. उ. 1-1-12-13)

'ब्रह्मविदाप्नोति परम्' (तै. उ. आन. 2-1-1)

'न पुनर्मृत्यवे तदेकं पश्यति' (छां. उ. . . ?)

'न पश्यो मृत्युं पश्यति' (छां. उ. 7-26-2)

'स स्वराड् भवति' (छां. उ. 7-25-2)

'तमेवं विद्वानमृत इह भवति नान्यः पन्था अयनाय विद्यते' (तै. पु. सू. 17)

'पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनामृतत्वमेति' (श्वे. उ. 1-6)
इत्यादीनि ।

[कर्मविचारनैरपेक्ष्यशङ्का-समाधाने]

ननु च साङ्ग[1]वेदाध्ययनादेव कर्मणां स्वर्गादिफलत्वम् , स्वर्गादीनां च क्षयित्वम्, ब्रह्मोपासनस्य [2]अमृतत्वफलत्वं [3]च ज्ञायत एव। अनन्तरं मुमुक्षुः ब्रह्मजिज्ञासायामेव प्रवर्तताम् ; किमर्था धर्मविचारापेक्षा ?

साङ्गेत्यादि — कर्मज्ञानपूर्ववृत्तत्ववादिनापि साङ्गाध्ययनस्यापेक्षितत्वं स्वीकृतमिति तदधिकव्युदासार्थः एवकारः । ज्ञायत एव — एवकारः ज्ञातत्वसम्प्रतिपत्तिसूचकः । ज्ञानसामग्री हि सिद्धा इति (श्रु.प्र) । मुमुक्षुः — प्राग्भवीयपुण्यमहिमक्षीणकाम्यरुचिः (त.टी) ।

[1] 'वेद' इति नास्ति— आ. [2] अमृतफलत्वं— ज.झ., अक्षयामृतफलत्वं - ग.
[3] 'च' इति नास्ति – ज. झ.

एवं तर्हि शारीरकमीमांसायामपि न प्रवर्ततास्; साङ्ग[1]वेदाध्ययनादेव कृत्स्नस्य ज्ञातत्वात् ।

सत्यम्, आपातप्रतीतिर्विद्यत एव; तथापि न्यायानुगृहीतस्य वाक्यस्य अर्थनिश्चायकत्वात्, [2]आपातप्रतीतोऽप्यर्थः संशयविपर्ययौ न अतिवर्तते । अतः तन्निर्णयाय वेदान्तवाक्यविचारः कर्तव्यः इति चेत् —

तथैव [3]धर्मविचारोऽपि कर्तव्यः इति पश्यतु भवान् !

[इति सविमर्शः पूर्वाचार्यसंमताद्यसूत्राक्षरव्याख्याघट्टः]

## लघुपूर्वपक्षः

[साधनचतुष्टयपूर्ववृत्तत्वप्रतिपादनाय भूमिका]

ननु च [4]ब्रह्मजिज्ञासा यदेव नियमेन अपेक्षते, तदेव पूर्ववृत्तं वक्तव्यम् । न धर्मविचारापेक्षा ब्रह्मजिज्ञासायाः; अधीत[5]वेदान्तस्य अनधिगतकर्मणोऽपि वेदान्तवाक्यार्थविचारोपपत्तेः ।

---

एवं तर्हि — धीमात्रतुष्ट्या त्यक्तकर्मविचारश्चेत् । कृत्स्नस्य — ब्रह्मतदुपासनादेः (श्रु.प्र) ।

सत्यमिति — अर्धाङ्गीकारे; आपातप्रतीतौ अभ्युपगमः, ब्रह्मविचारनैरपेक्ष्ये त्वनभ्युपगमः इति। आपातप्रतीतिः — अज्ञाननिवृत्तिमात्रेण संशय-विपर्ययसहं ज्ञानम् (श्रु.प्र) । [न अतिवर्तते — न प्रतिबध्नाति]

यदेवेति — आद्यः एवकारः साधनचतुष्टयान्यस्मिन् अपेक्षानियमव्यावृत्तये । तदेवेति — द्वितीयः एवकारः तत्र पूर्ववृत्तत्वव्यावृत्तये (श्रु.प्र) । अधीतेत्यादि— आपदि वेदान्तमात्राध्यायिनः कर्मणि आपातधीरपि नास्ति, इति पूर्ववृत्तत्वव्यापकं नियतापेक्षितत्वं नास्तीत्यर्थः (त.टी) ।

---

[1] 'वेद' इति नास्ति – आ.	[2] आपाततः प्रती – इ.क.ज.झ.
[3] कर्मविचारो – आ.	[4] ब्रह्मविचारः – आ.	[5] वेदस्य – आ.

कर्माङ्गाश्रयाणि उद्गीथाद्युपासनानि [1]अत्रैव[1] चिन्त्यन्ते । तत् अनधिगतकर्मणः न शक्यं कर्तुम्, इति चेत्—

[ कर्मणो ज्ञानानङ्गत्वम् ]

अनभिज्ञो भवान् शारीरकशास्त्रविज्ञानस्य ; अस्मिन् शास्त्रे अनाद्यविद्याकृतविविध-भेददर्शननिमित्तजन्मजरामरणादिसांसारिकदुःखसागरनिमग्नस्य निखिलदुःखमूलमिथ्या-ज्ञाननिबर्हणाय आत्मैकत्वविज्ञानं प्रतिपिपादयिषितम् । अस्य हि भेदावलम्बि-कर्मज्ञानं क्व उपयुज्यते? प्रत्युत विरुद्धमेव । उद्गीथादिविचारस्तु कर्मशेषभूत एव ज्ञानरूपत्वाविशेषात् इहैव क्रियते । [2]स तु न[2] साक्षात् सङ्गतः । अतः यत्प्रधानं शास्त्रं तदपेक्षितमेव पूर्ववृत्तं किमपि वक्तव्यम् ।

बाढम् । तदपेक्षितं [3]च कर्म[3]विज्ञानमेव ; कर्मसमुच्चितात् ज्ञानात् अपवर्गश्रुतेः । वक्ष्यति च—

'सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्' (ब्र. सू. 3-4-26)

इति । अपेक्षिते च कर्मणि अज्ञाते केन समुच्चयः? केन न? इति विभागः न [4]शक्यते ज्ञातुम्[4] ; अतः तदेव पूर्ववृत्तम् ॥

[कर्मणो मोक्षविरोधित्वम् ]

नैतद्युक्तम् ; सकलविशेषप्रत्यनीकचिन्मात्रब्रह्मविज्ञानादेव अविद्यानिवृत्तेः । अविद्यानिवृत्तिरेव हि मोक्षः! वर्णाश्रमविशेषसाध्यसाधनेतिकर्तव्यताद्यनन्तविकल्पास्पदं

---

विविधो भेदः—ज्ञातृ-ज्ञान-ज्ञेयरूपः । मिथ्याज्ञानम्—भ्रान्तिज्ञानम्-भेददर्शनम् (श्रु.प्र)। प्रतिपिपादयिषितम्—मोक्षसाधनतया प्रतिपाद्यम् (त.टी)। क्व उपयुज्यते—आत्मैकत्वज्ञानस्वरूपे, अविद्यानिवृत्तिरूपतत्कार्ये वा नोपयुज्यते । विरुद्धमेव—भेदवासनाजनकत्वात् (मू.प्र) ।

विकल्पास्पदम्—भेदज्ञानगर्भम् (मू.प्र) ।

---

[1] इहैव - अ. [2] न तु - ग.
[3] कर्म- आ. [4] शक्यते वक्तुम् - इ, शक्यते - आ.

कर्म सकलभेददर्शननिवृत्तिरूपाज्ञाननिवृत्तेः कथमिव साधनं भवेत्? श्रुतयश्च कर्मणां अनित्यफलत्वेन मोक्षविरोधित्वम्, ज्ञानस्यैव मोक्षसाधनत्वञ्च दर्शयन्ति—

'अन्तवदेवास्य तद्भवति' (बृ.उ. 5-8-9)

'तद्यथेह कर्मचितो[1] लोकः क्षीयते, एवमेवामुत्र पुण्यचितो लोकः क्षीयते' (छां. उ. 8-1-6)

'ब्रह्मविदाप्नोति परम्' (तै.उ.आन. 2-1-1)

'ब्रह्म वेद ब्रह्मैव भवति' (मुण्ड.उ. 3-2-8)

'[2]तमेव[2] विदित्वा अतिमृत्युमेति' (श्वे.उ. 3-8)

इत्याद्याः ॥

[ ज्ञानकर्मसमुच्चयवादनिरासः ]

यदपि चेदमुक्तं—यज्ञादिकर्मापेक्षा विद्या—इति; तत् वस्तुविरोधात्, श्रुत्यक्षर-पर्यालोचनया च, अन्तःकरणनैर्मल्यद्वारेण विविदिषोत्पत्तौ उपयुज्यते। न फलोत्पत्तौ; 'विविदिषन्ति' इति श्रवणात्। विविदिषायां जातायाम्, ज्ञानोत्पत्तौ शमादीनामेव अन्तरङ्गोपायतां श्रुतिरेवाह—

'शान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वा आत्मन्येवात्मानं पश्येत्' (बृ.उ. 6-4-23)

इति ॥

---

कथमिव—न कथञ्चित्।

यदपि च. . . . .उपयुज्यते—'यज्ञादिकर्मापेक्षा विद्या' इति वचनव्यक्त्या समप्रधान-तया। अङ्गतया वा यत् कर्म अपेक्षितमित्युक्तम्, तत् भेदवासनाहेतुत्वात् सन्नन्तपदश्रवणाच्च ःमनशुद्धिद्वारेण इच्छार्थम् इत्यर्थः फलोत्पत्तौ—अत्र फलशब्दः मोक्षपरः, वेदनपरो वा (श्रु. दी)।

---

[1] जितो – क.        [2] तमेवं – आ. इ. ग. छ.

[ वाक्यजन्यज्ञानात् अविद्यानिवृत्तिः ]

तदेवं जन्मान्तरशतानुष्ठितानभिसंहितफलविशेषकर्ममृदितकषायस्य विविदिषोत्पत्तौ सत्याम्,

'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्' (छां. उ. 6-2-1)

'सत्यं ज्ञानमनन्तं ब्रह्म' (तै. उ. आन. 2-1-1)

'निष्कलं निष्क्रियं [1]शान्तम्' (श्वे. उ. 6-19)

'अयमात्मा ब्रह्म' (बृ. उ. 6-4-5, श्वे. उ. 6-19)

'तत् त्वमसि' (छां. उ. 6-8-7)

इत्यादिवाक्य[2]जन्यज्ञानात् अविद्या निवर्तते ॥

[ अविद्यानिवर्तकज्ञानसहकारीणि ]

वाक्यार्थज्ञानोपयोगीनि च श्रवण-मनन-निदिध्यासनानि । श्रवणं नाम— 'वेदान्तवाक्यानि आत्मैकत्वविद्याप्रतिपादकानि' इति तत्त्वदर्शिनः आचार्यात् न्याययुक्तार्थग्रहणम् । एवमाचार्योपदिष्टस्यार्थस्य स्वात्मनि 'एवमेव युक्तम्' इति हेतुतः

---

तदेवम्—उक्तेभ्यो हेतुभ्य :समुच्चयेन विकल्पेन च इतिकर्तव्यतात्वेऽनुपपन्ने । अनभिसंहितफलेति—स्वर्गादिसाधनस्य कर्मणः विविदिषासाधनत्वानुपपत्तिशङ्कापरिहारायेदम् । विशेषेति—विविदिषाया अपि फलत्वात् तस्य अनभिसंहितत्वव्यावृत्तये । मृदितकषायस्य—नष्टपापस्य (श्रु. प्र) ।

प्रतिपादकानि—निष्पादनक्षमाणि । इति–समुच्चयाङ्गाङ्गिभावयोः अनुपपन्नत्वात् (श्रु.प्र) कर्ममीमांसा हि अविद्वदर्था कर्तव्यस्थापिका, ब्रह्ममीमांसा तु तत्त्वबोधोत्पादनेन सर्वकर्तव्यनिवर्तिका इति विशेषः । —आपातधीव्यावृत्त्या मीमांसाफलव्यञ्जनाय न्याययुक्तेति । (त.टी) न्यायुक्तोक्त्वोक्तिः । वस्तुतः अत्र न्याययुक्तत्वं स्वरूपत एव ग्रहणम इति केचित् । स्वात्मनि

---

[1] शान्तं निरवद्यं निरञ्जनम् – अ. इ. ज्ञ.   [2] जन्म ज्ञानाद्– त.   जन्यज्ञानादेव– ज्ञ.

प्रतिष्ठापनम्-मननम्। एतद्विरोध्यनादिभेदवासनानिरसनाय अस्यैवार्थस्य अनवरत-भावना—निदिध्यासनम्॥

[ शारीरकपूर्ववृत्तनिगमनम् ]

श्रवणादिभिः निरस्तसमस्तभेदवासनस्य वाक्यार्थज्ञानम् [1]अविद्यां निवर्तयती'ति, एव रूपस्य श्रवणस्य अवश्यापेक्षितमेव पूर्ववृत्तम् '[2]किमपि वक्तव्यम्'[2]।

तच्च—नित्यानित्यवस्तुविवेकः, शमदमादिसाधनसम्पत्, '[3]इहामुत्र'[3] फलभोग-विरागः, मुमुक्षुत्वं च इत्येतत् साधनचतुष्टयम्; अनेन विना जिज्ञासानुपपत्तेः। अर्थस्वभावादेव इदमेव पूर्ववृत्तमिति ज्ञायते।

[ बन्ध-तत्कारण-तन्निवर्तकानां निगमनम् ]

एतदुक्तं भवति—ब्रह्मस्वरूपाच्छा'दिका'विद्यामूलम् अपारमार्थिकभेददर्शनमेव बन्ध-मूलम्। बन्धश्च अपारमार्थिकः। स च समूलः अपारमार्थिकत्वादेव ज्ञानेनैव निवर्त्यते। निवर्तकं च ज्ञानम् तत्त्वमस्यादिवाक्यजन्यम्। तस्यैतस्य वाक्यजन्यस्य ज्ञानस्य स्वरूपोत्पत्तौ' कार्ये[5] 'वा[6] 'कर्मणो'[7] नोपयोगः। विविदिषायामेव तु कर्मणा-मुपयोगः। स च पापमूलरजस्तमोनिबर्हणद्वारेण सत्त्व'विवृद्ध्या'[8] भवतीति इममुप-योगम् अभिप्रेत्य—

'ब्राह्मणा विविदिषन्ति' (बृ. उ. 6-4-22)

---

स्वचित्ते हेतुतः प्रतिष्ठापनम्—संशयादेः अपुनरङ्कुरत्वाय युक्तिपटिम्ना दृढावस्थापनम् (त. टी)

अर्थस्वभावादेव—यथा शमादेः अन्तरङ्गोपायत्वलक्षणार्थस्वभावात् पूर्ववृत्तत्वमवसीयते, एवमेव कर्मणां ब्रह्मात्मैकत्वज्ञानविरोधित्वलक्षणार्थस्वभावादेव न पूर्ववृत्तत्वमिति (मू.प्र)।

---

[1] निवर्तयति- इ.    [2] वक्तव्यम् - क. ख ग. घ. ङ. च. छ. ज. झ.ञ.

[3] इहा मुत्र च - इ,    [4] दकाविद्या - अ.    [5] स्वरूपे तदुत्पत्तौ - इ, ज.

[6] कार्ये च - इ.    [7] कर्मणां - ,इ ज.    [8] वृद्ध्या - ज. इ.

'इत्युक्तमिति'[1]। अतः कर्मज्ञानस्य अनुपयोगत् उक्तमेव साधनचतुष्टयं पूर्ववृत्तम् इति वक्तव्यम्।

॥ इति लघुपूर्वपक्षः ॥

॥ अथ लघुसिद्धान्तः ॥

[वाक्यार्थज्ञानस्य मोक्षहेतुत्वम् शास्त्र-प्रत्यक्षविरुद्धम्]

अत्रोच्यते; यदुक्तम्—अविद्यानिवृत्तिरेव मोक्षः, सा च ब्रह्मविज्ञानादेव[2] भवति-इति—

तत् अभ्युपगम्यते। अविद्यानिवृत्तये वेदान्तवाक्यैः विधित्सितं ज्ञान किं-रूपम्? इति विवेचनीयम्—

किम् 'वाक्याद्वाक्यार्थ[3]ज्ञानमात्रम्? उत 'तन्मूलकम्[4]' उपासनात्मकं ज्ञानम्? इति।

न तावत् वाक्यजन्यं ज्ञानम्; तस्य विधानमन्तरेणापि वाक्यादेव सिद्धेः, तावन्मात्रेण अविद्यानिवृत्त्यनुपलब्धेश्च।

---

अतः—हानार्थम् उपादानार्थं च कर्मज्ञानस्य अनपेक्षितत्वात् (श्रु.प्र)।

अभ्युपगम्यते—साध्यसाधनद्वित्वनिरासः अनुमन्यत इत्यर्थः (त.टी)। विधित्सितम्—साधनतया चोदयितुमिष्टम्। परमते उत्पिपादयिषितम्।

किं वाक्यादिति—अयं स्वपरमतयोरुभयोरप्यनुवादः, न तु विकल्पः (श्रु.प्र)।

वाक्यादेव सिद्धेः—पुरुषतन्त्रत्वाभावात् न विध्यधीनता। अनुपलब्धेः—प्रत्यक्ष-विरोधात् (त.टी)

---

[1] इत्युक्तम् –आ॰ [2] ज्ञानादेव –आ॰
[3] वाक्यार्थ –आ॰ [4] तन्मूलम् –आ॰

न च वाच्यम्—भेदवासनायां अनिरस्तायां वाक्यम् [1]अविद्या[1]निवर्तकं ज्ञानं न जनयति। [2]जातेऽपि[2] सर्वस्य सहसैव भेदज्ञानानिवृत्तिः न दोषाय। चन्द्रैकत्वे ज्ञातेऽपि द्विचन्द्रज्ञानानिवृत्तिवत्। अनिवृत्तमपि छिन्नमूलत्वेन बन्धाय न भवति—इति।

सत्यां सामग्र्यां ज्ञानानुत्पत्त्यनुपपत्तेः; सत्यामपि विपरीतवासनायाम् आप्तोपदेश-लिङ्गादिभिः बाधकज्ञानोत्पत्तिदर्शनात्।

सत्यपि वाक्यार्थज्ञाने अनादिवासनया मात्रया भेदज्ञानमनुवर्तते—इति भवता न शक्यते वक्तुम्; भेदज्ञानसामग्र्या अपि वासनायाः मिथ्यारूपत्वेन ज्ञानोत्पत्त्यैव निवृत्तत्वात्। ज्ञानोत्पत्तावपि मिथ्यारूपायाः तस्याः अनिवृत्तौ निवर्तकान्तराभावात् कदाचिदपि न अस्याः वासनायाः निवृत्तिः।

वासनाकार्यं भेदज्ञानं छिन्नमूलम्, अथ च अनुवर्तते—इति बालिशभाषितम्। द्विचन्द्रज्ञानादौ तु बाधकसन्निधावपि मिथ्याज्ञानहेतोः परमार्थतिमिरादिदोषस्य ज्ञान-बाध्यत्वाभावेन [3]अविनष्टत्वात्[3], मिथ्या[4]ज्ञानानुवृत्ति[4]ः अविरुद्धा। प्रबलप्रमाण-बाधितत्वेन भयादिकार्यं तु निवर्तते।

---

आप्तेति—रज्जुसर्पवासनानुवृत्तावपि 'नायं सर्पः' इत्याप्तवाक्येन, दण्डघट्टनेऽपि निश्चेष्टत्वलिङ्गेन च परोक्षं बाधकं ज्ञानं जायते इत्यर्थः।

मात्रया—न तु कार्त्स्न्येन (त.टी)।

बालिशभाषितम्—तथा सति मुक्तिः ज्ञानेन विना, ज्ञानं च श्रवणादिभिर्विना, जगद्भ्रमः अविद्यया विना, अविद्या च अधिष्ठानेन विना भवेयुरिति अकारणकार्योत्पत्तिप्रसङ्गः इत्यर्थः (श्रु.प्र)। स्वोक्तिविरोधानभिज्ञः किमन्यद्वक्ष्यति? इति बालिशता (त.टी) प्रबलेति—प्रमितप्रामाण्यकत्वम् प्रमाणे प्रबलत्वम् (श्रु.प्र)।

---

[1] अविद्याया – त.    [2] जातेऽपि ज्ञाने – ज. झ.

[3] अनिवृत्तत्वात् – क.    [4] ज्ञाननिवृत्तिः – ङ

[ अद्वैतिरीत्या ज्ञानोत्पत्त्यनुपपत्तिः ]

अपि च भेदवासनानिरसनद्वारेण ज्ञानोत्पत्तिमभ्युगच्छतां कदाचिदपि ज्ञानोत्पत्तिः न सेत्स्यति। भेदवासनायाः अनादिकालोपचितत्वेन अपरिमितत्वात्, तद्विरोधिभावनायाश्च अल्पत्वात् अनया [1]तन्निरसनानुपपत्ते[1]ः॥

[ अपवर्गसाधनीभूतज्ञानस्वरूपम् ]

अतः वाक्यार्थज्ञानादन्यदेव ध्यानोपासनादिशब्दवाच्यं ज्ञानं वेदान्तवाक्यैः विधित्सितम्। तथा च श्रुतयः—

'विज्ञाय प्रज्ञां कुर्वीत' (बृ. उ. 6-4-21)
'अनुविद्य विजानाति' (छां.उ. 8-2-6)
'[2]ओमित्येवात्मानं[2] ध्यायथ' (मुण्ड.उ. 2-2-6)
'निचाय्य तं मृत्युमुखात् प्रमुच्यते' (कठ.उ. -31-15)
'आत्मानमेव लोकमुपासीत' (बृ.उ. 3-4-15)
'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो [3]मन्तव्यो निदिध्यासितव्यः'
(बृ.उ. 6-5-6)
'सोऽन्वेष्टव्यः[3] स विजिज्ञासितव्यः' (छां.उ. 8-7-1)

इत्येवमाद्याः[4]॥

[ अपवर्गसाधनं च ज्ञानं ध्यानरूपम् ]

अत्र 'निदिध्यासितव्यः' [5]इत्यादिना[5] ऐकार्थ्यात् 'अनुविद्य विजानाति' 'विज्ञाय

---

कदाचिदपि—ध्यानात् प्रागिव पश्चादपि। कल्पकोटिसहस्रध्यानेऽपि (श्रु.प्र)।

अतः—वाक्यजन्यज्ञानस्य विधेयत्व-निवर्तकत्वादेः युक्तिप्रत्यक्षविरुद्धत्वात्।

निचाय्य—दृष्ट्वा। चायृ-पूजानिशामनयोः। निशामनम्-दर्शनम् (मू प्र)।

ऐकार्थ्यम्—एकप्रयोजनत्वम्, एकविषयत्वं वा (त.टी)।

---

[1] तन्निरासानुपपत्तेः – आ. इ. घ.
[2] ओमित्यात्मानं – आ. इ.
[3] मन्तव्यः – ख.
[4] इत्याद्याः – आ. इ.
[5] इत्यनेन – क.

प्रज्ञां कुर्वीत' इत्येवमादिभिः, वाक्यार्थज्ञानस्य ध्यानोपकारकत्वात् 'अनुविद्य' 'विज्ञाय' इत्यनूद्य, 'प्रज्ञां कुर्वीत' 'विजानाति' इति [1]ध्यानं[1] विधीयते ।

'श्रोतव्यः' इति अनुवादः ; स्वाध्यायस्य अर्थपरत्वेन अधीतवेदः पुरुषः प्रयोजनवदर्थावबोधित्वदर्शनात् तन्निर्णयाय स्वयमेव [2]श्रवणे प्रवर्तते[2] इति श्रवणस्य प्राप्तत्वात् । णश्रप्रतिष्ठार्थत्वात्व मननस्य 'मन्तव्यः' इति च अनुवादः । तस्मात् ध्यानमेव विधीयते । वक्ष्यति च—

'आवृत्तिरसकृदुपदेशात्' (ब्र.सू. 4-1-1)

इति ॥

[ ध्यानस्य वेदनोपासनात्मकत्वम् ]

तदिदम् अपवर्गोपायतया विधित्सितं वेदनम् उपासनम् इत्यवगम्यते ; विद्युपास्योः [3]व्यतिकरेण[3] उपक्रमोपसंहारदर्शनात् ।

'मनो ब्रह्मेत्युपासीत' (छां. उ. 3-18-1)

इत्यत्र—

'भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद'

(छां. उ. 3-18-5)

'न स वेद, अकृत्स्नो ह्येषः । आत्मेत्येवोपासीत' (बृ. उ. 3-4-7)

---

अनूद्य—प्राप्तत्वेन अनुवादार्हत्वात् वाक्यार्थज्ञानं अनूद्य । विधीयते—अप्राप्तत्वेन विधानार्हं निदिध्यासनमेव विधीयते (मू.प्र)।

तस्मात्—श्रवणादिपर्यवसाने विध्यानर्थक्यात् (श्रु.दी) । ध्यानमेव विधीयते—भगवद्ध्यानमपि विषयस्यानुकूलत्वात् कामिनीध्यानवत् स्वतः प्राप्तं तु न भवत्येव । अत्यन्तानुकूलविषय एव स्वतः ध्यानस्य प्राप्तेः । भगवतः अत्यन्तानुकूलत्वस्य तु ध्यानानन्तरभावित्वैव ।

व्यतिकरः—मिथः स्थानाक्रान्तिः ।

---

[1] ज्ञानम् – आ. इ.
[2] प्रवर्तते – इ
[3] अव्यतिरेकेण – झ.

'यस्तद्वेद, यत् स वेद, स मयैतदुक्तः' (छां. उ. 4-1-4)

इत्यत्र--

'अनु म एतां भगवो देवतां शाधि, यां देवतामुपास्से' (छां. उ. 4-2-2)

इति ॥

[ ध्यानस्य ध्रुवानुस्मृति-दर्शनरूपता ]

ध्यानं च तैलधारावदविच्छिन्नस्मृतिसन्तानरूपम् ।

'ध्रुवा स्मृतिः । स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षः' (छां.उ. 7-26-2)

इति ध्रुवायाः स्मृतेः अपवर्गोपायत्वश्रवणात् । सा च स्मृतिः दर्शनसमानाकारा ।

'भिद्यते हृदयग्रन्थिः छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ॥' (मुण्ड. उ. 2-2-9)

इत्यादिना ऐकार्थ्यात् । एवं च सति,

'आत्मा वा अरे द्रष्टव्यः' (बृ. उ. 6-5-6)

इत्यनेन निदिध्यासनस्य दर्शनसमानाकारता विधीयते । भवति च स्मृतेः भावना-प्रकर्षात् 'दर्शनरूपता[1] । वाक्यकारेण एतत्सर्वं प्रपञ्चितम्—

'वेदनमुपासनं स्यात् तद्विषये श्रवणात्' (ब्र. न. वा)

---

ध्यानं चेति—अविच्छिन्नत्वमत्र विजातीयप्रत्ययान्तराव्यवहितत्वम् । विच्छिन्नाविच्छिन्न-स्मृतिसन्ततिसाधारणश्चेत् ध्यानशब्दः, विशेषान्तरे पर्यवसानं ध्यानं चेति । अविच्छिन्नस्मृति-सन्तत्यसाधारणश्चेत्, ध्यानशब्दव्याख्यानं ध्यानं चेत्यादि (श्रु.प्र) ।

विप्रमोक्षः—विभज्य आत्यन्तिकमोचनम् (त.टी) ।

दर्शनसमानाकारा—न केवलं विषयैक्यतः साम्यम्, अपि तु आपरोक्ष्येणापि इति आकारशब्दस्य भावः ।

एवं च सति—उपायदशापन्नज्ञानस्य दर्शनरूपत्वे स्फुटार्थवाक्यान्तरसिद्धे सति (श्रु.प्र) । भावना—अनुभवजन्यः संस्कारः (श्रु.प्र) । दर्शनरूपता—दर्शनस्य रूपमिव रूपं यस्याः स्मृतेः सा दर्शनरूपा, उपमानबहुव्रीहिरत्र ग्राह्यः (त.टी) । तद्विषये श्रवणात्—उपासन-शब्दस्थाने वेदनशब्दस्य एकत्र चान्यत्र च प्रयोगात् ।

---

[1] दर्शनसमानाकारता – अ. ख.

इति सर्वासु उपनिषत्सु मोक्षसाधनतया विहितं वेदनम् उपासनम् इत्युक्तम् ।

'सकृत् प्रत्ययं कुर्यात् शब्दार्थस्य कृतत्वात् प्रयाजादिवत्' (ब्र. न. वा)

इति पूर्वपक्षं कृत्वा,

'सिद्धं तूपासनशब्दात्' (ब्र.न.वा)

इति, वेदनम् असकृदावृत्तं मोक्षसाधनम् इति निर्णीतम् ।

'उपासनं स्यात् ध्रुवानुस्मृतिः दर्शनान्निर्वचनाच्च' (ब्र.न.वा)

इति तस्यैव वेदनस्य उपासनरूपस्य असकृदावृत्तस्य ध्रुवानुस्मृतित्वम् उपवर्णितम् । सेयं स्मृतिः दर्शनरूपा प्रतिपादिता । दर्शनरूपता च प्रत्यक्षतापत्तिः ।।

[ अपवर्गसाधनीभूतस्मृतिगतं वैशिष्ट्यम् ]

एवं प्रत्यक्षतापन्नाम् अपवर्गसाधनभूतां [1]स्मृतिं[1] विशिनष्टि—

'नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन ।
यमेवैष वृणुते तेन लभ्यः तस्यैष आत्मा विवृणुते तनूं स्वाम् ।।'

(मुण्ड. उ. 3-2-3)

इति । अनेन केवलश्रवण-मनन-निदिध्यासनानाम् आत्मप्राप्त्यनुपायत्वमुक्त्वा, 'यमेव एष आत्मा वृणुते तेनैव लभ्यः' इत्युक्तम् । प्रियतम एव हि वरणीयो भवति ! यस्य अयं निरतिशयप्रियः स एव अस्य प्रियतमो भवति । यथा अयं प्रियतमः आत्मानं प्राप्नोति, तथा भगवान् स्वयमेव प्रयतते इति भगवतैवोक्तम्—

---

असकृदावृत्तमिति—न हि सकृद्बुद्धौ उपासनशब्दस्य प्रख्यातिः । दर्शनम्—स्वारसिकी लोकदृष्टिः, प्रत्यक्षश्रुतिर्वा । निर्वचनम्—निर्णायकं श्रुतिवाक्यं, निष्कृष्य वचनरूपं उपबृंहणं वा (त. टी) । सेयम्—असकृदावृत्ता, ध्रुवा च (मू. प्र) ।

प्रवचनम्—तत्फलभूतं मननम् । मेधा—निदिध्यासनम् ।

---

[1] ध्रुवानुस्मृतिम् – क.

'तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् ।
ददामि बुद्धियोगं तं, येन मामुपयान्ति ते ॥' (भ. गी. 10-10)

इति,

'प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः ।' (भ. गी. 7-17)

इति च । अतः साक्षात्काररूपा स्मृतिः स्मर्यमाणात्यर्थप्रियत्वेन [1]स्वयमपि अत्यर्थ[1]-प्रिया यस्य, स एव परेणात्मना वरणीयो भवति इति, तेनैव लभ्यते पर आत्मा इत्युक्तं भवति ॥

[ दर्शनसमानाकारायाः स्मृतेः भक्तिशब्दाभिधेयता ]

[2]एवंरूपा ध्रुवा[2]नुस्मृतिरेव भक्तिशब्देन अभिधीयते ; उपासनपर्यायत्वात् भक्तिशब्दस्य । अत एव श्रुतिस्मृतिभिः एवमभिधीयते—

'[3]तमेव विदित्वाऽति[3]मृत्युमेति' (श्वे. उ. 3-8)

'तमेवं विद्वानमृत इह भवति । नान्यः पन्था अयनाय विद्यते' (तै.पु.सू. 17)

'नाहं वेदैर्न तपसा न दानेन न चेज्यया ।
शक्य एवंविधो द्रष्टुं दृष्टवानसि मां यथा ॥' (भ.गी 11-53)

'भक्त्या त्वनन्यया शक्यः अहमेवंविधोऽर्जुन ।
ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तप ॥' (भ. गी. 11-54)

'पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया ।' (भ. गी. ८-22)

इति ॥

---

सततयुक्तानाम्—सततयोगमाकांक्षमाणानाम् । आशंसायां क्तः । प्रीतिपूर्वकम्—इत्यस्य ददामीत्यनेनान्वयः । परस्परप्रीतिरनेन दर्शिता (श्रु.प्र) । अत्यर्थप्रिया—अतिमात्रानुकूल्यस्वभावतया स्वयमेव भासमाना (त.टी) ।

भक्तिशब्देन — 'स्नेहपूर्वमनुध्यानं भक्तिरित्यभिधीयते' । पर्यायत्वात्—'सेवा भक्तिरुपास्तिः' इति पर्यायपाठात् (त.टी) । अत एवेति । यतः, 'वेदनं ध्यानविश्रान्तं ध्यानं श्रान्तं ध्रुवस्मृतौ । सा च दृष्टित्वमभ्येति दृष्टिर्भक्तित्वमृच्छति ' अत एव (मू.प्र) ।

---

[1] स्वयमत्यर्थ –झ. [2] एवंरूपध्रुवानु – आ [3] तमेवं विद्वानति—आ

[ भक्तेः कर्माङ्गकत्वम् ]

एवंरूपायाः ध्रुवानुस्मृतेः साधनानि यज्ञादीनि कर्माणीति,

'यज्ञादिश्रुतेरश्ववत्' (ब्र. सू. 3-4-26)

इत्यभिधास्यते ।

यद्यपि 'विविदिषन्ति' इति यज्ञादयः विविदिषोत्पत्तौ विनियुज्यन्ते ; तथापि तस्यैव वेदनस्य ध्यानरूपस्य अहरहरनुष्ठीयमानस्य अभ्यासाधेयातिशयस्य आप्रयाणादनुवर्तमानस्य ब्रह्मप्राप्तिसाधनत्वात्, तदुत्पत्तये 'सर्वाण्याश्र[1]मकर्माणि यावज्जीवम् अनुष्ठेयानि । वक्ष्यति च—

'आप्रयाणात् तत्रापि हि दृष्टम्' (ब्र. सू. 4-1-12)

'अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात्' (ब्र. सू. 4-1-16)

'सहकारित्वेन च' (ब्र. सू. 3-4-33)

इत्यादिषु ॥

[ ध्रुवानुस्मृतेः साधनसप्तकनिष्पाद्यत्वम् ]

वाक्यकारश्च ध्रुवानुस्मृतेः विवेकादिभ्य एव निष्पत्तिमाह—

'तल्लब्धिः विवेकविमोकाभ्यासक्रियाकल्याणानवसादानुद्धर्षेभ्यः सम्भवात् निर्वचनाच्च' (ब्र. न. वा)

इति । विवेकादीनां [2]स्वरूपं चाह[2]—

'जात्याश्रयनिमित्तादुष्टात् अन्नात् कायशुद्धिः विवेकः' (ब्र.न.वा)

एवंरूपायाः — सुकृतसापेक्षध्यानादिभक्त्यन्तपर्वविशेषवत्तया श्रुतिस्मृतिसूत्रवाक्यसिद्धायाः । अभिधास्यते—सूत्रकृता, अस्माभिश्च समर्थयिष्यते । तस्यैव—[विलक्षण] विविदिषागोचरस्यैव (त.टी) ।

आप्रयाणादिति 'स खल्वेवं वर्तयन् यावदायुषम्' इत्यस्य ज्ञापनम् । अग्निहोत्रादीति 'यावज्जीवमग्निहोत्रं जुहोति' इत्यस्य ज्ञापनम् । सहकारित्वेन चेति आश्रमाङ्गतया विहितानां कर्मणां विनियोगपृथक्त्वेन वेदनाङ्गत्वमपीति ज्ञापनाय (त.टी) ।

सम्भवात् निर्वचनाच्च—प्रमाणोपपत्तिभ्याम् (श्रु.प्र) ।

---

[1] सर्वाण्याश्रम—ट.　　[2] स्वरूपमाह – आ.

इति । अत्र निर्वचनम्—

'आहारशुद्धौ सत्त्वशुद्धिः, सत्त्वशुद्धौ ध्रुवा स्मृतिः । (छां. उ. 7-26-2)

इति ।

'विमोकः कामानभिष्वङ्गः' (व्र.न.वा)

इति ।

'शान्त उपासीत' (छां. उ. 3-14-1)

इति निर्वचनम् ।

'[1]आरम्बण[1]संशीलनं पुनःपुनः अभ्यासः' (व्र. न. वा)

इति । निर्वचनं च स्मार्तमुदाहृतं भाष्यकारेण—

'सदा तद्भावभावितः' (भ. गी. 8-6)

इति ।

'पञ्चमहायज्ञाद्यनुष्ठानं शक्तितः क्रिया' (व्र. न. वा)

इति । निर्वचनम्—

'क्रियावानेष ब्रह्मविदां वरिष्ठः' (मुण्ड. उ. 3-1-4)

इति,

'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन' (बृ. उ. 6-4-22)

इति च ।

---

कामानभिष्वङ्गः—विषयमभुक्त्वा स्थातुं न क्नोति येन स विकारः अभिष्वङ्गः, तदभावः । आरम्बणम्—आलम्बनीभूतः शुभाश्रयः । संशीलनम्—योगकालकर्तव्यध्यानानुग्राहकमिदं सदासंशीलनम् ।

भाष्यकारः—द्रमिडाचार्यः (श्रु.दी) ।

[1] आरम्भण – क.

'सत्यार्जवदयादानाहिंसानभिध्याः कल्याणानि' (व्र.न.वा.)

इति। निर्वचनम्—

'सत्येन लभ्यः' (मुण्ड.उ. 3-1-5)

'तेषामेवैष विरजो ब्रह्मलोकः' (प्रश्न.उ. 1-15-16)

इत्यादि।

'देशकालवैगुण्यात् शोकवस्त्वाद्यनुस्मृतेश्च तज्जं दैन्यमभास्वरत्वं मनसः अवसादः' (व्र.न.वा.)

इति। तद्विपर्ययः—अनवसादः। निर्वचनम्—

'नायमात्मा बलहीनेन लभ्यः' (मुण्ड.उ. 3-2-4)

इति।

'तद्विपर्ययजा तुष्टिः उद्धर्षः' (व्र.न.वा)

इति। तद्विपर्ययः—अनुद्धर्षः। अतिसन्तोषश्च विरोधी इत्यर्थः। निर्वचनमपि—

'शान्तो दान्तः' (बृ.उ. 6-4-23)

इति।

[विद्यानिष्पत्तेः आश्रमकर्माविनाभाविता]

एवं नियमयुक्तस्य आश्रमविहितकर्मानुष्ठानेनैव विद्यानिष्पत्तिः इत्युक्तं भवति। तथा च श्रुत्यन्तरम्—

'विद्यां चाविद्यां च यस्तद्वेदोभयं सह।
अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते॥' (ईश.उ. 11)

इति। अत्र अविद्याशब्दितं वर्णाश्रमविहितं कर्म। अविद्यया–कर्मणा। मृत्युम्–ज्ञानोत्पत्तिविरोधि प्राचीनं कर्म। तीर्त्वा—अपोह्य। विद्यया—ज्ञानेन। अमृतम्–ब्रह्म। अश्नुते—प्राप्नोति इत्यर्थः। मृत्युतरणोपायतया प्रतीता अविद्या—विद्येतरत् विहितं कर्मैव। यथोक्तम्—

---

विहितं कर्मैव—फलाभिसन्धिरहितं परमात्माराधनरूपं कर्मैव (मू.प्र)।

'इयाज सोऽपि सुबहून् यज्ञान् ज्ञानव्यपाश्रयः ।
ब्रह्मविद्यामधिष्ठाय तर्तुं मृत्युमविद्यया ॥' (वि. पु. 6-6-12)

इति । ज्ञानविरोधि च कर्म पुण्यपापरूपम् । ब्रह्मज्ञानोत्पत्ति[1]विरोधित्वेन[1] अनिष्टफलतया उभयोरपि पापशब्दाभिधेयत्वम् । अस्य च ज्ञानविरोधित्वं ज्ञानोत्पत्तिहेतुभूतशुद्धसत्त्वविरोधिरजस्तमोविवृद्धिद्वारेण । पापस्य च [2]ज्ञान[2]विरोधित्वम्[3]—

'एष एवासाधु कर्म कारयति तम् , यमधो निनीषति' (कौ.षी.उ. 3-9)

इति श्रुत्या अवगम्यते ॥

[ यथार्थज्ञान-तदावरणयोः सत्त्वादिगुणायत्तता ]

रजस्तमसोः यथार्थज्ञानावरणत्वम्, सत्त्वस्य च यथार्थज्ञानहेतुत्वं भगवतैव प्रतिपादितम्—

'सत्त्वात् सञ्जायते ज्ञानम्' (भ. गी. 14-17)

इत्यादिना । अतश्च ज्ञानोत्पत्तये पापं कर्म निरसनीयम् । तन्निरसनं च अनभिसंहितफलेन अनुष्ठितेन [4]धर्मेण[4] । तथा च श्रुतिः—

'धर्मेण पापमपनुदति' (तै.आर.उ. 6-50)

इति ॥

[ कर्ममीमांसायाः ब्रह्ममीमांसापूर्ववृत्तत्वनिगमनम् ]

तदेवं ब्रह्मप्राप्ति[5]साधनं[5] ज्ञानं [6]सर्वाश्रम[6]कर्मापेक्षम् । अतः अपेक्षितकर्मस्वरूप-

---

ज्ञानव्यपाश्रयः—आगमोत्थज्ञाने प्रतिष्ठितः । ब्रह्मविद्यामधिष्ठाय—विवेकादिजन्यपराविद्यां भक्तिरूपापन्नाम्, निष्पाद्यत्वेनाभिसन्धाय (त.टी) ।

अनिष्टफलतयेति प्रवृत्तिनिमित्तसूचनम् । अलौकिकत्वे सति अनिष्टफलासाधारणकारणत्वं पापत्वम् (श्रु: प्र) ।

तत् — श्रुतिस्मृतितदनुग्राहकोपपत्तिसूत्रवाक्यकारवचनेभ्यः । अतः — ब्रह्मज्ञानस्य

---

[1] विरोधित्वेन – क. स. [2] ज्ञानोदया – आ. [3] विरोधित्वम् – पा.
[4] कर्मणा – आ. क. [5] साधनभूतं – इ. [6] सर्ववर्णाश्रम – इ.

ज्ञानम्, केवलकर्मणाम् अल्पास्थिरफलत्वज्ञानं च कर्ममीमांसावसेयमिति, सैव अपेक्षिता [1]ब्रह्मजिज्ञासायाः[1] पूर्ववृत्ता वक्तव्या ॥

[ साधनचतुष्टयसम्पत्तेः मीमांसाद्ध्ययनश्रवणपश्चाद्भावित्वम् ]

अपि च नित्यानित्यवस्तुविवेकादयश्च मीमांसाश्रवणमन्तरेण न सम्पत्स्यन्ते ; फलकरणेतिकर्तव्यताधिकारिविशेषनिश्चयादृते कर्मस्वरूप-तत्फल-तत्स्थिरत्वास्थिरत्वात्म-नित्यत्वादीनां दुरवबोधत्वात् । [2]एषां[2] [3]साधनत्वं च[3] विनियोगावसेयम् । विनियोगश्च श्रुतिलिङ्गादिभ्यः । स च तार्तीयः ।

उद्गीथाद्युपासनानि च कर्मसमृद्ध्यर्थान्यपि ब्रह्मदृष्टिरूपाणि ब्रह्मज्ञानापेक्षाणीति इहैव चिन्तनीयानि । [4]तान्यपि[4] कर्माणि अनभिसंहितफलानि ब्रह्मविद्योत्पादकानीति तत्साद्गुण्यापादनान्येतानि सुतराम् इहैव सङ्गतानि । तेषां च कर्मस्वरूपाधिगमापेक्षा सर्वसंमता ॥

॥ इति लघुसिद्धान्तः ॥

---

फलाभिसन्धिरहिताश्रमकर्मसापेक्षत्वात् (श्रु.प्र)। अवसेयम्—उत्पाद्यम् (मू.प्र)। सैव—त्वया विरुद्धेति या निरस्ता सैव। अपेक्षिता—ज्ञानं हि हानार्थम्, उपादानार्थं वा। इह तु उभयार्थम्। फलद्वारकं हानम्, स्वरूपेण उपादानम् इति (श्रु.प्र)।

फलेत्यादि। फलविशेषः—भोगमोक्षरूपः। करणविशेषः—यज्ञोपासनादिः। इतिकर्तव्यताविशेषः—प्रयाजादिः, साधनसप्तकं च। अधिकारिविशेषः—बुभुक्षुः मुमुक्षुश्च। कर्मस्वरूपम्—साङ्गयज्ञात्मकम्, उपासनात्मकञ्च। एषाम्—शमादीनाम्। विनियोगावसेयम्—अङ्गत्वज्ञापनेन निर्णेयम्। तार्तीयः—इदमुपलक्षणम्; कर्मविचारोक्तकृत्स्नन्याय-सापेक्षत्वात् ब्रह्मविचारस्य (श्रु.प्र)।

कर्मसमृद्धिः— प्रबलकर्मभिः अप्रतिबन्धः। ब्रह्मदृष्टिरूपाणि — इति हेतुगर्भम् (त.टि.)। [अब्रह्मणि ब्रह्मत्वेन दृष्टिः ब्रह्मदृष्टिः। ब्रह्मदृष्टिरूपत्वात्।] ब्रह्मज्ञानापेक्षाणीति—इतिः हेतौ। इहैव—न तु कर्मविचारे। साद्गुण्यम्—प्रबलप्रतिबन्धके सत्यपि शीघ्रफल-प्रदत्वम्। सङ्गतानि—प्रधानानुपयोगित्वेन सादृश्यादिना धीस्थत्वं प्रसङ्गात्सङ्गतिः। अन्य-तरापेक्षया उभयापेक्षया वा साक्षात्सङ्गतिः (श्रु.प्र)।

---

[1] ब्रह्ममीमांसायाः – इ. ज्ञ.
[2] तेषां – आ.
[3] साधनत्वं – इ.
[4] एतान्यपि – इ.

– अथ महापूर्वपक्षः –

[ ब्रह्मण एव सत्यत्वम्, तदतिरिक्तसर्वमिथ्यात्वं च ]

यदप्याहुः—अशेषविशेषप्रत्यनीकचिन्मात्रं ब्रह्मैव परमार्थः । [1]तदतिरेकि नाना-विधज्ञातृ-ज्ञेय-तत्कृतज्ञानभेदादि सर्वं तस्मिन्नेव परिकल्पितं मिथ्याभूतम् ॥

[ निर्विशेषवस्तुनः श्रौतता ]

'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्' (छां. उ. 6-2-1)

---

यदपीत्यादि । यच्छब्दः परगोष्ठीप्रसिद्धिम्, अपिः-दूषितादूषितसमुच्चयम्, आहुः-इति कण्ठोक्तिम्, तत्रैव बहुवचनं—बहुव्याख्यातृसंमतिं च सूचयन्ति (त.टी) । अशेषेत्यादि आरभ्यन्ते इत्यन्तेन यदप्याहुः, 'तत् अनादरणीयम्' इति उपरि अन्वयः । अशेषविशेषाः—वक्ष्यमाणाः ज्ञातृज्ञानज्ञेयाः, सजातीयविजातीयस्वगतभेदा वा (श्रु.प्र) । उक्तं च—

'वृक्षस्य स्वगतो भेदः पत्रपुष्पफलादिभिः ।
वृक्षान्तरात् सजातीयः विजातीयः शिलादिभिः ॥
सदसद्वस्तुनोर्भेदत्रयं प्राप्तं निषिध्यते ।
ऐक्यावधारणद्वैतप्रतिषेधैस्त्रिभिः क्रमात् ॥' (मू. प्र) ॥

तत्प्रत्यनीकम्—स्वज्ञानेनैव तन्निवर्तकम्, शुक्तिरिव रजतस्य । चिन्मात्रम्—'चित्'शब्देन तुच्छत्वव्यावृत्तिः । स्वयं प्रकाशत्वं हि चित्त्वम् । मात्रचा ज्ञेयत्व-व्यावृत्तिः । परमार्थः—तत्वावेदकप्रमाणविषयः । तत्कृतज्ञानभेदादीति—'देवदत्तज्ञानम्' इति ज्ञातृकृतः, 'घटज्ञानम्' इति ज्ञेयकृतश्च भेदः । आदिना जीवानां भेदः [पुण्यपापादि-भेदः, तत्कृतस्वर्गनरकादिसुखदुःखभेदश्च ] (मू. प्र) । परिकल्पितम्—अविद्यमानत्वेऽपि अस्तीतिप्रतीतम् (त.टी) । मिथ्याभूतम्—वक्ष्यमाणमिथ्यात्वलक्षणवत् (श्रु.प्र) ॥

सदेव—अनेन विजातीयभेदः, एकमेव—अनेन सजातीयभेदः, अद्वितीयम्—अनेन स्वगतभावाभावरूपभेदश्च व्यावृत्तः ॥

---

[1] तदतिरिक्त–ङ.

'अथ परा, यया तदक्षरमधिगम्यते, यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादं नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद् भूतयोनिं परिपश्यन्ति धीराः' (मुण्ड. उ. 1-1-6)

'सत्यं ज्ञानमनन्तं ब्रह्म' (तै. उ. आन. 1-1)

'निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्' (श्वे.उ. 6-19)

'यस्यामतं तस्य मतं मतं यस्य न वेद सः ।
अविज्ञातं विजानतां विज्ञातमविजानताम् ।।' (केन. उ. 2-3)

'न दृष्टेर्द्रष्टारं पश्येः....न मतेर्मन्तारं मन्वीथाः' (बृ.उ. 5-4-2)

'आनन्दो ब्रह्म' (तै. उ. भृ. 6)

'इदं सर्वं यदयमात्मा' (बृ उ. 4-4-6)

'. . . . . . नेह नानाऽस्ति किञ्चन ।
मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति ।।' (बृ. उ. 6-4-109)

'यत्र हि द्वैतमिव भवति, तदितर इतरं पश्यति . . . यत्र त्वस्य सर्वमात्मैवाभूत् 'तत् केन[1] कं पश्येत् तत् केन कं विजानीयात्' (बृ. उ. 4-4-14)

---

सर्वगतम्—सर्वेण-जगता गतम्—अधिष्ठानतया श्रितम् । सुसूक्ष्मम् । अदृश्यत्वं न तुच्छत्वदूरत्वादिना, किन्तु सुसूक्ष्मत्वात् इत्यभिप्रायः (श्रु.प्र) ।

सत्यमिति । शोधकवाक्यमेतत् कारणवाक्यैकार्थ्यात् शोधकवाक्यान्तरैकार्थ्यात् सामानाधिकरण्यान्यथानुपपत्त्या च, अनृत-जड-परिच्छिन्नव्यावृत्तनिर्विशेषवस्तुपरम् । निष्कलम्—निरवयवम् । शान्तम्—अशनायापिपासे, शोकमोहौ, जरामृत्यू इति ऊर्मिषट्करहितम् । निरवद्यं निरञ्जनम्—कर्मसम्बन्धतत्फलरहितम् । अमतम् अविज्ञातम्—श्रवणमननाद्यविषयीभूतम् । इदं सर्वम्—इदम् अधिष्ठानेन अध्यस्तसामानाधिकरण्यं बाधार्थम् ; 'रज्जुः सर्पः' इतिवत् । नेह नाना—व्यतिरिक्तनिषेधकण्ठोक्तिरियम् । मृत्युः—अविद्या । नानेव—इवशब्देन नानात्वस्य अपारमार्थ्यम् । यत्र—यदा । तत्—तदा । इतरः इतरम् इतरेण पश्यति इत्यर्थः । पश्येत् विजानीयात् इति ज्ञानपर्वभेदोक्तिः ।

[1] केन-ड.

'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्' (छां उ. 6-1-4)

'यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते, अथ तस्य भयं भवति'
(तै. उ. आन. 7-2)

'न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि।' (ब्र. सू. 3-2-11)

'मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात्' (ब्र. सू. 3-2-3)

[निर्विशेषवस्तुनि पराशरसम्मतिः]

'प्रत्यस्तमितभेदं यत् सत्तामात्रमगोचरम् ।
वचसामात्मसंवेद्यं तज्ज्ञानं ब्रह्मसंज्ञितम् ॥' (वि. पु. 6-7-53)

'ज्ञानस्वरूपमत्यन्तनिर्मलं परमार्थतः ।
तमेवार्थस्वरूपेण भ्रान्तिदर्शनतः स्थितम् ॥' (वि.पु. 1-2-6)

'परमार्थस्त्वमेवैको नान्योऽस्ति जगतः पते ।' (वि. पु. 1-4-38)

'यदेतद्दृश्यते मूर्तमेतज्ज्ञानात्मनस्तव ।
भ्रान्तिज्ञानेन पश्यन्ति जगद्रूपमयोगिनः ॥' (वि. पु. 1-4-39)

'ज्ञानस्वरूपमखिलं जगदेतदबुद्धयः ।
अर्थस्वरूपं पश्यन्तो भ्राम्यन्ते मोहसम्प्लवे ।' (वि. पु. 1-4-40)

---

वाचा इत्यादि । विकारः घटादिसंस्थानम्, नामधेयं च वाचारम्भणम्—वागालम्बनम् व्यावहारिकम् । तस्मात् मृत्तिकेत्येव सत्यम् इत्यर्थः । यदा हीति—ब्रह्मणि नानात्वं पश्यतः पूर्वोक्तमृत्युशब्दाभिहिताज्ञानकार्यं भयं प्रदर्शितम् ॥

न स्थानतः—निर्विशेषत्वे सूत्रम् ॥

मायामात्रम्—व्यतिरिक्तमिथ्यात्वे सूत्रम् (श्रु.प्र) ॥

प्रत्यस्तमितभेदम्—सजातीयविजातीयभेदरहितम् । सत्तामात्रम्—स्वगतभेदरहितम् । आत्मसंवेद्यम्—स्वयंप्रकाशम् । ब्रह्मसंज्ञितम्—'ब्रह्म' इति संज्ञामात्रमेव, न तु बृहत्त्वादिगुणयोगः । ज्ञानस्वरूपमिति—प्रपञ्चमिथ्यात्वमनेनोच्यते । अत्यन्तनिर्मलम्—सकलविशेषरहितम् । अर्थस्वरूपेण—जडस्वरूपेण ॥

'ये तु [1]ज्ञानविदः[1] शुद्धचेतसस्तेऽखिलं जगत् ।
ज्ञानात्मकं प्रपश्यन्ति त्वद्रूपं परमेश्वर ॥' (वि. पु. 1-4-41)

'तस्यात्मपरदेहेषु सतोऽप्येकमयं हि यत् ।
विज्ञानं परमार्थो हि द्वैतिनोऽतथ्यदर्शिनः ॥' (वि. पु. 2-14-31)

'यद्यन्योऽस्ति परः कोऽपि मत्तः पार्थिवसत्तम ।
तदैषोऽहमयश्चान्यो वक्तुमेवमपीष्यते ॥' (वि. पु. 2-13-90)

'वेणुरन्ध्रविभेदेन भेदः षड्जादिसंज्ञितः ।
अभेदव्यापिनो वायोस्तथाऽसौ परमात्मनः ॥' (वि.पु. 2-14-32)

'सोऽहं स च त्वं स च सर्वमेतदात्मस्वरूपं त्यज भेदमोहम् ।
इतीरितस्तेन स राजवर्यः तत्याज भेदं परमार्थदृष्टिः ॥' (वि.पु. 2-16-23)

'विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते ।
आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति ॥' (वि. पु. 6-7-96)

'अहमात्मा गुडाकेश सर्वभूताशयस्थितः ।' (भ. गी. 10-20)

'क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत ।' (भ. गी. 13-2)

---

ज्ञानविदः—अनेन ज्ञानसत्यत्वं जडमिथ्यात्वं चोक्तम् । एकमयम्—एकम् । मयट् इह स्वार्थिकः । द्वैतिनः—भेददर्शिनः । अतथ्यदर्शिनः—भ्रान्ताः । (श्रु. प्र., त. टी., मू. प्र) ।

वेणुरन्ध्रेति—एकस्य वायोः वेणुरन्ध्रविभेदेन निर्गतस्य षड्जादिसंज्ञितः स्वरभेदः भवति यथा, तथा ब्रह्मण एव उपाधिभेदात् असौ देवमनुष्यादिभेदो भवति ।

भेदम्—भेदमोहम् (त.टी) । आत्मनः—जीवस्य (मू. प्र) । [ब्रह्मणः—ब्रह्मावधिकम् ।] सर्वभूतशब्देन शरीराण्युच्यन्ते । सर्वक्षेत्रेषु—इत्यनेन भूतशब्दस्य

---

[1] ज्ञानात्मनः-ड.

'न तदस्ति विना यत् स्यान्मया भूतं चराचरम् ।' (भ. गी. 10-39)
इत्यादिभिः वस्तुस्वरूपोपदेशपरैः शास्त्रैः 'निर्विशेषचिन्मात्रं [1]ब्रह्मैव[1] सत्यम्, अन्यत्-सर्वम् मिथ्या' इत्यभिधानात् ॥

[ मिथ्यात्वस्वरूपम्, लक्ष्ये तदन्वयश्च ]

मिथ्यात्वं नाम प्रतीयमानत्वपूर्वकयथावस्थितवस्तुज्ञाननिवर्त्यत्वम् । यथा रज्ज्वाद्यधिष्ठान[2]कसर्पादेः[2] । दोषवशाद्धि तत्र तत्कल्पनम्! एवम् चिन्मात्र-वपुषि परे ब्रह्मणि [3]दोषपरिकल्पितम्[3] इदं देवतिर्यङ्मनुष्यस्थावरादिभेदं सर्वं जगत् यथावस्थितब्रह्मस्वरूपावबोधबाध्यम्, मिथ्यारूपम् ॥

---

शरीरपरत्वं स्फुटीकृतम् (श्रु. प्र) । न तदस्ति—मया विना चराचरात्मकं भूतं नास्ति, मद्व्यतिरिक्तं नास्तीत्यर्थः (मू. प्र) । वस्तुस्वरूपोपदेशपरैः, न तु उपायपरैः । अनन्यपरैः (श्र. प्र) । अनेन सविशेषप्रतिपादकवाक्यानां न स्वरूपोपदेशपरत्वम्, अपि तु उपासना-परत्वम्, निर्विशेषप्रतीत्युपायोपदेशपरत्वं वा इति सूच्यते (मू. प्र) । ब्रह्मैव । एवकारेण सगुणब्रह्मव्यावृत्तिः (श्रु. प्र) ।

मिथ्यात्वं नामेति । प्रतीयमानत्वम्—प्रकाशमानत्वम् । तत्पूर्वकत्वम्–तद्विशिष्टत्वम् । अनेन असद्व्यावृत्तिः । यथावस्थितेति सद्व्यावृत्तिः । नियमश्चात्र विवक्षितः । लोकदृष्टचनु-सारेण यथावस्थितशब्दः । वस्तुज्ञानेति । वस्तुज्ञानमात्रेत्यर्थः । निवर्त्यत्वम् । निवर्तना-र्हत्वम् । प्रतीयमानत्वनियमपूर्वकयथावस्थितवस्तुगोचरज्ञानमात्रनिवर्तनीयत्वम् मिथ्यात्वम् । परे ब्रह्मणीति । सर्वज्ञत्वादिगुणाः अपरे ब्रह्मणि । अस्य च परस्य ब्रह्मणः अधिष्ठानस्य विलक्षण-तया एकत्र बह्वध्यासः । बाध्यम्—नास्तीतिवेद्यम् (श्रु. प्र., श्रु. दी., त. टी., मू. प्र) । मिथ्यारूपम्—मिथ्यालक्षणयोगात् मिथ्याशब्दवाच्यम् । स्वाधिकरणधीविषयनिष्ठात्यन्ता-भावप्रतियोगि (त.टी) ।

---

[1] ह्यैकमेव–ग, ट. [2] सर्पादेः–आ.
[3] परिकल्पितम्–ड.

[अविद्यायाः स्वरूपम्, तत्र श्रुतयश्च]

दोषश्च स्वरूपतिरोधानविविधविचित्रविक्षेपकरी सदसदनिर्वचनीया अनाद्यविद्या ।

'अनृतेन हि प्रत्यूढाः' (छां. उ. 8-3-2)

'तेषां [1]सत्यानां सता[1]मनृतमपिधानम्' (छां. उ. 8-3-1)

'नासदासीन्नो सदासीत्तदानीम् । तम आसीत्तमसा गूढमग्रे प्रकेतम् ॥'
(तै. ब्रा. अष्ट. 2-8-9)

'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् ।' (श्वे. उ. 4-10)

'इन्द्रो मायाभिः पुरुरूप ईयते' (बृ. उ. 4-5-19)

'. . . . . . . मम माया दुरत्यया ।' (भ. गी. 7-14)

'अनादिमायया सुप्तो यदा जीवः प्रबुध्यते ।' (मा. उ. का. 2-16)

इत्यादिभिः निर्विशेषचिन्मात्रं ब्रह्मैव अनाद्यविद्यया सदसद[2]निर्वाच्यया[2] तिरोहितस्वरूपम्

---

दोषश्चेति । अहन्त्वेदन्त्वादिभिः तदवान्तरैश्च विक्षेपस्य विचित्रत्वम् [वैविध्यं च] (त.टी) । विक्षेपः—अध्यासः । तस्याः पारमार्थ्यापारमार्थ्यविकल्पे, सदसदनिर्वचनीयेति अपारमार्थ्याभ्युपगमः । अनादीति—अनवस्थापरिहारः । नानाध्यासस्यैकदोषमूलत्वम् विविधेत्युक्तम् । अविद्येति । एकस्या एव अविद्यायाः अवस्थाद्वयं तदभिमतम्, आच्छादिका, विक्षेपिका इति ; तिरोधानविक्षेपहेतुत्ववचनात् (श्रु प्र) ॥

प्रत्यूढाः—प्रतीपं प्रापिताः—प्रतिरुद्धाः । कल्पितजीवभेदविवक्षया बहुवचनम् । अनृतमपिधानम्—मिथ्याभूतम् अज्ञानम् आच्छादकम् । तेषां सत्यानां सतां—ब्रह्माभिन्नतया प्रामाणिकानां सतां कामानाम् (त.टी) । तमसा गूढम्—अज्ञानेनावृतम् । प्रकेतम्—प्रकृष्टं ब्रह्मणो वासस्थानम् । नासत् . . . तमः । सदसद्विलक्षणम् (म्. प्र) । मायामिति । सदसद्विलक्षणतया मायाशब्दवाच्यम् अविद्यां, प्रकृतिम् उपादानम् । मायाभिः—अविद्याभिः । इन्द्रः—परमेश्वरः । पुरुरूप ईयते—बहुरूपः क्रियते (मू. प्र) ॥

---

[1] सत्यानां इ, ग, छ, ज.  [2] निर्वचनीयता-ड.

स्वगतनानात्वं पश्यति इति अवगम्यते। यथोक्तम्—

[ ब्रह्मातिरिक्तस्य आविद्यकत्वे पौराणिकानि प्रमाणानि ]

'ज्ञानस्वरूपो भगवान् यतोऽसावशेषमूर्तिर्न तु वस्तुभूतः।
ततो हि शैलाब्धिधरादिभेदान् जानीहि विज्ञानविजृम्भितानि ॥

(वि. पु. 2-12-39)

'यदा तु शुद्धं निजरूपि [1]सर्वं कर्मक्षये ज्ञानमपास्तदोषम्।
तदा हि सङ्कल्पतरोः फलानि भवन्ति नो वस्तुषु वस्तुभेदाः ॥

(वि. पु. 2-12-40)

'तस्मान्न विज्ञानमृतेऽस्ति किञ्चित् क्वचित् कदाचित् द्विज ! वस्तुजातम्।
विज्ञानमेकं निजकर्मभेदविभिन्नचित्तैर्बहुधाऽभ्युपेतम् ॥'

(वि. पु. 2-12-4:)

'ज्ञानं विशुद्धं विमलं [2]विशोक[3]मशेष[3]लोभादि[3]निरस्तसङ्गम्।
[4]एकं[4] सदैकं परमः परेशः स वासुदेवो न यतोऽन्यदस्ति ॥

(वि. पु. 2-12-44)

---

स्वगतनानात्वम् — स्वाध्यस्तं चिदचिद्भेदं, वृत्तिसम्भेदेन स्मृतित्वम्, अनुभवत्वादि-धर्मभेदं च।

अशेषमूर्तिः—सर्वत्वेन भ्रान्तिसिद्धः। न वस्तुभूतः — न देवादिजडस्वरूपः (त. टी)। विज्ञानविजृम्भितानि—विविधं ज्ञायतेअनेनेति करणव्युत्पत्त्या विज्ञानशब्दः अविद्याविषयः। विजृम्भितानि —अध्यस्तानि। शुद्धम्—अविद्यामुक्तम्। निजरूपि —तन्मूलभेददृष्टिशून्यम्। दोषः—कर्मसाध्यक्लेशादिः। सङ्कल्पः—समन्तात् कल्प्यन्ते अनेन भेदाः इति व्युत्पत्त्या अविद्या। तस्मादिति। विज्ञानशब्दौ इह स्वप्रकाशानन्द-रूपविलक्षणज्ञानपरौ। विशुद्धम्—अविद्योज्झितम्। विशोकम्—शोकमोहादिशून्यम्। विमलम् —भेददृष्टितन्मूलकर्मरहितम्। एकम् —आत्मवस्तु। सदैकम् —सर्वदाऽनाघ्रातविकारषट्कम्।

---

[1] सर्व-ड.
[2] च नित्य-आ.
[3] शोकादि-आ.
[4] एकः-आ.

'सद्भाव [1]एवं[1] भवतो मयोक्तः ज्ञानं यथा सत्यमसत्यमन्यत् ।
एतत्तु यत् संव्यवहारभूतं तत्रापि चोक्तं भुवनाश्रितं ते ।.' (वि· पु. 2-12-45)

इति ॥

[ अविद्यानिवृत्तिः तद्धेतुश्च ]

अस्याश्च अविद्यायाः निर्विशेषचिन्मात्र[2]ब्रह्मात्मैकत्व[2]विज्ञानेन निवृत्तिं वदन्ति—

'न पुनर्मृत्यवे तदेकं पश्यति'

'न पश्यो मृत्युं पश्यति' (छां. उ. 7-26-2)

'यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते ।
अथ सोऽभयङ्गतो भवति ।' (तै. उ. आन. 7)

'भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ॥' (मुण्ड. उ. 2-2-9)

'ब्रह्म वेद ब्रह्मैव भवति' (मुण्ड. उ. 3-2-9)

---

एतत्—ज्ञानमात्रस्वरूपं ब्रह्म । भुवनाश्रितम् । स्वप्नकल्पेन भुवनेन अधिष्ठानतयाश्रितम् । संव्यवहारभूतम्—समन्तात् एकीकृत्य वा व्यवहारकर्मभूतम् (त. टी) । तत्रापि उक्तम्—अविद्यैव कारणमित्युक्तम् (श्रु. प्र) ॥

अस्याः—अनिर्वाच्यत्वादिविशिष्टायाः । न पुनरिति । एकं ब्रह्म शाब्दापरोक्षेण-जानाति इति यत्, तत् न पुनर्मृत्यवे [पुनरसंसाराय] (त. टी) । पश्यः—ब्रह्मदर्शी । अनात्म्ये—अशरीरे । अनिरुक्ते—नामनिर्वचनशून्ये । अनिलयने—अनाधारे । अभयम्—अभयार्थम् । प्रतिष्ठाम्—तन्मात्रस्थितिम् (मू. प्र) ॥

हृदयग्रन्थिः—अविद्या । संशयादि तत्कार्यम् इति सकार्याविद्यानिवृत्तिः उक्ता (त. टी) ॥

ब्रह्म वेदेति । यथोपासनं हि फलम् ! अतः ऐक्यज्ञानमेव बन्धनिवर्तकम् इति ॥

---

[1] एपो-आ. [2] ब्रह्मैकत्व-इ.

'[1]तमेव विदित्वाऽति मृत्युमेति नान्यः पन्थाः' (श्वे. उ. 3-8)

इत्याद्याः श्रुतयः। अत्र मृत्युशब्देन अविद्या अभिधीयते। यथा सनत्सुजात-वचनम्—

'प्रमादं वै मृत्युमहं ब्रवीमि, सदाऽप्रमादममृतत्वं ब्रवीमि'
(म. भा. उ. प. 41-4)

इति ॥

[ निर्विशेषब्रह्मात्मैकत्वविज्ञानं प्रमाणसिद्धम् ]

'सत्यं ज्ञानमनन्तं ब्रह्म' (तै. उ. आन. 1-1)

'विज्ञानमानन्दं ब्रह्म' (बृ. उ. 5-8-28)

इत्यादिशोधकवाक्यावसेयनिर्विशेषस्वरूपब्रह्मात्मैकत्वविज्ञानं च—

'अथ योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमस्मीति, न स वेद'
(बृ. उ. 3-4-10)

---

तमेवेति उपायान्तरनिषेधः। अत्र—बन्धनिवृत्तिपरवाक्येषु। प्रमादः—यथावद-प्रतिपत्तिः। स्वरूपाग्रहणे हि अन्यथाप्रतिपत्तिः। तस्मात् मोहस्यापि हेतुः आत्मनि अनवधान-रूपः प्रमादः इति, तद्धेतुभूता अविद्यैव प्रमादशब्देन विवक्षिता इति सैव मृत्युः (श्रु. प्र) ॥

सत्यं ज्ञानमिति। सर्वतो व्यावृत्तत्वज्ञापनार्थमिदम्। विज्ञानमानन्दमिति। पुरुषा-र्थत्वाय असुखात् व्यावृत्तिज्ञापनार्थमिदम् (श्रु. प्र)। शोधकवाक्येति। सत्यज्ञानादिवाक्यानि ब्रह्मणः अनृतजडपरिच्छिन्नस्वरूपविशेषप्रतिषेधमुखेन 'तत्'पदार्थभूतब्रह्मस्वरूपशोधकानि। 'योऽयं विज्ञानमयः' इत्यादीनि देहेन्द्रियादिव्यावृत्तिमुखेन तद्धर्मकर्तृत्वादिनिषेधद्वारा अभेद-विरोधिसर्वज्ञत्व-किञ्चिज्ज्ञत्वादिनिरसनेन 'त्वं'पदार्थशोधकानि। शोधितयोश्चिन्मात्रयोः ऐक्यं प्रतिपाद्यते इति तत्सिद्धान्तः (मू. प्र)। अन्यामुपास्ते—अन्यत्वेन उपास्ते। ऐक्यो-पासनविधिः भेदवासनानिरासार्थः (मू. प्र, श्रु. प्र)।

---

[1] तमेनं–क, ग, ङ, च, झ, ञ, ट. [2] चिन्मात्रस्वरूप–झ, ञ.

'[1]अकृत्स्नो ह्येषः . . . . आत्मेत्ये[1]वोपासीत' (बृ. उ. 3-4-7)

'तत् त्वमसि' (छां. उ. 6-8-7)

'त्वं वा अहमस्मि भगवो देवते, अहं वै त्वमसि भगवो देवते'
(जा. वरा. उ. 2-34)

'[2]तद्योऽहं[2] सोऽसौ, योऽसौ सोऽहमस्मि' (ऐ. आर. 2-2-4)

इत्यादिवाक्यसिद्धम् । वक्ष्यति च एतदेव--

'आत्मेति तूपगच्छन्ति ग्राहयन्ति च (ब्र. सू. 4-1-3)

इति । [3]तथा च वाक्यकारः[3]—

'आत्मेत्येव तु गृह्णीयात् सर्वस्य तन्निष्पत्तेः' (ब्र. नं. वा)

इति । अनेन च ब्रह्मात्मैकत्वविज्ञानेन मिथ्यारूपस्य सकारणस्य बन्धस्य निवृत्तिः [4]युक्ता[4] ॥

---

आत्मेत्येवेति । अनात्मनां परस्परं भिन्नत्वात् , आत्मनि च सर्वेषामन्तर्गतत्वात् अकृत्स्नत्वं कृत्स्नत्वं च (मू. प्र) ।

तत् त्वमसीति—ऐक्योपदेशार्थमिदम् (श्रु. प्र) ।

त्वं वेति — उपास्यां देवतां प्रति उपदेशानुगुणम् उपासकस्योक्तिः । तद्योऽहमिति । उपदिष्टार्थस्य आत्मन्यनुसन्धानमिदम् । अत्मेति मुमुक्षवः उपगच्छन्ति—उपासते, ग्राहयन्ति —ज्ञापयन्ति तथा शास्त्राणि (श्रु. प्र) । तन्निष्पत्तेः — तत्र सर्वस्य कल्पितत्वात् । मिथ्यारूपस्येति — हेतुगर्भमिदम् । सकारणस्य — अविद्याभेददर्शनसहितस्य (श्रु. प्र) । निवृत्तिः — अभावः (म. प्र) । युक्ता — श्रौतार्थानुग्राहकतर्कवती । मिथ्यासर्पनिवृत्तौ 'नाऽयं सर्पः, रज्जुरेषा' इति ज्ञानादृते न हि कर्मापेक्षाऽस्ति इति भावः (श्रु. प्र) ॥

---

[1] आत्मेत्ये–इ.  [2] तद्योऽहमस्मि–आ, इ, ङ, झ.

[3] तथा चाह–झ.  [4] उक्ता–झ.

[ निवर्त्यनिवर्तकभावः सदृष्टान्तः ]

ननु च सकलभेदनिवृत्तिः प्रत्यक्षविरुद्धा कथमिव 'शास्त्र[1]जन्य[2]विज्ञानेन[2] क्रियते ? [3]कथं वा[3] 'रज्जुरेषा न सर्पः' इति ज्ञानेन प्रत्यक्षविरुद्धा सर्पनिवृत्तिः क्रियते ? तत्र द्वयोः प्रत्यक्षयोः विरोधः; इह तु प्रत्यक्षमूलस्य शास्त्रस्य प्रत्यक्षस्य च इति चेत्—

तुल्ययोः विरोधे वा कथं बाध्यबाधकभावः ?

पूर्वोत्तरयोः दुष्टकारणजन्यत्व-तदभावाभ्याम्—इति चेत्,

शास्त्र-प्रत्यक्षयोरपि समानमेतत् ।

एतदुक्तं भवति — बाध्य-बाधकभावे तुल्यत्व-सापेक्षत्व-निरपेक्षत्वादि

---

ननु चेति । 'अग्निः अनुष्णः', 'आदित्यो यूपः' इत्याद्यनुमानागमवत् श्रुतेः प्रत्यक्षविरुद्धार्थप्रतिपादनाशक्तत्वम् इति आक्षेपाशयः । क्रियते — विषयीक्रियते (श्रु. प्र)। कथमिव — न कथंचित् । प्रत्यक्षविरुद्धं शास्त्रमेव बाधितमुख्यार्थं भाक्तं नेयम् (त. टी) ।

कथं वा इति । प्रत्यक्षशब्दः अपरोक्षमात्रपरः । बाधात् पूर्वम् अनाभासत्वाभिमानः बाधश्च, प्रपञ्चरज्जुसर्पभ्रमयोः समः इति भावः (त. टी) । सर्पनिवृत्तिः क्रियते — सर्पाभावो विषयीक्रियते (मू. प्र)। प्रत्यक्षत्वम् अबाध्यत्वे न प्रयोजकम् (श्रु. प्र) ।

तत्रेति । मूलित्वात् शास्त्रस्य न प्रत्यक्षबाधकत्वम् इति भावः (श्रु. प्र) । इह तु । तुल्यत्वव्यावृत्तये तुशब्दः । शास्त्रस्येति। परोक्षत्वात् न बाधकमिति भावः । प्रत्यक्षयोः — अपरोक्षयोः । इदं च मूलमूलित्वरहितयोः प्रत्यक्षपरोक्षयोरपि उपलक्षणम् । इह तु — सकलभेदनिवृत्तौ तु (त. टी) ।

तुल्ययोः — मूल-मूलिभावानापन्नयोः ।

शास्त्रेति — शास्त्रशब्दः इह तज्जन्मधीलक्षकः । एतत् — वैषम्यम् (त. टी) ।

तुल्यत्वेति — तुल्यत्वं यथा अप्रयोजकम्, तथा सापेक्ष-निरपेक्षत्वादिकमपि ।

---

[1] शास्त्रार्थ—झ. [2] ज्ञानेन—ड.

[3] कथं—इ, झ, ड.

[1]न कारणम्[1]; ज्वालाभेदानुमानेन प्रत्यक्षोपमर्दायोगात् । तत्र हि ज्वालैक्यं प्रत्यक्षेण अवगम्यते ।

[2]एवं च[3] सति द्वयोः प्रमाणयोः विरोधे, यत् सम्भाव्यमानान्यथासिद्धि, तत् बाध्यम् । अनन्यथासिद्धम् अनवकाशम् इतरत् बाधकम् 'इति सर्वत्र' बाध्यबाधकभावनिर्णयः — इति ॥

[ सयुक्तिकम् शास्त्रप्राबल्यम् ]

तस्मात् अनादिनिधनाविच्छिन्नसम्प्रदायासम्भाव्यमानदोषगन्धानवकाशशास्त्रजन्यनिर्विशेषनित्यशुद्धमुक्तबुद्धस्वप्रकाशचिन्मात्रब्रह्मात्मभावावबोधेन संभाव्यमानदोषसावकाशप्रत्यक्षादिसिद्धविविध[4]विकल्परूप[4]बन्धनिवृत्तिः युक्तैव ।

सम्भाव्यते च विविधविकल्प[5]भेद[5]प्रपञ्चग्राहिप्रत्यक्षस्य अनादिभेद[6]वासनादि[6]रूपाविद्याख्यः दोषः ॥

---

अकारणम् — अप्रयोजकम् । अव्याप्तेः इति शेषः । ज्वालेति । इतः पूर्वं 'कारणं चेत्' इति अध्याहार्यम् । अयोगात् — अयोगप्रसङ्गात् । सापेक्षत्वम् — मूलवत्त्वम् । निरपेक्षत्वम् — मूलत्वम् (त. टी) । तत्र हीति — ऐक्यग्राहि प्रत्यक्षं बाध्यम् इत्यर्थः ।

द्वयोः प्रमाणयोः—प्रत्यक्षयोः, प्रत्यक्षागमयोः, अनुमानयोः, अनुमानागमयोर्वा बलविमर्शात्पूर्वं प्रमाणत्वेन भातयोः (श्रु. प्र, श्रु. दी, त. टी) । अनन्यथासिद्धम् — विरुद्धविषयमानाबाधेन अनुदयम् । तत्र हेतुः अनवकाशत्वम् — विषयान्तरालाभः, अप्रमाणकोटिनिवेशाभावो वा । इतरत् — अनादृतसाजात्यादिविशेषम् । सर्वत्र — सजातीययोः विजातीययोर्वा प्रमाणयोः । निर्णयः — प्रमाणतर्कसिद्धः अध्यवसायः (श्रु. दी, त. टी) ॥

तस्मात् — असदुक्तस्यैव प्रयोजकत्वात् । नित्यम् — कालापरिच्छिन्नम् । शुद्धम् — अविद्यारहितम् । मुक्तम् —अविद्याकार्यबन्धरहितम् । बुद्धम् —भासमानम् । स्वप्रकाशम् — भासमानत्वे अन्यानधीनम् । चिन्मात्रम् — ज्ञानैकस्वरूपम् । मात्रचा ज्ञेयत्वव्युदासः । ब्रह्मात्मावबोधेन — ब्रह्मणः स्वस्य च ऐक्यावबोधेन ।

विविधविकल्पः—ज्ञातृज्ञेयादिः । भेदप्रपञ्चः—अविद्याकल्पितचिदचिद्विस्तारः (श्रु.प्र) ॥

---

[1] अकारणम्—आ.　[2] एवं—झ.　[3] इति—झ.
[4] कल्परूप—आ. विकल्पस्वरूप—इ.　[5] रूपभेद—ड,　[6] वासना—ड.

[ शास्त्रेषु मोक्षशास्त्रस्य प्राबल्यम् ]

**ननु अनादिनिधनाविच्छिन्नसम्प्रदायतया निर्दोषस्यापि शास्त्रस्य, 'ज्योतिष्टोमेन स्वर्गकामो यजेत' (आप. श्रौ. 5-6) इत्येवमादेः भेदावलम्बिनः बाध्यत्वं प्रसज्येत !**

**सत्यम्, पूर्वापरापच्छेदे पूर्वशास्त्रवत्, (पू. मी. सू. 6-5-54) मोक्षशास्त्रस्य निरवकाशत्वात् तेन बाध्यत एव। वेदान्तवाक्येष्वपि सगुण[1]ब्रह्मोपासन[1]पराणां [2]शास्त्राणाम् अयमेव[2] न्यायः; निर्गुणत्वात् परस्य ब्रह्मणः॥**

---

**नन्वित्यादि।** भेदग्राहकप्रत्यक्षादीनाम् अद्वैतश्रुतिविरोधात् बाध्यत्वमुक्तम् तत्राऽतिप्रसक्तिः इति चोद्याशयः (त. टी)। **अपिः** विरोधार्थः (श्रु. प्र)। बाध्यत्वप्रयोजकभेदावलम्बित्वव्यक्त्यै ज्योतिष्टोमाद्युक्तिः (त. टी)। **बाध्यत्वमिति।** भेदवासनाख्यदोषजन्यत्वात् बाध्यत्वं प्रसज्येतेत्यर्थः। न च इष्टापत्तिः; अपौरुषेयत्वेन निर्दोषत्वस्य प्रतिपादितत्वात् इति भावः (मू. प्र)।

**सत्यमिति।** भेदावलम्बिनो बाध्यत्वमङ्गीकृतम्। दुष्टकारणजन्यत्वे अनङ्गीकारः इत्यर्थः। अन्यथासिद्धत्वानन्यथासिद्धत्वयोरेव हि बाध्य-बाधकभावे प्रयोजकत्वम्। पूर्वोक्तं दुष्टकारणजन्यत्वमपि हि अन्यथासिद्धत्वप्रकारविशेषः (श्रु. प्र)। **पूर्वापरापच्छेदे इति।** 'पौर्वापर्ये पूर्वदौर्बल्यं प्रकृतिवत्' इति कर्ममीमांसायामुक्तम्—पूर्वस्य उत्पत्तिकाले विरोध्यभावात् तदबाधेनैवोत्पत्तिः सम्भवति, उत्तरस्य तु स्वोत्पत्तिकाले विरोधिसद्भावात् तदबाधेनोत्पत्त्यनुपपत्त्या पूर्वं बाधित्वैवोत्पन्नमिति अनन्यथासिद्धत्वात् उत्तरस्य प्राबल्यम् इति।

पूर्वं परमजातत्वादबाधित्वैव जायते।
पूर्वाबाधेन नोत्पत्तिः उत्तरस्य हि सिध्यति॥' इति।

[अयम् अपच्छेदाधिकरणार्थसारः।] (श्रु. प्र)। **मोक्षशास्त्रस्य**—बन्धरूपभेदनिवर्तकतत्त्वावेदकवाक्यस्य (त. टी)। **निरवकाशत्वात्**—पूर्वाबाधेनोत्पत्तुमनवकाशात्। निर्गुणशास्त्रस्य अपच्छेदन्यायेन बलवत्त्वात्, उपासनविषयतया सगुणशास्त्रस्य सावकाशत्वाच्च सगुणशास्त्रस्य बाध्यत्वम् इति भावः (मू. प्र)॥

---

[1] ब्रह्मोपासना-ड.

[2] अयमेव-आ, इ, ज, झ.

[ स्वरूपपरेषु सगुणनिर्गुणवाक्येषु बाध्य-बाधकभावचिन्ता ]

ननु च—

'यः सर्वज्ञः सर्ववित्' (मुण्ड. उ. 2-2-7)

'पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च ।' (श्वे. उ. 6-8)

'सत्यकामः सत्यसङ्कल्पः' (छां. उ. 8-1-5)

इत्यादिब्रह्मस्वरूपप्रतिपादनपराणां शास्त्राणाम् कथं बाध्यत्वम् ?

निर्गुणवाक्यसामर्थ्यात् इति ब्रूमः ।

एतदुक्तं भवति —

'अस्थूलमनणु [1]अह्रस्वमदीर्घम्[1]' (बृ. उ. 5-8-8)

'सत्यं ज्ञानमनन्तं ब्रह्म' (तै. उ. आन. 1-1)

'[2]निर्गुणः[2]' (श्वे. उ. 6-11)

'निरञ्जनम्' (श्वे. उ. 6-19)

इत्यादिवाक्यानि — निरस्तसमस्तविशेषकूटस्थनित्यचैतन्यं ब्रह्म — इति प्रतिपादयन्ति । इतराणि च सगुणम् । [3]उभयविध[3]वाक्यानां विरोधे, तेनैव अपच्छेदन्यायेन निर्गुणवाक्यानां [4]गुणापेक्षत्वेन[4] परत्वात् बलीयस्त्वम्, [5]इति न[5] किञ्चित् अपहीनम् ॥

[सत्यादिवाक्यविचारः, सामानाधिकरण्यस्वरूपं च]

ननु च 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यत्र सत्यज्ञानादयः गुणाः प्रतीयन्ते ?

---

कूटस्थम्—निर्विकारम् । कूटवत् तिष्ठति इति हि कूटस्थम् । इतराणि—'यः सर्वज्ञः' इत्यादीनि । गुणापेक्षत्वेनेति । निषेधस्य प्रसञ्जकसापेक्षत्वात् इत्यर्थः । न किञ्चिदपहीनम् । उपासनार्थत्वात् सगुणवाक्यानां न वैयर्थ्यमिति भावः (श्रु. दी) ॥

सत्यज्ञानादयः — सत्यत्वज्ञानत्वादयः । द्व्येकयोः इतिवत् भावप्रधानो निर्देशः ।

---

[1] अह्रस्वम्–झ.
[2] निर्गुणम्–पा
[3] उभयविधानाम्–ज, उभय–ड.
[4] गुणसापेक्षत्वेन–आ.
[5] न–ग, ट,

नेत्युच्यते ; सामानाधिकरण्येन एकार्थत्वप्रतीतेः ।

अनेकगुणविशिष्टाभिधानेऽपि एकार्थत्वम् अविरुद्धम् इति चेत्,

अनभिधानज्ञो देवानांप्रियः । एकार्थत्वं नाम सर्वपदानाम् अर्थैक्यम् । विशिष्टपदार्थाभिधाने विशेषणभेदेन पदानाम् अर्थभेदः अवर्जनीयः । ततश्च एकार्थत्वं न सिध्यति ।

एवं तर्हि सर्वपदानां पर्यायता स्यात् ; 'अविशिष्टार्था[1]भिधायित्वात् !

एकार्थाभिधायित्वेऽपि अपर्यायत्वम् अवहितमनाः शृणु ! [2]एकत्व[2]तात्पर्यनिश्चयात्

---

नेत्युच्यते इति । 'प्रतीयन्ते' इति आपातप्रतीतिमात्रविवक्षा चेत्, न किंचित् प्रयोजनम् । प्रमितिविवक्षा चेत्, प्रमितिः नैव जायते इति उपपाद्यते इत्यर्थः (श्रु. प्र) । सामानाधिकरण्येन — एकार्थतात्पर्यार्हत्वरूपया वृत्त्या (त. टी) । एकार्थत्वप्रतीतेः । विशेषण-विशेष्यरूपानेकार्थप्रतीतौ एकार्थत्वलक्षणसामानाधिकरण्यभङ्गप्रसङ्गः इत्यर्थः (मू. प्र) । एकार्थत्वं नाम सर्वपदानाम् एकाभिधेयपर्यवसानम् (श्रु. प्र) । अनेकेति । विशेषणभेद-विशेष्यैक्यधियोः अविरोधादिति (त. टी) ।

अनभिधानज्ञः — समानाधिकरणपदशक्त्यनभिज्ञः (गू. सं) । देवानांप्रियः — मूर्खः । विशेषणभेदेन — विशेषणानां अन्योन्यतः विशेष्याच्च भेदेन । [अर्थभेदः — विशेषण-विशेष्यात्मकार्थबहुत्वम् ।] अतः वस्तुमात्रपरम् इति परिशेषसिद्धम् ।

एवं तर्हि — वस्तुमात्रपरत्वे (श्रु. प्र) । पर्यायता — अन्यूनानतिरिक्तार्थत्वम् (मू.प्र) । अविशिष्टार्थाभिधायित्वात् — विशेष्यस्वरूपमात्राभिधायित्वात् (मू. प्र) ।

अवहितेति । मध्ये न चोदनीयम् । अर्थस्य गहनत्वात् अवधातव्यम् इति भावः (श्रु. प्र) ।

---

[1] विशिष्टपदार्था–ङ, [2] एक–इ, छ, झ.

एकस्यवार्थस्य तत्तत्पदार्थविरोधिप्रत्यनीकपरत्वेन सर्वपदानाम् अर्थवत्त्वम्, एकार्थत्वम्, अपर्यायता च ॥

[ सत्यादिवाक्यार्थस्य परिष्कृतं निगमनम् ]

एतदुक्तं भवति — लक्षणतः प्रतिपत्तव्यं ब्रह्म सकलेतरपदार्थविरोधिरूपम्। तद्विरोधिरूपं सर्वम् अनेन पदत्रयेण फलतः व्युदस्यते। तत्र सत्यपदम् विकारास्पदत्वेन असत्यात् वस्तुनः [1]व्यावृत्तब्रह्म[1]परम्। ज्ञानपदं च अन्याधीन[2]प्रकाशात्[2] जड[3]रूपात्[3] वस्तुनः व्यावृत्तपरम्। अनन्तपदं च देशतः कालतः वस्तुतश्च [4]परिच्छिन्नात्[4] व्यावृत्त[5]परम्[5]।

न च व्यावृत्तिः भावरूपः अभावरूपो वा धर्मः; अपि तु सकलेतरविरोधि ब्रह्मैव। यथा शौक्ल्यादेः कार्ष्ण्यादिव्यावृत्तिः [6]तत्तत्पदार्थ[6]स्वरूपमेव, न धर्मान्तरम्।

---

अर्थवत्त्वम् — प्रयोजनवत्त्वम्। तच्च पदानां व्यावर्त्यबहुत्वात्। एकार्थत्वम् — सामानाधिकरण्यम्; व्यावृत्तिरूपप्रवृत्तिनिमित्तलाभात्। अपर्यायत्वम् — [समभिव्याहृत-पदोक्तार्थान्यूनानतिरिक्तार्थाप्रतिपादकता। सा च] व्यावर्त्यभेदकृतव्यावृत्तिभेदात् (श्रु. प्र) ॥

लक्षणतः — स्वरूपलक्षणतः, न तु तटस्थलक्षणतः। [इदमेव शोधकत्वम्, यत् कारणत्वशङ्कितदोषव्यावर्तकत्वम्] फलतः व्युदस्यते। इदं वाक्यं स्वरूपमात्रपरमिति एकार्थत्वम्। विरोधिरूपव्युदासस्तु फलितः। यद्यपि सत्यादिषु एकैकपदेनैव समस्तव्यावृत्तिसिद्धिः, तथापि ब्रह्मणि शङ्कितस्वेतरपदार्थगतविरोध्याकारस्य एकपदेन अनिवर्तनात् पदत्रयसाफल्यम् (श्रु. प्र)।

भावरूप इत्यादि। प्राभाकरमते सिद्धान्तिमते च भावरूपः, वैशेषिकादिमते तु अभावरूपः। अतः 'वा' इत्युक्तम्। ब्रह्मैवेति। शुक्त्यादौ हि धर्मस्य व्यावृत्तित्वम् रजतादि-विरोधित्वात् अभ्युपगम्यते, एवं ब्रह्म च सकलेतरविरोधित्वात् स्वयमेव व्यावृत्तिः। न धर्मान्तरम्, अनुपलम्भात्, अनवस्थानाच्च।

---

[1] व्यावृत्त-अ. च.

[2] प्रकाश-पा, स्वप्रकाश-आ.

[3] स्वरूपान्-आ.

[4] परिच्छिन्न-पा ?

[5] वस्तुपरम्-आ, ब्रह्मपरम्-अ.

[6] तत्पदार्थ-पा ?

एवम् एकस्यैव वस्तुनः सकलेतरविरोध्याकारताम् अवगमयत् अर्थवत्तरम्, एकार्थम्, [1]अपर्यायं च[1] पद[2]त्रयम् — इति[2] ॥

[ब्रह्मणः निर्विशेषत्वस्थापनम्, कारणवाक्यैकार्थ्यवर्णनं च]

तस्मात् — एकमेव ब्रह्म स्वयंज्योतिः निर्धूतनिखिलविशेषम् — इत्युक्तं भवति।

एवं वाक्यार्थप्रतिपादने सत्येव —

'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्' (छां. उ. 6-2-1)

इत्यादिभिः ऐकार्थ्यम् ॥

[ब्रह्मलक्षणवाक्यस्य अखण्डैकरसवस्तुप्रतिपादकत्वम्]

'यतो वा इमानि भूतानि जायन्ते' (तै. उ. भृ. 1)

'सदेव सोम्येदमग्र आसीत्' (छां. उ. 6-2-1)

'आत्मा वा इदमेक एवाग्र आसीत्' (ऐत. उ. 1-1-1)

इत्यादिभिः जगत्कारणतया उपलक्षितस्य ब्रह्मणः स्वरूपम् इदमुच्यते —

'सत्यं ज्ञानमनन्तं ब्रह्म' (तै. उ. आन. 1-1)

---

तस्मात् — अस्य वाक्यस्य उक्तन्यायानुगृहीतत्वात्। स्वयंज्योतिरिति। निर्वि-
शेषस्य तुच्छताव्यावृत्त्यर्थमिदम्। उक्तम्; सत्यादिवाक्येनेति शेषः। एवं वाक्यार्थप्रति-
पादने सत्येव — निर्विशेषपरत्वेन निर्वाहे सत्येव (श्रु. प्र) ॥

यतो वेति। इदं कारणत्वानुवादेन ब्रह्मलक्षणवाक्यम्। सदेवेति। इदं कारणत्व-
प्रापकं वाक्यम्। उपलक्षितस्य — दूरे स्थित्वा दर्शितस्य। उपलक्षणं नाम चन्द्रस्य शाखेव
तटस्थं ज्ञापकम्। ब्रह्म इतीति। अनेन वाक्येनेत्यर्थः। कारणवस्तुनः स्वरूपशोधकत्वात्
कारणवाक्यैकार्थ्यम् अस्यापेक्षितमिति भावः।

---

[1] अपर्यायश्च — आ.

[2] त्रयम् — पा.

इति । तत्र सर्वशाखाप्रत्ययन्यायेन (पू. मी. 2-4-9) कारणवाक्येषु सर्वेषु सजातीय-विजातीयव्यावृत्तम् अद्वितीयं ब्रह्म अवगतम् । जगत्कारणतया उपलक्षितस्य ब्रह्मणः अद्वितीयस्य प्रतिपिपादयिषितं स्वरूपं तदविरोधेन वक्तव्यम् । अद्वितीयत्वश्रुतिः गुणतोऽपि सद्वितीयतां न सहते, अन्यथा 'निरञ्जनम्' 'निर्गुणः' [1]इत्यादिभिश्च विरोधः[1] । अतश्च एतत् लक्षणवाक्यम् अखण्डैकरस[2]मेव[2] प्रतिपादयति ॥

[ लक्षणाया दोषत्वादोषत्वविचारः ]

ननु च सत्यज्ञानादिपदानां स्वार्थप्रहाणेन स्वार्थविरोधिव्यावृत्तवस्तुस्वरूपो-पस्थापन[3]परत्वे[3] लक्षणा स्यात् ।

नैष दोषः; अभिधानवृत्तेरपि तात्पर्यवृत्तेः बलीयस्त्वात् । सामानाधिकरण्यस्य 'हि ऐक्य'[4] एव तात्पर्यम् इति सर्वसम्मतम् ।

---

सर्वशाखाप्रत्ययन्यायः । तेन अत्र अनुक्तस्य उपनिषदन्तरोक्तस्यापि अर्थस्य स्वीकर्तव्यत्वे सति सगुणमात्रपरासु उपनिषत्सु निर्गुणमपि ब्रह्म उक्तं भवति । अयं न्यायो हि अनुक्तार्थस्वीकारफलः । प्रतिपिपादयिषितम् — तात्पर्यभूमिः । वस्तुमात्र एव तात्पर्य-मित्यर्थः । तदविरोधेन—कारणवाक्याविरोधेन । अन्यथा—सत्यादिवाक्यस्य विशिष्टपरत्वे । अतः—पूर्वोक्तसामानाधिकरण्यान्यथानुपपत्त्या, कारणवाक्यशोधकवाक्यान्तरैकार्थ्यरूपहेतुद्वयेन च । एतत् लक्षणवाक्यम् — स्वरूपलक्षणवाक्यम् । अखण्डैकरसम् — निर्विशेषतैकस्वभावम् (श्रु. प्र, त. टी) ॥

स्वार्थः — विशेषणद्वारकं विशेष्यम्, न तु स्वार्थविरोधिव्यावृत्तम् । [तत्प्रहाणम्—तदनुपस्थापनम् ] (श्रु. प्र) ।

अभिधानवृत्तिः — मुख्यवृत्तिः । तात्पर्यवृत्तिः — तात्पर्यादागता—[तात्पर्यानुपपत्ति-चिन्ताधीनस्वरूपलाभवती] लक्षणावृत्तिः । तात्पर्यमिति । तन्निश्चायिका च समानविभक्ति-रिति भावः । सर्वसंमतम् — विशिष्टैक्यवादिभिः अन्यैश्च संमतम् ।

---

[1] इत्यादिभिर्विरोधश्च–झ.　　[2] मेव ब्रह्म–आ.

[3] परत्वेन–झ.　　[4] ऐक्ये-ड.

ननु च सर्वपदानां लक्षणा न दृष्टचरी !

ततः किम् ! वाक्यतात्पर्याविरोधे सति एकस्यापि न दृष्टा। 'समभिव्याहृत-'पदसमुदायस्य[1] एतत् तात्पर्यम्' इति निश्चिते सति द्वयोः त्रयाणाम् [2]सर्वेषां वा[2] तदविरोधाय एकस्येव लक्षणा न दोषाय। तथा च [3]शास्त्रस्थैः[3] अभ्युपगम्यते ॥

[ सर्वपदलक्षणाया अप्यदोषत्ववर्णनं प्राभाकरैः ]

कार्यवाक्यार्थवादिभिः लौकिकवाक्येषु सर्वेषां पदानां लक्षणा समाश्रीयते। अपूर्वकार्य एव लिङादेः मुख्यवृत्तत्वात्, लिङादिभिः क्रियाकार्यम् लक्षणया प्रतिपाद्यते। कार्यान्वितस्वार्थाभिधायिनां च इतरेषां पदानाम् अपूर्वकार्यान्वित एव मुख्यार्थः इति, क्रियाकार्यान्वितप्रतिपादनं लाक्षणिकमेव। अतः वाक्यतात्पर्याविरो-

---

सर्वपदानामिति। तात्पर्यनिश्चायककतिपयमुख्यवृत्त्या तदनुगुणम् अन्येषां पदानां लाक्षणिकत्वम् आश्रयणीयम्। सर्वपदलक्षणायां तत् न सम्भवतीत्यर्थः (श्रु. प्र)।

ततः किम् ? तात्पर्याविरुद्धमुख्यार्थस्वीकारः तात्पर्यविरुद्धपदलक्षणास्वीकारस्य अविरुद्धः इत्यर्थः। निश्चिते सति। अपवादकरहितसमानविभक्तिनिर्देशः निश्चायकः। द्वयोरित्यादि। पदानामेकत्वद्वित्वादिकं न लक्षणाप्रयोजकम्। न दोषाय, 'विषं भुंक्ष्व' इत्यादौ सर्वपदलक्षणायाः दर्शनात्। तथा — अदोषत्वम्। शास्त्रस्थैः — अन्यैरपि परीक्षकैः, मीमांसकैरिति वा (श्रु. प्र)॥

[ कार्यवाक्यार्थवादिनः — प्राभाकरमीमांसकाः। तन्मते लिङः एकस्यैव मुख्यं वेदत्वम्। इतरेषां तु तदेकवाक्यतयान्वयात् उपचरितं वेदत्वम् ] अपूर्वकार्ये। अपूर्वमेव कार्यम्। क्रियाकार्यमुखेन अपूर्वकार्यव्युत्पत्तिः। अतः — सर्वपदलक्षणायाः युक्तिबलात्, परीक्षकैः अभ्युपगतत्वाच्च (त. टी)।

---

[1] पदस्य—ङ. [2] वा सर्वेषां—ङ.

[3] शास्त्रज्ञैः—झ.

धाय सर्वपदानां लक्षणाऽपि न दोषः। अतः इदमेव अर्थजातं प्रतिपादयन्तः वेदान्ताः प्रमाणम्॥

[ शास्त्रप्रत्यक्षयोः अविरोधः ]

प्रत्यक्षादिविरोधे च शास्त्रस्य [1]बलीयस्त्वम् उक्तम्[1]। सति च विरोधे बलीयस्त्वं वक्तव्यम्। विरोध एव न दृश्यते; निर्विशेष[2]सन्मात्र[2]ग्राहित्वात् [3]प्रत्यक्षस्य[3]।

ननु च 'घटोऽस्ति, पटोऽस्ति' 'इति[4] नानाकारवस्तुविषयं प्रत्यक्षं कथमिव सन्मात्रग्राहि इत्युच्यते? विलक्षणग्रहणाभावे सति सर्वेषां ज्ञानानाम् एकविषयत्वेन, धारावाहिक[5]विज्ञानवत्[5] एकव्यवहारहेतुतैव स्यात्।

सत्यम्, तथैव अत्र विविच्यते।

कथम्?

---

अतः — उपपत्तिसहितैः श्रुतिवाक्यैः। इदमेव — प्रत्यक्षादिविरुद्धमपि। अर्थजातम्— चिन्मात्रसत्यत्व-तदन्यमिथ्यात्वादिकम् (श्रु. दी)॥

प्रत्यक्षादिविरोधे च — विरोधाभ्युपगमेऽपि। सति च — सति हि। सन्मात्रेति। मात्रचा विषयविषयिभावरूपभेदव्यावृत्तिः (श्रु. प्र)।

ननु चेति — न हि केवलम् 'अस्ति' इति प्रतीतिः, अपि तु 'घटः अस्ति' इति, इत्यर्थः। [धारावाहिकविज्ञानवत्—घटाद्येकैकमात्रविषयकनिरन्तरज्ञानसन्ततिवत्]।

सत्यम् — अर्धाङ्गीकारे। एकव्यवहारहेतुत्वम् अभ्युपगतं प्रत्यक्षस्य। प्रत्यक्षमूलत्वं तु भेदव्यवहारस्य न इति। अत्र — स्वरूप-भेदविषयव्यवहारसमुदाये। तथा — यथा एकव्यवहारस्यैव प्रत्यक्षमूलत्वम् तथा। विविच्यते — 'इदं रजतम्' इति भ्रमे इदंव्यवहारस्य प्रत्यक्षमूलत्वम्, रजतव्यवहारस्य भ्रान्तिमूलत्वमिति विभागः, तद्वत् अत्रापि प्रतिपाद्यते।

कथम्—इदं रजतमितिवत् अबाधितत्व-बाधितत्वरूपवैषम्याभावात् कथम्?

---

[1] बलीयस्त्वम्-ङ.    [2] सन्मात्रब्रह्म-पा.

[3] प्रत्यक्षस्य च-आ.    [4] इत्यादि-ग. ट.

[5] ज्ञानवत्-आ.

[ प्रत्यक्षस्य सन्मात्रग्राहित्वसमर्थनम् ]

'घटः अस्ति' इत्यत्र अस्तित्वम्, तद्भेदश्च व्यवह्रियते। न च द्वयोरपि व्यवहारयोः प्रत्यक्षमूलत्वं सम्भवति; तयोः भिन्नकालज्ञानफलत्वात्, प्रत्यक्ष[1]ज्ञानस्य च[1] एकक्षणवर्तित्वात्।

तत्र [2]स्वरूपं वा[2], भेदो वा प्रत्यक्षस्य विषयः? इति विवेचनीयम्।

भेदग्रहणस्य स्वरूपग्रहण-तत्प्रतियोगिस्मरणसव्यपेक्षत्वादेव, स्वरूपविषयत्वम् अवश्याश्रयणीयम् इति न भेदः प्रत्यक्षेण गृह्यते। अतः भ्रान्तिमूल एव भेदव्यवहारः॥

[भेदस्य दुर्निरूपत्वम्]

किं च भेदो नाम कश्चित् पदार्थः न्यायविद्भिः निरूपयितुं न शक्यते—

भेदस्तावत् [3]न वस्तु[3]स्वरूपम्; वस्तुस्वरूपे गृहीते स्वरूपव्यवहारवत्, सर्वस्मात् भेदव्यवहारप्रसक्तेः।

न च वाच्यम्—स्वरूपे गृहीतेऽपि 'भिन्नः' इति व्यवहारस्य प्रतियोगिस्मरण-[4]सव्यपेक्षत्वात्[4], तत्स्मरणाभावेन तदानीमेव [5]न भेदव्यवहारः[5]—इति।

---

अस्तित्वम्—सर्वत्र अनुवर्तमानं सत्तासामान्यात्मकं स्वरूपम्। तद्भेदः—तत्र तत्र व्यावर्तमानं सत्ताविशेषात्मकं घटादिस्वरूपम्। [तद्भेद इति पदेन समभिव्याहृतबुद्धिस्थास्तित्वभेदस्यैव ग्राह्यत्वात्] भिन्नकालेति। प्रतियोग्यपेक्षानपेक्षाभ्यामिति (श्रु. प्र, श्रु. दी, गू. सं)॥

न्यायविद्भिः—आपातप्रतीतिमात्रेण अतृप्तैः।

प्रसक्तेः—प्रतियोगिनिरपेक्षभेदव्यवहारप्रसक्तेः।

स्वरूपे—स्वरूपभूते भेदे। न भेदव्यहारः—यथा वाच्यस्वरूपे गृहीतेऽपि वाचकप्रयोगः सम्बन्धग्रहणापेक्षः, तथा 'भिन्नः' इति व्यवहारोऽपि प्रतियोगिधीसापेक्षः। तदभावाच्चात्र तादृशव्यवहाराभावः इत्याशयः (त. टी)।

---

[1] ज्ञानस्य-झ. [2] स्वरूपं-झ.

[3] वस्तुनः-आ, इ, ग, झ. [4] सापेक्षत्वात्-त.

[5] भेदव्यवहारः इ.

[1]स्वरूप[1]मात्रभेदवादिनो हि [2]प्रतियोग्यपेक्षा[2] च न उत्प्रेक्षितुं क्षमा ; स्वरूप-भेदयोः स्वरूपत्वाविशेषात् । यथा स्वरूपव्यवहारः न प्रतियोग्यपेक्षः, भेदव्यव-हारोऽपि तथैव स्यात् । 'हस्तः करः' इतिवत् 'घटः भिन्नः' इति च पर्यायत्वं स्यात् ।

नापि धर्मः ; धर्मत्वे सति तस्य स्वरूपात् भेदः अवश्याश्रयणीयः । अन्यथा [3]स्वरूपमेव[3] स्यात् । भेदे च तस्यापि भेदः तद्धर्मः, तस्यापि इति अनवस्था ।

किं च '[4]जात्यादि[4]'विशिष्टवस्तुग्रहणे सति, भेदग्रहणम् ; भेदग्रहणे सति, जात्यादिविशिष्टवस्तुग्रहणम्, इति अन्योन्याश्रयणम् । अतः भेदस्य दुर्निरूपत्वात् सन्मात्रस्यैव प्रकाशकम् प्रत्यक्षम् ॥

[अनुवर्तमानं सन्मात्रम् परमार्थः]

किं च 'घटः अस्ति, पटः अस्ति' 'घटः अनुभूयते, पटः अनुभूयते' इति

---

पर्यायत्वं च स्यात्—पर्यायत्वे सति सहप्रयोगः त्याज्यः स्यात् ।

[भेदे च—भेदस्य वस्तुधर्मत्वे वस्तुनः सकाशात् भेदे च अङ्गीक्रियमाणे] तद्धर्मः—तस्य भेदस्य धर्मः । अनवस्था—स्वरूपात् धर्मस्य यो भेदः स्वीकृतः तस्य धर्मिभूतात् धर्मात् भेदोऽपि धर्मः । अन्यथा स्वरूपमेव स्यात्, तदा स्वरूपपक्षदूषणानि स्युः । सोऽपि भेदः धर्मः । तस्यापि स्वरूपात् भेदः इति अनवस्था (श्रु. प्र) ।

अन्योन्याश्रयणम्—धर्म-धर्मिणोः धर्मिप्रतियोगिनोः, तत्तज्जातीययोश्च तत्तद्भावग्रहपूर्वको भेदग्रहः, तत्पूर्वकश्च इतरः इति अन्योन्याश्रयः (श्रु. दी) । अतः—स्वरूपधर्मपक्षोक्तैः दूषणैः भेदस्य दुर्निरूपत्वात् (श्रु. प्र) । सन्मात्रस्यैवेति—भेदव्यवहारस्तु भ्रान्तिमूलकः इति भावः (मू. प्र) ॥

---

[1] तत्र स्वरूप–आ.

[2] प्रतियोगिसव्यपेक्षा–झ.

[3] स्वरूपमेव न–ड, स्वरूपभेदः–ट.

[4] जात्यादिधर्मे–ई, ग, झ, ट.

सर्वे पदार्थाः सत्ताऽनुभूतिघटिता एव दृश्यन्ते । [1]अत्र[1] सर्वासु [2]प्रतिपत्तिषु सन्मात्रम्[2] अनुवर्तमानं दृश्यते इति तदेव परमार्थः ॥

[ व्यावर्तमानाः विशेषाः अपरमार्थाः ]

विशेषास्तु व्यावर्तमानतया अपरमार्थाः, रज्जुसर्पादिवत् । यथा रज्जुः अधिष्ठानतया अनुवर्तमाना [3]परमार्थसती[3]; व्यावर्तमानाः सर्पभूदलनाम्बुधारादयः अपरमार्थाः ॥

[ अबाधितत्व-बाधितत्वयोः प्रयोजकोपाधिता ]

ननु च रज्जुसर्पादौ 'रज्जुरियम्, न सर्पः' इत्यादिरज्ज्वाद्यधिष्ठान[4]याथार्थ्य[4]-ज्ञानेन बाधितत्वात् सर्पादेः अपारमार्थ्यम्, [5]न[5] व्यावर्तमानत्वात्। रज्ज्वादेरपि पारमार्थ्यम् न अनुवर्तमानतया; किं तु अबाधितत्वात् । अत्र तु घटादीनाम् अबाधितानां कथम् अपारमार्थ्यम् ?

उच्यते — घटादौ दृष्टा व्यावृत्तिः । सा किंरूपा ? इति विवेचनीयम् ।

---

[प्रतिपत्तिः—प्रतीतिः । अनुवर्तमानम्—उत्तरोत्तरप्रतिपत्तिविषयेषु विद्यमानम् ।]

व्यावर्तमानतया— उत्तरोत्तरप्रतिपत्तिविषयेषु अविद्यमानतया । रज्जुसर्पादिवत्— रज्ज्वादिवत् सर्पादिवच्च (श्रु. प्र) । परमार्थसती— व्यावहारिकव्यवस्थया इति शेषः । सर्पभूदलनेति—इदमुदाहरणम् इह एकाधिष्ठानाध्यस्तविषयम् (त. टी) ॥

अत्र तु—'घटः अस्ति' इत्यादौ तु (त. टी) ।

दृष्टा —सर्वसम्प्रतिपन्ना । व्यावृत्तिः—अघटव्यावृत्तिः । किंरूपा ?—किं सत्यसर्पनिवृत्तिवत् भ्रान्तिसिद्धा ? उत रज्जुसर्पनिवृत्तिवत् प्रमाणबाधसाध्या ? (त. टी)

---

[1] अत्र सन्मात्र-आ, इ.

[2] प्रतिपत्तिषु-आ, इ.

[3] परमार्था सती-पा, सती परमार्था-इ, झ.

[4] याथात्म्य-आ.

[5] न तु-झ.

किम् 'घटः अस्ति' इत्यत्र 'पटाद्यभावः'[1] ?

सिद्धं तर्हि 'घटः अस्ति' इत्यनेन पटादीनां बाधितत्वम्। अतः बाध्यफल-भूता विषयनिवृत्तिः व्यावृत्तिः। सा व्यावर्तमानानाम् अपारमार्थ्यं साधयति। रज्जुवत् सन्मात्रम् अबाधितम् अनुवर्तते। तस्मात् सन्मात्रातिरेकि सर्वम् 'अपरमार्थः'[2]।

प्रयोगश्च भवति—

सत् परमार्थः, अनुवर्तमानत्वात्, रज्जुसर्पादौ 'रज्ज्वादिवत्'[3]।

घटादयः अपरमार्थाः, व्यावर्तमानत्वात्, रज्ज्वाद्यधिष्ठानसर्पादिवत्, इति ॥

[सत्-अनुभूत्योः ऐक्यम्, अनुभूतेः स्वतस्सिद्धता च]

एवं सति अनुवर्तमाना अनुभूतिरेव 'परमार्थः'[4]। सैव सती।

ननु च सन्मात्रम् 'अनुभूतेः'[5] विषयतया ततो भिन्नम्।

---

किं . . . पटाद्यभावः ? पटाभावव्यतिरेकेण पटव्यावृत्तेः वक्तुमशक्यत्वात् अभाव एव व्यावृत्तिः इत्याश्रीयते चेत् इत्यर्थः (मू. प्र)।

सिद्धं तर्हि इत्यादि—यथा 'न रजतम्' इति निषेधाभावेऽपि 'शुक्तिः' इत्यनेन रजत-बाधः तथा ['न पटः' इति निषेधाभावेऽपि 'घटः अस्ति' इत्यनेन पटादीनां बाधितत्त्वम्] (त. टी)। बाधफलभूता—बाधो नाम अदुष्टकारणजा निषेधबुद्धिः, 'पटो नास्ति' इत्यादि-रूपा, तादृशधीस्थाप्या। विषयनिवृत्तिः—पटादिधीविषयानाम् अभावः। व्यावृत्तिः—किंरूपा इति विकल्पिता व्यावृत्तिः (श्रु. प्र, त. टी)। सन्मात्रमनुवर्तते—सन्मात्रस्यापि माध्य-मिकयुक्त्या बाधोक्तिः निरधिष्ठानभ्रमासम्भवात् अयुक्ता (त. टी)॥

एवं सति—[पारमार्थ्यापारमार्थ्यसाधकयोः अनुवर्तमानत्व-व्यावर्तमानत्वयोः] हेत्वोः निरुपाधिकत्वे सिद्धे सति (त. टी)। अनुभूतिरेव—एवकारः अनुभाव्यमिथ्यात्वं सूचयति। सैव सती—अनुभूतिरेव सत्शब्दार्थः (त. टी)।

[विषयतया ततो भिन्नम्—विषयविषयिभावस्य भेदनियतत्वात्]

---

[1] पटाभावः–इ, झ. [2] अपरमार्थम्–झ. [3] रज्जुवत्–आ.
[4] परमार्था–घ, झ. [5] अनुभूयते–अ.

नैवम्; भेदो हि प्रत्यक्षाविषयत्वात्, दुर्निरूपत्वाच्च पुरस्तादेव निरस्तः। अत एव सतः अनुभूतिविषयभावोऽपि न प्रमाणपदवीम् अनुसरति। तस्मात् सत् अनुभूतिरेव। सा च स्वतस्सिद्धा; अनुभूतित्वात्। अन्यतस्सिद्धौ घटादिवत् अननुभूतित्व'प्रसङ्गः'[1] ॥

[ अनुभूतेः अनुभूत्यन्तरानपेक्षा ]

किं च '[2]अनुभवापेक्षा' च अनुभूतेः न शक्या कल्पयितुम्; [3]सत्तयैव' प्रकाशमानत्वात्। न हि अनुभूतिः वर्तमाना घटादिवत् अप्रकाशा दृश्यते; येन परायत्तप्रकाशा अभ्युपगम्येत[4] ॥

[ अनुभूतेः ज्ञाततानुमेयत्ववादः ]

अथ एवं मनुषे—उत्पन्नायामपि अनुभूतौ विषयमात्रम् अवभासते, 'घटः अनु-

---

पुरस्तादेव—ज्ञेयभेदनिषेधादेव ज्ञानभेदोऽपि निरस्तः। न प्रमाणपदवीम् अनुसरति—विषयविषयिभावः भ्रान्तिसिद्धः इत्यर्थः। तस्मात्—विषयविषयित्वरूपस्यापि भेदस्य बाधात्। सत् अनुभूतिरेव—सत् इति भातं वस्तु न तद्बुद्धेः भिन्नम्। स्वतस्सिद्धा—स्वरूपप्रयुक्तस्वप्रकाशा। अवेद्यत्वे सति अपरोक्षव्यवहारार्हा इत्यर्थः। अनुभूतित्वात्—चित्त्वात् (त. टी) ॥

न शक्या कल्पयितुम्—'ज्ञानम् परप्रकाशम्, वस्तुत्वात्, भासमानत्वाद्वा, घटादिवत्' इति प्रत्यनुमानादिभिः परप्रकाशत्वं न वक्तुं शक्यम् (श्रु. प्र)। सत्तयैव प्रकाशमानत्वात्—यावत्सत्त्वं प्रकाशमानत्वात्। न हि अनु . . . . दृश्यते—विद्यमानदशायां कदाचिदप्रकाशमानत्वम् पराधीनप्रकाशत्वे प्रयोजकम्। अतः प्रत्यनुमानम् सोपाधिकमित्यर्थः (श्रु. प्र, त. टी) ॥

अथैवमिति। 'ज्ञानम् न स्वप्रकाशकम्, अपि तु प्राकट्यापरपर्यायज्ञाततारव्यलिङ्गेन अनुमीयते' [इत्ययं भाट्टानामाशयः अनूद्यते] (मू. प्र)। विषयमात्रम्—घटादिमात्रम्; न तु तद्धीः। घटस्य अनुभूतिकर्मत्वात्, धियः स्वकर्मत्वविरोधात् तदानीं न अनुभवभानम् इति भावः (त. टी)।

---

[1] प्रसङ्गात्-आ.    [2] अनुभवान्तरापेक्षा-झ.
[3] स्वसत्तयैव-झ.    [4] अभ्युपगम्यते-आ.

भूयते' इति । न हि कश्चित् 'घटः अयम्' इति जानन्, तदानीमेव अविषयभूताम् अनिदंभावाम् अनुभूतिमपि अनुभवति । तस्मात् घटादिप्रकाशनिष्पत्तौ, चक्षुरादिकरणसंनिकर्षवत् अनुभूतेः सद्भाव एव हेतुः । तदनन्तरम् अर्थगतकादाचित्कप्रकाशातिशयलिङ्गेन अनुभूतिः अनुमीयते ॥

[ अनुभूतेः जडत्वशङ्कापरिहारौ ]

'एवं[1] तर्हि अनुभूतेः अजडायाः अर्थवत् जडत्वम् [2]आपद्यते[2] इति चेत्—

किमिदम् अजडत्वं नाम ?

न तावत् स्वसत्तायाः प्रकाशाव्यभिचारः ; सुखादिष्वपि तत्संभवात् । न हि कदाचिदपि सुखादयः सन्तः नोपलभ्यन्ते । [3]अतः[3] अनुभूतिः स्वयमेव न अनुभूयते ; अर्थान्तरं स्पृशतः अङ्गुल्यग्रस्य स्वात्मस्पर्शवत् अशक्यत्वात्—इति ॥

[अनुभूतेः ज्ञाततानुमेयत्वनिरासः]

तदिदम् अनाकलितानुभवविभवस्य स्वमतिविजृम्भितम् ; अनुभूतिव्यतिरेकिणः

---

अविषयभूताम्—घटशब्दार्थव्यतिरिक्ताम् । अनिदंभावाम्—अयंशब्दार्थव्यतिरिक्ताम् । घटत्वविशिष्टं पृथुबुध्नोदराकारद्रव्यं घटशब्दार्थः । संनिहितदेशवर्तमानकालविशिष्टत्वम् इदंशब्दार्थः । उभयव्यतिरिक्तो हि अनुभवः । स तु 'घटोऽयम्' इत्यनुभववेलायां न अनुभूयते इत्यर्थः । अर्थ . . . लिङ्गेन—कादाचित्कत्वात् कार्यम्, कार्यत्वात् सहेतुकम् इत्यनुमानेन (श्रु. प्र) ॥

अङ्गुल्यग्रस्येति—अङ्गुल्यग्रं यथात्मानं नात्मना स्प्रष्टुमर्हति ।
स्वांशेन ज्ञानमप्येवं नात्मानं ज्ञातुमर्हति ॥ (श्रु. प्र) ॥

अनाकलितानुभवविभवः— कृत्स्नभानव्यवहारहेतोः अनुभवस्य स्वभानव्यवहारयोः अन्यानपेक्षत्वरूपं विभवम् अजानन् (श्रु. दी) । स्वमतिविजृम्भितम्—प्रमाणतर्कनिरपेक्षस्वोत्प्रेक्षामात्रविजृम्भितम् (श्रु. प्र) ।

---

[1] कथं-ड.    [2] आपद्येत-इ.
[3] ततः-आ.

विषयधर्मस्य प्रकाशस्य रूपादिवत् अनुपलब्धेः, उभयाभ्युपेतानुभूत्यैव अशेषव्यवहारोपपत्तौ प्रकाशाख्यधर्मकल्पनानुपपत्तेश्च। अतः न अनुभूतिः अनुमीयते, नापि ज्ञानान्तरसिद्धा। अपि तु सर्वं साधयन्ती अनुभूतिः स्वयमेव सिध्यति। प्रयोगश्च—

अनुभूतिः अनन्याधीनस्वधर्मव्यवहारा ; स्वसम्बन्धात् अर्थान्तरे तद्धर्मव्यवहारहेतुत्वात्। [1]यः[1] स्वसम्बन्धात् अर्थान्तरे [2]यद्धर्म[2]व्यवहारहेतुः सः तयोः स्वस्मिन् अनन्याधीनः दृष्टः। यथा रूपादिः चाक्षुपत्वादौ।

रूपादिर्हि पृथिव्यादौ स्वसम्बन्धात् चाक्षुपत्वादि जनयन् स्वस्मिन् न रूपादिसम्बन्धाधीनः चाक्षुपत्वादौ। अतः अनुभूतिः आत्मनः प्रकाशमानत्वे, 'प्रकाशते' इति व्यवहारे च स्वयमेव हेतुः॥

[ अनुभूतेः नित्यता, तत्प्रागभावासिद्धिश्च ]

सेयं स्वयंप्रकाशा अनुभूतिः नित्या च ; प्रागभावाद्यभावात्। तदभावश्च

---

विषयधर्मस्य . . . . . अनुपलब्धेः—विषयः घटादिः, तद्धर्मः प्रकाशः—ज्ञातताप्राकट्यापरनामा। योग्यश्चेत् अन्यैरपि उपलभ्येत। न तु जन्यं घटादि जनकस्य कुलालादेरेव अवभासते। तादृशज्ञातताख्यप्रकाशेन ज्ञानानुमानं न संभवति इति भावः (श्रु. प्र)।

संवित्सिद्धिः—'अतीतेऽनागते चार्थे कथं प्राकट्यसंभवः।
न हि धर्मिण्यसत्येव धर्मः संभवमृच्छति॥' (श्रु. प्र)।

अशेषव्यवहारः—हानोपादानादिः। प्रयोगश्चेति। न केवलं पारिशेष्यात् स्वतस्सिद्धत्वम्, साधकप्रमाणमप्यस्ति इति चार्थः। अनुभूतिः अनन्याधीनस्वधर्मा, स्वसम्बन्धात् अर्थान्तरे तद्धर्महेतुत्वात्। अनुभूतिः अनन्याधीनस्वव्यवहारा, स्वसम्बन्धात् अर्थान्तरे तद्व्यवहारहेतुत्वात्। इति विभागः (श्रु. प्र)॥

सेयम्—परमार्थभूतसन्मात्रैक्या, प्रमाणाविषयभूता च (श्रु. प्र)। स्वयंप्रकाशा—नित्यत्वे हेतूक्तिः। सर्वदा सत्त्वम्, उभयान्तशून्यत्वं वा नित्यत्वम्। ['सत्यं ज्ञानमनन्तम्']

---

[1] यन्–ज. [2] तद्धर्म–झ.

स्वतस्सिद्धत्वादेव। न हि अनुभूतेः स्वतस्सिद्धायाः प्रागभावः स्वतः, अन्यतो वा अवगन्तुं शक्यते।

'अनुभूतिः[1] स्वाभावम् अवगमयन्ती, सती तावत् न अवगमयति; तस्याः सत्त्वे विरोधादेव तदभावः नास्तीति कथं सा स्वाभावम् अवगमयति?

एवम् असत्यपि न अवगमयति; अनुभूतिः स्वयम् असती स्वाभावे कथं प्रमाणं भवेत्?

नापि अन्यतः अवगन्तुं शक्यते; अनुभूतेः अनन्यगोचरत्वात्। अस्याः प्रागभावं साधयत् प्रमाणम् 'अनुभूतिः इयम्' [2]इति[2] विषयीकृत्य तदभावं साधयेत्। स्वतस्सिद्धत्वेन 'इयम्' इति [3]विषयीकारानर्हत्वात्, [4]न तत्प्रागभावः अन्यतः शक्यावगमः[4]॥

[अनुभूतौ भावविकाराणाम् असम्बन्धः]

अतः अस्याः प्रागभावाभावात् उत्पत्तिः न शक्यते वक्तुम् इति, उत्पत्ति[5]प्रतिबद्धाश्च[5] अन्येऽपि भावविकाराः तस्याः न सन्ति॥

---

इति ज्ञानत्वं ब्रह्मणः श्रुतम्। 'न हि विज्ञातुः विज्ञातेः विपरिलोपः' इति तन्नित्यत्वं च सिद्धम् (त. टी)।

न अवगमयति—ग्राह्याभावात् (श्रु. प्र)। विरोधादेव—प्रागभावध्वंसयोः स्वप्रतियोगिसमकालतायाः अभावात् (त. टी)।

स्वयमसती—वन्ध्यासुतधीवत् तद्धीः स्यात् इत्याशय.।

[अस्याः—विलक्षणायाः अनुभूतेः] (त. टी)॥

अतः—स्वतः परतः पक्षयोः उभयोरपि अभावस्य दुर्ग्रहत्वात्। अस्याः—'अनुभूतिः इयम्' इति विषयीकारानर्हायाः अनुभूतेः (श्रु. प्र)। उत्पत्तिप्रतिबद्धाः—उत्पत्तिव्याप्ताः भावविकाराः—भावरूपाः विकाराः। बाह्यानां भावानां सम्भवन्तो वा विकाराः। धीः निर्विकारा, अनुत्पन्नत्वात्, इति व्यतिरेकी हेतुः (त. टी)॥

---

[1] तथाहि—अनुभूतिः—ग.

[2] इति अनुभूतिं—ङ.

[3] विषया- .

[4] तत्प्रागभावः न अन्यथा शक्यावगमः—

[5] प्रतिसम्बद्धाश्च—ख, घ, ङ, ढ, झ.

[ अनुभूतिः न नाना ]

अनुत्पन्ना इयम् अनुभूतिः आत्मनि नानात्वमपि न सहते ; व्यापकविरुद्धोपलब्धेः । न हि अनुत्पन्नम् नानाभूतं दृष्टम् । भेदादीनाम् अनु[1]भाव्यत्वेन[1] च रूपादेरिव अनुभूतिधर्मत्वं न संभवति । [2]अतः अनुभूतेः[2] अनुभवस्वरूपत्वादेव अन्योऽपि कश्चित् अनुभाव्यः न अस्याः धर्मः ॥

[ संविदेव आत्मा ]

यतः निर्धूतनिखिलभेदा संवित्, अत एव न अस्याः स्वरूपातिरिक्तः आश्रयः [3]ज्ञाता[3] नाम कश्चित् अस्ति, इति [4]स्व[4]प्रकाशरूपा सैव आत्मा,

---

**आत्मनि**—अनुभूतिशब्दोपात्ते स्वात्मनि । **व्यापकविरुद्धोपलब्धेः**—नानात्वव्यापकस्य उत्पन्नत्वस्य विरोधि, यत् अनुत्पन्नत्वम् तस्य पक्षे अनुभूतौ प्रमितत्वात् । **न हि**—नानाभूतम् न हि अनुत्पन्नं दृष्टम् ! इति अन्वयः । धीः सजातीयरहिता, अजत्वात्, यत् नैवम् तत् नैवम् इति प्रयोगः । **भेदादीनाम्** इत्यत्र आदिना विकाराः गृह्यन्ते (त. टी) । **न संभवतीति** । भेदादयः न अनुभूतिधर्माः, अनुभाव्यत्वात्, रूपादिवत् इति (श्रु. प्र) । **अतः**—भावाभावरूपाणां सर्वेषां धर्माणाम् आदिशब्देन सङ्ग्रहेण पक्षीकृतत्वात् । **अन्योऽपि**—श्रुतिसिद्धः अस्मदुक्तो वा, एकत्वादिः व्यावृत्तिरूपो वा । धीः निर्धर्मा, अनुभवस्वरूपत्वात् इति व्यतिरेकी । विगीताः न अनुभूतिधर्माः, अनुभाव्यत्वात्, इति वीतावीतौ प्रयोगौ स्मारितौ (त. टी) ॥

**यत इत्यादि** । प्रागुक्तप्रकारेण निर्धूतनिखिलभेदत्वात् आश्रयाख्यः विजातीयभेदोऽपि कल्पितः । अतः सः न आत्मा, संविदन्यत्वात् घटवत् इति भावः । **सैवात्मा**—धीः न आत्मा, निर्विशेषत्वात्, धीत्वाच्च इति व्यतिरेकिद्वयं विवक्षितम् ।

---

[1] भवत्वेन–ग.
[2] अनुभूतेः–आ.
[3] विज्ञाता–आ.
[4] स्वयं–आ.

अजडत्वाच्च। अनात्मत्वव्याप्तं जडत्वम् संविदि व्यावर्तमानम् [1]अनात्मत्वमपि हि[1] संविदः व्यावर्तयति ॥

[ज्ञातृत्वम् न आत्मधर्मः]

ननु च 'अहम् जानामि' इति ज्ञातृता प्रतीतिसिद्धा!

[2]नैवम्[2]; सा भ्रान्तिसिद्धा रजततेव शुक्तिशकलस्य: अनुभूतेः स्वात्मनि कर्तृत्वायोगात्। अतः 'मनुष्यः अहम्' इति अत्यन्तबहिर्भूतमनुष्यत्वादिविशिष्ट-पिण्डात्माभि[3]मानवत्[3] ज्ञातृत्वमपि अध्यस्तम्।

ज्ञातृत्वं हि ज्ञानक्रियाकर्तृत्वम्। तच्च विक्रियात्मकं जडं विकारि-द्रव्याहङ्कारग्रन्थिस्थम् अविक्रिये साक्षिणि चिन्मात्रात्मनि कथमिव संभवति? दृश्य-धीनसिद्धित्वादेव रूपादेरिव कर्तृत्वादेः न [4]आत्म[4]धर्मत्वम् ॥

[आत्मनः अहम्प्रत्ययागोचरता]

सुषुप्ति-मूर्च्छादौ अहंप्रत्ययापायेऽपि आत्मानुभवदर्शनेन न आत्मनः अहंप्रत्यय-

---

अनात्मत्वव्याप्तम्—अनात्मत्वे व्याप्ये व्याप्तम्-व्यापकम्, कर्तरि क्तः। यः अनात्मा सः जडः, यथा देहादिः। धीस्तु न तथा, तस्मात् आत्मा इति (त. टी) ॥

प्रतीतिसिद्धा—स्वानुभवसिद्धा। शकलस्येति। भ्रमाधिष्ठानोपपत्तये शकलशब्दः। अविकलवपुषः शुक्तेः भ्रमास्पदत्वायोगात् (श्रु. प्र)। अतः—स्वस्य स्वाश्रयत्वायोगात्।

ज्ञातृत्वम्—ज्ञातृभूताहमर्थाभिमानः। कर्तृत्वम्—आश्रयत्वम्। विक्रियात्मकम्—कादाचित्कत्वात् विकाररूपम्। जडम्—ज्ञेयम्। ग्रन्थिः—बन्धनस्य अशैथिल्यकरः ग्रथनविशेषः। अहङ्कारस्य सर्वभ्रममूलत्वात् ग्रन्थित्वोक्तिः। साक्षिणि—अविद्यानुभवरूपे (श्रु. प्र, त. टी) ॥

सुषुप्ति . . . दुष्परिहरः। आत्मा न कर्ता, न च अहंप्रत्ययगोचरः; जडत्वादि-प्रसङ्गात्, देहवत् इति अनुमानम् अभिप्रेतम्।

---

[1] अनात्मत्वमपि-आ, ड.　[2] मैवम्-इ.
[3] मानिवत्-आ.　[4] दृशि-ड.

गोचरत्वम् । कर्तृत्वे अहंप्रत्ययगोचरत्वे च आत्मनः अभ्युपगम्यमाने, देहस्येव जडत्व-पराक्त्वानात्मत्वादिप्रसङ्गः दुष्परिहरः ।

अहम्प्रत्यगोचरात् कर्तृतया प्रसिद्धात् देहात् तत्क्रियाफलस्वर्गादेर्भोक्तुः आत्मनः अन्यत्वं प्रामाणिकानां प्रसिद्धमेव । तथा अहमर्थात् ज्ञातुरपि विलक्षणः साक्षी प्रत्यगात्मा इति प्रतिपत्तव्यम् ॥

[ अनुभूतिः अहङ्काराभिव्यङ्ग्या ]

एवम् अविक्रियानुभवस्वरूपस्यैव अभिव्यञ्जकः जडोऽपि अहङ्कारः स्वाश्रयतया तम् अभिव्यनक्ति । आत्मस्थतया अभिव्यङ्ग्याभिव्यञ्जनम् अभिव्यञ्जकानां स्वभावः । दर्पण-जल-खण्डादिर्हि मुख-चन्द्रबिम्ब-गोत्वादिकम् आत्मस्थतया अभिव्यनक्ति । तत्कृतः अयम् 'जानाम्यहम्' इति भ्रमः ॥

[ अभिव्यङ्ग्येनापि स्वाभिव्यञ्जकस्य अभिव्यञ्जनम् ]

स्वप्रकाशायाः अनुभूतेः कथमिव तदभिव्यङ्ग्य[1]जडरूपाहङ्कारेण[1] [2]अभिव्यङ्ग्यत्वम्[2] ?

---

जडत्वम्—दृश्यतैकस्वरूपत्वम् । परात्त्वम्—परस्मै भासमानत्वम् । आत्मत्वम्—पुरुषार्थप्रतिसम्बन्धित्वम्, देहं प्रति नियन्तृतया व्यापित्वं वा । तदभावः–अनात्मत्वम् । आदिशब्देन क्षयित्वम् (श्रु. प्र) ।

प्रामाणिकानाम्—श्रुत्याद्यनुसारिणाम् । प्रतिपत्तव्यम्—प्रमाणबलात् अभ्युपगन्तव्यम् (श्रु. प्र) । इतरथा स्थूलदेहात् भेदोऽपि न सिध्येत् इति भावः (मू. प्र) ॥

स्वाश्रयतया—स्वाश्रिततया । बहुव्रीहिः । स्वभावः—'स्वभावो दुरतिक्रमः' इति अभिप्रायः । तत्कृतः—व्यञ्जकसामान्यस्वभावसिद्धः (त. टी) ॥

स्वप्रकाशायाः इति । जडस्य अभिव्यञ्जकत्वम्, स्वप्रकाशस्य वस्तुनः अभिव्यङ्ग्यत्वं च अयुक्तम् । संविदभिव्यङ्ग्यस्य च विशेषेण तदभिव्यञ्जकत्वम् अयुक्तम् इति शङ्काशयः (श्रु. प्र) ॥

---

[1] जडरूपेण–आ. [2] तदभिव्यङ्ग्यत्वम्–ड.

इति मा वोचः ; रविकरनिकराभिव्यङ्ग्यकरतलस्य तदभिव्यञ्जकत्वदर्शनात् । जालकरन्ध्रनिष्क्रान्तद्युमणिकिरणानां तदभिव्यङ्ग्येनापि करतलेन स्फुटतरप्रकाशो हि दृष्टचरः ॥

[ आत्मनः अनुभवमात्रता, न अनुभाव्यता ]

यतः 'अहम् जानामि' इति ज्ञाता अयम् अहमर्थः चिन्मात्रात्मनः न पारमार्थिको धर्मः, अत एव सुषुप्ति-मुक्त्योः न अन्वेति । [1]तत्र हि[1] अहमर्थोल्लेखविगमेन स्वाभाविकानुभवमात्ररूपेण आत्मा अवभासते । अत एव सुप्तोत्थितः कदाचित् 'मामपि अहम् न ज्ञातवान्' इति परामृशति ॥

[ निर्विशेषाद्वैतनिगमनेन महापूर्वपक्षोपसंहारः ]

तस्मात् परमार्थतः निरस्तसमस्तभेदविकल्पनिर्विशेषचिन्मात्रैकरसकूटस्थनित्यसंविदेव भ्रान्त्या ज्ञातृ-ज्ञेय-[2]ज्ञानरूप[2]विविधविचित्रभेदा विवर्तते इति, तन्मूलभूताविद्यानिबर्हणाय नित्यशुद्धबुद्धमुक्तस्वभावब्रह्मात्मैकत्वविद्याप्रतिपत्तये सर्वे वेदान्ताः आरभ्यन्ते इति ॥

[ इति महापूर्वपक्षः ]

---

ज्ञाता अयम् अहमर्थः— ज्ञातृत्वादिसहितम् इदम् अहन्त्वम् । अहमर्थोल्लेखविगमेन —'नाह खल्वयमेवं सम्प्रत्यात्मानं जानाति अयमहमस्मीति' इति श्रुतेः ॥

तस्मात्—प्रमाणतर्कैः उपपादनात् (श्रु. प्र) । अत्र निर्विशेषं प्राप्यम् । नित्यप्राप्ते तस्मिन् न उपासनादिसाध्या प्राप्तिः । निवर्त्यं मिथ्याभूतम् अज्ञानम् । तन्निरासे च ज्ञानातिरिक्तं न अपेक्ष्यम् । निवर्तकम् वाक्यजन्यम् ऐक्यज्ञानम् । तच्च स्वोत्पत्तौ स्वफले वा न कर्मापेक्षम् इति वस्तुत्रयसामर्थ्यनिष्कर्षः । भ्रान्त्या विवर्तते—करिकलभवत् निर्देशोऽयम् (श्रु. दी) । भ्रमगोचरमिथ्याभूतविकारवती भवति इति वा (त. टी) । ज्ञातृज्ञेयादयः विवर्ताः । तन्मूलभूता । भ्रान्तिहेतुः । शुद्धमुक्तशब्दौ । अविद्यातत्कार्यनिवृत्त्यर्थौ । प्रतिपत्तये—प्राप्तये । सर्वे वेदान्ताः । कारणपराः, तच्छोधकाः, तदैक्यबोधकाश्च । आरभ्यन्ते । आरभ्यत्वमिह विचारद्वारा (त. टी) ॥

---

[1] तत्र-ङ.    [2] ज्ञानस्वरूप-आ.

— महासिद्धान्तः —

[ परोक्तानामुपायोपेयनिवर्त्यानां प्रमाणतर्काभासमूलत्वमनादरणीयता च ]

तदिदम्—औपनिषद परमपुरुषवरणीयताहेतुगुणविशेषविरहिणाम्[1], अनादिपाप-वासनादूषिताशेषशेमुषीकाणाम्, अनधिगतपदवाक्यस्वरूपतदर्थयाथात्म्यप्रत्यक्षादि-सकलप्रमाणवृत्ततदितिकर्तव्यतारूपसमीचीनन्यायमार्गाणाम्, विकल्पासहविविधकुतर्क-कल्ककल्पितम्—इति, न्यायानुगृहीतप्रत्यक्षादि[2]सकलप्रमाणवृत्तयाथात्म्यविद्भिः अना-दरणीयम् ॥

---

तदिदम्—[ अशेषविशेषेत्यारभ्य, सर्वे वेदान्ताः आरभ्यन्ते इत्यन्तेन यत् प्रतिपादितं ] तदिदम्—परोक्तोपायादित्रिकम्। अनादरणीयम् इत्यनेनान्वयः। औपनिषदेत्यनेन 'तं त्वौपनिषदं पुरुषम्' इति श्रुतिस्मारणम्। परमपुरुषेत्यनेन उपेयम्, वरणीयतेति—उपायः, अनादीति-निवर्त्यम्, अनधिगतेति—परपक्षनैर्मूल्यम्, न्यायानुगृहीतेति—स्वपक्षस्य समूलत्वम् [इत्येते अर्थाः स्पष्टीकृताः] (श्रु. प्र, श्रु. दी)। गुणविशेषः—भगवद्भक्तिः (मू. प्र)। अनादीति। सम्यग्ज्ञानहेतुभूतभक्त्यभावात् सम्यग्ज्ञानविरोधिपापानुबन्धः इति भावः (श्रु. प्र)। पापस्य वासना—तत्त्वज्ञाननिवृत्तिमिथ्याज्ञानादेः सजातीयारम्भस्य उत्पादनशक्तिः (त.टी)। अनादिशब्दः बीजाङ्कुरन्यायसूचनाय। 'पापं प्रज्ञां नाशयति' इति प्रसिद्धमेतत् (त.टी)। शेमुषी—मोक्षोपयोगिज्ञानम्। अशेषेत्यनेन उपायोपेयनिवर्त्यानां ग्रहणम् (श्रु. प्र)। अनधिगतेत्यस्य सम्यक् इति उपस्कार्यम्। पदस्वरूपम्—प्रकृति-प्रत्ययसमुदायात्मकम्। वाक्यस्वरूपम्—तादृशां संघातः। तदर्थः—मुख्यामुख्यरूपः पदार्थः वाक्यार्थश्च (त. टी)। याथात्म्यम्—तात्पर्यविषयः (श्रु. प्र)। वृत्तम्—स्वरसतः स्वार्थसाधनम्, उपजीव्यानुविधानं च। न्यायः—तर्कः। समीचीनत्वम्—साङ्गपञ्चकत्वम्। मार्गः—तत्तत्प्रतिपादकविद्यास्थानम्। विकल्पापहत्वम्—विकल्पमात्रे स्पष्टदोषत्वम् (त. टी)। कुतर्काः—प्रमाणविरुद्धाः मूलशैथिल्यमिथोविरोधादिदोषाक्रान्ताश्च तर्काः। ते एव कल्कम्—असारभूतं बौद्धैः आत्तसारम् ऋजीषम्। एतेन कल्पितम्—उत्कीर्णम् (श्रु. प्र)। प्रमाण-वृत्तम्—प्रमाणानामेकविधप्रमाजनकत्वम् (गू. सं)। अनादरणीयम्—आदरानर्हम्—उपेक्ष-णीयमित्यर्थः (त. टी) ॥

---

[1] विरहिणाम्—घ.   [2] वाक्यप्रत्यक्षादि—ग.

[ निर्विशेषस्य वस्तुनः प्रमाणतः असिद्धिः ]

तथा हि—निर्विशेषवस्तुवादिभिः 'निर्विशेषे वस्तुनि इदं प्रमाणम्' इति न शक्यते वक्तुम्; सविशेषवस्तुविषयत्वात् सर्वप्रमाणानाम्। यस्तु स्वानुभव'सिद्धम्' इति स्वगोष्ठीनिष्ठः समयः—सोऽपि आत्मसाक्षिकसविशेषानुभवादेव निरस्तः; 'इदम् अहम् अदर्शम्' इति केनचित् विशेषेण विशिष्टविषयत्वात् सर्वेषामनुभवानाम्॥

[निर्विशेषत्वव्यवस्थापकस्वाभिमतयुक्तेः आभासता ]

सविशेषोऽप्यनभूयमानः अनुभवः केनचित् युक्त्याभासेन निर्विशेषः इति निष्क्रष्यमाणः सत्तातिरेकिभिः स्वासाधारणैः स्वभावविशेषैः 'निष्क्रष्टव्यः' इति, निष्कर्षहेतुभूतैः सत्तातिरेकिभिः स्वासाधारणैः स्वभावविशेषैः सविशेष एव अवतिष्ठते। अतः कैश्चि-

---

निर्विशेषे वस्तुनि इति विशेषणात् स्ववचनविरोधोऽपि अत्र सूच्यते (त. टी)। इदम्—प्रमाणत्वेन लोकप्रसिद्धं परसंमतं वा। सविशेषेति। विशेषोऽपि न निर्विशेषः; कस्यचित् धर्मिणो हि सः। धर्मतया धर्मितया वा अन्याननुबन्धि वस्तुनेत्यर्थः (श्रु. दी)। स्वानुभवसिद्धम्—स्वप्रकाश प्रत्यक्षसिद्धम्। स्वगोष्ठीनिष्ठः—लौकिकपरीक्षकसंनिधौ दुर्वचः। समयः — परिभाषाप्रायः (त. टी)। आत्मसाक्षिकत्वोक्तिः — सर्वहृदयाविसंवादात् बाधानर्हत्वाभिप्रायेण। इदम् इत्यादि पदत्रयेण विषय-आश्रय-स्वगतविशेषप्रदर्शनम्। विशिष्टविषयत्वात्—विशिष्टपूर्वानुभवगोचरत्वात्। अनुभवानाम्—अनुभवपरामर्शरूपाणां ज्ञानानाम्। सर्वशब्दः पुरुषान् अनुभवान् वा ब्रूते (त. टी)॥

केनचित्—धीत्वादिना व्यतिरेकिणा। युक्तिः—अनुमानम्। सत्तातिरेकिभिरिति। स्वरूपातिरिक्तं सत्तामात्रं भासमानत्वादिकं वा व्यभिचारात् न हेतुरितिभावः। निष्कर्षहेतुभूतैरिति। न हि सत्तादिधर्ममात्रं सविशेषात् व्यावृत्तिं साधयेदिति (त. टी)। स्वभावविशेषैः—धर्मविशेषैः। अतः—तेषां सत्तातिरेकित्व-स्वासाधारणत्वयोः अवश्याभ्युपगन्तव्यत्वात्। कैश्चित्—प्रामाणिकैः (श्रु. प्र)।

---

[1] सिद्धः—ख, ग, घ, ङ, ट.    [2] निष्कृष्टव्यः—इ, ज, ट.

द्विशेषैर्विशिष्ट[1]स्यै[1]व वस्तुनः, अन्ये विशेषाः निरस्यन्ते इति न क्वचित् निर्विशेष-वस्तुसिद्धिः ॥

[ निर्विशेषत्वानुमानस्य बाधितत्वम् ]

धियो हि धीत्वं स्वप्रकाशता च ज्ञातुः विषयप्रका[2]शनस्वभावतया[2] उपलब्धेः । स्वापमदमूर्च्छासु च सविशेष एव अनुभवः इति स्वावसरे निपुणतरम् उपपाद-यिष्यामः ।

स्वाभ्युपगताश्च नित्यत्वादयो हि अनेके विशेषाः सन्त्येव । ते च न वस्तुमात्रम्—इति शक्योपपादनाः ; वस्तुमात्राभ्युपगमे सत्यपि विधाभेदविवाददर्शनात् । स्वाभिमततद्भिन्नाभेदैश्च स्वमतोपपादनात् । अतः प्रामाणिकविशेषैः विशिष्टमेव 'वस्तु' इति वक्तव्यम् ॥

---

अन्ये—प्रमितस्वधर्मव्यतिरिक्ताः । क्वचित्—स्वानुभवे, तत्परामर्शेऽनुमानादौ वा (त. टी) ॥

धीत्वम्—विषयप्रकाशकत्वम् । स्वप्रकाशता—अनन्याधीनप्रकाशत्वम् । साधनं साध्यं चेत्यर्थः । ज्ञातुः . . . . उपलब्धेः—ज्ञातृज्ञेयसम्बन्धनियमोपलब्धेः (श्रु. दी) । अनुभवः—आत्मस्फुरणम् । स्वावसरे—अहमर्थात्मत्वसमर्थनावसरे । निपुणतरम्—परोक्तयुक्त्यैव, समर्थतरं वा ।

नित्यत्वादयः—आदिना स्वप्रकाशत्वैकत्वानन्दत्वादयः (श्रु. दी) । विवादेति । बौद्धैः क्षणिकत्वमुक्तम्, अनेन तु नित्यत्वम् । वैशेषिकादिभिश्च जडत्व-बहुत्वे । अनेन तु स्वप्रकाशत्वैकत्वे । स्वरूपं तु तैः सर्वैः अभ्युपगतम् । अतः विप्रतिपत्तिविषयः संप्रतिपत्ति-विषयश्च एक एवेति वक्तुमयुक्तम् इति भावः । स्वाभिमतेति । अनुत्पन्नत्वान्नित्यत्वम्, नित्यत्वादात्मनो नानात्वमपि न सङ्गच्छते इति परेण उपपादनात् इति (भा. प्र) । अतः—विशेषव्युदासकत्वेन साध्यत्वेन साधकत्वेन च केषाञ्चिद्धर्माणां त्वयोक्तत्वात् (श्रु. प्र) । प्रामाणिकविशेषैरिति—परमार्थभूतैः विशेषैः । साध्याद्यप्रामाणिकत्वे प्रमाणोपन्यासवैयर्थ्यं विपरीताकारप्रसङ्गश्चेति (श्रु. दी) ॥

---

[1] स्य वस्तुनः-इ. [2] शकतया-इ.

[ निर्विशेषत्वं वस्तुनि न शब्दगम्यम् ]

शब्दस्य तु विशेषेण सविशेष एव वस्तुनि अभिधानसामर्थ्यम्; पद-वाक्य-रूपेण प्रवृत्तेः। प्रकृति-प्रत्यययोगेन हि पदत्वम्। प्रकृति-प्रत्यययोः अर्थभेदेन पदस्यैव विशिष्टार्थप्रतिपादनम् अवर्जनीयम्। पदभेदश्च अर्थभेदनिबन्धनः। पदसङ्घात'रूपस्य वाक्यस्य' अनेकपदार्थसंसर्गविशेषाभिधायित्वेन निर्विशेषवस्तुप्रतिपादनासामर्थ्यात् न निर्विशेषवस्तुनि शब्दः प्रमणम्॥

[ निर्विशेषत्वं न प्रत्यक्षम्यगम् ]

प्रत्यक्षस्य निर्विकल्पक-सविकल्पकभेदभिन्नस्य न निर्विशेषवस्तुनि प्रमाणभावः। सविकल्पकं जात्याद्यनेकपदार्थविशिष्टविषयत्वादेव सविशेषविषयम्। निर्विकल्पकमपि सविशेषविषयमेव; सविकल्पके स्वस्मिन्ननुभूतपदार्थविशिष्टप्रतिसन्धानहेतुत्वात्॥

---

अभिधानसामर्थ्यम्—कयाचित् वृत्त्या बोधनार्हत्वम् (त. टी)। पदस्यैव—वाक्यं तावदास्ताम्। वाक्यस्थस्य तदंशमात्रस्यापि इत्यर्थः। अवर्जनीयमिति। अनेन अभिहितान्वयवादिभिरपि पदांशयोः अन्वितार्थत्वं स्वीकृतमिति सूच्यते (त. टी)। पदभेदः—पदानां परस्परं भेदः। न केवलं प्रकृति-प्रत्ययभेद एव अर्थभेदहेतुः, किन्तु पदभेदोऽपि। अन्यथा पदान्तरप्रयोगवैयर्थ्यादिति भावः। असामर्थ्यादिति। सकलविशेषशून्यप्रतिपादनासामर्थ्यात्। तन्मात्रेषु 'अविशेषास्ततो हि ते' इत्यादौ अविशेषपदप्रयोगो यथा गन्धादिगुणान्वितत्वेऽपि शान्तत्वघोरत्वादिकतिपयविशेषरहितार्थकः, तथा निर्विशेषशब्दोऽपि विवक्षितविशेषरहितं लिङ्गसंख्यादियुक्तमेव ब्रूते (श्रु. प्र, त. टी)॥

प्रत्यक्षस्य—अपरोक्षबुद्धेः (त.टी)। स्वस्मिन्—निर्विकल्पके। अनुभूतपदार्थाः—जात्यादयः। विशिष्टप्रतिसन्धानमिति षष्ठी समासः कर्मधारयो वा। जात्यनुवृत्तिबुद्धिलक्षणं प्रतिसन्धानमित्यर्थः (श्रु. प्र)॥

---

[2] रूपस्य-इ.

[ निर्विकल्पकसविकल्पकयोः निष्कृष्टं स्वरूपम् ]

निर्विकल्पकं नाम केनचिद्विशेषेण वियुक्तस्य ग्रहणम् । न सर्वविशेषरहितस्य ; तथाभूतस्य कदाचिदपि ग्रहणादर्शनात्, अनुपपत्तेश्च ।

केनचिद्विशेषेण 'इदम् इत्थम्' इति हि सर्वा प्रतीतिः उपजायते ; त्रिकोण-सास्नादिसंस्थान[1]विशेषेण[1] विना कस्यचिदपि पदार्थस्य ग्रहणायोगात् । अतः निर्विकल्पकम् एकजातीयद्रव्येषु प्रथमपिण्डग्रहणम् ; द्वितीयादिपिण्डग्रहणं सविकल्पकम् इत्युच्यते ॥

[ उक्तस्य विविक्ताकारस्य समर्थनम् ]

तत्र प्रथमपिण्ड[2]ग्रहणे[2] गोत्वादेः अनुवृत्ताकारता न प्रतीयते । द्वितीयादि पिण्डग्रहणेष्वेव अनुवृत्तिप्रतीतिः । प्रथमप्रतीत्यनुसंहितवस्तुसंस्थानरूपगोत्वादेः अनुवृत्तिधर्मविशिष्टत्वं द्वितीयादिपिण्डग्रणावसेयमिति, द्वितीयादि[3]ग्रहणस्य[3] सविकल्पकत्वम् ।

सास्नादिवस्तुसंस्थानरूपगोत्वादेः अनुवृत्तिः न प्रथमेपिण्ड[4]ग्रहणे[4] गृह्यते इति, प्रथमपिण्डग्रहणस्य निर्विकल्पकत्वम्, न पुनः संस्थानरूपजात्यादेः अग्रहणात् ।

---

कदाचिदपि—प्रथममपि तथाभूतग्रहणं योग्यानुपलम्भनिरस्तमित्यर्थः । अनुपपत्तेः—उपपत्त्यभावात् । तत्कल्पकस्य अन्यथोपपत्तेः इति भावः (त. टी) ।

केनचित्—पृथक्सिद्धेन अपृथक्सिद्धेन वा । गोत्वद्रव्यत्ववहिष्ठत्वादिना गगनादेः ग्रहीतुश्च व्यावृत्ता हि सर्वत्र सर्वाऽपि धीः इति भावः (त. टी) । त्रिकोणम्—गोमुखम् संस्थानम्—तत्तदसाधारणाकारः । कस्यचिदपि—निरवयवस्यापि (त. टी) । ग्रहणायोगात्—ग्रहणकल्पनस्य अनुपपन्नत्वात् । अतः—उक्तादर्शनानुपपत्तिभ्याम् (श्रु. प्र) । सविकल्पकत्वमिति । विकल्पोऽत्र प्रतिसन्धानगोचरस्य केनचित् अधिकेन विशेषणेन वैशिष्ट्यम् । स चात्र अनुवृत्तिधर्मः । तद्योगायोगाभ्यामेव व्यवस्था अत्र विपश्चित्संमता (श्रु. दी, त. टी) ॥

संस्थानरूपगोत्वादेरिति । जातेः सविकल्पकाभावरूपत्वापोहत्वादिमतव्युदासाय संस्थानत्वं तद्व्यक्त्यै संस्थानरूपत्वं च अत्रोक्तम् (त.टी) ।

---

[1] रूपविशेषेण—ड. [2] ग्रहणस्य—इ.
[3] पिण्डग्रहणस्य—इ. [4] ग्रहणस्य—आ.

संस्थानरूपजात्यादेरपि ऐन्द्रियकत्वाविशेषात्, संस्थानेन विना संस्थानिनः प्रतीत्यनुपपत्तेश्च प्रथमपिण्डग्रहणेऽपि ससंस्थानमेव वस्तु 'इत्थम्' इति गृह्यते।

अतः द्वितीयादिपिण्डग्रहणेषु गोत्वादेः अनुवृत्तिधर्मविशिष्टता संस्थानिवत् संस्थानवच्च सर्वदैव गृह्यते इति, तेषु सविकल्पत्वमेव।

अतः प्रत्यक्षस्य कदाचिदपि न निर्विशेषविषयत्वम्॥

[ भेदाभेदवादिनिरासः ]

अत एव सर्वत्र भिन्नाभिन्नत्वमपि निरस्तम्। 'इदम् इत्थम्' इति प्रतीतौ, इदमित्थंभावयोः ऐक्यम् कथमिव प्रत्येतुं शक्यते? तत्र इत्थंभावः–सास्नादिसंस्थानविशेषः, तद्विशेष्यं द्रव्यम्–इदमंशः इति, अनयोरैक्यं प्रतीतिपराहतमेव।

तथाहि—प्रथममेव वस्तु प्रतीयमानं सकलेतर[1]'व्यावृत्तमेव' प्रतीयते।

---

**ऐन्द्रियकत्वाविशेषात्**—आश्रयग्राहकेन्द्रियवेद्यत्वात्, दूरत्वाद्यभावाच्च। तेन गन्धादिव्युदासः, पिण्डग्रहणेऽपि गोत्वादेः ग्रहणदर्शनव्युदासश्च। **संस्थानेन विना**—अपृथक्सिद्धयत्किञ्चिद्धर्मेण विना। तेन दण्डादिव्यावृत्तिः (त टी)।

**अतः**—प्रथममेव ससंस्थानवस्तुग्रहणात्। **द्वितीये. . .णेषु**—द्वितीयत्वादिविशिष्टतया तत्तत्पिण्डग्रहणेषु। **संस्थानिवत् संस्थानवच्च**—पिण्डधर्मः संस्थानम्। तद्धर्मः अनुवृत्तिः इति धर्मधर्मिभावरूपसाम्यनिबन्धनं दृष्टान्तद्वयोपादानम् (श्रु. दी, त. टी, श्रु. प्र)।

**कदाचिदपि**—प्रथमाक्षसन्निपातेऽपि (त. टी)॥

**अत एव**—प्रथमपिण्डग्रहणस्य विशिष्टविषयत्वसमर्थनादेव। **सर्वत्र**—पिण्डद्वये जातिव्यक्त्योश्च। **भिन्नाभिन्नत्वमिति**। व्यक्त्यात्मना भेदः, जात्यात्मना अभेदः इति भिन्नाभिन्नत्वम्। अत्र जातिव्यक्त्योः भेदाभेदे चत्वारो हेतवः परोक्ताः–प्रथमपिण्डग्रहणे अभेदेन ग्रहणम्, एकशब्दानुविद्धप्रत्ययः, मत्वर्थीयप्रत्ययनिरपेक्षसमानाधिकरणपदप्रयोगः, सहोपलम्भनियमश्च (श्रु. प्र)।

---

[1] व्यावर्तमानमेव–इ.

व्यावृत्तिश्च गोत्वादिसंस्थानविशेषविशिष्टतया 'इत्थम्' इति[1] प्रतीतेः। सर्वत्र विशेषण-विशेष्यभावप्रतिपत्तौ तयोः अत्यन्तभेदः प्रतीत्यैव सुव्यक्तः।

तत्र दण्ड-कुण्डलादयः पृथक्संस्थानसंस्थिताः स्वनिष्ठाश्च कदाचित्[2] क्वचित् द्रव्यान्तरविशेषणतया अवतिष्ठन्ते। गोत्वादयस्तु द्रव्यसंस्थानतयैव पदार्थभूताः सन्तः द्रव्यविशेषणतया अवस्थिताः। उभयत्र विशेषणविशेष्यभावः समानः। तत एव तयोः भेद[3]प्रतिपत्तिश्च[3]। इयांस्तु विशेषः—पृथक्स्थिति[4]प्रतिपत्ति[4]योग्याः दण्डादयः। गोत्वादयस्तु नियमेन तदनर्हाः—इति।

अतः – वस्तुविरोधः प्रतीतिपराहतः – इति प्रतीतिप्रकारनिह्नवादेव उच्यते। प्रतीतिप्रकारो हि 'इदम् इत्थम्' इत्येव सर्वसंमतः। तदेतत् सूत्रकारेण—

'नैकस्मिन्नसम्भवात्' (ब्र. सू. 2-2-31)

इति सुव्यक्तमुपपादितम्॥

[निर्विशेषस्य प्रमाणाविषयत्वनिगमनम्]

अतः प्रत्यक्षस्य सविशेषविषयत्वेन, प्रत्यक्षादिदृष्टसम्बन्धविशिष्टविषयत्वात्

---

प्रतीतेः—अस्य, निश्चीयते इति शेषः। सर्वत्र—गोत्व-तदाश्रयादिषु, दण्डकुण्डलादिषु च। अत्यन्तभेदः—ऐक्यप्रतिभटस्वभावः। प्रतीत्यैव सुव्यक्तः—प्रत्यक्षेणैव स्पष्टावगतः।

पृथक्संस्थानेति। विशेषणत्वमन्तरेणाप्युपलब्धिमन्तः। स्वनिष्ठाः—देवदत्तादीन् प्रति अपृथक्सिद्धिरहिताः (त. टी)।

अतः—इत्थं भेदसामानाधिकरण्येन अभेदस्य प्रतीत्यभावात् (श्रु. प्र)। वस्तुविरोधः—भेदाभेदयोर्विरोधः। प्रतीतिपराहतः—क्वचिदुपलम्भेन निरस्तः। तदेतत्—प्रमाणादि-सिद्धविरुद्धसंभेददूषणम् (त. टी)॥

अतः—सर्वविशेषरहितग्रहणासिद्धेः। प्रत्यक्षेत्यादि। प्रत्यक्षादिना दृष्टलिङ्गसम्बन्धं साध्यम्, तद्विशिष्टधर्मि(पक्ष)विषयकत्वात् इत्यर्थः।

---

[1] इदमित्थमिति–झ, इदम् इत्येव–ड.
[2] क्वचित्–ड.
[3] प्रतितिश्च–घ, ड.
[4] प्रवृत्ति–ई.

अनुमानमपि सविशेषविषयमेव । प्रमाणसंख्याविवादेऽपि सर्वाभ्युपगतप्रमाणानाम् अयमेव विषयः इति, न केनाऽपि प्रमाणेन निर्विशेषवस्तुसिद्धिः ।

वस्तुगतस्वभावविशेषैः तदेव वस्तु 'निर्विशेषम्' इति वदन् जननीवन्ध्यात्वप्रतिज्ञायामिव [1]'स्ववाग्विरोधमपि' न जानाति ॥

[ प्रत्यक्षस्य सन्मात्रग्राहित्वा निर्युक्तिकी ]

यत्तु—प्रत्यक्षं सन्मात्रग्राहित्वेन न भेदविषयम् । भेदश्च विकल्पासहत्वात् दुर्निरूपः— इत्युक्तम्,

तदपि जात्यादिविशिष्टस्यैव वस्तुनः प्रत्यक्षविषयत्वात्, जात्यादेरेव प्रतियोग्यपेक्षया वस्तुनः स्वस्य च भेदव्यवहारहेतुत्वाच्च दूरोत्सारितम् । संवेदनवत् रूपादिवच्च परत्र व्यवहार[2]विशेषहेतोः[2] स्वस्मिन्नपि तद्व्यवहारहेतुत्वं युष्माभिः अभ्युपेतं भेदस्यापि सम्भवत्येव ।

---

विवादेऽपीति । प्रमाणत्रित्वमेव अभ्युपेतम् । आधिक्यपक्षेऽपि । अयमेव—सविशेष एव (त. टी, श्रु. दी) ।

तदेव — स्वेष्टहेत्वादिरूपानेकविशेषास्पदमेव (त. टी) । [जननीवन्ध्यात्वप्रतिज्ञा — 'मम माता वन्ध्या' इति प्रतिज्ञा ।।]

जात्यादिविशिष्टस्यैव — न तु जात्यादिभिरभिन्नस्य अनवगतसंबन्धस्य तच्छून्यस्य च । जात्यादेरेव — प्रतियोग्यप्रतीतावपि स्वरूपतः प्रत्येतुं शक्यस्यैव । प्रतियोग्यपेक्षयेति । अत्र आश्रय-धर्म्यन्तर-तद्धर्माः स्वधर्माश्च प्रतियोगिनः । स्वस्य तु स्वाश्रयधर्मान्तरादि इति विभागस्तु इह प्रतियोग्यपेक्षया इति संक्षिप्तः । वस्तुनः — जात्याद्यधिकरणस्य (त. टी) । दूरोत्सारितम् — एकक्षण एव सुग्रहत्वोक्त्या अतीव निरस्तम् (श्रु. दी) । संवेदनवत् रूपादिवच्च —पक्षवत् सपक्षवच्च (श्रु. दी) ।

---

[1] वस्तुविरोधमपि-इ. [2] विशिष्टहेतोः-ई. व्यवहारहेतोः-ड.

अत [1]एव च[1] न अनवस्था, अन्योन्याश्रयणं च। एकक्षणवर्तित्वेऽपि प्रत्यक्षज्ञानस्य, तस्मिन्नेव क्षणे वस्तुभेदरूपतत्संस्थानरूपगोत्वादेः गृहीतत्वात्, क्षणान्तरग्राह्यं न किञ्चिदिह तिष्ठति ॥

[ प्रत्यक्षस्य सन्मात्रग्राहितायां प्रतिपत्ति-व्यवहार-शब्दविरोधाः ]

अपि च – सन्मात्रग्राहित्वे, 'घटः अस्ति, पटः अस्ति' इति विशिष्ट[2]विषया [3]प्रतीतिः विरुध्यते।

यदि च सन्मात्रातिरेकिवस्तुसंस्थानरूपजात्यादिलक्षणो भेदः प्रत्यक्षेण न गृहीतः, किमिति अश्वार्थी [4]महिषदर्शने[4] निवर्तते ?

सर्वासु प्रतिपत्तिषु सन्मात्रमेव विषयश्चेत्, तत्तत्प्रतिपत्तिविषयसहचारिणः सर्वे शब्दाः एकैकप्रतिपत्तिषु किमिति न स्मर्यन्ते ?

---

अत एव च — जात्यादिरूपस्य भेदस्य स्वपरनिर्वाहकत्वात्, विशिष्टग्रहणस्यैव भेदग्रहणत्वाच्च (श्रु. दी)। एकक्षणेति। न हि गत्वा ज्ञानं ग्राहि, येन क्रमेण ग्राहि स्यात्। न च जातिगुणयोः द्रव्यस्य च क्रमेणेन्द्रियसम्प्रयोगः; देशव्यवधानाभावात्। तत् विद्यमानं योग्यं सर्वं युगपदेव ज्ञानेन स्वमहिम्ना गृह्यते इति क्षणान्तरग्राह्यं नास्ति। 'नीलो घटोऽत्र' इत्यादिवाचः क्रमवक्तृकत्वात् क्रमाधीनं ज्ञानम्। न तु इन्द्रियज्ञाने क्रमः इत्यर्थः (वे. न्या. सु) ॥

सन्मात्रेति। अनेन प्रतीतिविरोधः। सन्मात्रग्राहित्वे – भेदग्राहित्वाभावे सति (त.टी)।

यदि चेति। अनेन व्यवहारविरोधः। जात्यादिलक्षणः—जातिगुणादिस्वरूपः। किमितीति। अश्वाद्भेदस्य महिषत्वस्य दर्शनादेव हि ततो निवृत्तिः इति भावः।

सर्वास्विति। अनेन शब्दविरोधः। सर्वे शब्दा इति। वाच्यविशेषो हि दृष्टः वाचकविशेषं स्मारयति। तेन च गृहीतसम्बन्धः स एव व्यवह्रियते। सेयं व्यवस्था न स्यात् इत्यभिप्रायः ॥

---

[1] एव–झ.  [2] तया–इ.

[3] प्रतिपत्तिः–इ. ग. ट.  [4] महिषदर्शनेन–अ.

[ सन्मात्रग्रहणे प्रतीत्यवान्तरजातिविरोधः ]

किं च अश्वे हस्तिनि च संवेदनयोः एकविषयत्वेन उपरितनस्य गृहीतग्राहित्वात्, विशेषाभावाच्च स्मृतिवैलक्षण्यं न स्यात् ।

प्रतिसंवेदनं विशेषाभ्युपगमे प्रत्यक्षस्य विशिष्टार्थविषयत्वमेव अभ्युपगतं भवति । सर्वेषां संवेदनानामेकविषयतायाम् एकेनैव संवेदनेन अशेषग्रहणात् अन्धबधिराद्यभावश्च प्रसज्येत ॥

[ करणव्यवस्थार्थं विषयभेदोपपादनम् ]

न च चक्षुषा सन्मात्रं गृह्यते ; तस्य [1]रूपरूपि[1]रूपैकार्थसमवेतपदार्थग्राहित्वात् नापि [2]त्वचा[2]; स्पर्शवद्वस्तुविषयत्वात् । श्रोत्रादीन्यपि न सन्मात्रविषयाणिः [3]किन्तु शब्द[3]रसगन्धलक्षणविशेषविषयाण्येव । अतः सन्मात्रस्य ग्राहकं न किञ्चित् इह दृश्यते ॥

[ सन्मात्रग्राहित्वे शास्त्रानुत्थानम् ]

'निर्विशेषसन्मात्रस्य[4] [5]प्रत्यक्षेणैव[5] ग्रहणे, तद्विषयागमस्य प्राप्तविषयत्वेन

---

एकविषयत्वेन – सन्मात्रविषयकत्वेन । विशेषाभावात् – पूर्वानतिरिक्तव्यवहार-हेतुत्वात् ।

संवेदनानाम् -- प्रत्यक्षधियाम् । अशेषग्रहणात् – इन्द्रियान्तरग्राह्यानुप-लम्भात् (त. टी) ॥

रूपैकार्थसमवेताः – रूपसमानाश्रयसमवेताः । समवेतशब्दः विशेषणतैकस्वभावपरः । विशेषेति । विशेष्यते इति विशेषः । तेन सन्मात्रविलक्षणपरस्परभिन्नविषयत्वसिद्धिः (श्रु.प्र) । अतः–लोकसिद्धैः हेतुभिः । इह – संप्रतिपन्नेषु ग्राहकेषु (त. टी) ॥

---

[1] रूपि–आ.
[2] च त्वचा–ङ.
[3] शब्द–ज.
[4] सन्मात्रस्य–इ.
[5] च प्रत्यक्षेणैव–इ.

अनुवादकत्वमेव स्यात्, सन्मात्रब्रह्मणः प्रमेयभावश्च। ततः जडत्वनाशित्वादयः त्वयैवोक्ताः। अतः वस्तुसंस्थानरूपजात्यदिलक्षणभेदविशिष्टविषयमेव प्रत्यक्षम् ॥

[ संस्थानमेव जातिः भेदश्च ]

संस्थानातिरेकिणः अनेकेषु एकाकारबुद्धिबोध्यस्य अदर्शनात्, तावतैव गोत्वादिजातिव्यवहारोपपत्तेः, अतिरेकवादेऽपि संस्थानस्य संप्रतिपन्नत्वाच्च, संस्थानमेव जातिः। संस्थानं नाम स्वासाधारणं रूपम् इति यथावस्तु संस्थानम् अनुसन्धेयम्।

जातिग्रहणेनैव 'भिन्नः' इति व्यवहारसम्भवात्, पदार्थान्तरादर्शनात्, अर्थान्तरवादिनाऽपि अभ्युपगतत्वाच्च गोत्वादिरेव भेदः ॥

---

अनुवादकत्वमेवेति। अनेन श्रुतिप्रामाण्यविरोध उक्तः। [अनुवादो हि प्रमाणान्तरप्राप्तविषयः] (श्रु. प्र)। प्रमेयभाव इति। तदा अपसिद्धान्तः स्यादित्यर्थः (श्रु. दी)। अतः – प्रत्यक्षस्य भेदग्राहितायाः दुरपह्नवत्वात् (त. टी) ॥

संस्थाना . . . . . अदर्शनात् – 'अयं सास्नादिमान्, अयमपि सास्नादिमान्' 'अयं पृथुबुध्नोदराकारः. अयमपि तदाकारः' इति सास्नादिः अनुवृत्तबुद्धिव्यवहारविषयो दृश्यते। तदतिरिक्तः अनुवृत्तधीव्यवहारविषयः न कश्चित् दृश्यते। तस्मात् इत्यर्थः (श्रु. प्र)। तावतैवेति। व्यक्ति-जाति-विशेषादिशब्दानामिव गवादिशब्दानामपि सुसदृशोपाधिवशात् व्युत्पत्तिः अनुगतप्रयोगश्च उपपद्येते इति भावः (श्रु. प्र)। संस्थानमेव जातिः – उभयाभ्युपेतमेव जातिशब्दवाच्यम्। तेन जातिशब्दस्य न निर्विषयता। जातिगुणक्रियायदृच्छाशब्दव्यवस्था च न भज्यते इति (त. टी)। रूपम् – निरूपकम्। इत्थम् इति प्रकारतया निर्देश्यम्। यथावस्त्विति। सावयवेषु गवादिषु संनिवेशविशेषाः दृष्टा एव। निरवयवेषु आत्मादिषु चेतनत्वादिकमेव संस्थानम्। अद्रव्येष्वपि तत्तल्लक्षणमेवेति (त. टी) ॥

व्यवहारसम्भवादिति। प्रतियोगिनिरपेक्षस्य भावस्य तत्सापेक्षशब्दवाच्यत्वम् अभावाभावव्यवहारे दृष्टम्। स हि प्रतियोग्यनपेक्षो भावः। तद्वत् जात्यादिरेव भेदशब्दवाच्यः इति भावः (श्रु. दी)। 'भिन्नः' इति व्यवहारः तस्मात् अन्यथासिद्धः (त. टी)। अर्थान्तरवादिना – इतरेतराभावरूपः भेदोऽप्यस्तीति वदता (श्रु. प्र) ॥

[भेदव्यवहारस्य प्रतियोगिसापेक्षत्वोपपत्तिः]

ननु च जात्यादिरेव भेदश्चेत् — तस्मिन् गृहीते तद्व्यवहारवत् भेदव्यवहारोऽपि स्यात्[1]!

सत्यम्, भेदश्च व्यवह्रियत एव; गोत्वादिव्यवहारात्। गोत्वादिरेव हि सकलेतरव्यावृत्तिः; गोत्वादौ गृहीते सकलेतरसजातीयबुद्धिव्यवहारयोः निवृत्तेः। भेदग्रहणेनैव हि अभेदनिवृत्तिः।

'अयम् अस्मात् भिन्नः' इति तु व्यवहारे प्रतियोगिनिर्देशस्य तदपेक्षत्वात्[2], प्रतियोग्यपेक्षया 'भिन्नः' इति व्यवहारः इत्युक्तम्॥

[पारमार्थ्यापारमार्थ्यसाधकानुमानदूषणम्]

यत् पुनः — घटादीनां विशेषाणां व्यावर्तमानत्वेन[3] अपारमार्थ्यम् — उक्तम्, तत् अनालोचितबाध्यबाधकभाव-व्यावृत्त्यनुवृत्तिविशेषस्य भ्रान्तिपरिकल्पितम्[4]। द्वयोः ज्ञानयोः विरोधे हि बाध्यबाधकभावः। बाधितस्यैव व्यावृत्तिः।

---

सत्यमिति। प्रतियोग्यनपेक्षभेदस्वरूपव्यवहारे अभ्युपगमः, भेदशब्दादिव्यवहारविशेषे तु अनभ्युपगमः। व्यवह्रियत एव — न केवलं गृह्यते, प्रतियोगिनिरपेक्षं व्यवह्रियते चेत्यर्थः (श्रु. प्र)। सकलेतरशब्दः तत्तद्विरुद्धाकारविशिष्टपरः।

प्रतियोगिनिर्देशस्य — प्रतियोगिना निर्देशस्य। तदपेक्षत्वात् — प्रतियोगिधीसापेक्षत्वात् (त. टी)॥

अनालोचितेति। प्रतिपन्नोपाधौ बाधाबाध्ययोरेव मृषात्वामृषात्वसाधकत्वम्, न व्यावृत्त्यनुवृत्तिमात्रयोः इति विशेषः परेण अनालोचितः इत्यर्थः (श्रु.दी)। द्वयोरिति। विरोधे सत्येव बाध्य-बाधकभावः। न तु 'अस्ति, नास्ति' इति प्रत्ययमात्रयोः इत्यर्थः। बाधितस्यैवेति। प्रतिपन्नोपाधौ बाधितस्यैव मिथ्यात्वसाधिका व्यावृत्तिः, न तु अगृहीतत्वमात्रं मिथ्यात्वसाधकम् इत्यर्थः। व्यावृत्तिपदेन व्यावृत्तिविशेषः विवक्षितः; उत्तरत्र व्यावर्तमानत्वमात्रम् इति मात्रच्प्रत्ययप्रयोगात्॥

---

[1] रः स्यात् अ, ई.
[2] पेक्ष्यत्वात्–आ.
[3] नैव–ड.
[4] प्रकल्पितम्–इ, परिकल्पनम्–आ.

अत्र घटपटादिषु देशकालभेदेन विरोध एव नास्ति । यस्मिन् देशे यस्मिन् काले यस्य सद्भावः प्रतिपन्नः, तस्मिन् देशे तस्मिन् काले तस्य अभावः प्रतिपन्नश्चेत्—तत्र विरोधात् बलवतो बाधकत्वम्, बाधितस्य च निवृत्तिः ।

देशान्तरकालान्तरसम्बन्धितया अनुभूतस्य अन्यदेशकालयोः अभाव प्रतीतौ[1] न विरोधः इति, कथम् अत्र बाध्य-बाधकभावः? अन्यत्र निवृत्तस्य अन्यत्र निवृत्तिर्वा कथमुच्यते?

रज्जुसर्पादिषु तु तद्देशकालसम्बन्धितयैव अभावप्रतीतेः, विरोधः बाधकत्वं व्यावृत्तिश्च इति, देशान्तरकालान्तर[2]व्यावर्तमानत्वम् मिथ्यात्वव्याप्तं न दृष्टमिति न व्यावर्तमानत्वमात्रम् अपार मार्थ्य[3] हेतुः ।

यत्तु—अनुवर्तमानत्वात् सत् परमार्थः—इति,

तत् सिद्धमेवेति न साधनमर्हति । अतः न सन्मात्रमेव वस्तु ॥

---

तत्र विरोधादिति । भावाभावविरोधात् अन्यतरस्य बाध्यत्वे सति बलवतो बाधकत्वम्, इतरस्य बाधितत्वात् निवृत्तिः । चः एवार्थे । निवृत्तिः—स्वदभिमतव्यावृत्तिविशेषः ।

विरोधः—सामानाधिकरण्यानर्हत्वम् । बाधः—अदुष्टकारणजन्या निषेधधीः । बाधकत्वम्—अदुष्टकारणजन्यत्वे सति निषेधरूपत्वम् । निवृत्तिः—पुरोवर्तिनि अभावः, अनवभासो वा, सत्यत्वावभासाभावो वा (श्रु. प्र) । अन्यत्र निवृत्तस्य—विरोधबाधस्थले निवृत्तस्य । अन्यत्र—विरोधबाधरहितस्थले ।

मिथ्यात्वव्याप्तमिति । मिथ्यात्वं व्यापकम् । व्यावर्तमानत्वं व्याप्यम् इत्यर्थः ।

अत इति । 'सत् परमार्थः' इति वाक्यम् 'सत् परमार्थ एव' इति साध्यायोगव्यवच्छेदपरं चेत्—सदतिरिक्तापारमार्थ्यं नोक्तं स्यात् । 'सदेव परमार्थः' इति अन्ययोगव्यवच्छेदपरं चेत्—अनुवर्तमानत्वात् इति हेतुः अपक्षस्थः । अन्यथाऽपि विरुद्धश्च । उभयसाधने तु अंशत उभयदोषापत्तिः । 'सत् स्वेतरपरमार्थशून्यम्' इति विवक्षायाम्, रज्ज्वादिदृष्टान्तः साध्यविकलः स्यात् । तदनारोपितपरमार्थसिद्धेः इति भावः (त.टी) । न सन्मात्रमेवेति । सन्मात्रशब्देन प्रमाणसम्बन्धार्हत्वलक्षणसत्ता उच्यते । प्रमाणसम्बन्धार्ह[त्व]मात्रमेव न वस्तु[त्वं] इति वाक्यार्थः । प्रमाणसम्बन्धार्हभिन्नस्य अवस्तुत्वात् इति द्रष्टव्यम् ॥

---

[1] प्रतिपत्तौ—क, ज, ड. [2] देशकालान्तर-पा, देशकालान्तरदृष्टस्य देशकालान्तर-ई

[3] मार्थ्ये—इ, झः

[ सदनुभूत्योः नानात्वम् ]

अनुभूति-[1]सद्विशेषयो[1]श्च विषयविषयिभावेन भेदस्य प्रत्यक्षसिद्धत्वात्, अबाधितत्वाच्च अनुभूतिरेव सती—इत्येतदपि निरस्तम् ॥

[ अनुभूतेः स्वयंप्रकाशत्वपरिमितिः ]

यत्तु — अनुभूतेः स्वयम्प्रकाशत्वम् — उक्तम्,

तत्, विषयप्रकाशनवेलायां ज्ञातुः आत्मनः तथैव, न तु सर्वेषां सर्वदा तथैव, इति नियमः अस्ति ; परानुभवस्य हानोपादानादिलिङ्गकानुमानज्ञानविषयत्वात्, स्वानुभवस्यापि अतीतस्य 'अज्ञासिषम्' इति ज्ञानविषयत्वदर्शनाच्च । अतः 'अनुभूतिश्चेत् स्वतस्सिद्धा' इति वक्तुं न शक्यते ॥

[ अनुभूतित्वानुभाव्यत्वयोरविरोधः ]

अनुभूतेः अनुभाव्यत्वे अननुभूतित्वम्—इत्यपि,

दुरुक्तम् ; स्वगतातीतानु[2]भवानां[2] परगतानु[3]भवानां[3] च अनुभाव्यत्वेन, अननुभूतित्वप्रसङ्गात् । परानुभवानुमानानभ्युपगमे च शब्दार्थसम्बन्धग्रहणाभावेन समस्त-

---

सद्विशेषशब्देन घटादयो विवक्षिताः (मू. प्र) ॥

विषयप्रकाशनवेलायामिति । उत्तरत्र 'वर्तमानतादशायाम्' इति वक्ष्यते । तत्र ज्ञानस्य नित्यद्रव्यत्वेन सदा वर्तमानत्वात् तत्पदं निरर्थकमिति शङ्कापनुत्तये विषयप्रकाशनवेलायामिति । विषयसम्बन्धप्रसरस्य वर्तमानतैव विवक्षितेत्याशयः (श्रु.प्र) । ज्ञातुः - स्वाश्रयस्य (त. टी) । तथैव—ज्ञानान्तरनिरपेक्षस्वप्रकाशत्ववदेव । अनुभूतिश्चेदिति । आश्रयकालरूपविशेषणद्वयं त्यक्त्वा, केवलम् 'अनुभूतित्वावच्छिन्नं स्वतस्सिद्धम्' इति न शक्यते वक्तुम् इत्यर्थः (मू. प्र) ॥

शब्दार्थेति । प्रयोज्यवृद्धस्य गवानयनप्रवृत्त्या तदीयकार्यताज्ञानमनुमाय, तत्र पदशक्तेः ग्राह्यत्वेन, तदभावापत्तेः इत्याशयः (भा. प्र) । तदभावे च सर्वेषामव्युत्पन्नतया न मिथो भाषणम्, न च दृष्टादृष्टसर्वविद्यास्थानप्रवृत्तिः स्यात् इति (त. टी) ॥

---

[1] सद्विषययो-झ, सिद्धिविशेषयो-इ.   [2] भावा-ट.   [3] भावा-ट

शब्दव्यवहारोच्छेदप्रसङ्गः। आचार्यस्य ज्ञानवत्त्वम् अनुमाय तदुपसत्तिश्च क्रियते। सा च नोपपद्यते॥

[वेद्यत्वानुभूतित्वयोः न व्याप्तिः]

न च—अन्यविषयत्वे अननुभूतित्वम्—

अनुभूतित्वं नाम—वर्तमानदशायां स्वसत्तयैव स्वाश्रयं प्रति प्रकाशमानत्वम्, स्वसत्तयैव स्वविषयसाधनत्वं वा। ते च अनुभवान्तरानुभाव्यत्वेऽपि स्वानुभवसिद्धे न [1]अपगच्छतः[1] इति, न अनुभूतित्वम् अपगच्छति। घटादेस्तु अननुभूतित्वम् एतत्स्वभावविरहात्, न अनुभाव्यत्वात्।

तथा अनुभूतेः अननुभाव्यत्वेऽपि अननुभूतित्वप्रसङ्गः दुर्वारः; गगनकुसुमादेः अननुभाव्यस्य अननुभूतित्वात्।

गगनकुसुमादेः अननुभूतित्वम् [2]असत्त्व[2]प्रयुक्तम्, न अननुभाव्यत्वप्रयुक्तम् इति चेत्—

एवं तर्हि घटादेरपि अज्ञानाविरोधित्वमेव अननुभूतित्वनिबन्धनम्, न [3]अनुभाव्यत्वम्[3] इति आस्थीयताम्।

---

न चेति। वेद्यत्वं न अननुभूतित्वव्याप्यम् इत्यर्थः।

वर्तमानदशा — विषयग्रहणकालः। कस्यचित्प्रकाशरूपत्वम् अनुभूतित्वम्। स्वगोचरज्ञानमनपेक्ष्य स्वाश्रयाय प्रकाशमानत्वं च तल्लक्षणम्। स्वविषयेति। कस्यचिदर्थस्य साक्षाद्व्यवहारानुगुण्यापादकत्वम् इत्यर्थः। अननुभूतित्वम्—कस्यचित् प्रकाशात्मत्वाभावः। अनुभूतिशब्दानभिलप्यत्वं वा। एतत्स्वभावविरहात्—उक्तलक्षणद्वयासम्भवात् (त. टी)।

गगनेति। असत्त्वभावत्वयोः विरोधात् भावविशेषरूपानुभूतित्वाभावः तत्र असत्त्वप्रयुक्तः इति भावः (त. टी)। असत्त्वप्रयुक्तम् इत्यत्र अज्ञानाविरोधित्वप्रयुक्तम् इति पाठः सम्यक् (मू. प्र)।

अज्ञानाविरोधित्वम्—स्ववेद्यविषयाज्ञाननिवर्तकत्वरूपस्य ज्ञानधर्मस्य [घटादौ] अभावः।

---

[1] अवगच्छतः—आ.
[2] अज्ञानाविरोधित्व-आ
[3] अनुभाव्यत्वनिबन्धनम्-झ.

अनुभूतेः अनुभाव्यत्वे अज्ञानाविरोधित्वमपि तस्याः घटादेरिव प्रसज्यते इति चेत्—

अननुभाव्यत्वेऽपि गगनकुसुमादेरिव अज्ञानाविरोधित्वमपि प्रसज्यत एव। अतः—अनुभाव्यत्वे अननुभूतित्वम्—इति उपहास्यम्॥

[ संविदः पराभिमतनित्यत्वनिरासः ]

यत्तु—संविदः स्वतस्सिद्धायाः प्रागभावाद्यभावात् उत्पत्तिः निरस्यते—तत्, अन्धस्य जात्यन्धेन यष्टिः प्रदीयते। प्रागभावस्य ग्राहकाभावादभावः न शक्यते वक्तुम्; अनुभूत्यैव 'ग्रहणात्'[1]।

कथम् अनुभूतिः सती, तदानीमेव स्वाभावं विरुद्धम् अवगमयति? इति चेत्—

न हि—अनुभूतिः स्वसमकालवर्तिनमेव विषयीकरोति—इति अस्ति नियमः; अतीतानागतयोः अविषयत्वप्रसङ्गात्॥

---

अननुभाव्यत्वेऽपीति। 'यत्रोभयोः समो दोषः' इति न्यायेन प्रतिवचनमिदम्। उपहास्यमिति। अवेद्यखपुष्पादेर्व्यावृत्तं ज्ञानस्य अज्ञानविरोधित्वम् वेद्यत्वं साधयेत् इति भावः।

यावज्जीवमहं मौनी माता वन्ध्या ममेतिवत्।
वित्तेः अवेद्यतोक्तिः स्यात् इति हास्यत्वभाषणम्॥ (त. टी)॥

अन्धस्येत्यादि। असिद्धम् अत्यन्तासिद्धेन हेतुना साध्यते इत्यर्थः (श्रु. प्र)।

ग्राहकाभावादभावः—ग्राह्यकालमात्रे ग्राहकाभावात् ग्राह्यासत्त्वं न स्यात् इति भावः (त. टी)। अनुभूत्यैवेति। 'एतावन्तं कालमज्ञातमासीत्' इति अनुभूतिरेव स्वप्रागभावमपि गोचरयति इति भावः (श्रु. प्र)।

कथमिति। अविद्यमानस्वाभावबोधने बुद्धेः भ्रान्तित्वं स्यात् इति भावः।

न हीति। समकालत्वनियमो हि संयोगादिसम्बन्धे, अत्र न तथा इति ज्ञापयितुं विषयीकारोक्तिः (त. टी)।

---

[1] तद्ग्रहणात्-क.

[ ग्राह्यविशेषस्याऽपि अनुभूतियौगपद्यानियमः ]

अथ मन्यसे—अनुभूतिप्रागभावादेः सिद्ध्यतः तत्समकालभावनियमः अस्ति—इति,

किं त्वया क्वचित् एवं दृष्टम् ? येन नियमं ब्रवीषि। हन्त ! तर्हि तत एव दर्शनात् प्रागभावादिः सिद्धः इति न [1]तदपह्नवः[1]। तत्प्रागभावं च तत्समकालवर्तिनम् अनुन्मत्तः को ब्रवीति ?

इन्द्रियजन्मनः प्रत्यक्षस्य हि एष स्वभावनियमः ; यत् स्वसमकालवर्तिनः पदार्थस्य ग्राहकत्वम्। न [2]सर्वेषां ज्ञानानां[2] प्रमाणानां च ; स्मरणानुमानागमयोगिप्रत्यक्षादिषु कालान्तरवर्तिनोऽपि ग्रहणदर्शनात् ॥

[ प्रमाणाप्रमाणज्ञानयोः वैधर्म्यम् ]

अत एव च प्रमाणस्य प्रमेयाविनाभावः। न हि प्रमाणस्य [3]स्वसमकाल[3]वर्तिना अविनाभावः अर्थसम्बन्धः ; अपि तु—यद्देशकालादिसम्बन्धितया यः अर्थः अवभासते, तस्य तथाविधाकारमिथ्यात्वप्रत्यनीकता।

---

किं . . . . दृष्टमिति। ग्राह्यविशेषस्य समकालवर्तित्वनियमोक्तिः दर्शनपूर्विकैव स्यात् इत्यभिप्रायः। क्वचित्—अनुभूतौ (श्रु. प्र)। दृष्टम्—प्रमितम्। अदर्शने त्वदुक्तिः युक्ता न स्यात्। यथादृष्टार्थवादित्वं च न स्यात् इति भावः। हन्तेति—हर्षः अनुकम्पा वा। धीप्रागभावं निरस्यता तत्रैव प्रमाणमुपन्यस्तमिति परस्य जडीकारश्चायम् (त. टी)। को ब्रवीति ?—अनादिब्रह्मस्वरूपमेव मुक्तिरित्युन्माद्यन् त्वमेव ; नान्यः (त. टी)।

प्रत्यक्षस्य—प्रत्यक्षज्ञानस्य। स्वसमकालवर्तिग्राहकत्वनियमः न ज्ञानमात्रस्य, न च तदवान्तरभेदप्रमाणज्ञानस्य, न च तदवान्तरभेदप्रत्यक्षज्ञानस्य ; अपि तु प्रत्यक्षविशेषरूपैन्द्रियकज्ञानस्य इत्याशयः (श्रु. प्र)। ग्रहणदर्शनात्—ग्रहणस्य प्रमितत्वात् (त. टी) ॥

अत एव—समकालत्वनियमं हित्वा यथादर्शनं व्यवस्थापनादेव। मिथ्यात्वप्रत्यनीकता—अनारोपितत्वम्।

---

[1] तदभावनिह्नवः-आ, ई. [2] सर्वेषां-क.

[3] स्वसमानकाल-ढ.

अतः इदमपि निरस्तम्—स्मृतिः न बाह्यविषया; नष्टेऽप्यर्थे स्मृतिदर्शनात्—इति ।

[ संवित्प्रागभावे प्रमाणाभावनिरसनम् ]

अथोच्येत—

न तावत् संवित्प्रागभावः प्रत्यक्षावसेयः ; अवर्तमानत्वात् ।

न च प्रमाणान्तरावसेयः ; लिङ्गाद्यभावात् । न हि संवित्प्रागभावव्याप्तम् इह [1]लिङ्गमुपलभ्यते । न [2]अनुपपत्ति[2]रपि कस्यचित् दृश्यते । न च आगमः तद्विषयः दृष्टचरः । अतः तत्प्रागभावः प्रमाणा[3]भावादेव[3] न सेत्स्यति— इति ।

यदि एवं स्वतस्सिद्धत्वविभवं परित्यज्य [4]प्रमाणाभावे[4] [5]अवरुढश्चेत्[5], योग्यानुपलब्ध्यैव अभावः समर्थितः इति उपशाम्यतु भवान् !

[ ज्ञानानित्यत्वसाधनम् ]

किञ्च प्रत्यक्षज्ञानं स्वविषयं घटादिकं स्वसत्ताकाले सन्तं साधयत्, तस्य न सर्वदा

---

नष्टेऽपीति । नष्टविषयस्मृतिन्यायात् वर्तमानविषयस्मृतावपि बाह्यविषयत्वं त्यज्यत इति ॥

न प्रत्यक्षावसेयः—प्रत्यक्षरूपया स्वप्रतियोगिन्या धिया दुर्ग्रहः (त. टी) ।

प्रमाणाभावात्—प्रमाणपञ्चकनिवृत्तेः ।

योग्यानुपलब्ध्येति । प्रमाणपञ्चकं यत्र वस्तुरूपे निवर्तते ।
वस्तुसत्तावबोधार्थं तत्राभावप्रमाणता ॥ इति ॥

भवानिति । प्रत्यक्षसामग्रीप्रविष्टेन षष्ठप्रमाणेन ज्ञानस्याभावं साधयन् महाप्राज्ञोऽसि-त्युपहासार्थः इह भवच्छब्दः (त. टी) ॥

प्रत्यक्षज्ञानम्—अस्मदादीन्द्रियजन्या धीः । योगिप्रत्यक्षं हि त्रैकालिकविषयमिति । इस्वशब्दौ अत्र धीविषयौ । साधयत्—व्यवहारानुगुणीकुर्वत् । सर्वदा—यावत्स्वविषय

---

[1] लिङ्गमुपलभ्यते-पा. [2] अनुपलब्धि-ज्ञ, ड. [3] भावे-ट.
[4] प्रमाणभावे-आ. [5] अवरूढः-आ.

सत्तामवगमयत् दृश्यते इति, घटादेः पूर्वोत्तरकालसत्ता न प्रतीयते। तदप्रतीतिश्च संवेदनस्य कालपरिच्छिन्नतया प्रतीतेः ।

घटादिविषयमेव संवेदनम् स्वयं कालानवच्छिन्नं प्रतीतं चेत्; संवेदनविषयः घटादिरपि कालानवच्छिन्नः 'प्रतीयेत'[1] इति, नित्यः स्यात् ।

नित्यं चेत् संवेदनं स्वतस्सिद्धम्; नित्यम् इत्येव प्रतीयेत। न च तथा प्रतीयते ।

एवम् अनुमानादिसंविदोऽपि कालानवच्छिन्नाः प्रतीताश्चेत्, स्वविषयानपि कालानवच्छिन्नान् प्रकाशयन्तीति, [2]ते च[2] सर्वे कालानवच्छिन्नाः नित्याः स्युः; संविदनु[3]रूपत्वात्[3] विषयाणाम् ॥

---

कालम्। पूर्वोत्तरकालसत्ता—प्रागभावप्रध्वंसकालावच्छिन्नसत्ता। न प्रतीयते—न व्यवहारानुगुणी भवति। कालपरिच्छिन्नतया—स्वविषयावच्छिन्नकालमध्ये अल्पतरकालवर्तितया (त. टी)।

घटादि .... चेत्—विषयसमकालवर्तिनः प्रत्यक्षसंवेदनस्य नित्यत्वे घटाद्यनित्यत्वान्यथानुपपत्त्या ज्ञानानित्यत्वम् इत्यर्थः (श्रु. प्र)।

स्वतः सिद्धम्। हेतुगर्भमिदम्। बुद्धेः अनित्यत्वं, बुद्ध्यन्तरं च अनिच्छता त्वया अन्यतः धीनित्यत्वस्य वक्तुमयुक्तत्वादित्यर्थः। नित्यमित्येव। एवकारः संशयाद्यभावप्रसञ्जनार्थः (त. टी)।

एवम्—प्रत्यक्षज्ञाननित्यत्वे विषयनित्यत्वप्रसक्तौ च सत्याम् (श्रु. प्र)। संविदनुरूपत्वात् विषयाणाम्—संविदः विषयान् अवच्छिन्नान् अनवच्छिन्नान् वा यथा प्रकाशयन्ति तथैव विषयैः भवितव्यमिति ॥

---

[1] प्रतीयते—इ, छ, झ.
[2] ते—इ. झ.
[3] स्वरूपत्वात्—आ, इ.

[ निर्विषयानुभवनित्यत्वपक्षदूषणम् ]

न च निर्विषया [1]काचित्[1] संवित् अस्ति ; अनुपलब्धेः । विषयप्रकाशन-[2]तयैव[2] उपलब्धेरेव हि संविदः स्वयंप्रकाशता समर्थिता । संविदः विषय प्रकाशनता-स्वभावविरहे सति स्वयंप्रकाशत्वासिद्धेः, अनुभूतेः अनुभवान्तराननुभाव्यत्वाच्च संविदः तुच्छतैव स्यात् ॥

[ स्वापादिषु अनुभूतेः अस्फुरणम् ]

न च स्वापमदमूर्च्छादिषु सर्वविषयशून्या केवलैव संवित् परिस्फुरति इति वाच्यम् ; योग्यानुपलब्धिपराहतत्वात् । तास्वपि दशासु अनुभूतिः अनुभूता चेत्, तस्याः प्रबोधसमये अनुसन्धानं स्यात् । न च तदस्ति ॥

[ अस्मरणनियमः अनुभवाभावसाधकः ]

ननु अनुभूतस्य पदार्थस्य स्मरणनियमः न दृष्टचरः । अतः स्मरणाभावः कथम् अनुभवा[4]भावं साधयेत् ?

---

निर्विषयेति । विषयः अवच्छेदकः । विशिंषन् हि विषयः । अतः आश्रयस्यापि ग्रहणम् । उत्तरत्र तु कर्ममात्रपरः (श्रु. दी) । समर्थिता—स्वसम्बन्धादर्थान्तरे तद्धर्मव्यव-हारहेतुत्वादिति (मू. प्र) । अननुभाव्यत्वादिति । त्वन्मते इति शेषः (मू. प्र) । [तुच्छता —अवस्तुता] ॥

मूर्छादिषु । आदिशब्देन समाध्यवस्थासंग्रहः । केवला—अहङ्कारविगमात् निरा-श्रया । [योग्यानुपलब्धिः—यदि स्यात् संवित्, उपलभ्येत ! अनुपलम्भात् नास्ति इति ।] न च तदस्ति—स्मर्तव्यस्य स्मरणम् उपलम्भव्यापकम् ; तदभावात् तदभावः इति भावः (त. टी) ॥

ननु . . . . साधयेत्—व्यापकाभावो हि व्याप्याभावसाधकः । स्मरणं च न अनुभवव्यापकम् । अतः तदभावः न अनुभवाभावसाधकः ; पथि गच्छता स्पृष्टतृणादीनां, प्राग्जन्मानुभूतानां चार्थानाम् अस्मरणात् इत्याशयः (श्रु. प्र) ।

---

[1] कदाचित्—आ.    [2] स्वभावतयैव—इ, छ, झ.

[3] प्रकाशसत्ता—झ.    [4] अनुभावा—घ, ङ.

उच्यते—निखिलसंस्कारतिरस्कृतिकरदेहविगमादिप्रबलहेतुविरहेऽपि असमरणनियमः अनुभवाभावमेव साधयति ।

न केवलम् असमरणनियमात् अनुभवाभावः ; सुप्तोत्थितस्य 'इयन्तं कालं न किञ्चित् अहम् अज्ञासिषम्' इति प्रत्यवमर्शेनैव सिद्धेः ।

न च सत्यप्यनुभवे तदस्मरणनियमः विषयावच्छेदविरहात् अहङ्कारविगमाद्वा इति शक्यते वक्तुम् ; अर्थान्तराननुभवस्य अर्थान्तराभावस्य च अनुभूतार्थान्तरास्मरणहेतुत्वाभावात् । तास्वपि दशासु अहमर्थः अनुवर्तते इति च वक्ष्यते ॥

[ पूर्वोक्तार्थव्याघातशङ्कापरिहारौ ]

ननु—स्वापादिदशास्वपि सविशेषः अनुभवः अस्ति—इति पूर्वमुक्तम् !

सत्यमुक्तम् । स तु आत्मानुभवः । स च सविशेष एव इति स्थापयिष्यते । इह तु सकलविषयविरहिणी निराश्रया च संवित् निषिध्यते ।

---

निखिलशब्दः प्राचुर्याभिप्रायः ; अन्यथा जातमात्रस्य स्तन्याभिलाषायोगात् । तिरस्कृतिः—विनाशः प्रतिबन्धो वा । आदिशब्देन प्रभूतं सुखं संगृहीतम् (त.टी)। साधयतीति । उक्ततिरस्कारकाभावे कदाचित् स्मरणमनुभवव्यापकम् । तदभावोऽनुभवाभावसाधक इति (श्रु. प्र) ।

सिद्धेः । अनुभवाभावस्येत्यनुषङ्गः । बाधकमपि अस्ति इति भावः ।

विषयावच्छेदविरहात्—ज्ञेयस्य ज्ञातुश्च अभावात् (त. टी) । अहङ्कारविगमः—अहंप्रत्ययविगमः । अर्थान्तर . . . .त्वाभावात्—घटाननुभवः पटविनाशश्च अनुभूतकुड्याद्यस्मरणकारणं न दृष्टमित्यर्थः । अनुवर्तते—प्रकाशते (श्रु. प्र)॥

नन्विति । व्याघातशङ्केयम् । आत्मानुभवः--अहमर्थस्य स्फुरणम् । प्रभातिरिक्तस्य दीपस्य औज्ज्वल्यवत् । न तु अनुभूत्यनुभवः (श्रु.दी) । सविशेष एव—प्रत्यक्त्वानुकूलत्वविशिष्ट एव (श्रु. प्र) ।

केवलैव संवित् आत्मानुभवः[1] इति चेत्,

न; सा[2] च 'साश्रया इति'[3] हि उपपादयिष्यते ॥

[ उक्तार्थनिगमनम् ]

अतः—अनुभूतिः सती स्वयं 'स्वप्रागभावं'[4] न साधयति—इति प्रागभावासिद्धिः न शक्यते वक्तुम्। अनुभूतेः अनुभाव्यत्वसम्भवोपपादनेन अन्यतोऽप्यसिद्धिः निरस्ता। तस्मात् न प्रागभावाद्यसिद्ध्या संविदः अनुत्पत्तिः उपपत्तिमती ॥

[ संविदः उत्पत्तेरभावात् तत्कृतविकारस्याप्यभावः इत्येतद्दूषणम् ]

यदपि—अस्याः अनुत्पत्त्या विकारान्तरनिरसनम्—

तदपि अनुपपन्नम्; प्रागभावे व्यभिचारात्। तस्य हि जन्माभावेऽपि विनाशः दृश्यते। 'भावेषु' इति विशेषणे तर्ककुशलता आविष्कृता भवति। तथा च भवदभिमता अविद्या अनुत्पन्नैव विविधविकारास्पदम्, 'तत्त्वज्ञानोदयात्'[5] अन्तवती च इति तस्याम् अनैकान्त्यम्।

---

केवलैव. . . . .चेत्—आत्मस्फुरणरूपा या संवित् सा अस्मदुक्तसकलविषयादिविशेषशून्यैवेति चेत् (श्रु. प्र)।

सा च—धर्मिस्फुरणरूपा संवित्। साश्रयेति। स्फुरणं हि स्फुरदाश्रयो धर्मः इति॥

अतः—निर्विषयज्ञानस्य अप्रामाणिकत्वात्, तदवच्छिन्नज्ञाननित्यत्वस्य उक्तानुपपत्तिपराहतत्वात्, प्रागभावग्राहकसमर्थनाच्च (श्रु. प्र) ॥

अनुपपन्नम्—अनुत्पत्तिरूपो यो हेतुः तस्य असिद्धेरिति। व्यभिचारादिति। उत्पत्त्यभ्युपगमेऽपि दोषः अयम्। तथा च—भावरूपाऽपि (श्रु. प्र, श्रु. दी)। [अनैकान्त्यम्—हेतोः साध्यव्यभिचारिता ]

---

[1] भवे-आ.
[2] सा-पा.
[3] साश्रयैव इति-पा.
[4] प्रागभावं-इ.
[5] तत्त्वज्ञानात्-आ.

तद्विकाराः सर्वे मिथ्याभूताः—इति चेत्,

किं भवतः परमार्थभूतोऽपि अस्ति विकारः? येन 'तद्विशेषणम्'[1] अर्थवत् भवति। न हि असौ अभ्युपगम्यते ॥

[ अजत्वस्य नानात्वाभावव्याप्यत्वदूषणम् ]

यदपि—अनुभूतिः अजत्वात् स्वस्मिन् विभागं न सहते—इति,

तदपि न उपपद्यते; अजस्यैव आत्मनः देहेन्द्रियादिभ्यः विभक्तत्वात्, अनादित्वेन च अभ्युपगतायाः अविद्यायाः आत्मनो व्यतिरेकस्य अवश्याश्रयणीयत्वात्।

[2]सः[2] विभागः मिथ्यारूपः इति चेत्,

जन्मप्रतिबद्धः परमार्थविभागः किं क्वचित् दृष्टः त्वया? अविद्यायाः आत्मनः

---

किं....विकारः? । व्यावर्त्यमस्ति चेत्, अद्वैतहानिः। न चेत्, विशेषणवैयर्थ्यम् इत्यर्थः (श्रु. प्र)। तद्विशेषणम्—तद्विकाराः इत्यत्र तच्छब्दरूपविशेषणम्। विकारान्तराणां परमार्थानां सत्त्वे हि तद्विकारा मिथ्याभूताः इत्यत्र 'तत्'शब्दः सार्थको भवेत्। ततश्च अनुभूतिः परमार्थविकाररहिता; अनुत्पन्नत्वात्, यन्नैवं तन्नैवम्, यथा घटादि इति साधनं न सम्भवति, दृष्टान्ते साध्यवैकल्यात् इति भावः (मू. प्र)॥

अजस्येति। 'न जायते म्रियते वा विपश्चित्' 'पिण्डः पृथग्यतः' इत्यादि सूच्यम्। अनादित्वेनेति। आत्मा हि अविद्याव्यतिरिक्तः। तस्याः तस्माद्भेदश्च त्वयैव साध्यते इति भावः। विभागः—भेदः (त. टी)।

जन्मप्रतिबद्धः—उत्पत्तिव्याप्तः। घटादिषु परमार्थविभागस्यैव उत्पत्तिव्याप्यत्वाभ्युपगमे घटादिविभागस्य पारमार्थ्यप्रसङ्गात्। तस्यापारमार्थ्ये विशेषणवैयर्थ्यादुक्तदोषः स्यादेवेत्यर्थः।

---

[1] एतद्विशेषणम्–पा. [2] स च–क.

परमार्थतः विभागाभावे, [1]वस्तुतो हि' अविद्यैव स्यात् आत्मा। अबाधितप्रतिपत्ति-सिद्धदृश्यभेदसमर्थनेन दर्शनभेदोऽपि समर्थित एव; छेद्यभेदात् छेदनभेदवत्॥

[ दृशित्व-दृश्यत्वहेतुकानुमानदूषणम् ]

यदपि—न अस्याः [2]दृशेः दृशिरूपायाः' दृश्यः कश्चिदपि धर्मोऽस्ति। दृश्यत्वादेव तेषां न दृशिधर्मत्वम्—इति च,

[3]तदपि' स्वाभ्युपगतैः प्रमाणसिद्धैः नित्यत्व-स्वयंप्रकाशत्वादिधर्मैः उभयम् अनकान्तिकम्। न च ते संवेदनमात्रम्; स्वरूपभेदात्। स्वसत्तयैव स्वाश्रयं प्रति कस्यचित् विषयस्य प्रकाशनं हि संवेदनम्। स्वयंप्रकाशता तु स्वसत्तयैव स्वाश्रयाय प्रकाशमानता। प्रकाशश्च चिदचिदशेषपदार्थसाधारणं व्यवहारानुगुण्यम्। सर्वकाल-

---

अबाधितेति। पूर्वं प्रमाण-प्रमेयानुपपत्तिमिथ्यात्वानुमाननिरासमुखेन दृश्यभेदः समर्थितः। तत्तुल्यन्यायतया दर्शनभेदोऽपि सिद्ध इत्यर्थः (श्रु. प्र)। छेद्येति। छेद्यभेदः—छिदिकर्मत्वाकारेण भेदः। एकेन छेदनेन यत् न छिन्नं न भवति, तस्य पूर्वच्छिन्नात् भिन्नत्वेन तद्विषयच्छेदनमपि पूर्वच्छेदनात् भिन्नम्। तद्वत् दृश्यभेदः दृशिकर्मत्वाकारेण भेदः। यदि एकैव दृशिः, दृष्टादृष्टविभागो न स्यात् इति (त. टी)॥

अनैकान्तिकम्—अनियतम्—व्याप्तिशून्यम्। दृश्यत्वात् इति अन्वयिनः पक्षत्रयवृत्तित्वलक्षणम् अनियतत्वम्। दृशित्वात् इति व्यतिरेकिणः साध्यव्यावृत्तावपि साधनाव्यावृत्तिलक्षणम् अनियतत्वमात्रम् (श्रु. प्र)। [ ते—नित्यत्वस्वयंप्रकाशत्वादयः धर्माः] स्वरूपभेदात्—धर्मिस्वरूपात् धर्मान्तरस्वरूपाच्च भेदात् (त. टी)। प्रकाशनम्। प्रकाश्यते अनेनेति। व्यवहारानुगुण्यापादकम् (श्रु. प्र)। स्वसत्तयैव—दीपादिवत् स्वजन्यज्ञानमनपेक्ष्य। स्वसत्तयैव—स्वगोचरज्ञानमनपेक्ष्य। व्यवहारानुगुण्यम्—इह व्यवजिहीर्षातिरिक्तः व्यवहारहेतुविशेषः। उत्पन्ने हि ज्ञाने विषयस्य विषयिणश्च ज्ञानानुत्पत्तिरूपमपि व्यवहारानर्हत्वम् निवर्तते (त. टी)। व्यवहारकर्मत्वरूपं व्यवहारानुगुण्यं साधारणम्। तद्धि व्यवहारप्रतिसम्बन्धित्वम्।

---

[1] वस्तुतः-आ.        [2] दृशिस्वरूपायाः-आ, इ.
[3] तदपि च-ड.

वर्तमानत्वं हि नित्यत्वम्। [1]एकत्वम्[1] एकसंख्यावच्छेदः इति।

तेषां जडत्वाद्यभावरूपतायामपि तथाभूतैरपि चैतन्य[2]धर्मभूतैः तैः[2] अनैकान्त्यम् अपरिहार्यम्। संविदि तु स्वरूपातिरेकेण जडत्वादिप्रत्यनीकत्वमिति अभावरूपः भावरूपो वा धर्मः नाऽभ्युपेतश्चेत्, तत्तन्निषेधोक्त्या किमपि नोक्तं भवेत्!

[ संविदः आत्मत्वनिरासोपक्रमः ]

अपि च संवित् सिध्यति वा न वा?

सिध्यति चेत्, सधर्मता स्यात्!

न चेत्, तुच्छता गगनकुसुमादिवत्।

सिद्धिरेव संवित्—इति चेत्,

कस्य? कं प्रति? इति वक्तव्यम्। यदि न कस्यचित् [3]कंचित् प्रति[3]! सा तर्हि न सिद्धिः। सिद्धिर्हि पुत्रत्वमिव कस्यचित् कंचित् प्रति भवति।

आत्मनः—इति चेत्,

कोऽयमात्मा?

---

तदेव भासमानत्वम्। अतः 'घटः प्रकाशते' इति व्यवहारश्च तन्निबन्धनतया मुख्यः। व्यवहारप्रतिसम्बन्धित्वं प्रति हेतुत्वरूपं तत् ज्ञानस्यैव। तत्र प्रत्यक्त्वानुकूलत्वैकत्वलक्षणस्य स्वस्य व्यवहारसम्बन्धितां प्रति हेतुत्वरूपं तत् ज्ञातृस्वरूपभूतज्ञानस्यैव। स्वस्वरूप-स्वगतैकत्व-पराक्त्वानुकूलत्वाद्याकार-स्वाश्रयतत्सम्बन्धस्वविषयतत्सम्बन्धानां व्यवहारप्रतिसम्बन्धित्वे हेतुत्वरूपं तत् धर्मभूतज्ञानस्यैव। अतः स्वपरव्यवहारानुगुण्यम् ज्ञानासाधारणं प्रकाशलक्षणम् (श्रु. प्र)। एकसंख्यावच्छेदः—एकसंख्यारूपः व्यावर्तकधर्मः। इतीति। इति स्वरूपभेदादित्यन्वयः। प्रकारज्ञानत्वादिधर्मान्तरप्रदर्शनार्थः इतिशब्दः।

तथाभूतैरपि—अभावरूपैरपि (त. टी)॥

कोऽयमिति। अयंशब्दः सिद्धिप्रतिसम्बधित्वपरः। सिद्धिप्रतिसम्बधी आत्मा कः? किंशब्दः क्षेपे। संविदः सिद्धिप्रतिसंबन्धित्व—प्रत्यक्त्वमनुपपन्नम् इत्यर्थः (श्रु. प्र)।

---

[1] एकम्-आ. [2] धर्मभूतैरपि तैः-इ, धर्मभूतैः तैस्तैः-ढ. धर्मभूतैः-ट.

[3] किञ्चित् प्रति-ड.

ननु संविदेव इत्युक्तम् !

सत्यमुक्तम्; [1]दुरुक्तं तु[1] तत्। तथा हि—कस्यचित् पुरुषस्य किंचिदर्थजातं प्रति सिद्धि[2]रूपतया[2] तत्सम्बन्धिनी सा संवित् स्वयं कथमिव आत्मभावम् अनुभवेत्?

[ संविदः अनात्मत्वनिष्कर्षणम् ]

एतदुक्तं भवति—अनुभूतिरिति, स्वाश्रयं प्रति स्वसद्भावेनैव कस्यचित् वस्तुनः व्यवहारानुगुण्यापादनस्वभावः ज्ञानावगतिसंविदाद्यपरनामा सकर्मकः अनुभवितुः आत्मनः धर्मविशेषः, 'घटम् अहं जानामि' 'इमम् अर्थम् अवगच्छामि' 'पटम् अहं संवेद्मि' इति सर्वेषाम् आत्मसाक्षिकः [3]प्रसिद्धः[3]। एतत्स्वभावतया हि तस्याः स्वयं-

---

संविदेवेति। एवकारः भेदमिथ्यात्वाभिमानात् आश्रयाश्रयिभावव्युदासार्थः।

सत्यमिति। उक्तिमात्रेऽङ्गीकारः। तत्प्रतिपाद्ये तु अर्धाङ्गीकारोऽपि न इत्यर्थः (त. टी)। अर्थजातमिति। धर्मधर्मिरूपपुञ्ज एव प्रमितिविषयः इति भावः। सिद्धिरूपतया—प्रकाशरूपतया। तत्सम्बन्धिनी—तदुभयसम्बन्धिनी। कथमिवेति। आत्मधर्मभूता संवित् कथमात्मा? स्वस्यैव स्वप्रतिसम्बन्धित्वे विरोधात् इत्यर्थः (श्रु. प्र)॥

एतदुक्तमिति। संविदः पुरुषाश्रितत्वे प्रमाणप्रतिपादकः अयं ग्रन्थः (मू.प्र)। अनुभूतिरित्यनेन सिद्धिशब्दस्य ज्ञप्तिपरत्वमुक्तम्। स्वाश्रयं प्रति...स्वभावः इत्यनेन तत्स्वरूपमुक्तम्। अपरनामा इत्यनेन तेषां पर्यायत्वम्। तेन च वृत्तिज्ञानम्, संवित् इति विभागस्य निष्प्रमाणकत्वमुक्तम्। प्रसिद्धः इत्यन्तेन कर्मकर्तृसम्बन्धस्य स्वानुभवसिद्धत्वम्। एतत्स्वभावतयेति। आत्मस्वयंप्रकाशत्वं साधयता कर्मकर्तृसम्बन्धिज्ञानस्य स्वयंप्रकाशत्वं साधितमिति सकर्मकर्तृकं ज्ञानं जडरूपम् आत्मभूतज्ञानादन्यत् वृत्तिरूपमित्यभ्युपगमः अनुपपन्नः इति भावः।

---

[1] दुरुक्तं-आ. [2] रूपा-आ, ई,

[3] प्रत्यक्ष -आ.

प्रकाशता भवताऽपि उपपादिता। अस्य सकर्मकस्य कर्तृधर्मविशेषस्य [1]कर्मत्ववत्[1] कर्तृत्वमपि दुर्घटम् इति॥

[ स्थिरत्वास्थिरत्वे अपि संविदनात्मत्वसाधिके ]

तथा हि—अस्य कर्तुः स्थिरत्वम्, कर्तृधर्मस्य संवेदनाख्यस्य सुखदुःखादेरिव उत्पत्तिस्थिति[2]निरोधाश्च[2] प्रत्यक्षम् ईक्ष्यन्ते।

[3]कर्तृ[3]स्थैर्यं तावत् 'स एवाऽयमर्थः पूर्वं मया अनुभूतः' इति प्रत्यभिज्ञा-प्रत्यक्षसिद्धम्। 'अहं जानामि' 'अहम् अज्ञासिषम्' 'ज्ञातुरेव मम इदानीं ज्ञानं नष्टम्' इति च संविदुत्पत्त्यादयः प्रत्यक्षसिद्धाः इति, कुतः तदैक्यम्?

एवं क्षणभङ्गिन्याः संविदः आत्मत्वाभ्युपगमे, पूर्वेद्युः [4]'दृष्टम्[4] अपरेद्युः, 'इदम्

---

दुर्घटमिति। संविदः आत्मत्वं वदता प्रत्यक्त्वमभ्युपेतव्यम्। तच्च ज्ञानाश्रय-स्यैवेति संविदः ज्ञातृत्वमवर्जनीयम्। तच्च दुर्घटम्। कर्तृत्वमाश्रयत्वम्। धात्वर्थाश्रयो हि कर्ता (श्रु.प्र)॥

संवेदनाख्यस्येति। न ह्यसौ समाख्या पारिभाषिकीति भावः। सुखेति। स्वमते सुखादेः धीविशेषतया प्रकाशरूपावस्थाया अस्थिरत्वे दृष्टान्तः। परमते च अन्तःकरणधर्माः सुखादयः (त. टी)।

कर्तृस्थैर्यमित्यादि। प्रत्यभिज्ञायमानत्वाद्धि घटादेः स्थैर्यसिद्धिः। तद्वत् तत्र घटप्रत्यभिज्ञाकाले 'पूर्वं मयाऽनुभूतः' इति कर्तुरपि प्रत्यभिज्ञाविषयत्वात् स्थैर्यसिद्धिरिति। अहमित्यादि। ज्ञानस्य उत्पत्ति-स्थिति-निरोधानां प्रदर्शनमिदम्। उत्पत्तिः—प्रथमक्षणयोगः। स्थितिः—क्षणान्तरसम्बन्धः। घटादिसंविदः निरोधः—पटादिसंवित्। स्थिरत्वमात्मनि, संविदि अस्थिरत्वम् इति, वैधर्म्यमिति न तयोः ऐक्यम् इति (श्रु. प्र)।

एवमित्यादि। प्रत्यभिज्ञाविषये यत्र ज्वालादौ क्वचित् अन्यथासिद्धिः संभवेत्,

---

[1] कर्मभाववत्–इ.
[2] निषेधाश्च–इ.
[3] कर्तुः–इ.
[4] दृष्टमिदम्–इ.

अहम् अदर्शम्' इति प्रत्यभिज्ञा च न घटते। अन्येन अनुभूतस्य न हि अन्येन प्रत्यभिज्ञानसम्भवः॥

[ संविदः स्थिरत्वेऽपि अनात्मता ]

किंच अनुभूतेः आत्मत्वाभ्युपगमे तस्याः नित्यत्वेऽपि, प्रतिसन्धा[1]नाभावः[1] तदवस्थः। प्रतिसन्धानं हि पूर्वापरकालस्थायिनम् अनुभवितारम् उपस्थापयति। न अनुभूतिमात्रम्, 'अहमेव इदं पूर्वमपि [2]अन्वभूवम्[2]' इति। [3]भवतोऽपि[3] अनुभूतेः न हि अनुभवितृत्वम् इष्टम्॥

[क्रियायाः अकर्तृत्वात् संविदः अनात्मत्वम् ]

[4]अनुभूतिः अनुभूतिमात्रमेव[4]। संविन्नाम काचित् निराश्रया निर्विषया [5]वा[5] अत्यन्तानुपलब्धेः न सम्भवति इति उक्तम्। उभया[6]भ्युपेता[6] संविदेव आत्मा इति,

---

तत्र न स्थैर्यसिद्धिः। अत्र प्रत्यभिज्ञानविषयत्वान्यथासिद्धावपि प्रत्यभिज्ञाश्रयत्वस्य अनन्यथासिद्धत्वात् भ्रान्तिरूपप्रत्यभिज्ञायामपि तदाश्रयस्य स्थैर्यम् अनन्यथासिद्धमिति स्थैर्यं दुष्प्रकम्पमिति (श्रु. प्र)॥

प्रतिसन्धानम् इह प्रत्यभिज्ञामात्रम्, पूर्वापरज्ञानानामेकाश्रयधीर्वा (त. टी)। न केवलम् अनित्यत्वपक्ष एव संविदः आत्मत्वानुपपत्तिः, किन्तु नित्यत्वेऽपि। आत्मा हि प्रतिसन्धत्ते। प्रतिसन्धानम् अत्र न सम्भवति इत्यर्थः (श्रु. प्र)। न अनुभूतिमात्रमिति। ज्ञातृत्वाभावे प्रकाशस्यापि कालद्वयवृत्तिः निष्फलेति भावः (त. टी)॥

अनुभूतिरिति। न केवलं भवदनभ्युपगमः; गमनक्रियायाः गन्तृत्ववत्, अनुभूतेः अनुभवितृत्वं चानुपपन्नं इत्यभिप्रायः। मात्रचा अनुभवितृत्वव्यावृत्तिः (श्रु. प्र)।

---

[1] नासम्भवः-पा.
[2] अन्वभवम्-झ.
[3] भवतः-आ, इ.
[4] अनुभूतिमात्रमेव-आ.
[5] च-इ.
[6] भ्युपगता-आ.

उपलब्धिपराहतम् । अनुभूमिात्रमेव परमार्थ इति 'निष्कर्षक'[1] हेत्वाभासाश्च निराकृताः॥

[ आत्मनः अहमर्थत्वं प्रत्यक्त्वाबाधकम् ]

ननु च—'अहं जानामि' "इति"[2] अस्मत्प्रत्यये यः अनिदमंशः प्रकाशैकरसः चित्पदार्थः स आत्मा। तस्मिन् तद्बलनिर्भासित[3]तया[3] युष्मदर्थलक्षणः 'अहं जानामि' इति सिध्यन् अहमर्थः चिन्मात्रातिरेकी युष्मदर्थ एव—

नैतदेवम् ; 'अहं जानामि' इति धर्मधर्मितया प्रत्यक्षप्रतीतिविरोधादेव ॥

---

पराहतमिति । प्रत्यक्त्वलक्षणस्यात्मत्वस्य 'अहं जानामि' इति ज्ञातृत्वसामानाधिकरण्येनोपलब्ध्या पराहतम् (श्रु. प्र) । हेत्वाभासाः—दृशित्वदृश्यत्वादयः (त. टी) ॥

अस्मत्प्रत्यये—अस्मत्प्रत्ययत्वेन पराभ्युपगते । अनिदमंशः—इदमंशभूतपरागर्थव्यतिरिक्तः प्रत्यगर्थः । प्रत्यगर्थत्वात् इत्यर्थः । प्रकाशैकरसः चित्पदार्थः इति । ज्ञानत्वात् स्वयंप्रकाशत्वमित्यर्थः । प्रत्यक्त्वम्—स्वस्मै प्रकाशमानत्वम् । स्वयंप्रकाशत्वम्—अनन्याधीनप्रकाशत्वम् । [तस्मिन् इत्यादि—'अहं जानामि' इति सिध्यन् अहमर्थः तद्बलनिर्भासिततया युष्मदर्थलक्षणत्वात् नाम चिन्मात्रातिरेकित्वात् युष्मदर्थ एव—परागर्थ एव न प्रत्यगर्थः इति अन्वयः] तद्बलनिर्भासितत्वात्—ज्ञानाधीनप्रकाशत्वात् । युष्मदर्थ एव—अनात्मैव (श्रु. प्र)।

नैतदेवम् । अहमर्थस्यैव प्रत्यक्त्वमात्मत्वं च । तद्धर्मतया सिध्यतः प्रकाशस्य तु परस्मा एव भासमानत्वात् नोभयम् इति, विपरीतप्रकारव्यवच्छेदार्थः 'एवं'शब्दः । विरोधादेव । धियः स्वसिद्धित्वमिष्टम् । ज्ञातुः जडत्वं प्रतिवक्ष्यते । ज्ञातुः प्रत्यक्त्या धीधर्मकतया धियश्च तद्धर्मत्वेन पराक्त्वेन च सुखादिवत्प्रतीत्या चतुर्णां हेतूनां कालात्ययापदेशः इति भावः । ज्ञस्यात्मत्वज्ञातृपराक्त्वानात्मत्वसाधकानाम् असिद्धिश्चेति (श्रु. दी) ॥

---

[1] निष्कर्षे–आ. [2] इत्यत्र–आ.

[3] स्यात्–आ.

[ प्रत्यक्त्वात् अहमर्थ एव आत्मा ]

किं च—

अहमर्थो न चेदात्मा [1]प्रत्यक्त्वं[1] नात्मनो भवेत् ।
अहंबुद्ध्या परागर्थात् प्रत्यगर्थो हि भिद्यते ॥ १ ॥

[ मुमुक्षोः अभिसन्धिः ]

निरस्ताखिलदुःखोऽहमनन्तानन्दभाक् स्वराट् ।
भवेयमिति मोक्षार्थी श्रवणादौ प्रवर्तते ॥ २ ॥

[ शास्त्रप्रामाण्यान्यथानुपपत्त्या अहमर्थ आत्मा ]

अहमर्थविनाशश्चेन्मोक्ष इत्यध्यवस्यति ।
अपसर्पेदसौ मोक्षकथाप्रस्तावगन्धतः ॥ ३ ॥

मयि नष्टेऽपि मत्तोऽन्या काचिज्ज्ञप्तिरवस्थिता ।
इति तत्प्राप्तये यत्नः कस्याऽपि न भविष्यति ॥ ४ ॥

---

**अहमर्थ इति ।** प्रत्यक्त्वं पराक्त्वं च 'अहमिदं'बुद्धिभ्यां हि विभज्यते । तस्मात् अहंबुद्धिविगमे प्रत्यक्त्वमेव न सेत्स्यति इति, प्रत्यक्त्वमेवाहमर्थस्यात्मत्वसाधकमित्यर्थ (श्रु. प्र) ॥

**अहमर्थेति ।** यत्सम्बन्धिनी दुःखध्वंस-सुखप्राप्ती इष्टे, तन्नाशे मुक्तौ अधिकारिविरहात् प्रमितिजनकत्वलक्षणं प्रामाण्यं शास्त्रस्य न भवेत् इत्यर्थः ॥

**मयीति ।** न हि मयि नष्टेऽपि स्तम्भस्तिष्ठतीति स्वशिरश्छेदः पुरुषार्थः स्यात् । न हि केवलसंविदः श्रवणादौ प्रवृत्तिः, अपि तु अहमर्थस्यैव । अतः प्रवर्तमानोऽयं स्वनाशाय न प्रवर्तते इति (श्रु.प्र) ॥

---

[1] प्रत्यक्ष–आ.

स्वसम्बन्धितया ह्यस्याः [1]सत्ता विज्ञप्ति[1]तादि च ।
स्वसम्बन्धवियोगे तु ज्ञप्तिरेव न सिध्यति ॥ ५ ॥

छेत्तुश्छेद्यस्य चाभावे छेदनादेरसिद्धिवत् ।
अतोऽहमर्थो ज्ञातैव प्रत्यगात्मेति निश्चितम् ॥ ६ ॥

'विज्ञातारमरे केन', 'जानात्येवे'ति च श्रुतिः ।
'एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञ' इति च स्मृतिः ॥७॥

'नात्मा श्रुते'रित्यारभ्य सूत्रकारोऽपि वक्ष्यति ।
'ज्ञोऽत' एवेत्यतो नात्मा ज्ञप्तिमात्रमिति स्थितम् ॥८॥

[ युष्मदस्मदर्थयोः ऐक्यं व्याहतम् ]

अहम्प्रत्ययसिद्धो हि अस्मदर्थः ; युष्मत्प्रत्ययविषयः युष्मदर्थः । तत्र

---

**स्वेति** । सामान्याकारः सत्ता । विज्ञप्तिता विषयप्रकाशत्वरूपविशेषाकारः आदिशब्देन स्वयंप्रकाशत्वम् । सत्तायाः आश्रयसम्बन्धाधीनत्वात् स्वरूपलाभे सति ज्ञप्तित्वादिसम्भवाच्च सर्वं तदधीनमिति (श्रु. प्र) ॥

**छेत्तुरिति** । आस्तामन्यत्, सकर्मकस्य धात्वर्थस्य कर्म-कर्तृविरहे कथं सत्ता **छेदनादेरिति** । आदिना सकर्मकक्रियान्तरे व्याप्तिः प्रदर्श्यते । न ह्यत्र धर्म्यभात्रे धर्मसत्तायां किञ्चित्प्रमाणम् । ज्ञातुरभावे च कस्मै स्वात्मानम् अन्यद्वा प्रकाशयेत्? इति (त. टी) । **अत इति** । प्रत्यक्षविरोधात्, असिद्धत्वात्, अविपरीतसाधकत्वात् सत्प्रतिपक्षत्वाच्च संविदात्मत्वानुपपत्तेः श्रुत्यर्थापत्त्या च अहमर्थ एवात्मेति (श्रु. प्र) ॥

**विज्ञातारमिति** ज्ञातव्यस्यात्मनः ज्ञातृत्वम्, **जानात्येवेति** ज्ञातृत्वस्य-स्वाभाविकतया मुक्तावपि तत्सत्त्वम् (श्रु. प्र) ।

**अतः**—प्रत्यक्षागमयुक्तिबलात् । ज्ञप्तिः न आत्मा; परस्मा एव भातत्वात्, अनहंत्वात्, घटादिवत् इत्यादिप्रयोगाः द्रष्टव्याः (त. टी) ॥

---

[1] सत्ताऽपि ज्ञप्ति-आ, ग्र.

'अहं जानामि' इति सिद्धो ज्ञाता युष्मदर्थः—इति वचनम्, 'जननी मे वन्ध्या' इतिवत् व्याहतार्थं च।

न च—असौ ज्ञाता अहमर्थः अन्याधीनप्रकाशः; स्वयंप्रकाशत्वात्। चैतन्यस्वभावता हि स्वयंप्रकाशता। यः प्रकाशस्वभावः सः अनन्याधीनप्रकाशः, दीपवत्॥

[ दीपस्य स्वयंप्रकाशताभङ्गपरिहारौ ]

न हि दीपादेः स्वप्रभावलनिर्भासितत्वेन अप्रकाशत्वम्, अन्याधीनप्रकाशत्वं च। किं तर्हि? दीपः [1]प्रकाश[1]स्वभावः स्वयमेव प्रकाशते, अन्यानपि प्रकाशयति [2]स्वप्रभया[2]॥

---

व्याहतार्थमिति। अस्मदर्थो हि न युष्मदर्थ इति [तदभेदवचनं] व्याहतमिति (श्रु. दी)।

स्वयंप्रकाशत्वात्—स्वत एव व्यवहारानुगुण्यशक्तियुक्तत्वात्। न अन्याधीनप्रकाशः—प्रकाशान्तरनिरपेक्षः। चैतन्येति। चेतना—ज्ञानम्, तद्भावः—चैतन्यम्—ज्ञानत्वम्। चैतन्यस्वभावत्वम्—ज्ञानत्वगुणकता। ज्ञानत्वमेव हि ज्ञानस्य स्वयंप्रकाशत्वम्। तद्वत् अत्राऽपि ज्ञानत्वं प्रामाणिकं चेत् तदेव स्वयंप्रकाशत्वं भवति इत्युक्तं भवति (श्रु. प्र)। प्रकाशस्वभाव इति। प्रकाशः—दीपस्य—तमोविरोधिरूपम् औज्ज्वल्यम्; आत्मनः—स्फुरणम्। तद्धर्मकः इत्यर्थः। ज्ञाता—स्वधर्मभूतप्रकाशनिरपेक्षप्रकाशः; प्रकाशधर्मकत्वात्, यः यादृक्प्रकाशधर्मकः, सः स्वयमपि तादृक्प्रकाशः; यथा दीप इति प्रयोगः (श्रु. दी)।

न हीति। चक्षुर्ग्राह्यत्वे सति प्रभान्यत्वात् दीपः घटादिवत् स्वप्रभावभास्यो न भवति; अन्धकारे व्यभिचारात्। अतः दीपस्य न प्रभापेक्षा इत्यभिप्रायः (श्रु. प्र)। अप्रकाशत्वम्—स्वयम् औज्ज्वल्यधर्मकत्वाभावः। अन्याधीनप्रकाशत्वम्—अप्रकाशत्वकृतं प्रकाशान्तरसापेक्षत्वम्। अन्यानपीति। विषयप्रकाशनक्षमोऽपि स्वरूपस्य काचित्कतया विषयसम्बन्धाभावात् स्वयमेव न प्रकाशयति। किं तु स्वसंबन्धिन्या स्वपरिकरभूतया प्रभयेति भावः। [तथैव दीपस्थानीयः ज्ञाता अहमर्थोऽपि इति।] (श्रु. प्र)॥

---

[1] स्वयंप्रकाश-पा, स्वप्रकाश-इ. [2] प्रभया-पा.

[ धर्म-धर्मिणोः द्वयोरपि ज्ञानरूपता ]

एतदुक्तं भवति—यथा एकमेव तेजोद्रव्यम् प्रभा-प्रभावद्रूपेण अवतिष्ठते, यद्यपि प्रभा प्रभावद्द्रव्यगुणभूता, तथाऽपि तेजोद्रव्यमेव, न शौक्ल्यादिवत् गुणः ; स्वाश्रयादन्यत्राऽपि वर्तमानत्वात्, रूपवत्त्वाच्च शौक्ल्यादिवैधर्म्यात्। प्रकाशवत्त्वाच्च तेजोद्रव्यमेव, न अर्थान्तरम्। प्रकाशवत्त्वं च स्वस्वरूपस्य अन्येषां च प्रकाशकत्वात्।

अस्यास्तु गुणत्वव्यवहारः नित्यतदाश्रयत्वतच्छेषत्वनिबन्धनः। न च आश्रयावयवा एव विशीर्णाः प्रचरन्तः प्रभाः इत्युच्यन्ते ; मणि-द्युमणिप्रभृतीनां विनाशप्रसङ्गात्।

दीपेऽपि अवयविप्रतिपत्तिः कदाचिदपि न स्यात्। न हि—विशरणस्वभावावयवाः दीपाः चतुरङ्गुलमात्रं नियमेन पिण्डीभूताः ऊर्ध्वमुद्गम्य, ततः पश्चात् युगपदेव तिर्यक् ऊर्ध्वम् अधश्च एकरूपाः विशीर्णाः प्रचरन्ति—इति शक्यं वक्तुम्। अतः—सप्रभाका एव दीपाः प्रतिक्षणम् उत्पन्नाः विनश्यन्ति—इति पुष्कलकारणक्रमोपनिपातात्, तद्विनाशे

---

एकम्—एकजातीयम्। गुणभूता—परतन्त्रभूता—अयुतसिद्धविशेषणभूता। प्रकाशकत्वादिति। स्वविषय-परविषयज्ञानविरोधितमोनिरसनरूपकार्यदर्शनात् (श्रु. प्र)।

[अस्याः—प्रभायाः।] नित्य . . . निबन्धनः। गुणशब्दो हि दासादिषु क्रियान्तरशेषभूते कर्मणि सन्धिविग्रहादिषु च विवक्षान्तरेण प्रयुज्यते ; तद्वत् इहापि द्रव्यत्वाविरुद्धनिमित्तविवक्षया गुणोक्तिः अविरुद्धा इति। विनाशेति। प्रतिक्षणमिति शेषः (त. टी)।

दीपेऽपीति। अपिः पूर्वत्र अत्र च प्रत्यक्षविरोधसाम्यद्योतकः। अवयविशब्दः परमतेन। स्वमते तु सङ्घातविशेषपरः। कदाचिदपि—पूर्वोत्तरकालयोरिव मध्येऽपि (त. टी)। न हीति। विशरणस्वभावत्वे मूर्तेन प्रहरप्रतिबन्धौ स्याताम्। न च तौ इति न अवयविधीः। युगपत् विष्वग्विशरणे च न नियामकम्। अतः यथादृष्टमभ्युपेयम् इति भावः (श्रु. दी)। अतः—पक्षान्तरस्य गौरवपराहतत्वात्। विनश्यन्तीति। अत्राऽपि प्रतिक्षणम् इति योज्यम्। [इति इत्यस्य अवगम्यते इत्यत्रान्वयः।] पुष्कलेति। उत्तरोत्तरक्षणेष्वपि दीपसामग्रीसम्पत्तेः इत्यर्थः। विगीतः समुदायः—दीपजनकः ; विशिष्टवह्निवर्त्यादिसमुदायत्वात्, आद्यवत् इति प्रयोगः (त. टी)। सप्रभाका एवेति। तेजस्त्वेन मण्यादिविनाशाभ्युपगमे

विनाशाच्च अवगम्यते। प्रभायाः स्वाश्रयसमीपे प्रकाशाधिक्यम् औष्ण्याधिक्यम् इत्यादि उपलब्धिव्यवस्थाप्यम्। अग्न्यादीनाम् औष्ण्यादिवत्। एवम् आत्मा चिद्रूप एव चैतन्य[1]गुणकः[1]—इति ॥

[ चिद्रूपता स्वयंप्रकाशतारूपा ]

चिद्रूपता हि स्वयंप्रकाशता। तथा हि श्रुतयः—

'स यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एव, एवं वा अरेऽयमात्मा अनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एव' (बृ. उ. 6-5-13)

'विज्ञानघन एव' (बृ. उ. 4-4-12)

'अत्राऽयं पुरुषः स्वयंज्योतिर्भवति' (बृ. उ. 6-3-9)

'[2]न हि[2] विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते' (बृ. उ. 6-3-30)

'अथ यो वेदेदं जिघ्राणीति स आत्मा' (छां. उ. 8-12-4)

'कतम आत्मेति, योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः' (बृ. उ. 6-3-7)

---

अतिप्रसङ्गात्, विशरणस्वीकारे पिण्डीभावयुगपद्विश्वग्विशरणऋजुप्रसरणाद्यनेकनियमव्यवस्थापका - भावात्, यथादृष्टाभ्युपगमे विरोधाभावाच्च सप्रभाका एव दीपाः प्रतिक्षणमुत्पन्नाः इत्यर्थः। चिद्रूप इति। रूपशब्दः धर्मिस्वरूपपरः (श्रु. प्र) ॥

चिद्रूपता हीति। अनेन वक्ष्यमाणश्रुतिवाक्ये ज्ञानशब्दः व्याख्यातो भवति (श्रु. प्र)। न स्वधर्मतादात्म्यमिहोच्यते, किंतु तत्सजातीयत्वम् इति (त. टी)। तथा हि— ज्ञानरूपत्वे, ज्ञानगुणकत्वे च (मू. प्र)। प्रज्ञानघनः। प्रकृष्टसुखात्मकज्ञानैकरूपः इत्यर्थः; सामान्योक्तेः मानोपनीतविशेषविश्रमात्, अनपेक्षितविधिदौर्बल्याच्च। विज्ञानघनः—विविध- ज्ञानविशिष्टः। न हीति आत्मनो ज्ञातृत्वं धर्मभूतज्ञाननित्यता चोक्ते। अथ य इति ज्ञातुः अनात्मत्वं व्युदस्यते (त. टी)। कतमः?—शङ्कास्पदेषु कः? प्राणेषु—

---

[1] गुणः—आ.   [2] पा—न.

'एष हि [1]द्रष्टा स्प्रष्टा[1] श्रोता घ्राता रसयिता मन्ता बोद्धा कर्ता विज्ञानात्मा पुरुषः' (प्रश्न. उ. 4-9)

'विज्ञातारमरे केन विजानीयात्' (बृ. उ. 4-4-14)

'जानात्येवाऽयं पुरुषः'

'न पश्यो मृत्युं पश्यति न रोगं नोत दुःखताम्' (छां. उ. 7-26-2)

'स उत्तमः पुरुषः . . . . . . नोपजनं स्मरन्निदं शरीरम्' (छां. उ. 8-12-3)

'एवमेवाऽस्य परिद्रष्टुरिमाः षोडशकलाः पुरुषायणाः पुरुषं प्राप्याऽस्तं गच्छन्ति' (प्रश्न. उ. 6-5)

'तस्माद्वा एतस्मान्मनोमयात् । अन्योऽन्तर आत्मा विज्ञानमयः' (तै. उ. आन. 4-1)

इत्याद्याः । वक्ष्यति च—

'ज्ञोऽत एव' (ब्र. सू. 2-3-19)

इति । अतः स्वयंप्रकाशः अयम् आत्मा ज्ञातैव, न प्रकाशमात्रम् ॥

---

प्राणशब्दगोचरसमुदायमध्ये । हृदि—हृदयात्मकस्थाने । अन्तर्ज्योतिः—स्वप्रकाशः । एष हीति । [अनेन] ज्ञातृत्व-कर्तृत्व-ज्ञानत्वादेः आत्मनि सहोक्तिः । विज्ञातारमिति ज्ञातुरेव प्रत्यगात्मनः मुमुक्षुवेद्यत्वम् । जानात्येवेति मुक्तावपि ज्ञातृत्वाय अयोगव्यवच्छेदः । नोपजनमिति मुक्तस्य संस्कारजन्यधीनिषेधात् स्वतस्सिद्धसाक्षात्कारवत्त्वम् । संस्कारो हि औपाधिकत्वात् तदानीं निवर्तते । तत एव न स्मृतिः मुक्तस्येति भावः (त. टी) । एवमेवेति द्रष्टुः अवस्थानं करणादिमात्रनिवृत्तिश्चोच्यते । षोडशकलाः—पञ्चभूतानि, एकादशेन्द्रियाणि च । औपाधिकसमुदायैकदेशत्वात् कलात्वम् । पुरुषायणा इति । पुरुषोऽत्र परमात्मा । तत्प्राप्तिदशायाम् इन्द्रियादयः न जीवमनुबध्नन्ति इत्यर्थः । तस्माद्वेति देहादेः ईश्वराच्च व्यावृत्तस्य जीवस्य ज्ञातृत्वे श्रुतिरियम् । अतः—अन्याधीनप्रकाशत्वस्याभावात् । न प्रकाशमात्रमिति । यथा 'रसघन एव' इत्यत्र रूपादेः अनिषेधः, तथ अत्राऽपि 'प्रज्ञानघन एव' इत्यवधारणेन न मानसिद्धस्य ज्ञातृत्वादेः निषेध इत्यर्थः (त. टी) ॥

---

[1] द्रष्टा—पा.

[ संविदः अनात्मत्वोपपादकाः तर्काः ]

प्रकाशत्वादेव कस्यचिदेव भवेत्प्रकाशः, [1]दीपादि[1]प्रकाशवत् । तस्मात् न आत्मा भवितुमर्हति संवित् । 'संविदनुभूतिज्ञानादिशब्दाः [2]सम्बन्धि[2]शब्दाः' इति च शब्दार्थविदः । न हि लोकवेदयोः [3]जानात्यादेः[3] अकर्मकस्य [4]अकर्तृकस्य च[4] प्रयोगः दृष्टचरः ॥

[ संविदात्मत्वे अजडत्वं न हेतुः ]

यच्चोक्तम्—अजडत्वात् संविदेव आत्मा—इति,

तत्र इदं [5]प्रष्टव्यम्[5] ; अजडत्वम् इति किमभिप्रेतम् ?

स्वसत्ताप्रयुक्तप्रकाशत्वम्—इति चेत्,

तथा सति दीपादिषु अनैकान्त्यम्, संविदतिरिक्तप्रकाशधर्मानभ्युपगमेन [6]असिद्धिः[6], विरोधश्च ॥

---

प्रकाशत्वादेव— विषयेण साक्षात्सम्बन्ध साक्षात् परम्परया वा ज्ञायमानत्वेन अपरोक्षव्यवहारानुगुण्यहेतुत्वादेव (श्रु. प्र) । सम्बन्धिशब्दा इति । धर्मभूतज्ञाने ज्ञानादिशब्दानां सम्बन्धिशब्दता सार्था । स्वप्रकाशत्वेन निमित्तेन धर्मधर्मिणोः शब्दानुवृत्तिरिति । तव तु दृश्यमानविषयाश्रयसम्बन्धापह्नवात् सम्बन्धिशब्दत्वोपदेशवैफल्यमेवेति (त. टी) । न हीति । यत्र अर्थस्वरूपस्यान्यथात्वं दृश्यते तत्र शब्दस्वभावायत्तत्वमाश्रयणीयम्, यथा 'दाराः' इत्यादौ बहुत्वादेः । यत्र न अन्यथात्वं तत्र अर्थस्वभावायत्तत्वमेव, यथा 'भार्या' इत्यादौ एकत्वादेः । तथा लोकवेदयोः सकर्मकर्तृत्वदर्शनात् अर्थस्वभावायत्तमेव सम्बन्धिशब्दत्वमिति (श्रु. प्र) ॥

किमभिप्रेतमिति । स्वसत्ताप्रयुक्तप्रकाशत्वम्, अव्यभिचरितप्रकाशसत्ताकत्वम्, स्वस्मै प्रकाशमानत्वम्, स्वस्मै स्वयंप्रकाशमानत्वम्, स्वयंप्रकाशत्वम् इति पञ्चसु अन्यतमं किमात्मकमिष्टम्? इत्यर्थः (श्रु. प्र) ।

स्वसत्तेति । स्वसत्ताप्रयुक्तः प्रकाशः यस्य इति बहुव्रीहिः ।

अनैकान्त्यमिति । पक्षे संविदि, सपक्षे ज्ञातर्यात्मनि, विपक्षे अनात्मनि दीपे च

---

[1] प्रदीपादि—इ, झ.　　[2] ससम्बन्धिक—क.

[3] जानातीत्यादेः—घ, ङ.　　[4] अकर्तृकस्य—इ.

[5] द्रष्टव्यम्—इ.　　[6] सिद्धिरिति—छ, झ.

अव्यभिचरितप्रकाशसत्ताकत्वमपि, सुखादिषु व्यभिचारात् निरस्तम् ।

यद्युच्येत—सुखादिः अव्यभिचरितप्रकाशोऽपि अन्यस्मै प्रकाशमानतया घटा-[1]दिवत्[1] जडत्वेन [2]अनात्मा[2]—इति,

[3]ज्ञानं वा[3] किं स्वस्मै प्रकाशते ? तदपि हि अन्यस्यैव अहमर्थस्य ज्ञातुः अवभासते 'अहं सुखी' इतिवत्, 'जानाम्यहम्' इति । अतः स्वस्मै प्रकाशमानत्व-रूपम् [4]अजडत्वम्[4] संविदि असिद्धम् ।

तस्मात् स्वात्मानं प्रति स्वसत्तयैव सिध्यन् अजडः अहमर्थ एव आत्मा ॥

[ ज्ञानस्य प्रकाशरूपतायां हेतुः ]

ज्ञानस्यापि प्रकाशता तत्सम्बन्धायत्ता । तत्कृतमेव हि ज्ञानस्य सुखादेरिव

---

वृत्त्या पक्षत्रयवृत्तित्वलक्षणमनैकान्त्यम् । असिद्धिः ; संवित् प्रयोजिका, प्रकाशः प्रयोज्यः इति संविदतिरेकेण संविदि पक्षे [हेतुभूत] प्रकाशाख्यधर्मानङ्गीकारात् । विरोधः—तादृश-धर्माङ्गीकारे निर्विशेषत्वसिद्धान्तविरोधः ॥

अव्यभिचरितेति । न व्यभिचरति प्रकाशः यस्य सत्ताम्, सः अव्यभिचरितप्रकाश-सत्ताकः । प्रयोज्य-प्रयोजकत्वाभावेऽपि विद्यमानदशायां सर्वदा प्रकाशमानत्वम् इत्यर्थः (श्रु. प्र) ।

अन्यस्मै इति । स्वस्मै प्रकाशमानत्वरूपं तृतीयमजडत्वं सुखादौ नास्ति इति ।

ज्ञानं वेति । स्वस्मै प्रकाशमानत्वहेतोः अजडत्वरूपस्य पक्षे संविदि असिद्धिरुक्ता ।

तस्मादित्यादि । इतरात्मव्यावृत्त्यर्थं स्वात्मानमित्युक्तम् । स्वसत्तयैव सिध्यन् इति स्वयंप्रकाशत्वमुक्तम् । अतः चतुर्थः कल्पः दूषितः (श्रु. प्र) ॥

ज्ञानस्यापीति । अन्यमात्रनिरपेक्षत्वस्य ज्ञानमात्रनिरपेक्षत्वस्य वा हेतुत्वेऽपि तयोः संविदि असिद्ध्युपपादनमिदम् । प्रकाशता—व्यवहारानुगुण्यापादकता । प्रकटत्वम्—स्वयमपि स्वव्यवहारानुगुण्यापादकत्वम् (त. टी) । तत्कृतमेवेति । ज्ञानस्फुरणस्य आश्रयसम्बन्धो-ऽपिसामग्र्यन्तर्भूतः इत्यर्थः (श्रु. प्र) ॥

---

[1] दिरिव–झ.

[2] नात्मा–इ.

[3] ज्ञानं–इ, झ.

[4] जडत्वम्–घ, ञ.

स्वाश्रयचेतनं प्रति प्रकटत्वम्, इतरं प्रति अप्रकटत्वं च। अतः न ज्ञप्तिमात्रम् आत्मा, अपि तु ज्ञातैव अहमर्थः॥

[अहमर्थः न भ्रान्तिसिद्धः]

अथ यदुक्तम्—अनुभूतिः परमार्थतो निर्विषया निराश्रया च सती भ्रान्त्या ज्ञातृतया अवभासते, रजततयेव शुक्तिः; निरधिष्ठानभ्रमानुपपत्तेः—इति,

तदयुक्तम्; तथा सति अनुभवसामानाधिकरण्येन अनुभविता अहमर्थः प्रतीयेत, 'अनुभूतिरहम्' इति। पुरोऽवस्थितभास्वरद्रव्याद्याकारतया[1] रजतादिरिव। अत्र तु पृथक् अवभासमानैव इयमनुभूतिः अर्थान्तरम् अहमर्थं विशिनष्टि, दण्ड इव देवदत्तम्। तथा हि 'अनुभवाम्यहम्' इति प्रतीतिः।

तदेवम् अस्मदर्थम् अनुभूतिविशिष्टं प्रकाशयन् 'अनुभवाम्यहम्' इति प्रत्ययः

---

निर्विषयेति। सविषये वृत्तिज्ञाने ज्ञात्रपेक्षा। संविदस्तु न तथा; निर्विषया खलु सा इति। निरधिष्ठानेति। अविद्यायामेव ज्ञातुरपि अध्यासः स्यात्; किम् अनुभूत्या इत्यस्योत्तरमिदम्। अविद्याऽपि ह्यसत्यत्वात् अधिष्ठानसापेक्षा इति भावः (त. टी)।

तदयुक्तमिति। मिथ्यादोषात् अध्यासं वदतां मिथ्याधिष्ठानादपि सः स्यादिति भावः। तथासति .....रजतादिरिवेति। यद्यपि रजतत्वम् आरोप्यम्; तथाऽपि तद्विशिष्टवाचिना रजतशब्देन अधिष्ठानवाचिनः 'इदं'शब्दस्य सामानाधिकरण्यं दृश्यते 'इदं रजतम्' इति। तद्वत् इहाऽपि अधिष्ठानाध्यस्तयोः सामानाधिकरण्येन प्रकाशः प्रसज्येत इति भावः। पृथगिति। आरोप्यात्—अहन्त्वविशिष्टवैयधिकरण्येन इत्यर्थः (त. टी)॥

तदेवमिति। उक्तप्रकारेण धर्मधर्मिभावप्रतीतौ विशेषणतया प्रतिपन्ने तद्विशेषण-विशिष्टस्य अध्यासः अनुपपन्नः। तत्र न सम्बन्धमात्राध्यासः, तथासति सम्बन्धिनः ज्ञातुः पारमार्थ्यप्रसङ्गादिति। अध्यासेषु धर्म्यैक्यप्रतीतिः अवर्जनीयेति भावः (श्रु. प्र)॥

---

[1] द्रव्याकारतया-आ, ई.

दण्डमात्रे 'दण्डी देवदत्तः' इति प्रत्ययवत् विशेषणभूतानुभूतिमात्रावलम्बनः [1]कथं[1] प्रतिज्ञायेत ?

[ ज्ञातृत्वं मिथ्येत्येतद् निर्युक्तिकम् ]

यदप्युक्तम्—'स्थूलोऽहम्' इत्यादि देहात्माभिमानवत एव ज्ञातृत्वप्रतिभासनात् ज्ञातृत्वमपि मिथ्या—इति,

तदयुक्तम्; आत्मतया अभिमतायाः अनुभूतेरपि मिथ्यात्वं स्यात्; तद्वत एव प्रतीतेः ।

सकलेतरोपमर्दितत्त्वज्ञानाबाधितत्वेन अनुभूतेः न मिथ्यात्वम्—इति चेत्,

हन्त ! एवं सति तदबाधादेव ज्ञातृत्वमपि न मिथ्या ॥

[ ज्ञातृत्वस्य विक्रियात्मकत्वानुवादः ]

यदप्युक्तम्—अविक्रियस्य आत्मनः ज्ञानक्रियाकर्तृत्वरूपं ज्ञातृत्वं न सम्भवति ।

---

[अभिमानवत इति । देहगतस्थौल्यस्य अहमर्थे भ्रान्तेरित्यर्थः । प्रतिभासनादिति । ज्ञातृत्वमपि देहत्वादिवत् प्रातिभासिकमित्यर्थः ।]

[तद्वतः—देहात्माभिमानवतः । प्रतीतेः—प्रतिभासात् । मिथ्यात्वप्रयोजकोपाधिः अनुभूतावपि समा ; 'स्थूलोऽहम्' इति भ्रमविषयीकृते अहमर्थे एव 'अनुभवाम्यहम्' इति भानात् इति ।]

[तदबाधादेव—तत्त्वज्ञानेन अबाधादेव ।] ज्ञातृत्वमपीति । तच्च मुक्तावपि ज्ञातृत्वपरात् 'जानात्येवायं पुरुषः' इत्यादिश्रुतिवाक्यात् ॥

न सम्भवतीति । ज्ञानस्य धात्वर्थतया क्रियात्वम् । तत्कर्तृत्वं च विकाररूपम्, जडं च । आत्मा तु अविक्रियः अजडश्चेति भावः ।

---

[1] कथमिव—ङ.

अतः ज्ञातृत्वं विक्रियात्मकं जडं विकारास्पदाव्यक्तपरिणामाहङ्कारग्रन्थिस्थम् इति, न ज्ञातृत्वम् आत्मनः; अपि तु अन्तःकरण[1]रूपस्य अहङ्कारस्य[1]। कर्तृत्वादिर्हि रूपादिवत् दृश्यधर्मः। कर्तृत्वे अहम्प्रत्ययगोचरत्वे च आत्मनः अभ्युपगम्यमाने देहस्येव अनात्मत्व-पराक्त्व-जडत्वादिप्रसङ्गश्च—इति,

[ अनूदितार्थदूषणम् ]

नैतदुपपद्यते; देहस्येव अचेतनत्व-प्रकृतिपरिणामत्व-दृश्यत्व-पराक्त्व-परार्थत्वादि-योगात् अन्तःकरण[2]रूपाहङ्कारस्य[2], चेतनासाधारणस्वभावत्वाच्च ज्ञातृत्वस्य।

एतदुक्तं भवति—यथा देहादिः दृश्यत्व-पराक्त्वा[3]दिहेतुभिः[3] तत्प्रत्यनीकद्रष्टृत्व-

---

अहङ्कारग्रन्थिस्थमिति। विकारिजडद्रव्यस्थमित्यर्थः। सर्वाध्यासमूलत्वात् अहङ्कारस्य ग्रन्थित्वम्। दृश्यधर्म इति। दृश्यत्वात् इति शेषः (श्रु. प्र)। कर्तृत्वादिरिति आदिपदेन विकारित्वभोक्तृत्वयोः, जडत्वादीति आदिपदेन परिच्छिन्नत्वादेश्च सङ्ग्रहः (त. टी)॥

अचेतनत्वम्—देहं प्रति नियन्तृतया अन्तःप्रविष्टत्वरूपात्मत्वाभावः। प्रकृति-परिणामत्वम् — प्रकृतिकार्यत्वम्। दृश्यत्वम् — नियमेन ज्ञानान्तराधीनसिद्धित्वम्। पराक्त्वम्—परस्मै भासमानत्वम्। परार्थत्वम्—परप्रयोजनैकफलत्वम्—जीवोपकरणत्वम् (श्रु. प्र)। आदिपदेन परिणामित्वविनाशित्वयोः ग्रहणम् (त. टी)। चेतनासाधारणत्वकथ-नात् व्यतिरेकव्याप्तिश्च कथिता। अनेन आत्मनः ज्ञातृत्वोपपादनमिदम्, अन्तःकरणस्य ज्ञातृ-त्वाभावोपपादनं च। अन्तःकरणं न ज्ञातृ; अचेतनत्वात् इत्यादि। आत्मनः ज्ञातृत्वाभावे देहस्येव अनात्मत्वप्रसङ्गः, परार्थत्वप्रसङ्गः इति (श्रु. प्र)॥

एतदुक्तमिति। अयं भावः—'पृथिव्यापस्तेजो वायुरिति भूतानि। तेभ्यश्चैतन्यं किण्वा-दिभ्यो मदशक्तिवत्' इति बृहस्पत्युक्तं प्रतिवदता त्वयापि यैः स्वभावैः देहादिः द्रष्टृत्वप्रत्यक्त्व-भोक्तृत्वादिरहितो निष्कृष्टः, तैरेव स्वभावैः अहङ्कारद्रव्यमपि द्रष्टृत्वादिरहितं स्थाप्यते इति (त. टी)।

---

[1] रूपाहङ्कारस्य—आ, इ.   [2] रूपस्य अहङ्कारस्य—आ, ङ.

[3] दिभिः हेतुभिः—इ, झ.

प्रत्यक्त्वादेः विविच्यते, एवम् अन्तःकरणरूपाहङ्कारोऽपि तद्द्रष्टव्यत्वादेव तैरेव हेतुभिः तस्मात् विविच्यते—इति ।

अतः विरोधादेव न ज्ञातृत्वम् अहङ्कारस्य, द्रष्टृत्ववत् । यथा द्रष्टृत्वम् तत्कर्मणः अहङ्कारस्य न [1]अभ्युपगम्यते, तथा ज्ञातृत्वमपि न तत्कर्मणः अभ्युपगन्तव्यम्[1] ॥

[ ज्ञातृत्वं न विक्रियात्मकम् ]

न च ज्ञातृत्वं विक्रियात्मकम्; ज्ञातृत्वं हि ज्ञानगुणाश्रयत्वम् । ज्ञानं च अस्य नित्यस्य स्वाभाविकधर्मत्वेन नित्यम् । नित्यत्वं च आत्मनः,

'नात्मा श्रुतेः' (ब्र. सू. 2-3-18)

इत्यादिषु [2]वक्ष्यति[2] ।

'ज्ञोऽत एव' (ब्र. सू. 2-3-19)

इत्यत्र 'ज्ञः' इति व्यपदेशेन [3]ज्ञानाश्रयत्वं[3] च स्वाभाविकमिति वक्ष्यति ।

---

विविच्यते—सम्बन्धरहितः अवगम्यते (श्रु. प्र.) ।

[विरोधादेव—ज्ञातृत्वाचेतनत्वयोः एकाधिकरणवृत्तित्वाभावरूपादेव ।] द्रष्टृत्ववत्—अन्तःकरणस्य दृश्यत्वेन देहस्येव द्रष्टृत्वं यथा नोपपद्यते, तथा दृश्यत्वेनैव देहस्येव ज्ञातृत्वमपि नोपपद्यते इति भावः (श्रु. प्र) ॥

ज्ञानगुणेति । अत्र गुणशब्दः अपृथक्सिद्धविशेषणत्वाभिप्रायेण । नित्यमिति । धर्मिनाशात् विरोधिगुणाद्वा गुणस्य नाशं परे वदन्ति । अत्र तु नोभयमित्यभिप्रायेण नित्यस्य स्वाभाविकधर्मत्वेनेति उक्तम् (त. टी) ।

स्वाभाविकमिति । 'यावदात्मभावित्वाच्च न दोषः' (ब्र. सू. 2-3-30) इति सूत्रम् । अतः स्वाभाविकत्वसिद्धिरिति (श्रु. प्र) ।

---

[1] अभ्युपगम्यते–आ, इ.   [2] च वक्ष्यते–ई, ट.

[3] ज्ञानगुणाश्रयत्वम्–ज्ञ.

अस्य ज्ञानस्वरूपस्यैव मणिप्रभृतीनां प्रभाश्रयत्वमिव ज्ञानाश्रयत्वमपि अविरुद्धम् इत्युक्तम् ॥

[ स्वभावतो ज्ञानवानपि न सर्वज्ञो जीवः ]

स्वयम् अपरिच्छिन्नमेव ज्ञानं सङ्कोचविकासार्हम् इत्युपपादयिष्यामः। अतः क्षेत्रज्ञावस्थायां कर्मणा सङ्कुचितस्वरूपं तत्तत्कर्मानुगुण[1]तरतमभावेन[1] वर्तते। तच्च इन्द्रियद्वारेण व्यवस्थितम्। तमिमम् इन्द्रियद्वारा ज्ञानप्रसरमपेक्ष्य उदयास्तमयव्यपदेशः प्रवर्तते ॥

[ आत्मनः ज्ञानसङ्कोचविकासात्मकविकारित्वसम्मतिः ]

ज्ञानप्रसरे तु कर्तृत्वम् अस्त्येव। तच्च न स्वाभाविकम्, अपि तु कर्मकृतमिति, अविक्रियस्वरूप एव आत्मा। एवं [2]रूपविक्रियात्मकं[2] ज्ञातृत्वं ज्ञानस्वरूपस्यात्मन एव इति न कदाचिदपि जडस्य अहङ्कारस्य ज्ञातृत्वसम्भवः ॥

---

अस्येति। आत्मस्वरूपस्य ज्ञानत्वं वदद्भिः तस्य ज्ञानाश्रयत्वम् अर्थात् निषिद्धं स्यात् इत्यत्र उत्तरमिदम् (त. टी) ॥

स्वयम्—स्वतः। ज्ञानं स्वाभाविकनित्यधर्मश्चेत् सर्वदा सर्वज्ञत्वप्रसङ्गः इत्यत्रोत्तरमिदम्। उपपादयिष्यामः। 'संपद्याविर्भावः' (ब्र. सू. 4-4-1) इत्यत्रेति शेषः (श्रु. प्र)। अतः—सङ्कोच-विकासार्हत्वात्। कर्मणेति सङ्कोचकोपाधिः। क्षेत्रज्ञावस्थायामिति। तदानीमेव सङ्कोचः इत्यर्थः। इन्द्रियेति। इन्द्रियद्वारकत्वं सङ्कोचविकासार्थम्। उदयेत्यादि। ज्ञानप्रसरण-सङ्कोचौ उदयास्तमयपदव्यपदेश्यौ इति (श्रु. प्र) ॥

अस्त्येवेति। तादृशविक्रियात्मकत्वं प्रामाणिकत्वात् इष्टम्। अचेतनवत् परिणामे हि अनभ्युपगमः इति एवकाराभिप्रायः। न स्वाभाविकमिति। अविकारश्रुतयः स्वाभाविकविकारनिषेधपराः इति भावः। एवंरूपेति। स्वधर्मभूतज्ञानप्रसरणकर्तृत्वलक्षणविकारित्वम् अनेन विवक्षितम्। ज्ञानस्वरूपस्य—ज्ञानमेव स्वाभाविकः धर्मः यस्य, तस्य (श्रु. प्र) ॥

---

[1] तारतम्येन—ड.　　　[2] रूपादिक्रियात्मकं—ज्ञ.

[ चिच्छायापत्त्या ज्ञातृत्वनिर्वाहनिरासः ]

जड[1]स्वरूपस्यापि[1] अहङ्कारस्य चित्सन्निधानेन तच्छायापत्त्या तत्सम्भवः— इति चेत्,

का इयं [2]चिच्छायापत्तिः[2] ?

किम् अहङ्कारच्छायापत्तिः संविदः ? उत संविच्छायापत्तिः अहङ्कारस्य ?

न तावत् संविदः; [3]संविदः[3] ज्ञातृत्वानभ्युपगमात् ।

नाऽपि अहङ्कारस्य; उक्तरीत्या [4]तस्य जडस्य[4] ज्ञातृत्वायोगात्, द्वयोरपि अचाक्षुषत्वाच्च । न हि अचाक्षुषाणां छाया दृष्टा ॥

[ चित्सम्पर्केण ज्ञातृत्वनिर्वाहनिरासः ]

अथ—अग्निसम्पर्कात् अयःपिण्डौष्ण्यवत्, चित्सम्पर्कात् ज्ञातृत्वोपलब्धिः— [5]इति चेत्[5],

---

जडेत्यादि । ज्ञातृत्वम् चिच्छायापत्तिकृतम्, चित्सम्पर्ककृतम्, चिदभिव्यञ्जकत्वकृतमिति त्रयः पक्षाः । ते क्रमेणाशङ्क्य दूष्यन्ते।

का इयम् ? दुर्निरूपा इत्यर्थः ।

किमिति । चित्-छायाशब्दयोः समासान्तर्गता विभक्तिः षष्ठी वा सप्तमी वा ? इति भावः । अहङ्कार . . . .विदः—अहङ्कारे संविद्गतज्ञातृत्वच्छायापत्तिः । संवि . . . . अहङ्कारस्य—संविदि अहङ्कारगतज्ञातृत्वच्छायापत्तिः (श्रु. प्र) ।

उक्तरीत्या—प्रकृतिपरिणामत्वादिना (त. टी) । द्वयोरपीति । अन्यतराचाक्षुषत्वेऽपि न छाया, किं पुनः द्वयोरपि तथात्वे इति (श्रु. दी) ॥

अथेति । चित्सम्पर्कपक्षदूषणमिदम् । [ उपलब्धिरिति । अन्तःकरणे इति शेषः । ]

---

[1] स्वभावस्यापि–आ, इ, झ. स्वरूपस्य–आ.

[2] तच्छायापत्तिः–आ.

[3] संविदि–आ, इ, ख.

[4] तस्य–आ.

[5] इति–इ, ख, घ, ङ.

[1]नैतत्; संविदि[1] [2]वस्तुतः[2] ज्ञातृत्वानभ्युपगमादेव न तत्सम्पर्कात् अहङ्कारे ज्ञातृत्वम्, [3]तदुपलब्धिर्वा। अहङ्कारस्य तु अचेतनस्य ज्ञातृत्वासम्भवादेव सुतरां न तत्सम्पर्कात् संविदि ज्ञातृत्वम्, तदुपलब्धिर्वा[3]॥

[अभिव्यक्तिपक्षस्य दूषणम्]

यदप्युक्तम्—उभयत्र न वस्तुतः ज्ञातृत्वमस्ति। अहङ्कारस्तु अनुभूतेः अभिव्यञ्जकः स्वात्मस्थामेव अनुभूतिम् अभिव्यनक्ति; आदर्शादिवत्—इति,

तदयुक्तम्; आत्मनः स्वयंज्योतिषः जड[4]स्वरूपा[4]हङ्काराभिव्यङ्ग्यत्वायोगात्। तदुक्तम्—

शान्ताङ्गार इवादित्यमहङ्कारो जडात्मकः।
स्वयंज्योतिषमात्मानं व्यनक्तीति न युक्तिमत्॥' (आ. सि. श्लो. 11)

---

नैतदिति। इयं साधारणी प्रतिज्ञा। तत्सम्पर्कात्—संवित्सम्पर्कात्। सुतरामिति। ज्ञानस्य अजडत्वात् ज्ञानाश्रयत्वं न सम्भवति। अहङ्कारस्य जडत्वेन वस्तुतो ज्ञानाश्रयत्वस्य स्वपरपक्षयोरुभयोरपि असम्भवात् न अहङ्कारसम्पर्कात् संविदि ज्ञातृत्वमिति भावः (श्रु. प्र)॥

उभयत्र---संविदहङ्कारयोः। वस्तुतः इति। छायापत्त्यादिना आपाद्यमानात् अध्यासात्पूर्वमेव सिद्धम् इत्यर्थः। न तु पारमार्थिकमिति। [अयमत्र विशेषः–] अलातचक्रादेरपि प्रतिबिम्बदर्शनात्, उष्णजलसंपर्कात् अनुष्णेऽपि औष्ण्योपलम्भाच्च एकत्र पूर्वसिद्धज्ञातृत्वाध्यासात् अन्यत्र ज्ञातृत्वनिर्वाहः पूर्वस्मिन् पक्षद्वये। अभिव्यक्तिपक्षे तु ज्ञातृत्वस्य पूर्वसिद्धिमनपेक्ष्य ज्ञानाध्यासात् ज्ञातृत्वनिर्वाहः इति वैषम्यमिति (श्रु. प्र)। [स्वात्मस्थाम्—स्वात्मनि विद्यमानतया।]

स्वयंज्योतिषः—नित्यस्वयंप्रकाशे स्वरूपे व्यञ्जकान्तरनिरपेक्षस्य (त. टी)। अयोगादिति। आत्मनः अभिव्यञ्जकापेक्षा च नास्ति; अहङ्कारस्य अभिव्यञ्जकत्वशक्तिरपि नाऽस्ति इत्यर्थः।

---

[1] संविदि–आ.
[2] वास्तव–आ, इ, ख, घ.
[3] तदुपलब्धिर्वा–
[4] रूपा–इ.

इति। स्वयंप्रकाशानुभवाधीनसिद्धयो हि सर्वे पदार्थाः! तत्र तदायत्तप्रकाशः अचित् अहङ्कारः अनुदितानस्तमितस्वरूपप्रकाशम् अशेषार्थसिद्धिहेतुभूतम् अनुभवम् अभिव्यनक्ति इति आत्मविदः परिहसन्ति ॥

[ उक्तव्यङ्क्तृव्यङ्ग्यभावः तयोर्मिथोऽनुपपन्नः ]

किं च अहङ्कारानुभवयोः स्वभावविरोधात्, अनुभूतेः अननुभूतित्वप्रसङ्गाच्च न व्यङ्क्तृव्यङ्ग्यभावः। [1]यथोक्तम्[1]—

'व्यङ्क्तृ-व्यङ्ग्यत्वमन्योन्यं न च स्यात् प्रातिकूल्यतः।
व्यङ्ग्यत्वेऽननुभूतित्वमात्मनि स्याद्यथा [2]घटे[2] ॥' (आ. सि. श्लो. 12)

इति।

न च—रविकरनिकराणां स्वाभिव्यङ्ग्यकरतलाभिव्यङ्ग्यत्ववत् संविदभिव्यङ्ग्या-

---

स्वयंप्रकाशेति अभिव्यञ्जकापेक्षायाः, अनुभवाधीनेति अहङ्कारस्याभिव्यञ्जकत्वस्य च अभावः उक्तः। अनुदितेत्यादि। कदाचित् अप्रकाशं चेत् अभिव्यञ्जकापेक्षा स्यात्, तदेव नेत्यर्थः। अशेषेति। त्वयाऽपि विषयप्रकाशकत्वेन हि स्वयंप्रकाशत्वं स्वीकृतमिति भावः। परिहसन्तीति। त्वदीया एव त्वत्समीपस्था एव हसन्ति इति (श्रु. प्र) ॥

विरोधादिति। अनुभवस्य अशेषार्थसिद्धिहेतुत्वम्, तद्व्यतिरिक्तत्वेन अहङ्कारस्य तदधीनसिद्धित्वं च विरोधः। यथा पितापुत्रयोः अन्योन्यं प्रति पुत्रत्वे पितृत्वे च सत्यपि परस्परं पितृत्व-पुत्रत्वव्यत्ययः नोपपद्यते, एवम् अन्यापेक्षया तयोः यङ्क्तृव्यङ्ग्यभावसंभवेऽपि सः परस्परं नोपपद्यते इत्यर्थः। प्रातिकूल्यतः इति। पूर्वोक्तस्वभावविरोधशब्देन प्रातिकूल्य-शब्दो व्याख्यातः (श्रु. प्र)।

करतलेति। न हि ब्रह्म प्रसरणस्वभावं द्रव्यम्। अतः तद्बाहुल्यहेतुत्वम् अहङ्कारस्य अनुपपन्नम् इत्यर्थः (श्रु. प्र)। न च अहङ्कारः संविस्स्रोतःप्रतिघाती, न च सा बहुलीकरणार्हा; यतः इह करादिदृष्टान्तः स्यात् इति भावः (त. टी) ॥

---

[1] तथोक्तम्–झ.    [2] घटः–पा.

हङ्काराभिव्यङ्ग्यत्वं [1]संविदः—साधीयः[1]; तत्राऽपि रविकरनिकराणां करतलाभिव्यङ्ग्यत्वाभावात्। करतलप्रतिहतगतयो हि रश्मयः बहुलाः स्वयमेव स्फुटतरम् उपलभ्यन्ते इति, तद्बाहुल्यमात्रहेतुत्वात् करतलस्य न अभिव्यञ्जकत्वम् ॥

[ अभिव्यक्तिविकल्पानां दूषणम् ]

किंच अस्य [2]संवित्स्वरूपस्य[2] आत्मनः [3]अहङ्कार[3]निर्वर्त्या अभिव्यक्तिः किंरूपा?

न तावत् उत्पत्तिः; स्वतस्सिद्धतया अनन्योत्पाद्यत्वाभ्युपगमात्।

नाऽपि तत्प्रकाशनम्; तस्याः अनुभवान्तराननुभाव्यत्वात्।

तत एव च न तदनुभवसाधनानुग्रहः—स हि द्विधा;

ज्ञेयस्य इन्द्रियसम्बन्धहेतुत्वेन वा; यथा जाति-निजमुखादिग्रहणे व्यक्ति-दर्पणादीनां नयनादीन्द्रियसम्बन्धहेतुत्वेन।

---

किंरूपा—न किंचि पा।

न तावदिति। उत्पत्तिरेव अभिव्यक्तिरिति सांख्यैरुच्यते। परस्य च अनिर्वचनीयोत्पत्तिः बुद्धित एव। स्वमते च प्रत्यक्षधीहेतुभूतविषयोत्पादकम् उत्पादनद्वारा व्यञ्जकतयैव उपचर्येत। स्वतस्सिद्धतया—अनादितया। अनन्येति। सौगतादिवत् उत्पाद्यत्वस्य अनङ्गीकारात् (त. टी)।

तत्प्रकाशनम्—आत्मगोचरप्रकाशजननम्। अननुभाव्यत्वादिति। स्थापितं हि एतत् त्वयैव इति भावः।

तत एव—तत्प्रकाशनानुपपत्तेरेव। द्विधेति। अत्र पूर्वः दृष्टोपकाररूपकरणानुग्रहम् उपलक्षयति। उत्तरस्तु अदृष्टमुखेन कर्तृसंस्कारद्वारकः (त. टी)।

जातीत्यादि। संयुक्तसमवायेन जातिग्रहणे व्यक्तिसंयोगः अपेक्षितः इति एतावता व्यक्तिनिदर्शनम्। निजमुखग्रहणे दर्पणादीनां तु नायनरश्मिप्रतिस्रोतःप्रवर्तनद्वारा। वस्तुत एतेषां व्यञ्जकत्वमेव नास्तीति वक्ष्यति (त. टी)।

---

[1] साधीयः-ङ,          [2] संविद्रूपस्य-आ.

[3] अहङ्कारादि-आ.

बोद्धृगतकल्मषापनयनेन वा ; यथा परतत्त्वाव[1]बोधनसाधनस्य[1] शास्त्रस्य [2]शमदमादिना[2] । यथोक्तम्—

'करणानामभूमित्वात् न तत्सम्बन्धहेतुता।' (आ. सि. श्लो. 13)

इति ॥

[ अनुभूतेः अनुभाव्यत्वमभ्युपगम्य अनुग्रहपक्षदूषणम् ]

किं च अनुभूतेः अनुभाव्यत्वाभ्युपगमेऽपि, अहमर्थेन न तदनुभवसाधनानुग्रहः सुवचः ; स हि अनुभाव्यानुभवोत्पत्तिप्रति[3]बन्ध[3]निरसनेन भवेत् ; यथा रूपादिग्रहणोत्पत्तिनिरोधिसन्तमसनिरसनेन चक्षुषः दीपादिना। न च इह तथाविधं निरसनीयं संभाव्यते; न तावत् संविदात्मगतं तज्ज्ञानोत्पत्तिनिरोधि किंचिदपि अहङ्कारापनेयम् अस्ति ।

अस्ति हि अज्ञानम्—इति चेत्,

---

कल्मषेति। अयं शब्दः कषायशब्दोक्त कृत्स्नमिहाभिप्रैति। शास्त्रस्येति। शब्देन प्रत्यक्षे जनयितव्ये शमादिः अनुग्राहकः इति (त. टी)। शमादेः शास्त्रानुग्राहकत्वोक्तिः परमतेन। तद्धि उपासनानुग्राहकम्। एवं द्विधाभूतोऽपि अनुग्रहः अहङ्कारस्य न सुवचः इति अनुषङ्गेण योजना अभूमित्वात्—अविषयत्वात्। न तत्सम्बन्धहेतुतेति। इन्द्रियसम्बन्धहेतुत्वलक्षणः अनुग्रहः अनुपपन्नः इति अनेन दर्शितम्। तदिदमुत्तरार्धम्—'अहमर्थस्य बोद्धृत्वान्न स तेनैव शोध्यते' इति। एकस्यैव स्वप्रतियोगितया शोध्यत्वं शोधकत्वं च अनुपपन्नम् इत्यर्थः। [अनेन द्वितीयप्रकारानुग्रहाभावः उक्तः।] (श्रु. प्र) ॥

किं चेति। पूर्वम् अनुभूतिस्वभावात्, तदनुग्रहप्रकारस्वभावाच्च अहङ्कारस्य व्यञ्जकत्वं निरस्तम्। इह अनुभूतेः अनुभाव्यत्वान्वारोहेऽपि अहङ्कारस्वभावात् तस्य करणानुग्राहकत्वं दुर्वचमित्युच्यते। भवेदिति । परबुद्ध्यनुसारेण संभावितस्य अनूद्य दूषणमिदम्। आत्मगतमिति गतशब्दः मणौ मालिन्यवत् आधेयतया छादकतया प्राप्तं वक्ति । किञ्चिदपीति । रजस्तमःकलुषादिकमित्यर्थः (त. टी) ।

---

[1] बोधसाधनस्य–आ, इ, ख, झ.

[2] शमादिना–आ.

[3] बन्धक–ई, क.

न; अज्ञानस्य अहङ्कारापनोद्यत्वानभ्युपगमात्। ज्ञानमेव हि अज्ञानस्य निवर्तकम् ॥

[ अज्ञानस्य संविदाश्रितत्वाभावः ]

न च संविदाश्रयत्वम् अज्ञानस्य सम्भवति; ज्ञानसमानाश्रयत्वात्, [1]तत्समान[1]-विषयत्वाच्च। ज्ञातृभाव-विषयभावविरहिते ज्ञानमात्रे साक्षिणि न अज्ञानं भवितुमर्हति। यथा ज्ञानाश्रयत्वप्रसक्तिशून्यत्वेन घटादेः न अज्ञानाश्रयत्वम्; तथा ज्ञानमात्रेऽपि ज्ञानाश्रयत्वाभावेन न अज्ञानाश्रयत्वं स्यात् ॥

[ संविदाश्रितत्वमभ्युपगम्याऽपि दूषणम् ]

संविदः अज्ञानाश्रयत्वाभ्युपगमेऽपि आत्मतया [2]अभ्युपगतायाः[2] तस्याः ज्ञान-

---

अज्ञानस्येति। अज्ञानशब्दः भावाभावसाधारणः। दूषणमपि साधारणम्। द्विविधस्यापि अज्ञानस्य अहङ्कारापनोद्यत्वाभावात् (श्रु. प्र)। ज्ञानमेवेति। अज्ञानस्य अहङ्कारेण निवृत्तौ किं पश्चात् निष्फलेन ज्ञानेन तदर्थप्रवृत्त्या चेति। भावरूपे च अज्ञाने सममिदं दूषणम् (त. टी) ॥

संविदाश्रयत्वम्—संवित्सम्बन्धित्वम्। सम्बन्धश्च कर्मत्वेन आश्रयत्वेन च इति उभयविधसम्बन्धपरः आश्रयशब्दः। अज्ञानसम्बन्धः उभयथाऽपि संविदः नोपपन्न इति (श्रु. प्र)। ज्ञानाश्रयत्वप्रसक्तीति। ज्ञातुरपि अज्ञानाश्रयत्वं ज्ञानाश्रयत्वं च कालभेदाद-विरुद्धमिति भावः। ज्ञानात्यन्ताभावाश्रयत्वं हि घटादेः। ज्ञानम् न अज्ञानाश्रयः; ज्ञातृत्व-प्रसङ्गात्। ज्ञानम् न च अज्ञानविषयः; ज्ञेयत्वप्रसङ्गात् इति। अज्ञानाश्रयत्वमिति। ज्ञानप्रागभावाश्रयत्वरूपम् अनिर्वचनीयाज्ञानाश्रयत्वरूपं वा तत् घटादौ नास्तीति। [तथेति। ज्ञातृभावरहितस्य ज्ञानस्य घटादिसाम्यम्; घटे हि ज्ञानमज्ञानं चेति उभे अपि न स्थातुमर्हतः।] ॥

अभ्युपगमेऽपीति। भ्रान्त्या [इति शेषः] (त. टी)। आत्मतयेति। अवच्छिन्न-ज्ञानस्य अनुभाव्यत्वे अङ्गीकृतेऽपि, अनवच्छिन्नस्य आत्मभूतस्य ज्ञानस्य अनुभाव्यत्वानभ्युप-

---

[1] समान—इ.  [2] अभ्युपेतायाः—इ झ.

विषयत्वाभावेन, ज्ञानेन न तद्गताज्ञाननिवृत्तिः। ज्ञानं हि स्वविषय एव अज्ञानं निवर्तयति ; यथा रज्ज्वादौ। अतः न केनाऽपि कदाचित् संविदाश्रयम् अज्ञानम् [1]उच्छिद्येत[1] ॥

[ अज्ञानं न अनिर्वचनीयम्, नाऽपि ज्ञानप्रागभावः ]

अस्य च सदसदनिर्वचनीयस्य अज्ञानस्य स्वरूपमेव दुर्निरूपम्—इति उपरिष्टात् वक्ष्यते।

ज्ञानप्रागभावरूपस्य च अज्ञानस्य ज्ञानोत्पत्तिविरोधित्वाभावेन, न तन्निरसनेन [2]तत्साधना[2]नुग्रहः। अतः न केनाऽपि [3]प्रकारेण अहङ्कारेण[3] अनुभूतेः अभिव्यक्तिः ॥

[ स्वात्मस्थतया अभिव्यक्तेः दूषणम् ]

न च [4]स्वाश्रयतया[4] अभिव्यङ्ग्याभिव्यञ्जनम् अभिव्यञ्जकानां स्वभावः ;

---

गमात् इत्याशयः (श्रु. प्र)। न....निवृत्तिरितिः। अनिर्मोक्षप्रसङ्गः इत्याशयः। ज्ञानविषयत्वे तु जडत्वादिप्रसङ्गः त्वयैवोक्त इति (त. टी)। स्वविषये इति। यदि अविषयेऽपि अज्ञाननिवृत्तिः, तर्हि शुक्तिज्ञानेन सर्पभ्रमनिवृत्तिः स्यात् इति ॥

विरोधित्वम्—प्रतिबन्धकम्, न सहानवस्थितिः (श्रु. दी)। अतः—व्यङ्क्तृ-व्यङ्ग्य-व्यक्त्यादिस्वभावसमीक्षया दर्शितानां दोषाणां दुस्तरत्वात् (त. टी)। केनाऽपि प्रकारेण—उत्पादकत्वेन वा प्रकाशकत्वेन वा तदनुभवसाधनानुग्राहकत्वेन वा (श्रु. प्र) ॥

न च इत्यस्य स्वभावः इत्यनेन अन्वयः। पूर्वमुक्तम् एतत् 'प्रामाण्यं स्वतः' इति वदद्भ्यः न रोचते इति भावः।

---

[1] उच्छिद्यते-ख, छ. [2] तज्ज्ञानसाधना--ङ.
[3] प्रकारेण-आ. [4] स्वाश्रयतया--आ.

प्रदीपादिषु अदर्शनात्, यथावस्थितपदार्थप्रतीत्यनुगुणस्वाभाव्याच्च ज्ञान-तत्साधनयोः अनुग्राहकस्य च। तच्च स्वतःप्रामाण्यन्यायसिद्धम्।

न च दर्पणादिः मुखादेः अभिव्यञ्जकः; अपि तु चाक्षुषतेजःप्रतिफलनरूप-दोषहेतुः। तद्दोषकृतश्च तत्र अन्यथाऽवभासः। अभिव्यञ्जकस्तु आलोकादिरेव।

---

प्रदीपादीत्यत्र आदिशब्दः इन्द्रिय-लिङ्ग-आगमसंस्काराणां, तदनुग्राहकाणां च संग्रहार्थः। [अभिव्यञ्जकतया अभिमतेषु स्वात्मस्थतया अभिव्यञ्जनस्वभावात्मकस्य साध्यस्य अदर्शनात् इत्यर्थः। अनैकान्त्यम् इति शेषः] प्रतीतिः—व्यवहारयोग्यतापादनम्। स्वाभाव्यम्—स्वभावः (त. टी)।

[तच्च—उक्तं स्वाभाव्यं च।] स्वतःप्रामाण्यन्याय इति। प्रामाण्यं नाम—ज्ञानगतं सम्यक्त्व-लक्षणं यथावस्थितव्यवहारानुगुणज्ञानत्वम्। तद्विपरीतम्—अप्रामाण्यम्। तदेतत् उभयम् उत्पत्तौ ज्ञप्तौ चेति प्रत्येकं द्विविधम्। तत्र प्रामाण्ये स्वतस्त्वं नाम ज्ञानोत्पादकसामग्रीजन्यत्वम् उत्पत्तौ। ज्ञानग्राहकसामग्रीग्राह्यत्वं च ज्ञप्तौ इति। अप्रामाण्यम् उभयत्राऽपि परतः। तत्त्वं च दोषघटितसामग्रीजन्यत्वम्, बाधज्ञानग्राह्यत्वं च। सोऽयं स्वतःप्रामाण्यन्यायः। इदमत्राऽवधेयम्—

"प्रमाणत्वाप्रमाणत्वे स्वतः सांख्याः समाश्रिताः।
नैयायिकास्ते परतः, सौगताश्चरमं स्वतः॥
वैदिकास्तु स्वतः पूर्वं चरमं परतो विदुः।
स्वाभाविकं स्याद्बाहुल्यमन्यतौपाधिकी मता॥" इति।

नैयायिकमते गुण-दोषौ परशब्दाभिधेयौ। गुणः—सत्सन्निकर्षादिः। दोषः—विषय-गतः दूरत्वादिः। करणगतः कामलादिः। वैदिकमते दोषः परशब्दार्थः। दोषाभाव एव गुणः। तस्य प्रायिकत्वम् इति। (दर्शनोदयः)।

प्रतिफलनम्—प्रतिहतिः (भा. प्र)। अपि त्विति। दृष्टावभासकरणभूतदृष्टि-प्रसरहेतुतामात्रेण व्यञ्जकत्वोपचारः इति भावः (त. टी)। अन्यथाऽवभासः—सव्यापसव्य-विपर्यासादिः। आलोकादिरेव—आलोकादिसहितं प्रतिफलितं चाक्षुषं तेज एव। शुक्ति-रज्ज्वादिवत् अधिष्ठानमात्रेण व्यञ्जकत्वं न शक्यमिति अवधारणाभिप्रायः।

न च इह तथा अहङ्कारेण संविदि 'स्वप्रकाशायां'[1] तादृशदोषापादनं संभवति । व्यक्तेस्तु जातिः आकारः इति, तदाश्रयतया प्रतीतिः ; न तु व्यक्तिव्यङ्ग्यत्वात् ।

अतः अन्तःकरणभूताहङ्कारस्थतया संविदुपलब्धेः वस्तुतः दोषतो वा न किञ्चिदिह कारणम् इति, न अहङ्कारस्य ज्ञातृत्वम् ; तथा उपलब्धिर्वा । तस्मात् स्वत एव ज्ञातृतया सिद्ध्यन् अहमर्थ एव प्रत्यगात्मा ; न ज्ञप्तिमात्रम् । अहम्भाव-विगमे तु ज्ञप्तेरपि न 'प्रत्यक्त्वसिद्धिः'[2] इति उक्तम् ॥

[ सुषुप्तौ अहमर्थस्य अविशदस्फुरणम् ]

तमोगुणाभिभवात् 'परागर्था'[3]नुभवाभावाच्च अहमर्थस्य विविक्तस्फुट'प्रतिभासा'[4]-

---

न चेति । अहङ्कारस्य मूर्तस्वच्छस्थूलद्रव्यत्वाभावात्, संविदः ज्ञेयत्वाभावात् अचाक्षुषत्वाच्च अहङ्कारेण संविदि अविषयभूतायां तद्ग्राहकवस्तुप्रतिफलनरूपदोषः न सम्भवति इति भावः । व्यक्तेरिति । व्यक्तौ जातिप्रतीतिः नियतधर्मधर्मिभावात्, न तु व्यङ्ग्यत्वादि-त्यर्थः (श्रु. प्र) । आकारः—तदाश्रितस्वभावः । न त्विति । यथा दीपादयः स्वधर्मा-नपि प्रकाशयन्ति, तथा व्यक्तिरपि जातिं प्रकाशयेत्! इत्यस्योत्तरमिदम् । व्यक्तिजात्योः एकसामग्रीवेद्यत्वमेव, इन्द्रियसम्बन्धस्तु जातौ व्यक्तिद्वारेति [विशेषः] (त. टी) ।

वस्तुतो दोषतो वेति । वस्तुतः कारणं धर्मधर्मिभावः । दोषतः तात्स्थ्येन उपलब्धिकारणं मूर्तस्वच्छस्थूलद्रव्यत्वम् । उभयमपि अहङ्कारे नास्ति इत्यर्थः (श्रु. प्र) । अहम्भावविगम इति । 'अहम्' इति व्यवहारानुगुणभासनविरहे स्वस्मै भासमानत्वं न स्यात् । अतः प्रत्यक्त्वमपि अहमर्थस्यैव आत्मत्वसाधकम् इत्यर्थः (श्रु. प्र) ॥

तमोगुणाभिभवात्—स्वकर्मोपात्तत्रिगुणद्रव्यस्थेन तमोगुणेन सविकल्पादिरूपमनोवृत्ति-निरोधात् । परागर्था . . . . भावात्—परस्मा एव भासमानानां आत्मधर्माणां देहेन्द्रिय-विषयाणां च आन्तरबाह्यवर्गाणामननुभवात् (त. टी) । विविक्तप्रतिभासः—व्यावृत्तप्रति-भासः । स्फुटावप्रतिभासः—अनेकविशेषणविशिष्टावभासः (श्रु. प्र) ।

---

[1] स्वयंप्रकाशायां—ई.

[2] प्रत्यक्सिद्धिः—आ.

[3] परमार्थ—ब.

[4] प्रतिबोधा-आ.

भावेऽपि [1]आप्रबोधात्[1] 'अहम्' इति एकाकारेण आत्मनः स्फुरणात्, सुषुप्तावपि न अहम्भावविगमः। भवद[2]भिमतायाः[2] अनुभूतेरपि तथैव प्रथा इति वक्तव्यम् ॥

[स्वपक्षे प्रमाणानुरोधः, परपक्षे तदननुरोधश्च]

न हि सुप्तोत्थितः कश्चित् 'अहम्भावविमुक्तार्थान्तरप्रत्यनीकाकारा ज्ञप्तिः अहम् अज्ञानसाक्षितया [3]अवतिष्ठे[3]' इत्येवंविधां स्वापसमकालाम् अनुभूतिं परामृशति। एवं हि सुप्तोत्थितस्य परामर्शः; 'सुखम् अहम् अस्वाप्सम्' इति। [4]अनेनैव[4] प्रत्यवमर्शेन तदानीमपि अहमर्थस्यैव आत्मनः सुखित्वम्, ज्ञातृत्वं च ज्ञायते ॥

[उक्ते परामर्शे परोक्तायाः अन्यथासिद्धेः परिहारः]

न च वाच्यम्—'यथा इदानीं सुखं भवति, तथा तदानीम् अस्वाप्सम्' इत्येषा प्रतिपत्तिः—; अझटितिरूपत्वात् प्रतिपत्तेः।

न च अहमर्थस्य आत्मनः अस्थिरत्वेन तदानीम् अहमर्थस्य सुखित्वा[5]नुसन्धानानुपपत्तिः[5]; यतः सुषुप्तिदशायाः प्राक् अनुभूतं वस्तु [6]सुप्तोत्थितः[6] 'मया इदं कृतम्, मया इदम् अनुभूतम्, [7]अहम्[7] [8]एतत् अवोचम्[8]' इति परामृशति ॥

[अहमर्थाननुभवसाधकनिषेधसामान्यविषयपरामर्शमादाय शङ्कासमाधाने]

'एतावन्तं कालं न किञ्चित् अहम् अज्ञासिषम्' इति च परामृशति—इति चेत्,

---

एकाकारेण—सर्वात्मसाधारणेन प्रत्यक्त्वानुकूलत्वाद्याकारेण, न तु सुखित्वादिना देववादिना वा (श्रु. प्र) ॥

अहम्भाव . . . काकारा— ज्ञातृज्ञेयादिसमस्तविशेषरहिता (श्रु. प्र) ॥

---

[1] प्रतिबोधात्–पा.

[2] नुमतायाः–आ.

[3] अवतिष्ठने–आ, इ.

[4] अनेन–पा.

[5] नुपपत्तिः–इ.

[6] सुषुप्त्युत्थितः–ङ

[7] अहमेव–ङ, ङ.

[8] इदमवोचम्–ङ, अवोचम्–ङ.

ततः किम् ?

'न किञ्चित्' इति कृत्स्नप्रतिषेधः—इति चेत्,

न; '[1]न अहम्[1] अवेदिषम्' इति वेदितुः अहमर्थस्यैव अनुवृत्तेः। वेद्य-विषयो हि सः प्रतिषेधः। 'न किञ्चित्' इति निषेधस्य कृत्स्नविषयत्वे भवद-[2]भिमता[2] अनुभूतिरपि प्रतिषिद्धा स्यात् ॥

[ अनुभूतेः न निषेधः, किन्तु तदनुवृत्तेः, इत्याशङ्कापरिहारौ ]

सुषुप्तिसमये [3]तु[3] अनुसन्धीयमानम् अहमर्थम् आत्मानं ज्ञातारम् 'अहम्' इति परामृश्य, 'न किञ्चित् अवेदिषम्' इति वेदने तस्य प्रतिषिध्यमाने, तस्मिन् काले [4]निषिध्य[4]मानायाः वित्तेः सिद्धिम्, अनुवर्तमानस्य ज्ञातुः अहमर्थस्य च असिद्धिम् अनेनैव 'न किञ्चित् अहम् अवेदिषम्' इति परामर्शेन साधयन्, तमिमम् अर्थं देवानामेव साधयतु ॥

---

ततः किमिति अज्ञातोपालम्भः (त. टी)।

न किञ्चिदिति। अहमर्थप्रकाशस्यापि निषेधात् तत्स्वरूपनिषेधोऽपि फलित इति भावः (त. टी)।

वेद्यविषयः—वेद्यप्रतिभासविषयः (श्रु. प्र) ॥

सुषुप्तिसमये तु इति। भवत्पक्षस्य विपरीतः अयं परामर्शः इत्यर्थः। यथा प्रातः चत्वरे गजानुभवं पृष्टेन पश्चात् योग्याननुसरणलिङ्गेन चत्वरे गजाभावं वदता पुरुषेण पूर्वकालीन-चत्वरानुभवेन विना गजाभावः वक्तुं न शक्यते; तथा अज्ञानाश्रयम् अहमर्थं वदता स्वाप-वेलायाम् अहमर्थानुभवः अभ्युपगन्तव्यः। अथाऽपि अहमर्थनिवृत्तिज्ञाननुवृत्तिकथनं चत्वर-निवृत्तिगजावस्थानवचनतुल्यम इति भावः (श्रु. प्र)। देवानाम्—प्रतिवचनमकुर्वताम्। अर्चारूपा हि देवाः इत्यर्थः (श्रु. प्र) ॥

---

[1] अहम्—आ, ख. [2] नुमता—आ.

[3] हि—आ. अपि-झ. [4] प्रतिषिध्य-

[ निषेधविशेषविषयपरामर्शमादाय शङ्कासमाधाने ]

'मामपि अहम् न ज्ञातवान्' इति अहमर्थस्यापि तदानीम् अननुसन्धानं [1]प्रतीयते[1]—इति चेत्,

स्वानुभवस्ववचनयोः विरोधमपि न जानन्ति भवन्तः, 'अहम् [2]मां न[2] ज्ञातवान्' [3]इति हि[3] अनुभव-वचने।

'माम्' इति किं निषिध्यते?—इति चेत्,

साधु पृष्टं भवता। तदुच्यते—[4]अहमर्थस्य ज्ञातुः[4] अनुवृत्तेः न स्वरूपं निषिद्ध्यते, अपि तु प्रबोधसमये अनुसन्धीयमानस्य अहमर्थस्य वर्णाश्रमादि-विशिष्टता॥

[ अहम् माम् इति पदयोः विशिष्टविषयता ]

'अहम् माम् न ज्ञातवान्' इत्युक्ते विषयो विवेचनीयः। जागरितावस्थानु-संहितजात्यादिविशिष्टः अस्मदर्थः 'माम्' इत्यंशस्य विषयः। [5]स्वाप्यया[5]वस्था-प्रसिद्धाविशदस्वानुभवैकतानश्च अहमर्थः 'अहम्' इत्यंशस्य विषयः। अत्र 'सुखोऽ-हम् ईदृशोऽहम् इति च मामपि न ज्ञातवानहम्' इत्येव [6]खलु[6] अनुभव-प्रकारः॥

---

विरोधमपीति। निषेधतत्तदर्थानुभवयोः विरोध इत्यर्थः।

तदुच्यते—तस्मात् उत्तरमुच्यते। वर्णाश्रमादिविशिष्टता—तदभिमानः। 'सवि-शेषणे हि विधि-निषेधौ विशेषणमुपसंक्रामतः सति विशेष्यबाधे' इति न्यायात् (त. टी)॥

विवेचनीयः इति। विधि-निषेधयोः एकविषयत्वे व्याघातः स्यादिति तन्निवृत्त्यर्थं विषयविभागः कार्यः इत्यर्थः (श्रु. प्र)॥

---

[1] प्रतिषिध्यते—आ.
[2] न—आ.
[3] इति—इ.
[4] ज्ञातुः—ङ.
[5] स्वापा—इ, झ.
[6] स तु—इ.

[ उक्तार्थस्य परमतेन उपपादनम् ]

किं च—सुषुप्तौ आत्मा अज्ञानसाक्षित्वेन आस्ते—इति हि भवदीया प्रक्रिया। साक्षित्वं च साक्षात् ज्ञातृत्वमेव; न हि अजानतः साक्षित्वम्। ज्ञातैव हि लोक-वेदयोः 'साक्षी' इति व्यपदिश्यते, न ज्ञानमात्रम्। स्मरति च भगवान् पाणिनिः—

'साक्षाद्द्रष्टरि संज्ञायाम्' (पा. सू. 5-2-91)

इति साक्षात् [1]ज्ञातर्येव[1] साक्षिशब्दम्। स चाऽयं साक्षी 'जानामि' इति प्रतीयमानः अस्मदर्थ एवेति, कुतः तदानीम् अहमर्थः न प्रतीयेत ?

आत्मने स्वयं अवभासमानः 'अहम्' इत्येव अवभासते इति, स्वापाद्यवस्थास्वपि आत्मा प्रकाशमानः 'अहम्' इत्येव [2]अवभासते[2]—इति सिद्धम्॥

[ मुक्तौ अहमर्थानुवृत्तेः अनूद्य दूषणम् ]

यत्तु—मोक्षदशायाम् अहमर्थः न अनुवर्तते—इति,

तत् अपेशलम्। तथा सति आत्मनाश एव अपवर्गः प्रकारान्तरेण प्रतिज्ञातः स्यात्। न च अहमर्थः धर्ममात्रम्; येन तद्विगमेऽपि अविद्यानिवृत्ताविव स्वरूपम् अवतिष्ठेत। प्रत्युत स्वरूपमेव अहमर्थः आत्मनः। ज्ञानं तु तस्य धर्मः; 'अहम् [3]जानामि,[3] ज्ञानं मे जातम्' इति च अहमर्थधर्मतया ज्ञानप्रतीतेरेव॥

---

साक्षात् ज्ञातृत्वम्—साक्षात्काररूपज्ञानाश्रयत्वम्। असाक्षात्कर्तरि साक्षिशब्दः प्रयुक्तश्चेत्, औपचारिकः (श्रु. प्र)। न ज्ञानमात्रमिति। न हि सर्वत्र विशिष्टगोचरे विशेषणमात्रे शक्तिः त्वयाऽपि स्वीक्रियते। तथा सति विशिष्टवाचिषु सत्यादिपदेषु जहद-जहल्लक्षणोक्तिरपि विरुध्येतेति भावः (त. टी)॥

अपेशलम्—असाधु (श्रु. प्र)। प्रकारान्तरेणेति। सौगतान् ज्ञानसन्तत्युच्छेदं मोक्षं वदतः स्वरूपनाशस्यापुरुषार्थत्वेन दूषयता त्वया शब्दान्तरेण स्वरूपनाश एव उक्तः स्यादित्यर्थः॥

---

[1] द्रष्टर्येव-आ. [2] प्रतीयते-ड.

[3] जानामि इति- १. इ. ई.

[श्रुत्यर्थापत्त्या उक्तार्थसमर्थनम्]

अपि च यः परमार्थतः भ्रान्त्या वा आध्यात्मिकादिदुःखैः [1]दुःखितया[1] [2]स्वात्मानम्[2] अनुसन्धत्ते 'अहं दुःखी' इति, 'सर्वमेतत् दुःखजातम् अपुनर्भवम् अपोह्य, कथमहम् अनाकुलः स्वस्थो भवेयम्!' इति उत्पन्नमोक्षरागः स एव तत्साधने प्रवर्तते। सः [3]साधना[3]नुष्ठानेन यदि 'अहमेव न भविष्यामि' इति अवगच्छेत्, [4]अपसर्पेदेव[4] असौ मोक्षकथाप्रस्तावात्। ततश्च अधिकारिविरहादेव सर्वं मोक्षशास्त्रम् अप्रमाणं स्यात्!

अहमुपलक्षितं प्रकाशमात्रम् [5]अपवर्गे अवतिष्ठते[5]—इति चेत्,

किमनेन? 'मयि नष्टेऽपि किमपि प्रकाशमात्रम् [6]अपवर्गे अवतिष्ठते[6]' इति मत्वा न हि कश्चित् बुद्धिपूर्वकारी प्रयतते। अतः अहमर्थस्यैव ज्ञातृतया सिद्ध्यतः प्रत्यगात्मत्वम्॥

[उक्तार्थे अनुमानम्]

स च प्रत्यगात्मा मुक्तावपि 'अहम्' इत्येव प्रकाशते; स्वस्मै प्रकाशमानत्वात्, यो यः स्वस्मै प्रकाशते, स सर्वः 'अहम्' इत्येव प्रकाशते। यथा—तथावभासमानत्वेन

---

परमार्थत इत्यादि। यः स्वात्मानं दुःखिनमनुसन्धत्ते, स एव तन्निवृत्तिसाधने प्रवर्तते। स च अहमर्थ एव। दुःखित्वं भ्रान्तिसिद्धम्—इति चेत्यः, स्वात्मानं भ्रमवन्तमनुसन्धत्ते, स एव भ्रमनिवृत्तिसाधने प्रवर्तते; स च अहमर्थः। द्विचन्द्रज्ञानादिभ्रान्तिमतोऽपि स्वभ्रान्तिनिवृत्तिरेव अपेक्षिता; न तु स्वविनाशः। अतः अहमर्थविनाशः अपुरुषार्थः इत्यभिप्रायेण परमार्थतः भ्रान्त्या वा इत्युक्तम्। आकुलत्वम्—आगामिदुःखशङ्कया मनःक्षोभः। स्वस्थः—स्वस्मिन् स्थितः—स्वभावस्थितः—यथावस्थितस्वात्मानुभवपरः। अप्रमाणं स्यात्—शास्त्रस्यापुरुषार्थपर्यवसायित्वे अधिकारिविरहात् प्रमितिजनकत्वलक्षणं प्रामाण्यं न स्यात् (श्रु. प्र)॥

---

[1] दुःखितम्-इ. [2] आत्मानम्-आ, इ, ई, छ.

[3] स्वासाधना-इ. [4] अपसर्पेत्-इ, छ, झ, ड.

[5] अपवर्गेऽपि अवतिष्ठते-पा, अवतिष्ठते-ख, ड.

उभयवादिसंमतः संसारी आत्मा। यः पुनः 'अहम्' इति न चकास्ति, न असौ स्वस्मै प्रकाशते ; यथा—घटादिः। [1]स्वस्मै[1] प्रकाशते च अयं मुक्तात्मा। [2]सः तस्मात्[2] 'अहम्' इत्येव प्रकाशते ॥

[ उक्तानुमाने हेतोः साध्यविशेषविरुद्धत्वाशङ्कापरिहारौ ]

न च 'अहम्' इति प्रकाशमानत्वेन, तस्य अज्ञत्व-संसारित्वादिप्रसङ्गः; मोक्षविरोधात्, अज्ञत्वाद्यहेतुत्वाच्च अहम्प्रत्ययस्य। अज्ञानं नाम—स्वरूपाज्ञानम्, अन्यथाज्ञानम्, विपरीतज्ञानं वा। 'अहम् इत्येव आत्मनः स्वरूपम्' इति स्वरूपज्ञानरूपः अहम्प्रत्ययः न अज्ञत्वमापादयति। कुतः संसारित्वम्? अपि तु तद्विरोधित्वात् नाशयत्येव ॥

[ निवृत्ताविद्यानामपि अहम्प्रत्ययः ]

ब्रह्मात्मभावापरोक्ष्यनिर्धूतनिरवशेषाविद्यानामपि वामदेवादीनाम् 'अहम्' इत्येव आत्मानुभवदर्शनाच्च। [3]श्रूयते हि[3]—

'तद्धैतत्पश्यन् ऋषिर्वामदेवः प्रतिपेदे, अहं मनुरभवं सूर्यश्च' (बृ. उ. 3-4-10)

---

संसारित्वम्—कर्मकृतदेहादिसन्ततिमत्त्वम् (त. टी)। मोक्षविरोधः—'न पश्यो मृत्युं पश्यति' इत्यादिश्रुतिविरोधः (श्रु. दी)। अज्ञत्वादीति। संसारित्वाहमर्थत्वयोः सहदर्शनमात्रेण संसारित्वादिप्रसङ्गश्चेत्, अनुभवस्यापि तत्सहभावदर्शनात् त्वत्पक्षेऽपि मुक्तौ संसारित्वप्रसङ्गः इत्यर्थः (श्रु. प्र)। स्वरूपाज्ञानम्—कर्मणा तिरोधानात् स्वरूपगोचरज्ञानप्रसराभावः (त. टी)। अन्यथाज्ञानम्—धर्म्यैक्ये सति प्रकारान्तरारोपेण ज्ञानम्। इदं रजःकार्यम् ; यथा—'पीतः शङ्खः' इति ज्ञानम्। विपरीतज्ञानम्—धर्म्यन्तरस्य धर्म्यन्तरत्वेन ज्ञानम्। इदं तमःकार्यम् ; यथा—शुक्तौ 'इदं रजतम्' इति। अहम् इत्येवेति। अहम् इति व्यवहार-बुद्ध्यर्हत्वमेवेत्यर्थः (श्रु. प्र) ॥

पश्यन्—जगत्कारणं ब्रह्म स्वान्तरात्मत्वेन पश्यन् (त. टी)। अनेन निर्धूतनिरवशेषाविद्यत्वं गम्यते (श्रु. प्र)। ब्रह्मापरोक्ष्यं हि अविद्यानाशलिङ्गम् (श्रु. दी) ॥

---

[1] स्वयम्—इ. [2] तस्मात्—पा. [3] श्रुतयश्च—आ.

'अहमेकः[1] प्रथममासं वर्तामि च भविष्यामि च' (अथ. शिर. उ. 2) इत्यादि ॥

[ ब्रह्मणोऽप्यहम्प्रत्ययः श्रुतिस्मृतिषु ]

सकलेतराज्ञानविरोधिनः सच्छब्दप्रत्ययमात्रभाजः परस्य ब्रह्मणो व्यवहारोऽपि एवमेव—

'हन्ताहमिमास्तिस्रो देवताः' (छां. उ. 6-3-2)

'बहु स्यां प्रजायेय' (तै. उ. आन. 6-2)

'स ईक्षत लोकान्नु सृजा इति' (ऐत. उ. 1-1-1)

तथा—

'यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः ।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥' (भ. गी. 15-18)

'अहमात्मा गुडाकेश' (भ. गी. 10-20)

'न त्वेवाहं जातु नासम्' (भ. गी. 2-12)

'अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा ।' (भ. गी. 7-6)

'अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते ।' (भ. गी. 10-8)

---

सकलेतराज्ञानविरोधिन इति । न हि सकलेतरविषहरणनिपुणस्य वैनतेयस्य विषवश्यत्वम् इति भावः । सच्छब्द . . . . भाजः—'सत्' शब्दस्य, 'सत्' इति प्रत्ययस्य च विषयभूतस्य । मात्रचा पाश्चात्त्यनामरूपभाक्त्वव्यावृत्तिः । अनेन अहङ्कारसृष्टेः पूर्वमपि अहम्प्रत्ययं ज्ञापयति (श्रु. प्र) ।

यस्मादिति । क्षराक्षरातीतत्व-चिदचिदन्तरात्मत्व नित्यत्व-महदादिकारणत्व-मोक्षप्रदत्वादयः न अहङ्कारस्य इति भावः (श्रु. दी) ॥

---

[1] अहमेव–आ.

'तेषामहं समुद्धर्ता मृत्युसंसारसागरात् ।' (भ. गी. 12-7)

'अहं बीजप्रदः पिता' (भ. गी. 14-4)

'वेदाहं समतीतानि' (भ. गी. 7-26)

इत्यादिषु ॥

[ उक्तार्थे गीतोक्तिविरोधशङ्कापरिहारौ ]

यदि 'अहम्' इत्येव आत्मनः स्वरूपम्! कथं तर्हि[1] अहङ्कारस्य क्षेत्रान्तर्भावः भगवता उपदिश्यते—

'महाभूतान्यहङ्कारो बुद्धिरव्यक्तमेव च।' (भ. गी. 13-5)

इति ?

उच्यते—स्वरूपोपदेशेषु सर्वेषु 'अहम्' इत्येवोपदेशात्, तथैव आत्मस्वरूपप्रतिपत्तेश्च 'अहम्' इत्येव प्रत्यगात्मनः स्वरूपम्।

अव्यक्तपरिणामभेदस्य अहङ्कारस्य क्षेत्रान्तर्भावः भगवतैव उपदिश्यते। स तु अनात्मनि देहे अहम्भावकरणहेतुत्वेन, अहङ्कारः इत्युच्यते। अस्य तु अहङ्कारशब्दस्य अभूततद्भावे अर्थे च्विप्रत्ययम् उत्पाद्य व्युत्पत्तिः द्रष्टव्या। अयमेव तु अहङ्कारः उत्कृष्टजनावमानहेतुः गर्वापरनामा शास्त्रेषु बहुशः हेयतया प्रतिपाद्यते। तस्मात्

---

अव्यक्तपरिणामभेदस्येति। न तु अहमर्थस्य इत्यर्थः। अहम्भावः—'अहम्' इति बुद्धिः। भावशब्दस्य बुद्धिवाचकत्वम्, अभिप्रायपरतया प्रयोगात् अवगम्यते (श्र. प्र)। अयमिति। 'अनात्मनि देहे अहम्भाव' इति निर्दिष्टः इत्यर्थः (त. टी)। अहङ्कारशब्द इति। अयमत्र विवेकः—अहङ्कारशब्दो द्विविधः; च्विप्रत्ययान्तादुत्पन्नः, तदनुत्पन्नश्च। उत्पन्नश्च द्विविधः; भावसाधनः, करणसाधनश्चेति। च्विप्रत्ययान्तादुत्पन्नो भावसाधनः गर्ववाची। च्विप्रत्ययान्तादुत्पन्नः करणवाची तु अहङ्कारशब्दः अहङ्कारतत्त्ववाची। अच्व्यन्तोत्पन्नभावसाधनशब्दः उपादेयभूताहंप्रत्ययवाचीति द्रष्टव्यम् (भा. प्र)॥

---

[1] तर्हि त्वस्य-आ, तर्हि तस्य-पा.

बाधकाभावेता अहम्बुद्धिः साक्षादात्मगोचरैव। शरीरगोचरा तु अहम्बुद्धिः अविद्यैव। यथोक्तं भगवता पराशरेण —

'[1]श्रूयतां[1] चाप्यविद्यायाः स्वरूपं कुलनन्दन।' (वि. पु. 6-7-10)

'अनात्मन्यात्मबुद्धिर्या . . . . .॥' (वि. पु. 6-7-11)

इति॥

[अहमर्थात्मत्वोपसंहारः]

यदि ज्ञप्तिमात्रमेव आत्मा, तदा अनात्मनि [2]आत्माभिमाने, शरीरे[2] ज्ञप्तिमात्रप्रतिभासः स्यात्, न [3]ज्ञातृत्व[3]प्रतिभासः। तस्मात्, ज्ञाता अहमर्थ एव आत्मा। तदुक्तम्—

'अतः प्रत्यक्षसिद्धत्वादुक्तन्यायागमान्वयात्।
अविद्यायोगतश्चात्मा ज्ञाताऽहमिति भासते॥' (आ. सि, श्लो. 14)

इति। तथा च—

'देहेन्द्रियमनःप्राणधीभ्योऽन्योऽनन्यसाधनः।
नित्यो व्यापी प्रतिक्षेत्रमात्मा भिन्नः स्वतः सुखी॥' (आ. सि. श्लो. 3)

इति। अनन्यसाधनः—स्वप्रकाशः। व्यापी—अतिसूक्ष्मतया सर्वाचेतनान्तः[4]प्रवेशन[4]स्वभावः॥

---

न्यायागमान्वयात्—धर्म-धर्मिभावेन प्रतीतिः, प्रत्यक्षसिद्धिः, स्थिरत्वास्थिरत्वादिवैषम्यम्, श्रुत्यर्थापत्तिश्च न्यायः। आगमः उदाहृतोपनिषद्वाक्यानि (श्रु. प्र)। अविद्यायोगः—अनन्तरोक्तभ्रान्तियोगः। अतिसूक्ष्मतयेति। पुराणादिषु 'व्यापि'शब्दप्रयोगात् स एवात्र श्लोके प्रयुक्तः। यत्र यत्र जीवस्य व्याप्तिवाचिनः शब्दाः, तत्र तत्र अयमेवार्थो द्रष्टव्यः। जीवस्य धर्मभूतज्ञानेन व्याप्तिः आत्मसिद्धावेवोच्यते—'व्याप्तिरपि चैतन्यमात्रेणैव, न स्वरूपेण' इति (श्रु. प्र)॥

---

[1] तच्छ्रूयतां—आ.　[2] आत्माभिमाने—झ.

[3] ज्ञातृ—ख, ट.　[4] प्रवेश—इ, ख, घ, ङ, छ, झ.

[ शास्त्रप्रत्यक्षविरोधे शास्त्रप्राबल्यस्यानूद्यनिरासः ]

यदुक्तम्—दोषमूलत्वेन अन्यथासिद्धिसम्भावनया सकलभेदावलम्बिप्रत्यक्षस्य शास्त्रबाध्यत्वम्—इति,

कोऽयं दोषः ? इति वक्तव्यम्; यन्मूलतया प्रत्यक्षस्य अन्यथासिद्धिः ।

अनादिभेदवासनैव हि दोषः—इति चेत्,

भेदवासनायाः तिमिरादिवत् यथावस्थित[1]वस्तुविपरीत[1]ज्ञानहेतुत्वं किम् [2]अन्यत्र[2] ज्ञातपूर्वम् ?

अनेनैव शास्त्रविरोधेन ज्ञास्यते—इति चेत्,

न; अन्योन्याश्रयणात्; शास्त्रस्य निरस्तनिखिलविशेषवस्तुबोधित्वनिश्चये सति, [3]भेदवासनायाः दोषत्व[3]निश्चयः; भेदवासनायाः दोषत्वनिश्चये सति, शास्त्रस्य निरस्तनिखिलविशेषवस्तुबोधित्वनिश्चयः इति ।

किं च यदि भेदवासनामूलत्वेन प्रत्यक्षस्य विपरीतार्थत्वम्, शास्त्रमपि तन्मूलत्वेन तथैव स्यात् ।

---

कोऽयं . . . . वक्तव्यम्—कोऽयं दोषः ? इति पृष्टे, विशेषतः प्रतिवक्तव्यम् । 'कश्चित् दोषः अस्ति' इति सामान्योक्त्या अन्यथासिद्धिः न हि सुवचा । विशेषतश्च अत्र दोषः दुर्वचः (त. टी) । दोषत्वम्— विपरीतज्ञानहेतुत्वम् ।

तिमिरादिवत् इति । आदिना सादृश्यादि विवक्षितम् । तद्धि ज्वालायाम् ऐक्यभ्रमहेतुः (श्रु. प्र) ।

अन्योन्याश्रयणादिति । भेदवासनामात्रस्य दोषत्वम् निर्विशेषाद्वैतशास्त्रविरोधात् कल्प्यम्, सिद्धे च प्रत्यक्षमात्रस्य तादृशदोषमूलत्वे, यूपादित्यैक्यन्यायातिक्रमेण शास्त्रस्य निर्विशेषपरत्वम् इति, मिथः संशयात् कृत्स्नप्रत्यक्षदौर्बल्यं दुर्वचमिति भावः ।

किं चेति । न हि ज्वालाभेदधीः तदैक्यधीजनकदोषजन्येति भावः (त. टी) ।

---

[1] विपरीत–इ.    [2] अपि अन्येन–आ.

[3] दोषत्व–अ, आ, ई.

अथोच्येत—दोषमूलत्वेऽपि शास्त्रस्य, प्रत्यक्षावगतसकलभेदनिरसनज्ञानहेतुत्वेन परत्वात्, तत् प्रत्यक्षस्य बाधकम्—इति,

तन्न; दोषमूलत्वे ज्ञाते सति, परत्वम् अकिञ्चित्करम्। रज्जुसर्पज्ञाननिमित्त-भये सति, 'भ्रान्तोऽयम्' इति परिज्ञातेन केनचित् 'न अयं सर्पः, मा भैषीः' इत्युक्तेऽपि भयानिवृत्तिदर्शनात्।

शास्त्रस्य च दोषमूलत्वम् श्रवणवेलायामेव ज्ञातम्; श्रवणावगतनिखिलभेदोप-मर्दिब्रह्मात्मैकत्वविज्ञानाभ्यासरूपत्वात् मननादेः।

अपि च—इदम् [1]शास्त्रम्, एतच्च[1] असम्भाव्यमानदोषम्; प्रत्यक्षं तु संभाव्य-मानदोषम्—इति केनावगतं त्वया?

न तावत् स्वतः सिद्धा निर्धूतनिखिलविशेषा अनुभूतिः इममर्थम् अवगमयति; तस्याः सर्वविषयविरक्तत्वात्, शास्त्रपक्षपातविरहाच्च।

नापि ऐन्द्रियकं प्रत्यक्षम्; दोषमूलत्वेन विपरीतार्थत्वात्।

---

परत्वादिति। अपच्छेदादिषु, 'इदं रजतम्, नेदं रजतम्' इत्यादिषु च परम् बाधकं दृष्टम्। अतः निषेध्योपस्थापकमानापेक्षया निषेधकस्य परत्वात् बलीयस्त्वमिति। एवं ब्रह्मप्रतिपादकशास्त्रस्यापि व्युत्पत्त्यादेः प्रत्यक्षादिमूलतया तत्पूर्वकस्य तस्य प्रत्यक्षाद्यपेक्षया परत्वात्, तत्प्रतिपाद्यनिर्विशेषवस्तुसत्यत्वमपि तुल्यन्यायतया सिद्धम् इत्याशयः।

रज्जुसर्पेति। उत्तरज्ञानस्य दोषमूलत्वेन प्रामाण्यानिश्चयात् भयानिवृत्तिः (श्रु. प्र)।

श्रवणेति। शास्त्रमपि काल्पनिकनिखिलभेदान्तर्गतमिति भावः (श्रु. दी)। निखिलेति प्रमातृ-प्रमेय-प्रमाणशास्त्रस्वरूप-पद-वाक्य-तदर्थविकल्पादिसंग्रहार्थः (त. टी)।

त्वया—प्रमाणादिकं तात्विकत्वेन अनभ्युपगच्छता (श्रु. प्र)। केन—न केनापि प्रमाणेन (त. टी)।

सर्वविषयविरक्तत्वात्—निर्विषयत्वात्।

---

[1] शास्त्रम्—आ.

तन्मूलत्वादेव न अन्यान्यपि प्रमाणानि । अतः स्वपक्षसाधनप्रमाणानभ्युपगमात् न स्वाभिमतार्थसिद्धिः ।

ननु व्यावहारिकप्रमाण-प्रमेयव्यवहारः अस्माकमपि अस्त्येव !

कोऽयम् व्यावहारिको नाम ?

आपात[1]प्रतीति[1]सिद्धः युक्तिभिर्निरूपितो न तथाऽवस्थितः—इति चेत्,

किं तेन प्रयोजनम् ? प्रमाणतया प्रतिपन्नेऽपि यौक्तिकबाधादेव प्रमाणकार्याभावात् ।

अथोच्येत—[2]शास्त्र-प्रत्यक्षयोः द्वयोरपि[2] अविद्यामूलत्वेऽपि प्रत्यक्षविषयस्य शास्त्रेण बाधो दृश्यते, शास्त्रविषयस्य [3]सदद्वितीय[3]ब्रह्मणः पश्चात्तनबाधादर्शनेन निर्विशेषानुभूतिमात्रं ब्रह्मैव परमार्थः—इति,

तदयुक्तम्; अबाधितस्यापि दोषमूलस्य अपारमार्थ्यनिश्चयात् ।

एतदुक्तं भवति—'यथा सकलेतर[4]काचादिदोषरहित[5]पुरुषान्तरा[5]गोचरगिरिगुहासु वसतः तैमिरिकजनस्य अज्ञातस्वतिमिरस्य सर्वस्य तिमिरदोषाविशेषेण द्विचन्द्रज्ञानम् अविशिष्टं जायते । न तत्र बाधकप्रत्ययः अस्ति इति, न तत् मिथ्या न भवति इति, तद्विषयभूतं चन्द्रद्वित्वमपि (द्विचन्द्रत्वमपि) मिथ्यैव । दोषो हि अयथार्थज्ञान-

---

स्वाभिमतेति । प्रत्यक्षदौर्बल्य-शास्त्रप्राबल्यादिकमित्यर्थः (श्रु. प्र) ।

कोऽयम् इति । बहुधा विकल्पितेषु त्वदिष्टानुगुणः न कश्चित्कल्पः इत्याशयः (त. टी) ।

प्रमाणतयेत्यादि । युक्त्या बाधः—यौक्तिकबाधः । धूमबुद्ध्या गृहीतबाष्पादेः साध्यनिश्चयाहेतुत्वदर्शनादित्यर्थः (श्रु. प्र) । प्रमाणकार्याभावात्—स्वपक्षसत्यत्वादेः अलाभात् (त.टी) ॥

---

[1] प्रतीत—आ.

[2] शास्त्रप्रत्यक्षयोरपि—आ, ख, घ, शास्त्रप्रत्यक्षयोः—छ, शास्त्रप्रत्यक्षयोः द्वयोः—पा.

[3] सद्वितीयस्य इ, झ.

[4] सकलेतर—ट.

[5] पुरुषा—आ, इ.

हेतुः । तथा ब्रह्मज्ञानम् अविद्यामूलत्वेन बाधकज्ञानरहितमपि स्वविषयेण ब्रह्मणा सह मिथ्यैव—इति ॥

[ शास्त्रस्य अविद्यामूलत्वाभ्युपगमे दोषप्रसञ्जनम् ]

भवन्ति चात्र प्रयोगाः—

विवादाध्यासितं ब्रह्म - मिथ्या ; अविद्यावतः उत्पन्नज्ञानविषयत्वात्, प्रपञ्चवत् ।

ब्रह्म - मिथ्या ; ज्ञानविषयत्वात्, प्रपञ्चवत् ।

ब्रह्म - मिथ्या ; असत्यहेतुजन्यज्ञानविषयत्वात्, प्रपञ्चवदेव ॥

[ असत्यात् सत्यप्रतिपत्तिनिदर्शनैः प्रत्यक्षात् शास्त्रप्राबल्योक्तेः दूषणम् ]

न च वाच्यम्—स्वाप्नस्य हस्त्यादि[1]विज्ञानस्य[1] असत्यस्य, परमार्थशुभाशुभ-प्रतिपत्तिहेतुभाववत्, अविद्यामूलत्वेन असत्यस्यापि शास्त्रस्य, [2]परमार्थभूत[2]ब्रह्मविषय-प्रतिपत्तिहेतुभावः न [3]विरुद्धः[3]—इति ;

स्वाप्नज्ञानस्य असत्यत्वाभावात् । तत्र हि विषयाणामेव मिथ्यात्वम्, तेषामेव हि बाधो दृश्यते, न ज्ञानस्य । न हि "मया स्वप्नवेलाया[4]मनुभूतं [5]ज्ञानमपि[5] न विद्यते' इति कस्यचिदपि प्रत्ययो जायते । 'दर्शनं तु विद्यते, अर्थाः न सन्ति' इति हि बाधकप्रत्ययः ।

मायाविनः मन्त्रौषधादिप्रभवं मायामयं ज्ञानं सत्यमेव, प्रीतेः भयस्य च हेतुः ; तत्रापि ज्ञानस्य अबाधितत्वात् ।

---

प्रयोगाः इति । व्याप्तिमलत्वात् प्रयोगाः इत्युक्तिः । प्रसङ्गतर्का एते ।

दर्शनं त्विति । अन्यविषयो बाधः न अन्यत्र संचारयितुं युक्तः इति भावः (श्रु. प्र)।

मायामयम्—आश्चर्यभूतं मिथ्यार्थगोचरम् इति यावत् (त. टी) । अत्रानेकोदाहरण-प्रदर्शनम् तत्तज्ज्ञानसामग्रीविशेषाणां सत्यत्वज्ञापनार्थम् (श्रु. प्र) ॥

---

[1] ज्ञानस्य–इ.
[2] परमार्थ–पा.
[3] विरुध्यते–इ.
[4] स्वप्नवेलाया–ड.
[5] ज्ञानमिह–इ, झ.

विषयेन्द्रियादिदोषजन्यं रज्ज्वादौ सर्पादिविज्ञानम् सत्यमेव भयादिहेतुः ।

सत्यैव अदृष्टेऽपि स्वात्मनि सर्पसन्निधानात् दष्टबुद्धिः ।

सत्यैव शङ्काविषबुद्धिः मरणहेतुभूता ।

वस्तुभूते एव जलादौ मुखादिप्रतिभासः वस्तुभूतमुखगतविशेषनिश्चयहेतुः । एषां संवेदनानाम् उत्पत्तिमत्त्वात्, अर्थक्रियाकारित्वाच्च सत्यत्वम् अवसीयते ॥

[ ज्ञानसत्यत्वं विषयसत्यताव्याप्तमिति, तन्निवृत्त्या तन्निवृत्तिरिति शङ्का, तत्परिहारश्च ]

हस्त्यादीनाम् [1]अभावेऽपि[1] कथं तद्बुद्धयः सत्याः भवन्ति ?—इति चेत्,

नैतत् ; बुद्धीनां सालम्बनत्वमात्रनियमात् । अर्थस्य प्रतिभासमानत्वमेव हि आलम्बनत्वे अपेक्षितम् । प्रतिभासमानता च अस्त्येव दोषवशात् । स तु बाधितः असत्यः इत्यवसीयते । अबाधिता हि बुद्धिः सत्यव इत्युक्तम् । रेखया वर्णप्रतिपत्तावपि न असत्यात् सत्यबुद्धिः ; रेखायाः सत्यत्वात् ॥

---

विषयेन्द्रियादीति । विषयदोषः सादृश्यादिः । इन्द्रियदोषः काचादिः । आदिशब्देन देशगतदूरत्वादिदोषः उच्यते (श्रु. प्र) ।

सत्यत्वम् इति । उत्पत्तिमत्त्वम् अर्थक्रियाकारित्वं च द्वयमपि प्रत्येकं सत्यत्वसाधकम् । न हि शुक्तौ रजतम् उत्पत्तिमत्, न च कार्यकरम् (श्रु. प्र) ॥

बुद्धीनां साल .... नियमादिति । आशामोदकभक्षणवत् विषयसत्यत्वम् अनियतमिति (त. टी) । अर्थस्येत्यादि । प्रतिभासमानत्वम्—संविदपेक्षया प्रतिसम्बन्धित्वम् । तदेव विषयत्वम् । आलम्बनम्—विषयः (श्रु. प्र) । अतीतादेः विषयत्वदर्शनात् विद्यमानत्वेऽपि अभातस्य तदभावाच्च इति (श्रु. दी) । दोषेति । अविद्यमानस्य हेतुत्वायोगात् दोष एव हेतुः । अतः न असत्यात् सत्योत्पत्तिरिति (श्रु. प्र) । अबाधितेति । विषयासद्भावेन ज्ञानस्य असत्यताकथनं कालात्ययापदिष्टम् (श्रु. प्र) ॥

---

[1] अभावे—इ, ञ.

[ असत्यात्सत्यबुद्धेः आपाद्य निरासः ]

ननु—वर्णात्मना प्रतिपन्ना रेखा वर्णबुद्धिहेतुः, वर्णात्मता तु असत्या,

[1]नैवम्[1] ; [2]वर्णात्मतायाः असत्यायाः[2] उपायत्वायोगात् । असतः निरुपाख्यस्य हि उपायत्वं न दृष्टम्, अनुपपन्नं च ।

अथ तस्यां वर्णबुद्धेः उपायत्वम्—

एवं तर्हि असत्यात् सत्यबुद्धिः न स्यात्; बुद्धेः सत्यत्वादेव । उपायोपेययोः [3]एकत्व[3]प्रसङ्गश्च ; उभयोः वर्णबुद्धित्वाविशेषात् ।

रेखायाः अविद्यमानवर्णात्मना उपायत्वे च—एकस्यामेव रेखायाम् अविद्यमानसर्ववर्णात्मकत्वस्य सुलभत्वात्, एकरेखादर्शनात् सर्ववर्णप्रतिपत्तिः स्यात् ।

अथ—पिण्डविशेषे [4]देवदत्तादि[4]शब्दसङ्केतवत्, चक्षुर्ग्राह्यरेखाविशेषे श्रोत्रग्राह्यवर्णविशेषसङ्केतवशात् रेखाविशेषः वर्णविशेषबुद्धिहेतुः—इति,

हन्त तर्हि सत्यादेव सत्यप्रतिपत्तिः ; रेखायाः सङ्केतस्य च सत्यत्वात् ।

रेखागवयादपि सत्यगवयबुद्धिः सादृश्यनिबन्धना, सादृश्यं च सत्यमेव ॥

---

असतः—सद्व्यतिरिक्तस्य । निरुपाख्यस्येति । उपाख्या प्रमितिः । तदविषयत्वम् निरुपाख्यत्वम् (श्रु. प्र) । न दृष्टम्—न प्रत्यक्षम् । अनुपपन्नम्—कल्पयितुमशक्यम् (त. टी) ।

उभयोः—रेखायां वर्णधियः, पाठ्यवर्णधियश्च । अविशेषादिति । अभ्यस्तलिपिदर्शनोद्बुद्धसंस्कारजनितवर्णस्मृतिपूर्विका हि रेखायां वर्णधीः । तथा च न साध्यमवशिष्यते इति भावः (त. टी) ।

वर्णात्मना — वर्णात्मत्वेन (श्रु. प्र) ।

सादृश्यं चेति । चकारेण रेखासत्यत्वं पूर्वोक्तमिति व्यज्यते । सत्यमेवेत्येवकारः जातिरूपं पदार्थान्तररूपं वा दृष्टं सादृश्यं दुरपह्नवम् इति द्योतयति (त. टी) ।

---

[1] मैवम्–ढ.

[2] वर्णात्मतायाः–इ.

[3] ऐक्य–इ, झ.

[4] देवदत्तादिरूप–इ, ढ.

[ स्फोटवादावलम्बि उदाहरणमादाय शङ्कापरिहारौ ]

न च—[1]एकरूपस्य[1] शब्दस्य नादविशेषेण [2]अर्थभेद[2]बुद्धिहेतुत्वेऽपि—असत्यात् सत्यप्रतिपत्तिः ; नानानादाभिव्यक्तस्य एकस्यैव शब्दस्य तत्तन्नादाभिव्यङ्ग्यस्वरूपेण अर्थविशेषैः सह सम्बन्धग्रहणवशात् अर्थभेदबुद्ध्युत्पत्ति[3]हेतुत्वात्[3] ।

शब्दस्य एकरूपत्वमपि न साधीयः ; गकारादेः बोधकस्यैव श्रोत्रग्राह्यत्वेन शब्दत्वात् । अतः असत्यात् शास्त्रात् सत्यब्रह्मविषयप्रतिपत्तिः दुरुपपादा ॥

[ शास्त्रेषु असत्यता न अत्यन्तासत्यत्वरूपा, किन्तु विलक्षणा इत्याशङ्कापरिहारौ ]

ननु—न शास्त्रस्य [4]गगनकुसुमवत्[4] असत्यत्वम् ; प्राक् अद्वैतज्ञानात् सद्बुद्धिबोध्यत्वात् । उत्पन्ने तत्त्वज्ञाने हि असत्यत्वं शास्त्रस्य । न तदा शास्त्रं निरस्तनिखिलभेदचिन्मात्रब्रह्मज्ञानोपायः । यदा उपायः, तदा अस्त्येव शास्त्रम् ; 'अस्ति' इति [5]बुद्धेः[5],

---

एकरूपस्य—कत्व-खत्वादिभिः उदात्तादिक्रमेण च उज्जृम्भितस्य । शब्दस्य—स्फोटाख्यस्य । नादविशेषेण—स्वरव्यञ्जनरूपवर्णभेदेन (त. टी) । नानानादा . . . . हेतुत्वादिति । कत्वखत्वादिविशेषान्विततत्तन्नादकृतः अभिव्यक्तिविशेषः सत्यः । तद्विशिष्टः सत्यः शब्दः अर्थप्रतिपत्तिहेतुः इत्यर्थः (श्र. प्र) ।

एकरूपत्वम्—स्फोटात्मकत्वम् । 'स्फोटस्त्वं वर्णसंश्रयः' इत्यादिशास्त्रस्य तु अर्थस्फुटीकरणशक्तौ तात्पर्यात् [अन्यथासिद्धत्वमिति न पारिभाषिकस्फोटसिद्धिरिति] (त. टी) ॥

गगनकुसुमवदसत्यत्वम्— इदानीमेव लौकिकपुरुषैः नास्तीति प्रतिपन्नत्वम् । सद्बुद्धिबोध्यत्वमिति । 'सत्' इति बोध्यत्वमेव कार्यकरत्वानुगुणं सत्यत्वम् इत्यर्थः (श्रु. प्र) । उत्पन्ने इति । पूर्वं सद्बुद्ध्या सत्यत्वम्, पश्चात् बाधकात् असत्यत्वं च इति अविरोधः इति भावः (त. टी) ।

---

[1] एकरूप-ख, छ.
[2] अर्थविशेषभेद-इ, झ.
[3] हेतुत्वाच्च-आ, इ.
[4] गगनकुसुमादिवत्-अ, ङ.
[5] बुद्धिः-इ.

नैवम्; असति शास्त्रे 'अस्ति शास्त्रम्' इति बुद्धेः मिथ्यात्वात्।

ततः किम्?

इदं ततः। मिथ्याभूतशास्त्रजन्यज्ञानस्य मिथ्यात्वेन, तद्विषयस्यापि ब्रह्मणः मिथ्यात्वम्; यथा धूमबुद्ध्या गृहीतबाष्पजन्याग्निज्ञानस्य मिथ्यात्वेन तद्विषयस्य अग्नेरपि मिथ्यात्वम्। पश्चात्तनबाधादर्शनञ्च असिद्धम्; 'शून्यमेव तत्त्वम्' इति [1]वाक्येन[1] तस्यापि बाधदर्शनात्।

तत्तु भ्रान्तिमूलम्—इति चेत्,

एतदपि भ्रान्तिमूलम् इति त्वयैवोक्तम्। [2]पाश्चात्य[2]बाधादर्शनं तु तस्यैव इति, अलम् अप्रतिष्ठितकुतर्क[3]परिहसनेन[3]॥

— अथ श्रुतिघट्टः —

[ निर्विशेषपरतया पराभिमतानां श्रुतीनामपि स्वरसतया सविशेषपरताप्रतिपादनम् ]

[ तत्र कारणवाक्यानां सविशेषपरता ]

यदुक्तम्—वेदान्तवाक्यानि निर्विशेषज्ञानैकरसवस्तुमात्रप्रतिपादनपराणि,

---

नैवमिति। उपायकालेऽपि सत्यत्वं नास्तीत्यर्थः (श्रु. प्र)।

पाश्चात्यबाधादर्शनं त्विति। प्रामाण्यादीनां दोषमूलत्वं द्वयोरपि तुल्यम्, पाश्चात्य-बाधादर्शनं तु शून्यवादिनः अधिकमिति भावः (श्रु. प्र)॥

यदुक्तमित्यादि। ज्ञानैकरसत्वेन शोधकवाक्येषु प्रतिपन्नत्वात् निर्विशेषत्वम्। तच्च कारणवाक्येषु प्रतिपन्नम्। वस्तुमात्रशब्देन अन्यत्र सगुणब्रह्मणि तात्पर्याभावः सूच्यते (श्रु. प्र)।

---

[1] वाक्ये-ड.　　[2] पश्चात्तन-अ, ड

[3] परिहासनेन इति-ढ.

'सदेव सोम्येदमग्र आसीत्' (छां. उ. 6-2-1)

इत्येवमादीनि—इति,

तदयुक्तम्; एकविज्ञानेन सर्वविज्ञानप्रतिज्ञोपपादनमुखेन सच्छब्दवाच्यस्य परस्य ब्रह्मणः 'जगदुपादानत्वम्, जगन्निमित्तत्वम्, सर्वज्ञता, सर्वशक्तियोगः, सत्यसङ्कल्पत्वम्, [1]सर्वान्तरत्वम्[1], [2]सर्वाधारत्वम्, सर्वनियमनम्[2]' इत्याद्यनेककल्याणगुणविशिष्टताम्, कृत्स्नस्य जगतः तदात्मकतां [3]च प्रतिपाद्य[3], 'एवम्भूतब्रह्मात्मकः त्वमसि' इति, श्वेतकेतुं प्रति उपदेशाय प्रवृत्तत्वात् प्रकरणस्य। प्रपञ्चितश्च अयमर्थः वेदार्थसङ्ग्रहे। अत्रापि आरम्भणाधिकरणे (ब्र. सू. 2-1-5) निपुणतरम् [4]उपपादयिष्यते[4]॥

[ परविद्यायाः सविशेषपरता ]

'अथ परा, यया तदक्षरम्' (मुण्ड. उ. 1-1-5)

इत्यत्रापि प्राकृतान् हेयगुणान् प्रतिषिद्ध्य, नित्यत्व-विभुत्व-सूक्ष्मत्व-सर्वगतत्वाव्ययत्व-भूतयोनित्व-सार्वज्ञ्यादि[5]कल्याणगुण[5]योगः परस्य ब्रह्मणः प्रतिपादितः॥

---

इत्येवमादीनीति एवंशब्दः ईदृशसर्वप्रकरणसंग्रहार्थः (त. टी)।

एकविज्ञानेन . . . . प्रतिज्ञा—एकस्य कारणस्य विज्ञानेन तत्कार्यस्य सर्वस्य ज्ञानं सिध्यति इति प्रतिज्ञा। निपुणतरम्—परोक्तप्रतीतिबलानुसारेण (त. टी)॥

प्राकृताः—प्रकृतिगताः--प्रकृतिसंसर्गप्रयुक्ताः जीवगताः दोषाः। अनेन निषेध्यानां क्वापि प्रसिद्धिः दर्शिता भवति। नित्यत्वम्—कालापरिच्छेदः। विभुत्वम्—नियन्तृत्वम्, जगच्छरीरकत्वे फलितम्। अनेन वस्त्वपरिच्छेदः। सर्वगतत्वम् – देशापरिच्छेदः। इदं च व्याप्तिरूपम् सूक्ष्मतया सिध्यति। अव्ययत्वम् – व्ययशब्दोपलक्षितदोषविरोधित्वं गुणात्मकम्। भूतयोनित्वम्—जगत्कारणत्वम्। सर्वज्ञः—सर्वं स्वरूपतो वेत्ति। सर्ववित्—सर्वं प्रकारतो वेत्ति। परस्य ब्रह्मण इति सगुणब्रह्मपरत्वोक्तिनिरासाय (श्रु. प्र)॥

---

[1] सर्वान्तरात्मत्वम्–ड. [2] सर्वनियमनम्–ङ, ज, सर्वाधारता, सर्वनियमनम्–इ, झ.

[3] प्रतिपाद्य–छ, ट. [4] उपपादयिष्यामः–इ.

[5] कल्याणगुणगण–आ, झ.

[ शोधकवाक्यान्तर्गतसत्यादिवाक्यानां सविशेषपरता ]

'सत्यं ज्ञानमनन्तं ब्रह्म' (तै. उ. आन. 1-1)

इत्यत्राऽपि सामानाधिकरण्यस्य अनेकविशेषणविशिष्टैकार्थाभिधानव्युत्पत्त्या, न निर्विशेषवस्तुसिद्धिः। प्रवृत्तिनिमित्तभेदेन [1]एकार्थवृत्तित्वं हि[1] सामानाधिकरण्यम्। तत्र सत्यज्ञानादिपदमुख्यार्थैः गुणैः, तत्तद्गुणविरोध्याकारप्रत्यनीकाकारैर्वा एकस्मिन्नेवार्थे पदानां प्रवृत्तौ निमित्तभेदः अवश्याश्रयणीयः।

इयांस्तु विशेषः—एकस्मिन् पक्षे पदानां मुख्यार्थता, अपरस्मिंश्च तेषां लक्षणा।

न च अज्ञानादीनां प्रत्यनीकता वस्तुस्वरूपमेव; एकेनैव पदेन स्वरूपं प्रतिपन्नमिति, पदान्तरप्रयोगवैयर्थ्यात्। तथा सति सामानाधिकरण्यासिद्धिश्च; एकस्मिन् वस्तुनि वर्तमानानां पदानां निमित्तभेदानाश्रयणात्।

न च एकस्यैवार्थस्य विशेषणभेदेन विशिष्टताभेदात् अनेकार्थत्वम्, पदानां सामानाधिकरण्यविरोधि; एकस्यैव वस्तुनः अनेकविशेषणविशिष्टताप्रतिपादनपरत्वात् सामानाधिकरण्यस्य।

'भिन्नप्रवृत्तिनिमित्तानां शब्दानामेकस्मिन्नर्थे वृत्तिः सामानाधिकरण्यम्' (कै. वृ) [2]इति हि[2] शाब्दिकाः॥

---

विशिष्टताभेदात्—तत्तद्विशेषणान्वयभेदात्। तथाविधम् अनेकार्थत्वम् न विरोधि, प्रत्युत अनुकूलमेवेत्यर्थः।

भिन्नप्रवृत्तीति। विशेषणतः भिन्नार्थत्वे विशेष्यतश्च एकार्थत्वे सति हि सामानाधिकरण्यलक्षणसाद्गुण्यम् इत्यर्थः (श्रु. प्र)। प्रवृत्तौ—विशेष्यबोधने। निमित्तम्—[प्रयोजकीभूतं] विशेषणम्। अर्थे—विशेष्ये (श्रु. दी)॥

---

[1] एकार्थवृत्तित्वम्-आ.	[2] इति-आ, ख, ङ, छ.

[ कारणवाक्यैकार्थ्यात् श्रुतीनां निर्विशेषपरतया अनूद्यनिरासः ]

यदुक्तम्—'एकमेवाद्वितीयम्' इत्यत्र अद्वितीयपदम् गुणतोऽपि सद्वितीयतां न सहते। अतः सर्वशाखाप्रत्ययन्यायेन कारणवाक्यानाम् अद्वितीयवस्तुप्रतिपादनपरत्वम् 'अभ्युपगमनीयम्'[1]। कारणतया उपलक्षितस्य अद्वितीयस्य ब्रह्मणः लक्षणमिदमुच्यते, 'सत्यं ज्ञानमनन्तं ब्रह्म' इति। अतः लिलक्षयिषितं ब्रह्म निर्गुणमेव। अन्यथा 'निर्गुणः' 'निरञ्जनम्' इत्यादिभिः विरोधश्च—इति,

तत् अनुपपन्नम्; जगदुपादानस्य ब्रह्मणः स्वव्यतिरिक्ताधिष्ठात्रन्तरनिवारणेन विचित्रशक्तियोगप्रतिपादनपरत्वात् अद्वितीयपदस्य। तथैव विचित्रशक्तियोगमेव अवगमयति,

'तदैक्षत बहु स्यां प्रजायेयेति, तत्तेजोऽसृजत' (छां. उ. 6-2-3)

इत्यादि।

अविशेषेण 'अद्वितीयम्' इत्युक्ते निमित्तान्तरमात्रनिषेधः कथं ज्ञायते ? इति चेत्,

---

न सहते—'सदेव' 'एकमेव' इति विजातीय-सजातीयव्यावर्तकावधारणद्वयसमभिव्याहृतम् अद्वितीयपदम् पारिशेष्यात् स्वगतभेदाभावपरमिति भावः (श्रु. प्र)। अतः सर्वशाखा . . . निर्गुणमेवेति। सर्वशाखाप्रत्ययन्यायात निर्गुणकारणवाक्येषु सगुणत्वम्, सगुणकारणवाक्येषु निर्गुणत्वञ्च उक्तं स्यात्। तत्र अपच्छेदन्यायेन निर्गुणवाक्यप्राबल्यात् सर्वकारणवाक्यानि निर्गुणपराणि इत्यर्थः। उपलक्षितस्येति। ज्ञाप्यबहिर्भूतं व्यवच्छेदकम्—उपलक्षणम् (श्रु. दी)। जगत्कारणत्वम् तटस्थलक्षणम्, न तु स्वरूपलक्षणमित्यभिप्रायेणेदम्। कारणत्वशङ्कितदोषव्यावर्तकत्वात् ऐक्यमवर्जनीयमित्यर्थः (श्रु. प्र)।

तथैव . . . अवगमयतीति। यथा विचित्रशक्तियोगं बोधयति अद्वितीयपदम्, तथैव उत्तरवाक्यमपि तमेव अवगमयति न निर्विशेषम् इत्यर्थः (श्रु. दी)॥

---

[1] अवर्जनीयम्–ङ.

सिसृक्षोः ब्रह्मणः उपादानकारणत्वम् 'सदेव सोम्येदमग्र आसीदेकमेव' इति प्रतिपादितम्। कार्योत्पत्तिस्वाभाव्येन बुद्धिस्थं निमित्तान्तरम् इति, तदेव अद्वितीय-पदेन निषिध्यते, इत्यवगम्यते। सर्वनिषेधे हि. स्वाभ्युपगताः सिषाधयिषिता नित्यत्वादयश्च निषिद्धाः स्युः॥

[ सर्वशाखाप्रत्ययन्यायस्य निर्विशेषवादविपरीतत्वम् ]

सर्वशाखाप्रत्ययन्यायश्च अत्रभवतः विपरीतफलः ; सर्वशाखासु कारणान्वयिनां सर्वज्ञत्वादीनां गुणानाम् अत्र उपसंहारहेतुत्वात्। अतः कारणवाक्यस्वभावादपि 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यनेन सविशेषमेव प्रतिपाद्यते इति विज्ञायते॥

[ शोधकवाक्यान्तरैकार्थ्यस्य निर्विशेषपरत्वज्ञापकतानिरासः ]

न च निर्गुणवाक्यविरोधः ; प्राकृतहेयगुणविषयत्वात् तेषाम् 'निर्गुणः' 'निरञ्जनम्' 'निष्कलं निष्क्रियं शान्तम्' इत्यादीनाम्॥

[ ब्रह्मणः ज्ञानस्वरूपता विधिबलान्निर्विशेषतासिद्धिः इत्यस्य निरासः ]

ज्ञानमात्रस्वरूपवादिन्योऽपि श्रुतयः ब्रह्मणः ज्ञानस्वरूपताम् अभिदधति। न तावता निर्विशेषज्ञानमात्रमेव तत्त्वम् ; ज्ञातुरेव ज्ञानस्वरूपत्वात्। ज्ञानस्वरूपस्यैव तस्य ज्ञानाश्रयत्वम् मणि-द्युमणि-दीपादिवत् युक्तमेव इत्युक्तम्। ज्ञातृत्वमेव हि सर्वाः श्रुतयः वदन्ति।

---

सर्वशाखाप्रत्ययन्याय इति। अयम् अनुक्तगुणस्वीकारफलः, न तु उक्तगुणत्यागफलः इति त्वत्पक्षविपरीतः इत्यर्थः। अत्र—निर्गुणवादे। भवतः—तव। अत्रभवतः—पूज्यस्य, इत्युपालम्भो वा (श्रु. प्र)। स्वभावादपीति। न केवलं सामानाधिकरण्यान्यथानुपपत्त्या, कारणवाक्यैकार्थ्याच्च सविशेषपरमिति अपिशब्दभावः (श्रु. प्र)॥

ज्ञातुरेवेत्यादि। ज्ञातुः ज्ञानस्वरूपत्वाविरोधात् (श्रु. प्र)। ज्ञातुरपि ज्ञानस्वरूपत्व-सम्भवात्। अथवा ज्ञातृशब्दः भावप्रधानः पञ्चम्यन्तः। एवकारश्च यत् ज्ञातृत्वम् त्वया ज्ञानत्वविरुद्धतया उपन्यस्तम् तदेव ज्ञानत्वसाधकम् इति स्फोरणार्थः। ज्ञानत्वाभावव्यापका-भावप्रतियोगितया ज्ञातृत्वस्य न तद्विरुद्धत्वमिति (भा. प्र)॥

'यः सर्वज्ञः सर्ववित्' (मुण्ड. उ. 1-1-10)

'तदैक्षत' (छां. उ. 6-2-3)

'सेयं देवतैक्षत' (छां. उ. 6-3-2)

'स ईक्षत लोकान्नु सृजा इति' (ऐत. उ. 1-1)

'नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्'
(कठ. उ. 2-5-13)

'ज्ञाज्ञौ द्वावजावीशनीशौ' (श्वे. उ 1-9)

'तमीश्वराणां परमं महेश्वरं तं देवतानां परमं च दैवतम् ।
पतिं पतीनां परमं परस्ताद्विदाम देवं भुवनेशमीड्यम् '॥ (श्वे. उ. 6-7)

'न तस्य कार्यं करणं च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते ।
पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च ॥' (श्वे. उ. 6-8)

'एष आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्य-
कामः सत्यसङ्कल्पः' (छां. उ. 8-1-5)

इत्याद्याः श्रुतयः ज्ञातृत्वप्रमुखान् कल्याणगुणान् ज्ञानस्वरूपस्यैव ब्रह्मणः स्वाभाविकान् वदन्ति, समस्तहेयरहिततां च ॥

---

ईश्वरत्वम्—नियन्तृत्वम् । नियमनं च ज्ञानविशेषरूपम् । नियाम्यविषयज्ञानवानेव हि नियन्ता । नियन्तृत्वेन ज्ञातृत्वसिद्धिः । देवतात्वम्—कर्माराध्यत्वम् । पतित्वम्—शेषित्वम् । कार्यम्—शरीरम् । करणम्—इन्द्रियादि । क्रिया—नियमनम् (श्रु. प्र) । ज्ञातृत्व . . . . गुणान् इत्यनेनात्र उत्सर्गापवादन्यायः अभिप्रेतः । उत्सर्गापवादनयः—उपात्तविशेषव्यतिरिक्तविषये सामान्यशब्दस्य विरोधपरिहाराय सङ्कोचः (श्रु. प्र) । यथा 'न हिंस्यात् सर्वा भूतानि' 'अग्नीषोमीयं पशुमालभेत' इत्यादौ हिंसासामान्यनिषेधस्य अग्नीषोमीयपशुहिंसारूपं विशेषमबाधित्वा वर्तनम् । समस्तहेयरहिततां चेत्यनेन सामान्यविशेषन्यायः अभिप्रेतः । सामान्यविशेषन्यायः—उपात्तविशेषविषये सामान्यशब्दस्य सङ्कोचः । यथा—'पशुना यजेत' 'छागस्य वपायाः इत्यादिषु सामान्यशब्दः' सति विशेष-

[ श्रुत्यैव सगुण-निर्गुणवाक्ययोः विषयविभागसिद्धिः ]

निर्गुणवाक्यानां, सगुणवाक्यानां च विषयम्—'अपहतपाप्मा' इत्यादि 'अपिपासः' इत्यन्तेन हेयगुणान् प्रतिषिध्य, 'सत्यकामः सत्यसङ्कल्पः' इति ब्रह्मणः कल्याणगुणान् विदधती इयं श्रुतिरेव विविनक्ति इति, सगुण-निर्गुणवाक्ययोः विरोधाभावात्, अन्यतरस्य मिथ्याविषयताश्रयणमपि न 'आशङ्कनीयम्'[1] ॥

[ श्रुत्या ब्रह्मणि वाङ्मनोनिवृत्तिज्ञापनान्निर्विशेषत सिद्धिः इत्यस्य निरासः ]

'भीषाऽस्माद्वातः पवते' (तै. उ. आन. 8-1)

इत्यादिना ब्रह्मगुणान् आरभ्य,

'ते ये शतम्' (तै. उ. आन. 8-2)

इत्यनुक्रमेण क्षेत्रज्ञानन्दातिशयमुक्त्वा,

'यतो वाचो निवर्तन्ते । अप्राप्य मनसा सह ।
आनन्दं ब्रह्मणो विद्वान्' (तै. उ. आन. 9-1)

इति ब्रह्मणः कल्याणगुणानन्त्यम् अत्यादरेण वदति इयं श्रुतिः ॥

---

दर्शने विशेषे पर्यवस्यति, तथा गुणसामान्यनिषेधःविशेषगुणनिषेधे पर्यवस्यति । गो-बलीवर्द-न्यायस्तु उपात्तविशेषव्यतिरिक्तविषये अविरोधेऽपि वैयर्थ्यपरिहाराय सङ्कोचः (श्रु. प्र.)॥

विविनक्तीति इतिशब्देन पूर्वोक्तन्यायद्वयात् अध्यात्मशास्त्रेषु गुणशब्दस्य त्रैगुण्ये सत्त्वादौ प्रसिद्धिप्राचुर्याच्चेति सर्वेषां हेतूनां संग्रहेण विवक्षा। वाक्ययोः विरोधाभावादिति। अत्र तु विषयविभागात् न विरोधः इति अपच्छेदनयः प्रवर्तते इति। अपच्छेदनयः—अनियतविरोधपौर्वापर्यविषयः। स च विरोधः प्रयोगावश्यिकविरोधः। अत्र च पौर्वापर्यनियमस्य विरोधनियमस्य च सत्वात् अयं विरोधाधिकरणविषयः (श्रु. प्र) ॥

आनन्त्यमिति । न तु क्रमेण गुणापकर्षम् । अत्यादरेण—ब्रह्मस्वरूपादपि तद्गुणेष्वादरेण । इयं श्रुतिः—निर्गुणार्थत्वेन परोक्ता एतत्प्रकरणस्था श्रुतिः (श्रु. दी) ॥

---

[1] युक्तम्-आ.

[ स्ववाक्यैकदेशेनापि ब्रह्मणः सविशेषता ]

'सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता' (तै. उ. आन. 1-2) इति ब्रह्मवेदनफलम् अवगमयत् वाक्यम् परस्य विपश्चितो ब्रह्मणः गुणानन्त्यं ब्रवीति। विपश्चिता ब्रह्मणा सह सर्वान् कामान् समश्नुते। काम्यन्ते इति कामाः—कल्याणगुणाः। ब्रह्मणा सह तद्गुणान् सर्वान् अश्नुते इत्यर्थः।

दहरविद्यायाम्—

'तस्मिन् यदन्तस्तदन्वेष्टव्यम्' (छां. उ. 8-1-1) इतिवत् गुणप्राधान्यं वक्तुं 'सह'शब्दः। फलोपासनयोः प्रकारैक्यम्—

'यथाक्रतुरस्मिँल्लोके पुरुषो भवति, तथेतः प्रेत्य भवति' (छां. उ. 3-14-1) इति, श्रुत्यैव सिद्धम्॥

[ ज्ञेयत्वनिषेधपरश्रुत्या निर्विशेषत्वसिद्धिरित्यस्य निरासः ]

'यस्यामतं तस्य मतम् . . . . अविज्ञातं विजानताम्' (केन. उ. 2-3) इति, ब्रह्मणः ज्ञानाविषयत्वमुक्तं चेत्,

'ब्रह्मविदाप्नोति परम्' (तै. उ. आन. 1-1)

---

ब्रह्मणा सहेति। अस्य वाक्यस्य प्राप्यवाचिपरशब्दविवरणरूपत्वात्, 'सर्वान् कामान् सह ब्रह्मणा' इति भोग्यवाचिपदेन अव्यवहितप्रयोगस्वारस्याच्च सहशब्दः भोग्यसाहित्यपरः। संनिहितं ब्रह्मैव च गुणानामाश्रयः। अतः अनन्तगुणविशिष्टं ब्रह्म अनुभवति इत्यर्थः (श्रु. प्र)। अन्यथा भोक्तृसाहित्यपरत्वे भोक्तुः जीवस्यैव प्राधान्यं सिध्येत् इति भावः (भा. प्र)।

गुणप्राधान्यं वक्तुमिति। दहरविद्यायाम् उपासने यथा गुणप्राधान्यं तथा 'यो वेद निहितं गुहायाम्' इति विहिते वेदनेऽपि गुणानां प्राधान्यमिति (श्रु. प्र)॥

'ब्रह्म वेद ब्रह्मैव भवति' (मुण्ड. उ. 3-2-9)

इति, ज्ञानात् मोक्षोपदेशः न स्यात्।

'असन्नेव स भवति। असद्ब्रह्मेति वेद चेत्। अस्ति ब्रह्मेति चेद्वेद।
सन्तमेनं ततो विदुः (तै. उ. आन. 6-1)

इति, ब्रह्मविषयज्ञानासद्भावसद्भावाभ्याम् आत्मनाशम् आत्मसत्तां च वदति। अतः [1]ब्रह्मविषयवेदनमेव[1] [2]अपवर्गोपायम्[2] सर्वाः श्रुतयः विदधति॥

[ उपासनात्मकज्ञानाविषयत्वपक्षदूषणम् ]

ज्ञानं च उपासनात्मकम्, उपास्यञ्च ब्रह्म सगुणम् इत्युक्तम्।

'यतो वाचो निवर्तन्ते। अप्राप्य मनसा सह।' (तै. उ. आन. 9-1)

इति ब्रह्मणः अनन्तस्य [3]अपरिच्छिन्न[3]गुणस्य वाङ्मनसयोः 'एतावत्' इति परिच्छेदायोग्यत्वश्रवणेन 'ब्रह्म एतावत्' इति ब्रह्मपरिच्छेदज्ञानवतां ब्रह्म अविज्ञातम् अमतम् इत्युक्तम्; अपरिच्छिन्नत्वात् ब्रह्मणः। अन्यथा—

'यस्यामतं तस्य मतम् . . . . विज्ञातमविजानताम्' (केन. उ. 2-3)

---

अतः—केषुचिद्वाक्येषु अपवर्गोपायतया श्रूयमाणस्य ज्ञानस्य ब्रह्मविषयत्वदर्शनात्। सर्वाः श्रुतयः विदधतीति। अनिर्दिष्टविषयविशेषाः 'विद्ययाऽमृतमश्नुते' इत्यादिकाः श्रुतयोऽपि सर्वशाखाप्रत्ययन्यायेन ब्रह्मविषयमेव वेदनम् अपवर्गोपायतया विदधति इत्यर्थः (श्रु. प्र)॥

उपास्यश्च ब्रह्म सगुणमिति। निर्गुणपरत्वेन परोक्तायाः सद्विद्याया एव सगुणविषयत्वोपपादनात् इति भावः (श्रु. प्र)। अपरिच्छिन्नत्वात् ब्रह्मण इति। ब्रह्मशब्दवाच्यस्य स्वरूपतः गुणतश्च अपरिच्छिन्नत्वात् इत्यर्थः।

---

[1] ब्रह्मविषयमेव—इ.  [2] अपवर्गाय—अ, ई, ख, छ.

[3] अपरिमिति—आ.

इति मतत्व-विज्ञातत्ववचनं तत्रैव 'विरुद्ध्यते'[1] ॥

[ ज्ञातृत्वनिषेधशङ्कापरिहारः ]

यत्तु—

'न दृष्टेर्द्रष्टारं . . . . न मतेर्मन्तारम्' (बृ. उ. 5-4-2)

इति श्रुतिः, दृष्टेः मतेः व्यतिरिक्तं द्रष्टारं मन्तारं च प्रतिषेधति—इति,

तत्—'आगन्तुकचैतन्यगुणयोगितया ज्ञातुः अज्ञानस्वरूपतां कुतर्कसिद्धां मत्वा, न तथा आत्मानं पश्येः, न मन्वीथाः; अपि तु द्रष्टारं मन्तारमपि आत्मानं दृष्टि-मतिरूपमेव पश्येः, इत्यभिदधाति—इति परिहृतम् ।

अथवा 'दृष्टेः द्रष्टारं मतेः मन्तारं' जीवात्मानं प्रतिषिध्य, सर्वभूतान्तरात्मानं परमात्मानमेव उपास्व' इति वाक्यार्थः । अन्यथा—

'विज्ञातारमरे केन विजानीयात् ?' (बृ. उ. 4-4-14)

इत्यादिज्ञातृत्वश्रुतिविरोधश्च ॥

[ आर्थगुणनिषेधान्तरपरिहारः ]

'आनन्दो ब्रह्म' (तै. उ. भृ. 6-1)

इति आनन्दमात्रमेव ब्रह्मस्वरूपं प्रतीयते—इति यदुक्तम्,

---

तत्रैव—स्ववाक्ये एव (श्रु. प्र) ॥

आगन्तुक. . . .योगितयेत्यत्र आगन्तुकत्वात्, गुणत्वात् इति हेतुद्वयम् । आगन्तुकत्वात्—अनित्यत्वात् । ज्ञानं नित्यस्यात्मनः न स्वरूपं भवितुमर्हति, गुणत्वाच्च न स्वरूपमिति (श्रु. प्र) ।

अथवा . . . . वाक्यार्थ इति । दृष्टि-श्रुति-मति-निदिध्यासनानां कर्तारम् इत्यादिरर्थः (श्रु. प्र) ॥

---

[1] ब्रह्मणः विरुध्यते—ज्ञ.

तत्—'ज्ञानाश्रयस्य ब्रह्मणः ज्ञानं स्वरूपम्' इति वदतीति परिहृतम् । ज्ञानमेव हि अनुकूलम् आनन्द इत्युच्यते ।

'विज्ञानमानन्दं ब्रह्म' (बृ. उ. 5-9-28)

इति—आनन्द[1]रूपमेव[1] ज्ञानं ब्रह्म इत्यर्थः। अत एव भवताम् एकरसता। अस्य [2]ज्ञान[2]स्वरूपस्यैव ज्ञातृत्वमपि श्रुतिशतसमधिगतम् इत्युक्तम् ।

तद्वदेव,

'स एको ब्रह्मण आनन्दः' (तै. उ. आन. 8-4)

'आनन्दं ब्रह्मणो विद्वान्' (तै. उ. आन. 9-1)

इति व्यतिरेकनिर्देशाच्च न आनन्दमात्रं ब्रह्म, अपि तु आनन्दि। ज्ञातृत्वमेव हि आनन्दित्वम् ॥

[ भेदनिषेधपरतया शङ्कितानां श्रुतीनां समीचीना योजना ]

यदिदमुक्तम्—

'यत्र हि द्वैतमिव भवति' (बृ. उ. 4-4-14)

'. . . . नेह नानास्ति किञ्चन ।
मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति ॥' (बृ. उ. 6-4-19)

---

आनन्दम्—अनुकूलम्। विज्ञानम्—स्वयंप्रकाशम्। [ ज्ञानस्यैव आनन्दरूपत्वेऽपि ] प्रवृत्तिनिमित्तभेदात् [ विज्ञानम् आनन्दम् इति सामानाधिकरण्यमुपपद्यते ]। अत एव—ज्ञानानन्दशब्दयोः एकविषयत्वादेव (श्रु. प्र)।

न आनन्दमात्रम्, अपि तु आनन्दि इति। धर्मभूतानन्दस्य हि आनन्दाश्रयत्वाभावो दृष्टः। अनुकूलज्ञानाश्रयत्वम् आनन्दित्वम्। ज्ञातृत्वमिति। ज्ञातृत्वश्रुतिः ज्ञानाश्रयत्वनिषेधस्य आनन्दाश्रयत्वनिषेधस्य च विरोधिनी इति भावः (श्रु. प्र) ॥

---

[1] स्वरूपमेव—इ, झ [2] विज्ञान—झ, ड.

'यत्र [1]त्वस्य' सर्वमात्मैवाभूत्...तत् केन कं पश्येत्?' (बृ. उ. 4-4-14)
इति भेदनिषेधः बहुधा दृश्यते—इति,

तत्—कृत्स्नस्य जगतः ब्रह्मकार्यतया तदन्तर्यामि[2]कतया[2] च तदात्मकत्वेन ऐक्यात् तत्प्रत्यनीकनानात्वं प्रतिषिध्यते, न पुनः

'बहु स्यां प्रजायेय' (छां. उ. 6-2-3)

इति बहुभवनसङ्कल्पपूर्वकं ब्रह्मणो नानात्वं श्रुतिसिद्धं प्रतिषिध्यते—इति परिहृतम्

नानात्वनिषेधात् इयम् अपरमार्थविषया—इति चेत्,

न; प्रत्यक्षादिसकलप्रमाणानवगतं नानात्वं दुरारोहं ब्रह्मणः प्रतिपाद्य, तदेव बाध्यते इति, उपहास्यमिदम्।

'यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते। अथ तस्य भयं भवति'
(तै. उ. आन. 7-2)

इति ब्रह्मणि नानात्वं पश्यतः भयप्राप्तिः—इति यदुक्तम्,

---

बहुधेति। उक्तवाक्येषु वचनभङ्गीवैविध्याभिप्रायेणेदम्। बहुशः इति पाठे निषेधक्रियावृत्तिः अर्थः।

'तत्'शब्दस्य परिहृतम् इत्यत्राऽन्वयः। जगतः इति पदं ब्रह्मपर्यन्तम्। तस्य ब्रह्मकार्यतया इति पदेन, ऐक्यात् इति पदेन च अन्वयः। तदन्तर्यामिकतया इत्यत्र सामर्थ्यात् जगतः इत्यध्याहारः। तेन सकृत्प्रयुक्तजगच्छब्दस्य निष्कर्षकत्वानिष्कर्षकत्व-विरोधपरिहारः। ब्रह्मकार्यतया इति। अत्र ब्रह्मशब्दः कारणावस्थचिदचिद्विशिष्टपरः। तदन्तर्यामिकतया—तत्–ब्रह्म अन्तर्यामि यस्य तत् तदन्तर्यामिकम्, तद्भावेनेत्यर्थः।

इयम्—श्रुतिः। भेदस्तु निषेधार्थमनूद्यते इति भावः।

न इति। अप्राप्तस्य अनुवादायोगात्। अतः विषयविभागात् अविरोध एव न्याय्यः।

---

[1] वा अस्य–आ. [2] तया–अ, कत्वेन–ड.

तदसत् ;

'सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत' (छां. उ. 3-14-1)

इति, तन्नानात्वानुसन्धानस्य शान्तिहेतुत्वोपदेशात् । तथा हि सर्वस्य जगतः तदुत्पत्ति-स्थिति-लयकर्मतया तदात्मकत्वानु-सन्धानेन अत्र शान्तिः विधीयते । अतः 'यथाव-स्थितदेव-तिर्यङ्-मनुष्य-स्थावरादिभेदभिन्नं '[1]जगत्[1] ब्रह्मात्मकम्' इति अनुसन्धानस्य शान्तिहेतुतया अभयप्राप्तिहेतुत्वेन न भयहेतुत्वप्रसङ्गः ।

एवं तर्हि,

'अथ तस्य भयं भवति' (तै. उ. आन. 7- 2)

इति किमुच्यते ?

इदमुच्यते ;

'यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते । अथ सोऽभयं गतो भवति' (तै. आन. उ. 7-2)

इति अभयप्राप्तिहेतुत्वेन ब्रह्मणि या प्रतिष्ठा अभिहिता, तस्याः विच्छेदे भयं भवतीति।

---

तदसत् इति । भयप्राप्तिहेतुत्वं न इत्यर्थः ।

सर्वमिति । कार्यजगद्रूपेण नानात्वानुसन्धानं मुक्तिहेतुः इति सिद्धान्तार्थः ।

अतः—नानात्वानुसन्धानस्य शान्तिहेतुत्वद्वारा समस्तभयनिवृत्तिरूपमोक्षोपायत्वात् ।

अदृश्ये—अचिद्भिन्ने । अनात्म्ये—कर्मकृतशरीररहिते—बद्धजीवभिन्ने । अनि-रुक्ते—बद्धावस्थायां देवादिशब्दैर्निरुक्तो यो जीवः तद्भिन्ने । अनेन मुक्तात् भिन्न् इत्यर्थः । अनिलयने—निलयनाः भगवदाधारकाः नित्यमुक्ताः सूरयः, तद्भिन्ने ।

विच्छेदः इति । अविच्छिन्नं हि ध्यानं निरन्तरम् इत्युच्यते । अतः अन्तरं विच्छेद एव । अत्र च सः विच्छेदः प्रकृतायाः प्रतिष्ठायाः । प्रतिष्ठा च—दृढः सम्बन्धः । [ स च सम्बन्धः कुत्र ? इत्यपेक्षायाम् , ब्रह्मणि इत्येतदर्थकम् एतस्मिन् इति श्रुतिस्थं पदम् ।] तथा च उपास्यं प्रति उपासकतया सम्बन्धे पर्यवसानं प्रतिष्ठाशब्दार्थस्य (श्रु. प्र) ।

---

[1] इदं जगत्—ङ.

यथोक्तं महर्षिभिः—

'यन्मुहूर्तं क्षणं वाऽपि वासुदेवो न चिन्त्यते ।

सा हानिस्तन्महच्छिद्रं सा भ्रान्तिः सा च विक्रिया ॥' (गा. पु. पू. 222-22)

इत्यादि । ब्रह्मणि प्रतिष्ठायाः अन्तरम्—अवकाशः—विच्छेद एव ॥

[ ब्रह्मणः निर्विशेषत्वं तदितरमिथ्यात्वञ्च न सौत्रम् ]

यदुक्तम्—'न स्थानतोऽपि' (ब्र. सू. 3-2-11) इति, सर्वविशेषरहितं ब्रह्म [1]इति[1] वक्ष्यति—इति,

तन्न; 'सविशेषं ब्रह्म' इत्येव हि तत्र वक्ष्यति ।

'मायामात्रं तु' (ब्र. सू. 3-2-3) इति च स्वाप्नानामपि अर्थानां जागरितावस्थानुभूतपदार्थवैधर्म्येण मायामात्रत्वमुच्यते इति, [2]जागरितावस्थानुभूतानामिव पारमार्थिकत्वमेव[2] वक्ष्यति ॥

— अथ स्मृतिपुराणघट्टः —

[ स्मृतिपुराणयोरपि सविशेषपरत्वम् ]

स्मृति-पुराणयोरपि—'निर्विशेषज्ञानमात्रमेव परमार्थः, अन्यत् अपारमार्थिकम्' इति प्रतीयते—इति यदभिहितम्,

---

हानिः—इष्टहानिः । छिद्रम्—अनिष्टप्राप्तिरन्ध्रम् । भ्रान्तिः—तत्कृतचित्तस्खलनम् । विक्रिया—चित्तस्खलनेन अज्ञानाम् अयथायथव्यापारः ॥

न स्थानत इति । इदं सूत्रमपि हेयगुणरहितकल्याणगुणब्रह्मपरमेवेति उत्तरत्र उक्तम् । मायामात्रम् इत्यत्र स्वप्नसृष्टेः परमार्थत्वं परमात्मकर्तृकत्वं च तत्रैवोक्तम् (न. प्र) ॥

स्मृतीत्यादि । यथा लौकिकप्रमाणश्रुतिविरुद्धान् अर्थान् इदं शास्त्रं न प्रतिपादयति, एवमेव पूर्वापरवाक्यविरुद्धमप्यर्थं न स्मृतिपुराणानि प्रतिपादयितुं शक्नुवन्ति इति भावः। स्वाभाविकवक्तृवैषम्या( वैलक्षण्या)भ्युपगमात् अनन्तगुणविभूतिमत्वस्य स्पष्टतया च भगवद्गीतावचनानि पूर्वमुपन्यस्य पश्चात् पुराणवचनानि प्रदर्श्यन्ते ।

---

[1] इति च-पा:

[2] पारमार्थिकत्वमेव—आ, इ.

तदसत् ;

'यो मामजमनादिं च वेत्ति लोकमहेश्वरम् ।' (भ. गी. 10-3)

'मत्स्थानि सर्वभूतानि न चाहं तेष्ववस्थितः ।' (भ. गी. 9-4)

'न च मत्स्थानि भूतानि पश्य मे योगमैश्वरम् ।
भूतभृन्न च भूतस्थो ममात्मा भूतभावनः ॥' (भ. गी. 9-5)

'अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा । (भ. गी. 7-6)

मत्तः परतरं नान्यत् किञ्चिदस्ति धनञ्जय ।
मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव ॥' (भ. गी. 7-7)

'विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत् ।' (भ. गी. 10-42)

'उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।
यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ॥ (भ. गी. 15-17)

यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः ।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥' (भ. गी. 15-18)

'स सर्वभूतप्रकृतिं विकारान् गुणादिदोषांश्च मुने व्यतीतः ।
अतीतसर्वावरणोऽखिलात्मा तेनास्तृतं यद् भुवनान्तराले ॥ (वि. पु. 6-5-83)

---

लोकः —प्रमाणसिद्धत्रिविधचेतनाचेतनवर्गः । मत्स्थानीति शरीरलक्षणं सूचितम् । सर्वभूतानि मदायत्तस्थितीनि, नाऽहं तदायत्तस्थितिरित्यर्थः । न च मत्स्थानीति । लोकदृष्टप्रकारेण न अहमाधारः, अपि तु सङ्कल्पमात्रात् इत्यर्थः; निषेधस्य विहितव्यतिरिक्तविषयत्वात् । ममात्मा — मम सङ्कल्परूपं ज्ञानम् । भूतभावनः—भूतानां सत्तानुवर्तकः । विष्टभ्य—अधिष्ठाय । एकांशेन—सङ्कल्पैकदेशेन । क्षराक्षरौ—बद्धमुक्तौ । स सर्वेति । प्रधान, महदादीन्, सत्त्वादिहेतुकान् क्लेशादिदोषान् विशेषेणातीतः । सर्वविषयज्ञानसङ्कोचातीतः । भुवनान्तराले—उभयविभूत्यन्तराले (श्रु. प्र) ।

समस्तकल्याणगुणात्मकोऽसौ स्वशक्ति[1]लेशाद्धृतभूतसर्गः[1] ।
इच्छागृहीताभिमतोरुदेहः संसाधिताशेषजगद्धितोऽसौ ॥ (वि. पु. 6-5-84)

तेजोबलैश्वर्यमहावबोधसुवीर्यशक्त्यादिगुणैकराशिः ।
परः पराणां सकला न यत्र क्लेशादयः सन्ति परावरेशे ॥ (वि. पु. 6-5-85)

स ईश्वरो व्यष्टि-समष्टिरूपोऽव्यक्तस्वरूपः प्रकटस्वरूपः ।
सर्वेश्वरः सर्वदृक् सर्ववेत्ता समस्तशक्तिः परमेश्वराख्यः ॥ (वि. पु. 6-5-86)

[2]संज्ञायते[3] येन तदस्तदोषं शुद्धं परं निर्मलमेकरूपम् ।
संदृश्यते वाऽप्यधिगम्यते वा तज्ज्ञानमज्ञानमतोऽन्यदुक्तम् ॥' (वि. पु. 6-5-87)

'शुद्धे महाविभूत्याख्ये परे ब्रह्मणि शब्द्यते ।
मैत्रेय भगवच्छब्दः सर्वकारणकारणे ॥ (वि. पु. 6-5-72)

संभर्तेति तथा भर्ता भकारोऽर्थद्वयान्वितः ।
नेता गमयिता स्रष्टा गकारार्थस्तथा मुने ॥ (वि. पु. 6-5-73)

ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः ।
ज्ञान-वैराग्ययोश्चैव षण्णां भग इतीरणा ॥ (वि. पु. 6-5-74)

---

**समस्तेति ।** समस्तकल्याणत्वं गुणः स्वभावः यस्य, सः । **स्वशक्तिः**—स्वगुणलवधृतसृज्य-वस्तुजातः । **अभिमतत्वम्**—अनुरूपत्वम् । **इच्छा** — नित्येच्छा, अवतारसमय-जन्येच्छा च । **परः**—स्वरूपतः विग्रहतः गुणतश्च परः । **व्यष्टि-समष्टिरूपः**—कार्य-कारणावस्थचेतनवर्गशरीरकः । **स्वरूपम्**—स्वासाधारणं शरीरम् । **सर्वदृक्**—सर्वेषां चक्षुर्भूतः ज्ञानप्रदः । **सर्ववेत्ता**—अवाप्तसमस्तकामः । **समस्तशक्तिः**—सर्वमपि कार्योपयोगि अपृथक्सिद्धविशेषणं यस्य, सः । **अज्ञानम्**—मोक्षोपायज्ञानादन्यत् । **संभर्ता**—प्रकृति-पुरुषकालान् कार्योत्पत्तियोग्यान् करोति । **नेता**—गमयिता - स्थितिकर्ता । **स्रष्टा**—उद्गमयिता । **गमयिता**—सङ्गमयिता-संहर्ता ।

---

[1] लेशावृतभूतवर्गः-आ, लेशाद्धृतभूतवर्गः-पा.

[2] स ज्ञायते-आ.

वसन्ति [1]तत्र[1] भूतानि भूतात्मन्यखिलात्मनि ।
स च भूतेष्वशेषेषु वकारार्थस्ततोऽव्ययः ॥' (वि. पु. 6-5-75)

'ज्ञानशक्तिबलैश्वर्यवीर्यतेजांस्यशेषतः ।
भगवच्छब्दवाच्यानि विना हेयैर्गुणादिभिः ॥' (वि. पु. 6-5-79)

'एवमेष महाशब्दो मैत्रेय भगवानिति ।
परमब्रह्मभूतस्य वासुदेवस्य नान्यगः ॥ (वि. पु. 6-5-76)

तत्र पूज्यपदार्थोक्तिपरिभाषासमन्वितः ।
शब्दोऽयं नोपचारेण ह्यन्यत्र ह्युपचारतः ॥' (वि. पु. 6-5-77)

'समस्ताः शक्तयश्चैता नृप यत्र प्रतिष्ठिताः ।
तद्विश्वरूपवैरूप्यं रूपमन्यद्धरेर्महत् ॥ (वि. पु. 6-7-70)

समस्तशक्तिरूपाणि तत्करोति जनेश्वर ।
देवतिर्यङ्-मनुष्याख्यचेष्टावन्ति स्वलीलया ॥ (वि. पु. 6-7-71)

जगतामुपकाराय न सा कर्मनिमित्तजा ।
चेष्टा तस्याप्रमेयस्य व्यापिन्यव्याहतात्मिका ॥' (वि. पु. 6-7-72)

'एवंप्रकारमखिलं नित्यं व्यापकमक्षयम् ।
समस्तहेयरहितं विष्ण्वाख्यं परमं पदम् ॥' (वि. पु. 1-22-53)

---

महाशब्दः ; महार्थगर्भत्वात् । पूज्यपदार्थोक्तिः—पूज्यानामवयवार्थानामुक्तिः । परिभाषा—रूढिः । अन्यत्र उपचारतः इति । यत्र ज्ञानादयः निरङ्कुशाः स एव मुख्यार्थः । गुणलेशयोगादपि प्रयोगसम्भवात् अन्यत्र वृत्तिः औपचारिकी । अन्यथासिद्धे प्रयोगे न हि शक्तिकल्पनं युक्तम् । विश्वरूपवैरूप्यम् इत्यनेन संनिवेशवैलक्षण्यमुक्तम् । महत्—अपरिच्छेद्यम् । स्वलीलयेति । लीलायाः प्रयोजनत्वात् तदभिसन्धिर्हेतुः । न तु कर्मणा इत्यर्थः । उपकाराय, न तु स्वकर्मफलोपभोगाय । व्यापिनी—सर्वावतारानुगुणा । अव्याहतात्मिका—देशकालवस्तुकृतप्रतिबन्धरहिता ।

---

[1] यत्र–इ.

'परः पराणां परमः परमात्माऽऽत्मसंस्थितः ।
[1]रूपवर्णादि[1]निर्देशविशेषणविवर्जितः ॥ (वि. पु. 1-2-10)

अपक्षयविनाशाभ्यां परिणामर्द्धिजन्मभिः ।
वर्जितः शक्यते वक्तुं यः सदाऽस्तीति केवलम् ॥ (वि. पु. 1-2-11)

सर्वत्राऽसौ समस्तं च वसत्यत्रेति वै यतः ।
ततः स वासुदेवेति विद्वद्भिः परिपठ्यते ॥ (वि. पु. 1-2-12)

तद्ब्रह्म परमं नित्यमज[2]मक्षर[2]मव्ययम् ।
एकस्वरूपं च सदा हेयाभावाच्च निर्मलम् ॥ (वि. पु. 1-2-13)

तदेव [3]सर्वमेवैतत्[3] व्यक्ताव्यक्तस्वरूपवत् ।
तथा पुरुषरूपेण कालरूपेण च स्थितम् ॥' (वि. पु. 1-2-14)

'प्रकृतिर्या मयाख्याता व्यक्ताव्यक्तस्वरूपिणी ।
पुरुषश्चाऽप्युभावेतौ लीयेते परमात्मनि ॥ (वि. पु. 6-4-39)

परमात्मा च सर्वेषामाधारः परमेश्वरः ।
विष्णुनामा स वेदेषु वेदान्तेषु च गीयते ॥' (वि. पु. 6-44-0)

---

आत्मसंस्थितः—सर्वेषामात्मत्वेन सर्ववस्तुभिः विशिष्टः । परः इति कालानवच्छेदः । परमात्मेति देशापरिच्छेदः । आत्मसंस्थितः इति वस्त्वपरिच्छेदः । अपक्षय . . . वर्जितः—षड्भावविकाररहितः । सर्वत्रेति । ब्रह्मणः ईश्वरातिरिक्तत्वनिषेधाभ्यां देवतान्तरव्युदासार्थं च नामनिर्वचनमुखेन तदुक्तिः । औणादिकप्रत्ययस्यानेकार्थत्वात् अधिकरणे, कर्तरि च व्युत्पत्तिः वासुदेवशब्दस्योच्यते (श्रु. प्र) । एकस्वरूपम्—वृद्धिपरिणामरहितम् । तद्ब्रह्म परमम्—एवं स्वव्यतिरिक्तसमस्तवस्तुविलक्षणत्वेन उपनिषत्सु उक्तम् ब्रह्म वासुदेव इत्यर्थः । सर्वमेवैतत् [इति] व्यक्ताव्यक्तपुरुषकालसमुदायः उच्यते ।

---

[1] रूपवर्गादि—आ. [2] क्षक्षय—इ, ई.

[3] सर्वमेतच्च—आ.

'द्वे रूपे ब्रह्मणस्तस्य मूर्तं चामूर्तमेव च ।
क्षराक्षरस्वरूपे ते सर्वभूतेषु च स्थिते ॥ (वि. पु. 1-22-55)

अक्षरं तत्परं ब्रह्म क्षरं सर्वमिदं जगत् ।
एकदेशस्थितस्याग्नेर्ज्योत्स्ना विस्तारिणी यथा ॥ (वि. पु. 1-22-56)

परस्य ब्रह्मणः शक्तिस्तथेदमखिलं जगत् ॥' (वि. पु. 1-22-57)

'विष्णुशक्तिः परा प्रोक्ता क्षेत्रज्ञाख्या तथाऽपरा ।
अविद्या कर्मसंज्ञाऽन्या तृतीया शक्तिरिष्यते ॥ (वि. पु. 6-7-61)

यथा क्षेत्रज्ञशक्तिः सा वेष्टिता नृप सर्वगा ।
संसारतापानखिलानवाप्नोत्यतिसन्ततान् ॥ (वि. पु. 6-7-62)

तया तिरोहितत्वाच्च शक्तिः क्षेत्रज्ञसंज्ञिता ।
सर्वभूतेषु भूपाल तारतम्येन वर्तते ॥' (वि. पु. 6-7-63)

'प्रधानं च पुमांश्चैव सर्वभूतात्मभूतया ।
विष्णुशक्त्या महाबुद्धे वृतौ[1] संश्रयधर्मिणौ ॥ (वि. पु. 2-7-29)

तयोः सैव पृथग्भावकारणं संश्रयस्य च ॥ (वि. पु. 2-7-30)

---

मूर्तं चामूर्तमेव च—बद्धश्च मुक्तश्च । क्षराक्षरस्वरूपे—ज्ञानसङ्कोचात्मकक्षरणवत् असङ्कुचितज्ञानं च । सर्वभूतेषु च स्थितेइति अर्हार्थे क्तः । सर्वभूतस्थित्यर्हे । सूक्ष्मतरतया व्यापनक्षमे । सर्वगा—चतुर्मुखादिपिपीलिकान्तसर्वशरीरस्था । वेष्टिता । कर्मणा सङ्कुचितज्ञानेनेति शेषः । तयेति । कर्मतारतम्यानुगुणं ज्ञानतारतम्यवती क्षेत्रज्ञशक्तिरित्यर्थः । सर्वभूतात्मभूतया—सर्वभूतव्यापिकया । वृतौ—व्याप्तौ । विष्णुशक्त्या—विष्णोः नियमनशक्त्या । संश्रयधर्मिणौ—भगवदपृथक्स्थितिधर्मकौ । पृथग्भावः—उपकरणोपकरणित्वलक्षणसम्बन्धविशेषराहित्यम्—संहारः । तत्र हि करणकलेबरं नास्ति । संश्रयः—करणकरणित्वेन सम्बन्धः—सृष्टिः ।

---

[1] धृतौ-आ.

यथा सक्तं जले वातो बिभर्ति कणिकाशतम् ।
शक्तिः साऽपि तथा विष्णोः प्रधानपुरुषात्मनः ॥' (वि. पु. 2-7-31)

'तदेत[1]दक्षयं[1] नित्यं जगन्मुनिवराखिलम् ।
आविर्भाव-तिरोभावजन्म-नाशविकल्पवत् ॥' (वि. पु. 1-22-60)

इत्यादिना, [2]परं ब्रह्म[2] स्वभावत एव निरस्तनिखिलदोषगन्धं समस्तकल्याणगुणात्मकं जगदुत्पत्ति-स्थिति-संहारान्तःप्रवेशनियमनादिलीलं प्रतिपाद्य, कृत्स्नस्य चिदचिद्वस्तुनः सर्वावस्थावस्थितस्य पारमार्थिकस्यैव [3]परस्य ब्रह्मणः[3] शरीरतया रूपत्वं शरीररूपतन्वंश-शक्तिविभूत्यादिशब्दैः तत्तच्छब्दसामानाधि[4]करण्येन[4] च अभिधाय, तद्विभूतिभूतस्य चिद्वस्तुनः स्वरूपेणावस्थितिम्, अचिन्मिश्रतया क्षेत्रज्ञरूपेण [5]स्थितिं[5] च उक्त्वा, क्षेत्रज्ञावस्थायां पुण्यपापात्मककर्मरूपाविद्यावेष्टितत्वेन स्वाभाविकज्ञानरूपत्वाननुसन्धानम् [6]अचिद्रूपार्थाकारतया[6] अनुसन्धानञ्च प्रतिपादितमिति, परं ब्रह्म [7]सविशेषम्[7], तद्विभूतिभूतं जगदपि पारमार्थिकमेव इति ज्ञायते ॥

[ प्रत्यस्तमितेत्यादिश्लोकार्थः ]

'प्रत्यस्तमितभेदम्' (वि. पु. 6-7-53) इत्यत्र देवमनुष्यादिप्रकृतिपरिणामविशेष-संसृष्टस्यापि आत्मनः स्वरूपम् तद्गतभेदरहितत्वेन तद्भेदवाचिदेवादिशब्दागोचरम्

---

प्रधानपुरुषात्मनः—प्रधानपुरुषयोः आत्मनः (श्रु. प्र) । नियमनादीति । आदिशब्देन अध्यक्षत्वानुमन्तृत्वे उच्येते । सर्वावस्थावस्थितस्य—कार्यकारणावस्थितस्य बद्धमुक्तावस्थितस्य च । प्रतिपादितमिति । एवं शास्त्रोपक्रमोपसंहारेषु अवान्तरप्रकरणोपक्रमोपसंहारेषु च प्रतिपादितत्वात् इत्यर्थः । ज्ञायते इत्यन्तेन उक्तवचनार्थसङ्ग्रहः कृतः । उदाहृतवचनैः वस्तुनः सविशेषत्वम्, जगतः सत्यत्वञ्च स्थितम् (श्रु. प्र) ॥

संसृष्टस्यापीति । इदानीं संसरतोऽपि स्वाभाविकाकारस्य तिरोहितस्य विद्यमानत्वात्

---

[1] दक्षरं–आ.
[2] परब्रह्म–अ, इ.
[3] परब्रह्मणः–आ.
[4] करण्यं–ज.
[5] अवस्थितिं–अ.
[6] अचिद्रूपाकारतया–अ, आ, इ, ई, क, ख, ङ, छ, ट. अचिद्रूपतदर्थाकारतया–च.
[7] विशेषम्–अ.

ज्ञानसत्तैकलक्षणं स्वसंवेद्यं योगयुङ्मनसः न गोचरः इत्युच्यते इति, अनेन न प्रपञ्चापलापः ॥

कथमिदमवगम्यते ?—इति चेत्,

[ प्रकरणात् उक्तार्थनिश्चयः ]

तदुच्यते—अस्मिन् प्रकरणे संसारैकभेषजतया योगमभिधाय, योगावयवान् प्रत्याहारपर्यन्तांश्च उक्त्वा, धारणासिद्ध्यर्थम्, शुभाश्रयं वक्तुं परस्य ब्रह्मणः विष्णोः शक्तिशब्दाभिधेयं रूपद्वयं मूर्तामूर्तविभागेन प्रतिपाद्य, तृतीयशक्तिरूपकर्माख्याविद्यावेष्टितम् अचिद्विशिष्टं क्षेत्रज्ञं मूर्ताख्यविभागं भावनात्रयान्वयात् अशुभमित्युक्त्वा,

---

आविर्भविष्यतः तस्य तथानुसन्धानाय उपदेशः इति भावः। **भेदः**—रूपवर्णादिः। ज्ञानसत्तैकलक्षणमिति। ज्ञानत्वाकारेण सत्ता अभिप्रेता। **स्वसंवेद्यम्**—प्रत्यक्त्वेन भासमानत्वं स्वव्यावर्तकम्। अन्ये हि इदन्तया भासन्ते इत्यर्थः। **योगयुक्**—प्रक्रान्तयोगः ॥

**प्रकरणे इति।** न ह्ययं मुक्तकश्लोकः, अपि तु प्रबन्धस्थः। अतः 'पूर्वापरपरामृष्टः शब्दोऽन्यां कुरुते मतिम्' इति तत्परिहाराय पूर्वापरपरामर्शेनैव अर्थः वर्णनीयः इति भावः। **योगमिति।** 'क्लेशानां च क्षयकरं योगादन्यन्न विद्यते' इत्ययमर्थः, वाक्यार्थज्ञानमात्रस्य अपवर्गोऽपायत्वनिरासश्च स्फोरितः। **प्रत्याहारेति।**

प्राणायामेन पवने प्रत्याहारेण चेन्द्रिये।
वशीकृते ततः कुर्यात्स्थितं चेतः शुभाश्रये ॥

इत्यस्यार्थः संक्षिप्तः। **शक्तीति।** अपृथक्सिद्धविशेषणेत्यर्थः (श्रु. प्र)। **भावनात्रयम्**—

'सनन्दनादयो ये वै ब्रह्मभावनयान्विताः।
कर्मभावनया चान्ये देवाद्याः सचराचराः ॥
हिरण्यगर्भादिषु च ब्रह्मकर्मात्मिका द्विधा।
अधिकारबोधयुक्तेषु विद्यते भावभावना ॥'

[इत्युक्तब्रह्म-कर्म-उभयभावनाः] (न्या. सु)।

द्वितीयस्य कर्माख्याविद्याविरहिणः अचिद्वियुक्तस्य ज्ञानैकाकारस्य अमूर्ताख्यविभागस्य निष्पन्नयोगिध्येयतया योगयुङ्मनसः अनालम्बनतया स्वतश्शुद्धिविरहाच्च शुभाश्रयत्वं प्रतिषिध्य, परशक्तिरूपमिदम् अमूर्तम्, अपरशक्तिरूपं क्षेत्रज्ञाख्यमूर्तं च, परशक्तिरूपस्य आत्मनः क्षेत्रज्ञतापत्तिहेतुभूततृतीयशक्त्याख्यकर्मरूपाविद्या च इत्येतच्छक्तित्रयाश्रयः, भगवदसाधारणम् 'आदित्यवर्णम्' इत्यादिवेदान्तसिद्धं [1]मूर्तस्वरूपम्[1] शुभाश्रयः इत्युक्तम्। अत्र परिशुद्धात्मस्वरूपस्य शुभा[2]श्रयतानर्हतां[2] वक्तुम् 'प्रत्यस्तमितभेदं यत्' (वि. पु. 6-7-53) इति उच्यते। तथा हि—

'न तद्योगयुजा शक्यं नृप चिन्तयितुं यतः।' (वि पु. 6-7-5·)

'द्वितीयं विष्णुसंज्ञस्य [3]योगिध्येयं परं पदम्[3] ॥ (वि. पु. 6-7-69)

समस्ताः शक्तयश्चैता नृप यत्र प्रतिष्ठिताः।
तद्विश्वरूपवैरूप्यं रूपमन्यद्धरेर्महत् ॥' (वि. पु. 6-7-70)

इति च वदति ॥

[ शुभाश्रयस्वरूपनिष्कर्षः ]

तथा चतुर्मुखसनकसनन्दनादीनां जगदन्तर्वर्तिनाम् अविद्यावेष्टितत्वेन शुभाश्रयतानर्हताम् उक्त्वा, बद्धानामेव पश्चात् योगेनोद्भूतबोधानां स्वस्वरूपापन्नानां च स्वतःशुद्धिविरहात् भगवता शौनकेन शुभाश्रयता निषिद्धा—

---

योगयुक्—प्रक्रान्तयोगः। अनालम्बनतयेति, प्रक्रान्तयोगस्य ध्यातुमशक्यत्वं फलितम्। स्वतश्शुद्धिविरहादिति। अत्र न शुद्धेः अस्वाभाविकत्वमुच्यते; अपि तु औपाधिकदोषनिरासे स्वयमशक्तत्वेन, भगवत्प्रसादसापेक्षत्वं विवक्षितम्। शुभाश्रयः—हेयविरोधि ध्यानालम्बनम्।

स्वतश्शुद्धिविरहात् इति। ['अशुद्धाः कर्मयोनयः' इति पदाभ्यां] कर्मसम्बन्धलक्षणाशुद्धिकथनात् कर्मसम्बन्धविनिर्मुक्तानामपि स्वतःशुद्धिविरहः सूचितः।

---

[1] मूर्तं रूपम्–ग, ट. [2] श्रयानर्हतां–इ, छ, श्रयत्वानर्हताम्–अ.

[3] योगिध्येयं महामते–ड.

'आब्रह्मस्तम्बपर्यन्ताः जगदन्तर्व्यवस्थिताः ।
प्राणिनः [1]कर्मजनित[1]संसारवशवर्तिनः ॥ (भ. पु. वि. ध. 104-23)

यतस्ततो न ते ध्याने ध्यानिनामुपकारकाः ।
अविद्यान्तर्गताः सर्वे ते हि संसारगोचराः ॥ (भ. पु. वि. ध. 104-24)

पश्चादुद्भूतबोधाश्च ध्याने नैवोपकारकाः ।
नैसर्गिको न वै बोधः तेषामप्यन्यतो यतः ॥ (भ. पु. वि. ध. 104-25)

तस्मात् तदमलं ब्रह्म निसर्गादेव बोधवत् ॥' (भ. पु. वि. ध. 104-26)

इत्यादिना परस्य ब्रह्मणः विष्णोः स्वरूपम् स्वासाधारणमेव शुभाश्रयः-इत्युक्तम् । अतः अत्र न भेदापलापः प्रतीयते ॥

[ ज्ञानस्वरूपमित्यादिश्लोकार्थः ]

'ज्ञानस्वरूपम्' (वि. पु. 1-4-40) इत्यत्राऽपि ज्ञानव्यतिरिक्तस्य अर्थजातस्य कृत्स्नस्य न मिथ्यात्वं प्रतिपाद्यते ; 'ज्ञानस्वरूपस्य आत्मनः देवमनुष्याद्यर्थाकारेण अवभासः भ्रान्तिः' इत्येतावन्मात्रवचनात् । न हि 'शुक्तिकायाः रजततया अवभासः भ्रान्तिः' इत्युक्ते, जगति कृत्स्नं रजतजातं मिथ्या भवति ।

---

आब्रह्मस्तम्बेति। अत्र आङ् अभिविधौ; स्तम्बसमभिव्याहारात्। स्तम्बो हि कर्मवश्यः। 'भूपैते कर्मयोनयः' इत्युक्तेः। आङ् इत्यस्य ब्रह्मशब्देन समासः। स्तम्बपर्यन्ताः इति पृथक्पदम्। ततश्च समभिव्याहृतस्तम्बपर्यन्तपदे स्तम्बस्य अभिविधित्वदर्शनात् आब्रह्मशब्देऽपि आङ् अभिविधौ इति भावः। तेन स्तम्बपर्यन्तात् इति, स्तम्बपर्यन्तम् इति वा भवितव्यम् इति न आक्षेपावकाशः (भा. प्र)। अत इति। 'प्रत्यस्तमिते'ति श्लोके भेदनिषेधपरत्वाभावः [स्पष्टप्रतिपन्नः] इति (श्रु. प्र)॥

इत्येतावन्मात्रेति। ज्ञानस्वरूपस्य अर्थाकारतया अवभासे भ्रमे सति, अर्थाकारस्य तथात्वेन अवभासः न भ्रमो भवति इत्यर्थः (श्रु. प्र)।

---

[1] कर्मजनिताः-पा.

जगद्ब्रह्मणोः सामानाधिकरण्येन ऐक्यप्रतीतेः, ब्रह्मणः ज्ञानस्वरूपस्य अर्थाकारता भ्रान्तिः इत्युक्ते सति, अर्थजातस्य कृत्स्नस्य मिथ्यात्वम् उक्तं स्यात्—इति चेत्,

तदसत्; अस्मिन् शास्त्रे परस्य ब्रह्मणः विष्णोः निरस्ताज्ञानादिनिखिलदोषगन्धस्य समस्तकल्याणगुणात्मकस्य महाविभूतेः प्रतिपन्नतया, तस्य भ्रान्तिदर्शनासम्भवात् ।

सामानाधिकरण्येन ऐक्यप्रतिपादनं च बाधासहम्, अविरुद्धं च इति अनन्तरमेव उपपादयिष्यते । अतः अयमपि श्लोकः न अर्थस्वरूपस्य बाधकः । तथा हि—

'यतो वा इमानि भूतानि जायन्ते । येन जातानि जीवन्ति । यत् प्रयन्त्यभिसंविशन्ति । तद्विजिज्ञासस्व । तद्ब्रह्म' (तै. उ. भृ. 1-2)

इति, 'जगज्जन्मादिकारणं ब्रह्म' [1]इत्यवसिते[1] सति,

---

जगदिति दृष्टान्तवैषम्याशङ्का । कृत्स्नसामानाधिकरण्य-तदभावाभ्यां भेदः । तथा सति ज्ञानार्थाकारयोः विरोधात् अन्यतरमिथ्यात्वम् इत्यर्थः (श्रु. दी) ।

परस्य ब्रह्मण इति । विष्णोः सगुणस्य भ्रमाश्रयत्वं ब्रह्मणः निर्दोषत्वञ्च अविरुद्धम् इति शङ्काव्यावृत्त्यर्थम् एवमुक्तम् । निरस्तेत्यादिना अविद्यान्वयानुपपत्तिः उक्ता । अविद्यासम्बन्धे सति निरस्तसमस्तहेयत्वादि अनुपपन्नं स्यात् । महाविभूतेः इत्यनेन जगन्मिथ्यात्वानुपपत्तिः उक्ता । जगतः भगवद्विभूतित्वं न प्रमाणान्तरसिद्धम् । येन निषेधार्थमनुवादः स्यात् । अतः विधीयत एव । विधिस्तु भ्रमं न जनयति । तस्मात् विहितोऽर्थः परमार्थ एव (श्रु. प्र) ।

बाधासहम्—बाधं न सहते । आकारद्वयासिद्धौ सामानाधिकरण्यलक्षणासिद्धेः इति । अविरुद्धं चेति । आकारद्वयाङ्गीकारेऽपि ऐक्यप्रतिपादनम् अविरुद्धम्; सद्वारकत्वादिति । अनन्तरमेवेति । न तु अधिकरणान्तरे इत्यर्थः (श्रु. प्र) ।

---

[1] इत्यवगते–अ.

'इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् ।
बिभेत्यल्पश्रुताद्वेदो मामयं प्रतरिष्यति ॥' (म. भ. आ. प. 1-273)

इति शास्त्रेण, अर्थस्य इतिहास-पुराणाभ्याम् उपबृंहणं कार्यम् इति विज्ञायते। उपबृंहणं नाम—विदितसकलवेदतदर्थानां स्वयोगमहिमसाक्षात्कृतवेदतत्त्वार्थानां वाक्यैः स्वावगतवेदवाक्यार्थव्यक्तीकरणम् । सकल[1]शाखावगतस्य[1] वाक्यार्थस्य अल्पभाग-श्रवणात् दुरवगमत्वेन तेन विना निश्चयायोगात् उपबृंहणं हि कार्यमेव ।

तत्र पुलस्त्य-वसिष्ठवरप्रदानलब्धपरदेवतापारमार्थ्यज्ञानवतः भगवतः पराशरात् स्वावगतवेदार्थोपबृंहणमिच्छन् मैत्रेयः परिपप्रच्छ—

'सोऽहमिच्छामि धर्मज्ञ श्रोतुं त्वत्तो यथा जगत् ।
बभूव भूयश्च यथा महाभाग ! भविष्यति ॥ (वि. पु. 1-1-4)

---

वेदमिति । अयं वेदशब्दः वेदान्तपरः । वेदोपबृंहणभूतेषु धर्मशास्त्रेतिहासपुराणेषु धर्मशास्त्राणि पूर्वभागोपबृंहणानि । इतिहासपुराणानि उपरितनभागोपबृंहणानि इति विभागः । धर्मशास्त्रेषु ब्रह्मप्रतिपादनं कर्मणां तदाराधनरूपत्वज्ञापनार्थम् । इतिहासपुराणेषु कर्मप्रतिपादनं कर्मणां ब्रह्मोपासनाङ्गत्वप्रतिपादनार्थम् । इतिहासपुराणेति पूर्वनिपातः पुराणेभ्यः इतिहासस्य अभ्यर्हितत्वात् । व्यक्तीकरणम्—अज्ञातविशेषैः सह स्वावगतार्थनिष्कर्षः । यथा वेदविहितसन्ध्योपासनादेः शरीरशुद्धिप्रकारदन्तधावनस्नानादिविशेषैः सह निष्कर्षः । एवम् उपनिषद्भागेऽपि (श्रु. प्र)। विदितेति, स्वयोगेति चोक्तषष्ठ्यन्तपदद्वयेन परोक्षा-परोक्षज्ञानद्वयोक्तिः (श्रु. दी)।

पारमार्थ्यज्ञानवतः। अत्र प्राशस्त्ये मतुप् । तच्च रजस्तमःकार्यनिवृत्तिरूपम् । रजस्तमसी हि धर्म-धर्मिविपर्ययधीहेतू । 'अयथावत् प्रजानाति' इत्युक्तेः । पारमार्थ्यधीः तमोनिवृत्तिफलम्। भगवतः—स्वतो ज्ञानवतः (श्रु दी)। सोऽहम्—त्वयैव सर्वविद्यासु शिक्षितपूर्वोऽहम्। महाभागेति। परिपूर्णकृत्यं हि परसंरक्षणम्। किञ्चित्कारमप्यनपेक्ष्य रक्षकः त्वमेवेति भावः ।

---

[1] शाखानुगतस्य—आ.

यन्मयं च जगद्ब्रह्मन् ! यतश्चैतच्चराचरम् ।
लीनमासीत् यथा यत्र लयमेष्यति यत्र च ॥' (वि. पु. 1-1-5)

इत्यादिना ।

अत्र ब्रह्मस्वरूपविशेष-तद्विभूतिभेदप्रकार-तदाराधनस्वरूप फलविशेपाश्च पृष्टाः । ब्रह्मस्वरूपविशेषप्रश्नेषु 'यतश्चैतच्चराचरम्' (वि पु. 1-1-5) इति निमित्तोपादानयोः पृष्टत्वात्, 'यन्मयम्' (वि. पु. 1-1-5) इत्यनेन सृष्टि-स्थिति-लयकर्मभूतं जगत् किमात्मकम् ? इति पृष्टम् । तस्य च उत्तरम् 'जगच्च सः' (वि. पु. 1-1-31) इति । इदं च तादात्म्यम् अन्तर्यामिरूपेण आत्मतया व्याप्तिकृतम् । न तु व्याप्य-व्यापकयोः वस्त्वैक्यकृतम् ; 'यन्मयम्' इति प्रश्नस्य उत्तरत्वात् 'जगच्च सः' इति सामानाधिकरण्यस्य ।

'यन्मयम्' इति मयट् अत्र न विकारार्थः ; पृथक्प्रश्नवैयर्थ्यात् ।

नाऽपि प्राणमयादिवत् स्वार्थिकः ; 'जगच्च सः' इति उत्तरानुपपत्तेः । तदा हि विष्णुरेव इति उत्तरमभविष्यत् । अतः प्राचुर्यार्थ एव

'तत्प्रकृतवचने मयट्' (पा. सू. 5-4-21)

---

यन्मयम्—येन अन्तर्यामिणा धारकेण प्रचुरं जगत् स्थितम् । मयट् प्राचुर्यार्थः । अनेन व्याप्तिः दर्शिता। व्याप्यात् व्यापकप्राचुर्यं हि घटाकाशादौ दृष्टम् । आत्मतया हि व्याप्तिः । आत्मत्वं च धारकत्वम् । अतः अन्तर्यामिकृतसत्तानुवृत्तिलक्षणस्थितिप्रश्नः फलितः । अन्तःप्रविश्य प्रशासनेन धारकत्वं - स्थितिहेतुत्वम् इति हि प्रागेव विशदीकृतम् (श्रु. प्र) ।

इदं च—सामानाधिकरण्यप्रतिपन्नं च। आत्मतयेति । अन्तःप्रविश्य नियन्तृत्वं हि आत्मत्वम्। व्याप्यव्यापकयोः— व्याप्यत्वेन व्यापकत्वेन च श्रुतिसिद्धयोः जगद्ब्रह्मणोः। पृथक्प्रश्नेति। विकारार्थत्वे उपादाने पृष्टं स्यात्। 'यतः' इति पञ्चम्यन्तेन पृष्टत्वात् न च तत् प्रष्टव्यम्। अतो वैयर्थ्यमित्यर्थः। अर्थान्तरसम्भवात् न गोबलीवर्दनयात् सङ्कोचः इति। पदान्तरवैयर्थ्यपरिजिहीर्षया पदान्तरार्थसङ्कोचः—गोबलीवर्दनयः इति हि न्यायविदः।

अतः—स्वार्थिकत्वविकारार्थत्वयोः अनुपपन्नत्वात्। प्रकृतम्--प्रकर्षेण कृतम् — प्रभूतम्—प्रचुरम् (श्रु. प्र) ॥

इति मयट्। कृत्स्नं च जगत् तच्छरीरतया तत्प्रचुरमेव। तस्मात् 'यन्मयम्' इत्यस्य प्रतिवचनं 'जगच्च सः' इति सामानाधिकरण्यम्, जगद्ब्रह्मणोः शरीरात्मभाव-निबन्धनम् इति निश्चीयते।

अन्यथा निर्विशेषवस्तुप्रतिपादनपरे शास्त्रे अभ्युपगम्यमाने, सर्वाण्येतानि, प्रश्न-प्रतिवचनानि न संगच्छन्ते। तद्विवरणरूपं कृत्स्नं च शास्त्रम् न सङ्गच्छते। तथा हि सति 'प्रपञ्चभ्रमस्य किमधिष्ठानम्?' इत्येवंरूपस्य एकस्य प्रश्नस्य, 'निर्विशेषज्ञानमात्रम्' इत्येवंरूपम् एकमेवोत्तरं स्यात्॥

[ सामानाधिकरण्यस्यैक्यपरत्वे विरोधः ]

जगद्ब्रह्मणोः एकद्रव्यत्वपरे च सामानाधिकरण्ये, सत्यसङ्कल्पत्वादिकल्याणगुणैकतानता, निखिलहेयप्रत्यनीकता च [1]बाध्येत[1]; सर्वाशुभास्पदं च ब्रह्म भवेत्। आत्म-शरीरभावे एव इदं सामानाधिकरण्यं मुख्यवृत्तम्, इति स्थाप्यते। अतः—

'विष्णोः सकाशादुद्भूतं जगत्तत्रैव च स्थितम्।
स्थितिसंयमकर्ताऽसौ जगतोऽस्य जगच्च सः॥' (वि. पु. 1-1-31)

इति सङ्ग्रहेणोक्तमर्थम्, 'परः पराणाम्' (वि. पु. 6-?-85) इत्यारभ्य विस्तरेण वक्तुम्, परब्रह्मभूतं भगवन्तं विष्णुं स्वेनैव रूपेण अवस्थितम् 'अविकाराय'

---

बाध्येत;. . .भवेत् इति। जीवगतदोषः प्रकृतिगतदोषश्च ब्रह्मणि प्रसज्यते इति। स्थाप्यते—स्थापयिष्यते। अतः—प्रश्न-प्रतिवचनादिभिः शास्त्रस्य सविभूतिकसगुणवस्तु-परत्वावगमात्, सामानाधिकरण्यस्य विशिष्टवस्तुनि मुख्यवृत्तत्वाच्च। सकाशात्—ससङ्कल्पात्। काशनम्—प्रकाशनम्—सङ्कल्परूपं ज्ञानम्, तद्वतः। तत्र स्थितम्—निष्ठां गतम्—लीनम्। स्वेनैव . . .स्थितम्, न तु प्रकृत्यादिविशिष्टम्। अविकार इति। स्वयं कस्यचित् विकाररूपः कार्यरूपः न भवति, प्रकृतिवत् विकारवांश्च न भवति इत्यर्थः। अनेन अचिद्बद्धमुक्तनित्यानां व्यावृत्तिः।

---

[1] बाध्यते-झ.

(वि. पु. 1-2-1) इति श्लोकेन प्रथमं प्रणम्य, तमेव हिरण्यगर्भ-स्वावतार-शङ्कररूपत्वि-मूर्तिप्रधानकालक्षेत्रज्ञसमष्टिव्यष्टिरूपेण अवस्थितं च नमस्करोति। तत्र 'ज्ञानस्वरूपम्' (वि. पु. 1-2-6) इत्ययं श्लोकः क्षेत्रज्ञव्यष्टयात्मना अवस्थितस्य परमात्मनः [1]स्वभाव-माह[1]। तस्मात् नात्र निर्विशेषवस्तुप्रतीतिः ॥

[ निर्विशेषज्ञानपरत्वे पश्चात्तनप्रश्नोत्तरानुगुणत्वम् ]

यदि निर्विशेष[2]ज्ञानरूप[2]ब्रह्माधिष्ठानभ्रमप्रतिपादनपरं शास्त्रम्, तर्हि—

'निर्गुणस्याप्रमेयस्य शुद्धस्याप्यमलात्मनः।
कथं सर्गादिकर्तृत्वं ब्रह्मणोऽभ्युपगम्यते ॥' (वि. पु. 1-3-1)

इति चोद्यम्,

'शक्तयः सर्वभावानामचिन्त्यज्ञानगोचराः।
यतोऽतो ब्रह्मणस्तास्तु सर्गाद्या भावशक्तयः ॥ (वि. पु. 1-3-2)
भवन्ति तपतां श्रेष्ठ ! पावकस्य यथोष्णता ॥' (वि. पु. 1-3-3)

इति परिहारश्च न घटते। तथा हि सति—निर्गुणस्य ब्रह्मणः कथं सर्गादिकर्तृत्वम्? न ब्रह्मणः पारमार्थिकः सर्गः; अपि तु भ्रान्तिपरिकल्पितः—इति चोद्यपरिहारौ स्याताम् ॥

---

हिरण्यगर्भशङ्करशब्दौ जीवद्वारा भगवत्पर्यन्तौ ॥

न घटते इति। 'सर्गाद्याः भावशक्तयः' इति सर्वशक्तियोगेन चोद्यस्य परिहारात् निर्विशेषपक्षाननुगुणत्वम् इति भावः। अमलात्मत्वम्—अमलस्वभावत्वम्—कर्मसम्बन्धान-र्हत्वम्। अचिन्त्यज्ञानगोचराः—अप्रतर्क्यप्रमितिसिद्धाः। सर्गाद्याः — सर्गादिगोचराः। ब्रह्मणो भावशक्तयः—ब्रह्मणः स्वाभाविक्यः शक्तयः। तथा हि सतीति। निर्विशेषस्य कर्तृत्वाद्यनुपपत्तिचोद्ये कृते कर्तृत्वस्य पारमार्थ्ये सति हि तदनुपपत्तिः। अपरमार्थत्वात् दुर्घटत्वमेव भूषणम् इति परिहारः वक्तव्य इत्यर्थः ॥

---

[1] स्वरूपमाह—अ. [2] ज्ञानस्वरूप- I, इ.

[ प्रश्नतदुत्तरयोः नैजः आशयः ]

उत्पत्त्यादिकार्यम् सत्त्वादिगुणयुक्तापरिपूर्णकर्मवश्येषु दृष्टमिति, सत्त्वादिगुण-रहितस्य परिपूर्णस्य अकर्मवश्यस्य कर्मसम्बन्धानर्हस्य कथं [1]सर्गादि[1]कर्तृत्वम् अभ्यु-पगम्यते ?—इति चोद्यम् ।

दृष्टसकलविसजातीयस्य ब्रह्मणः यथोदितस्वभावस्यैव, जलादिविसजातीयस्य अग्न्यादेः औष्ण्यादिशक्तियोगवत् सर्वशक्तियोगः न विरुध्यते— इति परिहारः ॥

[ वराहचतुःश्लोकीव्याख्यानम् ]

'परमार्थस्त्वमेवैकः' (वि. पु. 1-4-38) इत्याद्यपि न कृत्स्नस्य अपारमार्थ्यं वदति; अपि तु कृत्स्नस्य [2]तदात्मकतया[2], तद्व्यतिरेकेण अवस्थितस्य अपारमार्थ्यम् । तदेव उपपादयति—

'तवैष महिमा येन व्याप्तमेतच्चराचरम् ।' (वि. पु. 1-4-38)

इति । येन त्वया इदं चराचरं व्याप्तम्, अतः त्वदात्मकमेव इदं सर्वम् इति त्वदन्यः कोऽपि नास्ति । अतः सर्वात्मतया त्वमेव एकः परमार्थः । अतः इदमुच्यते— तवैष महिमा, या सर्वव्याप्तिः—इति । अन्यथा 'तवैषा भ्रान्तिः' इति वक्तव्यम् ।

---

अकर्मवश्यस्य—कर्मकृतसुखदुःखभाक्त्वाभाववतः ।

दृष्टेत्यादि । अयं [चोद्यौपयिकः] तर्कः धर्मिग्राहकप्रमाणबाधितः । अग्नित्वे सत्यपि वैद्युताग्नेः जलनिर्वाप्यत्वाभाववत् सर्वविसजातीयस्य ब्रह्मणः सर्वशक्तियोगः उपपद्यते इत्यर्थः । अत एवोक्तम् 'शक्तयः' इत्यादि (श्रु. प्र) ॥

अपितु . . . .अपारमार्थ्यमिति । कृत्स्नस्य ब्रह्मपर्यन्तत्वेन तच्छरीरत्वात्, कृत्स्न-शरीरकं ब्रह्मैव परमार्थः । अतत्पर्यन्तः मिथ्या इत्यर्थः । येन—यस्मात् । त्वदन्यः— अत्वदात्मकः ।

---

[1] सर्गादेः–इ, ख.

[2] तदात्मतया–आः

'जगतः पते त्वम्' इत्यादीनां पदानां लक्षणा च स्यात्, लीलया महीम् उद्धरतः भगवतो महावराहस्य स्तुतिप्रकरणविरोधश्च ।

'यतः कृत्स्नं जगत् ज्ञानात्मना त्वया आत्मतया व्याप्तत्वेन तव मूर्तम्, तस्मात् त्वदात्मकत्वानुभवसाधनयोगविरहिणः 'एतत् केवलदेव-मनुष्यादिरूपम्' इति भ्रान्ति-ज्ञानेन पश्यन्ति' इत्याह 'यदेतद्दृश्यते' (वि. पु. 1-4-39) इति ।

'न केवलं, वस्तुतः त्वदात्मकं जगत् देवमनुष्याद्यात्मकम् इति दर्शनमेव भ्रमः, ज्ञानाकाराणामात्मनां देवमनुष्याद्यर्थाकारत्वदर्शनमपि भ्रमः' इत्याह 'ज्ञानस्वरूपमखि-लम्' (वि. पु. 1-4-40) इति ।

'ये पुनः बुद्धिमन्तः ज्ञानस्वरूपात्मविदः सर्वस्य भगवदात्मकत्वानुभवसाधन-योगयोग्यपरिशुद्धमनसश्च, ते देवमनुष्यादिप्रकृतिपरिणाम[1]विशेषशरीररूपम्[1] [2]इदम् अखिलं[2] जगत् शरीरातिरिक्तज्ञानस्वरूपात्मकम् त्वच्छरीरञ्च पश्यन्ति' इत्याह 'ये तु

---

लक्षणा—अधिष्ठानलक्षणा ।

यत इत्यादि । अब्रह्मात्मकत्वेन स्वतन्त्रतायाः [जगति] प्रत्यक्षसिद्धत्वात् तद्विरुद्धं ब्रह्मपर्यन्तत्वं, शास्त्रं न प्रतिपादयति । 'आदित्यो यूपः' इतिवत्—इति शङ्का अनेन वार्यते। अन्यथासिद्धायाः अपरोक्षरूपाया अपि स्वातन्त्र्यप्रतिपत्तेः, परोक्षरूपापि अनन्यथासिद्धा पार-तन्त्र्यप्रतिपत्तिः बलीयसी । सा च परमात्मप्रतिपत्तिसापेक्षा । तदभावात् तदभावः, इति स्वातन्त्र्यप्रतिपत्तेः अन्यथासिद्धत्वम् । यथा देहात्मभ्रमः अपरोक्षोऽपि परोक्षेण शास्त्रजन्यज्ञानेन बाध्यते, तथा स्वातन्त्र्यभ्रमोऽपि इत्यर्थः ।

न केवलमिति । जगत् इत्यस्यानन्तरम् 'यत्, तत्र' इति शब्दद्वयमध्याहार्यम् । ततश्च—वस्तुतः यत् त्वदात्मकं जगत्, तत्र देवाद्यात्मकत्वदर्शनं भ्रमः—इत्याद्यन्वयः (भा. प्र) ।

अखिलं जगदिति । पूर्वस्मिन् श्लोके अनेन शब्देन चेतनरूपं जगत्, अस्मिंश्च श्लोके अनेन शब्देन अचिद्रूपं जगच्च विवक्षितम् (श्रु. प्र) ।

---

[1] शरीरविशेषम्—अ. [2] अखिलम्—इ.

ज्ञानविदः' (वि. पु. 1-4-41) इति। अन्यथा श्लोकानां पौनरुक्त्यम्, पदानां लक्षणा, अर्थविरोधः, प्रकरणविरोधः, शास्त्रतात्पर्यविरोधश्च ॥

[ आदिभरतचतुःश्लोकीव्याख्यानम् ]

'तस्यात्मपरदेहेषु सतोऽप्येकमयम्' (वि. पु. 2-14-31) इत्यत्र 'सर्वेष्वात्मसु ज्ञानैकाकारतया समानेषु सत्सु, देवमनुष्यादिप्रकृतिपरिणामविशेषरूपपिण्डसंसर्गकृतम् आत्मसु देवाद्याकारेण द्वैतदर्शनम् अतथ्यम्' इत्युच्यते। पिण्डगतम्, आत्मगतमपि द्वैतं न प्रतिषिध्यते। देवमनुष्यादिविविधविचित्रपिण्डेषु वर्तमानं सर्वम् आत्मवस्तु सममित्यर्थः ; यथोक्तं भगवता—

'शुनि चैव श्वपाके च पण्डिताः समदर्शिनः' (भ. गी. 5-18)

'निर्दोषं हि समं ब्रह्म' (भ. गी. 5-19)

इत्यादिषु। 'तस्यात्मपरदेहेषु सतोऽपि' इति देहातिरिक्ते वस्तुनि स्वपरविभागस्य उक्तत्वात्।

'यद्यन्योऽस्ति परः कोऽपि' (वि. पु. 2-13-90) इत्यत्रापि न आत्मैक्यं प्रतीयते; 'यदि मत्तः परः कोऽप्यन्यः' इति एकस्मिन्नर्थे परशब्दान्यशब्दयोः प्रयोगायोगात्।

---

अन्यथा —स्वातन्त्र्यभ्रमः, देहात्मभ्रमः इति विभागाभावे। लक्षणेति। 'परमेश्वर, जगतःपते, तव महिमा, त्वम्' इत्यादिशब्दानां लक्षणा। 'त्वं'शब्दो हि स्वाभिमुखाहमर्थान्तरवाची, अतस्तस्य लाक्षणिकत्वमित्यादि। अर्थविरोधः—प्रत्यक्षादिभिः अबाध्यत्वेन सिध्यतः असत्यत्वे प्रमाणविरोधः, तिरोधानानुपपत्त्यादिः तर्कविरोधः, उभयलिङ्गविरोधश्च। प्रकरणविरोधः—स्तुतिविरोधः 'मुनयः स्तुवन्ति' इति हि प्रकृतम्। शास्त्रतात्पर्यविरोधः— उपक्रमोपसंहाराद्यवान्तरप्रकरणोपक्रमोपसंहारादिविरोधः (श्रु. प्र) ॥

एकमयमिति। मयट् स्वार्थिकः, 'एको व्रीहिः' इतिवत्। पिण्डेति। अविशेषेण भेदनिषेधे सति, कथं न पिण्डभेदो निषिद्धः? तस्य प्रामाणिकत्वाच्चेत्, तुल्यम् इति भावः (श्रु. दी)।

तत्र परशब्दः स्वव्यतिरिक्तात्मवचनः, अन्यशब्दः तस्यापि ज्ञानैकाकारत्वात् अन्याकारत्व-प्रतिषेधार्थः ।

एतदुक्तं भवति—यदि मद्व्यतिरिक्तः कोऽप्यात्मा मदाकारभूत[1]ज्ञाना[1]कारात् अन्याकारः अस्ति, तदा 'अहम् एवमाकारः, अयञ्च अन्यादृशाकारः' इति शक्यते व्यपदेष्टुम् । न चैवमस्ति; सर्वेषां ज्ञानैकाकारत्वेन समानत्वादेव इति ।

'वेणुरन्ध्रविभेदेन' (वि. पु. 2-14-32) इत्यत्राऽपि, आकारवैषम्यम् आत्मनां न स्वरूपकृतम् : अपि तु देवादिपिण्डप्रवेशकृतम् , इति उपदिश्यते; न आत्मैक्यम् । दृष्टान्ते च अनेकरन्ध्रवर्तिनां वाय्वंशानां न स्वरूपैक्यम् ; अपि तु आकारसाम्यमेव । तेषाम् वायुत्वेन एकाकाराणाम् , रन्ध्रभेदनिष्क्रमणकृतो हि षड्जादिसंज्ञाभेदः । एवम् आत्मनां देवादि संज्ञाभेदः[2] । [3]यथा तैजसा[3]प्यपार्थिवद्रव्यांशभूतानां पदार्थानां तत्तद्द्रव्यत्वेनैक्यमेव, न स्वरूपैक्यम् ; तथा वायवीयानामंशानामपि स्वरूपभेदः अवर्जनीयः ॥

[ आदिभरतनिगमनश्लोकार्थः ]

'सोऽहं स च त्वम्' (वि. पु. 2-16-23) इति सर्वात्मनां पूर्वोक्तं "ज्ञानाकारत्वम्" तच्छब्देन परामृश्य, तत्सामानाधिकरण्येन अहम् , त्वम् इत्यादीनामर्थानाम् [4]ज्ञानमेव

---

तत्र परशब्द इति । परशब्देन धर्मिणमनूद्य, तस्य शब्दान्तरोपस्थापिताकारान्तरान्वयः निषिध्यते इत्यर्थः ।

ज्ञानैकाकारत्वेनेति । आकारैक्यं नाम आकाराणां सौसादृश्यम् (श्रु. प्र) ।

वेणुरन्ध्रेति स्वतः एकाकाराणाम उपाधिवशात् अवान्तरभेदसद्भावमात्रे दृष्टान्तोपन्यासः । अन्यथा सर्वथा साधर्म्याभ्युपगमे हि आत्मनः अचित्त्वाकाशकार्यत्वादिकमपि स्यात् । तद्धि प्रमाणान्तरविरोधात् त्यज्यते । तथा दृष्टान्तगतम् आकारान्तरमपि इति भावः ॥

पूर्वोक्तम्—अध्यायचतुष्टयोक्तम् ।

---

[1] ज्ञानैका–इ.
[2] भेदः–आ.
[3] तैजसा–इ, ख, ड, छ., तथा तैजसा–आ.
[4] ज्ञानाकारं–आ, इ, ख. छ, ज.

आकारः' इति उपसंहरन्, 'देवाद्याकारभेदेन आत्मसु भेदमोहं परित्यज' इत्याह। अन्यथा देहातिरिक्तात्मोपदेश्यस्वरूपे 'अहम्, त्वम्, सर्वमेतत् आत्मस्वरूपम्' इति भेदनिर्देशः न घटते। अहं त्वमादिशब्दानाम् उपलक्ष्येण 'सर्वमेतत् आत्मस्वरूपम्' इत्यनेन सामानाधिकरण्यात् उपलक्षणत्वमपि न सङ्गच्छते। 'सोऽपि यथोपदेशमकरोत्' इत्याह, 'तत्याज भेदं परमार्थदृष्टिः' (वि. पु. 2-16-24) इति ॥

[ वाक्यानामद्वैतपरत्वाद्यभावसाधकोपपादनम् ]

कुतश्चैष निर्णयः ?—इति चेत्,

[1]'देहात्मविवेकविषयत्वात्'[1] उपदेशस्य। तच्च—

पिण्डः पृथग् यतः पुंसः शिरः पाण्यादिलक्षणः (वि. पु. 2-13-89)

इति प्रक्रमात्।

'विभेदजनके ज्ञाने' (वि. पु. 6-7-96) इति च न आत्मस्वरूपैक्यपरम्; नापि

---

उपसंहरन् इति। आत्मनां देहव्यावर्तकैकाकारत्वनिगमनपरः अयं श्लोकः इति भावः। **परित्यजेति**। देहगतदेवत्वाद्याकारभेदः आत्मनि भेदमोहहेतुः, तं भेदमोहं परित्यज इत्यर्थः। **उपलक्ष्येण**—उपलक्ष्यवाचिपदेन। **आत्मस्वरूपमिति**। अचित्संसृष्टं देवादिरूपेण प्रतीयमानं सर्वमेतत् आत्मस्वरूपम्—ज्ञानैकाकारः स आत्मा इत्यर्थः (श्रु. प्र) ॥

**तच्चेति**। नित्यानामात्मनां बहुत्वश्रुतेः, बद्धमुक्तशिष्याचार्यसुखदुःखादिव्यवस्थाभिः, देवत्वादिनिषेधकण्ठोक्त्या, मुक्तौ साम्यवचनात्, उदाहृतवचःसामञ्जस्यात्, 'एको व्रीहिः' इत्यादिप्रयोगाच्च जीवप्रकरणं प्रकाराद्वैतपरम्। ब्रह्मप्रकरणेषु तु सामानाधिकरण्येन ऐक्यप्रतिपादनात्, तस्य प्रकारभेदेन एकप्रकारिनिष्ठत्वात्, 'एकः सन् बहुधा' इति प्रकार्येकत्वकण्ठोक्तेः, ऐक्यविधिशेषस्य भेदनिषेधस्य प्रकारिभेदविषयत्वात्, गोबलीवर्दनयाच्च प्रकार्यद्वैतमेवेति (श्रु. दी)।

---

[1] देहात्मविषयत्वात्-इ.

जीवपरयोः। 'आत्मस्वरूपैक्यम्'[1] उक्तरीत्या निषिद्धम्। जीवपरयोरपि स्वरूपैक्यं देहात्मनोरिव न सम्भवति। तथा च श्रुतिः—

'द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते।
तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति ॥' (मुण्ड. उ. 3-1-1)

'ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे 'परार्ध्ये'[2]।
छायातपौ ब्रह्मविदो वदन्ति पञ्चाग्नयो ये च त्रिणाचिकेताः ॥' (कठ. उ. 3-1)

'अन्तःप्रविष्टः शास्ता जनानां सर्वात्मा।' (तै. आर. 3-11-3)

इत्याद्या। अस्मिन्नपि शास्त्रे—

'स सर्वभूतप्रकृतिं विकारान् गुणादिदोषांश्च मुने व्यतीतः।
अतीतसर्वावरणोऽखिलात्मा तेनाऽऽस्तृतं यद् 'भुवना'[3]न्तराले ॥' (वि. पु. 6-5-83)

'समस्तकल्याणगुणात्मकोऽसौ' (वि. पु. 6-5-84)

'परः पराणां सकला न यत्र क्लेशादयः सन्ति परावरेशे।' (वि. पु. 6-5-85)

'अविद्या कर्मसंज्ञाऽन्या तृतीया शक्तिरिष्यते ॥' (वि. पु. 6-7-61)

---

उक्तरीत्या—श्रुतिस्मृत्यर्थापत्ति-लौकिकार्थापत्त्यादिभिः। देहात्मनोरिवेत्यादि। प्रत्यक्त्वपराक्त्वजडत्वाजडत्वनित्यत्वपरिणामित्वादिभिः विरुद्धधर्मैः यथा देहात्मनोः भेदः, तथा जीवपरयोरपि हेयार्हत्वोभयलिङ्गत्व-नियाम्यत्व-नियन्तृत्वादिविरुद्धधर्मैः ऐक्यं हि नोपपद्यते। तथा—विरुद्धधर्मत्वे। चः ह्यर्थः हेतुवाची। वृक्षम्—शरीरम्। पिप्पलम्—कर्मफलम्। अभिचाकशीति—भृशं भाति। ऋतम्—फलम्। गुहाम्—हृदयगुहाम्। छायातपौ—अज्ञसर्वज्ञौ। ब्रह्मविदः—अध्यात्मविदः। पञ्चा . . . . . त्रिणाचिकेताः—कर्मविशेषनिष्ठाः (श्रु. प्र)।

स सर्वभूतेत्यादिना ब्रह्मणः हेयप्रत्यनीकत्व-कल्याणगुणाकरत्वे कथिते।

अविद्येत्यादिना जीवस्य हेयास्पदत्वम् [उक्तम्]।

---

[1] आत्मस्वरूपैक्यं च–इ.
[2] परार्धे–इ, झ.
[3] भवना–पा.

'[1]यया[1] क्षेत्रज्ञ[2]शक्तिः सा[2] वेष्टिता नृप ! सर्वगा ॥' (वि. पु. 6-7-62)

इति भेदव्यपदेशात् ।

'[3]उभयेऽपि[3] हि भेदेनैनमधीयते' (ब्र. सू. 1-2-21)

'भेदव्यपदेशाच्चान्यः' (ब्र. सू. 1-1-22)

'[4]अधिकं तु[4] भेदनिर्देशात्' (ब्र. सू. 2-1-22)

इत्यादि सूत्रेषु च,

'य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद, यस्यात्मा शरीरम्, य आत्मानमन्तरो यमयति' (बृ. उ. मा. पा. 5-7-26)

'प्राज्ञेनात्मना सम्परिष्वक्तः' (बृ. उ. 6-3-21)

'प्राज्ञेनात्मनाऽन्वारूढः' (बृ. उ. 6-3-35)

इत्यादिभिः उभयोः अन्योन्यप्रत्यनीकाकारेण स्वरूपनिर्णयात् ।

नापि साधनानुष्ठानेन निर्मुक्ताविद्यस्य परेण स्वरूपैक्यसम्भवः; अविद्याश्रयत्व-योग्यस्य तदनर्हत्वासम्भवात् । यथोक्तम् –

---

उभयेऽपि इत्यादिसूत्रद्वयस्य विषयवाक्यम्—य आत्मनीति ।

अधिकं तु इत्यस्य विषयवाक्यम्—प्राज्ञेनेत्यादि ।

निर्णयादिति । सूत्रेषु आभिः श्रुतिभिः एवमर्थनिर्णयात् इत्यर्थः (श्रु. प्र) ।

नापीति । न हि कारागतः ततो निर्गतः स्वनिग्राहकानुग्राहकनृपतेः अनन्यः इति भावः (श्रु. दी) । अविद्याश्रयत्वयोग्यत्वमिति अविद्याशब्दः समस्तहेयप्रदर्शनार्थः । आश्रयत्वशब्दः सम्बन्धपरः । हेयसम्बन्धात्यन्ताभावानधिकरणत्वं तद्योग्यत्वम् । तदधिकरणत्वं तदनर्हत्वम् (श्रु. प्र) । तदनर्हत्वेति । 'अनश्नन्नन्यः' इति श्रुत्या परमात्मनः तदनर्हत्वं सिद्धम् । देशकालसंनिकर्षे सत्यपि तदस्पर्शो हि स्वभावसन्निकर्षाभावात् । स्वभावसन्निकर्षाभाव एव हि अयोग्यत्वम् । अतः हेयार्हस्यहेयापगमेऽपि हेयानर्हेण साकं न स्वरूपैक्यं सम्भवति (श्रु. प्र) ।

---

[1] यथा-इ. [2] शक्तिस्तु-इ.
[3] उभये-इ. [4] अधिकं-इ.

'परमात्मात्मनोर्योगः परमार्थ इतीष्यते ।
मिथ्यैतदन्यद्द्रव्यं हि नैति तद्द्रव्यतां यतः ।।' (वि. पु. 2-14-27)

इति ।।

[ जीवस्य मुक्तावपि न स्वरूपैक्यम्, परेण परमसाम्यमेव ]

मुक्तस्य तु तद्धर्मतापत्तिरेव, इति भगवद्गीतासु उक्तम्—

'इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः ।
सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च ।।' (भ. गी. 14-2)

इति । इहापि—

'आत्मभावं नयत्येनं तद्ब्रह्म ध्यायिनं मुने ।
विकार्यमात्मनः शक्त्या लोहमाकर्षको यथा ।।' (वि. पु. 6-7-30)

इति । आत्मभावम्—आत्मनः स्वभावम् । न हि आकर्षकस्वरूपापत्तिः आकृष्यमाणस्य । वक्ष्यति च—

'जगद्व्यापारवर्जं प्रकरणादसंनिहितत्वाच्च' (ब्र. सू. 4-4-17)

---

परमात्मात्मनोरिति । योगशब्दः ऐक्यपरः । अन्यथा 'नैति तद्द्रव्यताम्' इति प्रतिक्षेपानुपपत्तेः । [परमात्मात्मनोः—जीवात्मनः, परमात्मनश्च, परमार्थः योगः—वास्तविकं स्वरूपैक्यम्. इष्यते इति यत्—बुद्ध्या विषयीक्रियते इति यदस्ति, एतत् मिथ्या—भ्रान्तिः । उत्तरोंऽशः उपपादकः ।]

इहापि—योगप्रकरणे संक्षेपकथनारम्भे । [आत्मभावमिति । तत्—ब्रह्म—उपास्यम्, एनं ध्यायिनम्—उक्तोपासनशीलम्, आत्मभावं नयति—आत्मनः स्वभावभूतं प्रकृतिसंबन्धराहित्येन शुद्धत्वं प्रापयति । कीदृशम्? आत्मनः शक्त्या विकार्यम्—बन्धमोक्षयोः ज्ञानसङ्कोचविकासरूपविकारार्हम् । आकर्षकः—वह्निः, विकार्य—लोहम्, आत्मभावम्—स्वस्वरूपं निर्दोषत्वम् । (श्रु. प्र. आशयः) ।] नहीति । आकर्षकस्वरूपापत्तिः आकृष्यमाणस्य इति निर्देशः उक्तसर्वार्थसाधारणः । अग्निसुवर्णदृष्टान्तविवक्षायाम् आकृष्यमाणशब्दः विकार्यपरः (श्रु. प्र) ।

'भोगमात्रसाम्यलिङ्गाच्च' (ब्र. सू. 4-4-21)

'मुक्तोपसृप्यव्यपदेशच्च' (ब्र. सू. 1-3-2)

इति। वृत्तिरपि—

'जगद्व्यापारवर्जं समानो ज्योतिषा' (बो. वृ)

इति। द्रमिडभाष्यकारश्च—

'देवतासायुज्यात् अशरीरस्यापि देवतावत् सर्वार्थसिद्धिः स्यात्' (द्र. भा)

इत्याह। श्रुतयश्च—

'य इहात्मानमनुविद्य व्रजन्ति एतांश्च सत्यान् कामान्,
तेषां सर्वेषु लोकेषु कामचारो भवति' (छां. उ 8-1-6)

'ब्रह्मविदाप्नोति परम्' (तै. उ. आन. 1-1)

'सोऽश्नुते सर्वान् कामान् सह। ब्रह्मणा विपश्चिता' (तै. उ. आन. 1-2)

'एतमानन्दमयमात्मानमुपसंक्रम्य। इमाँल्लोकान् कामान्नी कामरूप्यनुसञ्चरन्'
(तै. उ. आन. 10-5)

'स तत्र पर्येति' (छां. उ. 8-12-3)

'रसो वै सः। रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति।' (तै. उ. आन. 7-1)

'यथा नद्यः स्यन्दमानाः समुद्रे अस्तं गच्छन्ति नामरूपे विहाय।
तथा विद्वान् नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्॥'
(मुण्ड. उ. 3-2-8)

---

ज्योतिः—परं ब्रह्म; 'परंज्योतिरुपसम्पद्य, परो दिवो ज्योतिः' इति श्रुतेः। अशरीरः—मुक्तः; कर्मकृतशरीराभावात्। सिद्धिः—अनुभवः (श्रु. प्र)। तेषामिति अनेन मुक्तबहुत्वम्। परम् आप्नोति—परम् अनुभवति। अनेन जीवपरभेदः। आनन्दीभवति इति आनन्दित्वाकारेण साम्यम्। यथानद्य इति। नदीनां नदीत्वाकार-प्रहाणेन समुद्रसंसर्गात्, वैधर्म्यप्रहाणेन संसर्गः दृष्टान्ते उपजीव्यः। प्राकृतनामरूपप्रहाण-पूर्विका हि परमात्मप्राप्तिः। न च तावता भेदनिवृत्तिः; 'पुरुषमुपैति' इति कर्मकर्तृभावा-वगमात् (श्रु प्र)।

'[1]तदा[1] विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति' (मुण्ड. उ. 3-1-3) इत्याद्याः ॥

[ उपासनं सगुणब्रह्मण एव ]

परविद्यासु सर्वासु सगुणमेव ब्रह्म उपास्यम् । फलं च एकरूपमेव । अतः विद्याविकल्पः, इति सूत्रकारेणैव—

'आनन्दादयः प्रधानस्य' (ब्र. सू. 3-3-11)

'विकल्पोऽविशिष्टफलत्वात्' (ब्र. सू. 3-3-57)

इत्यादिषु उक्तम् । वाक्यकारेण च सगुणस्यैव उपास्यत्वम्, विद्याविकल्पश्च उक्तः—

'युक्तं तद्गुणकोपासनात्' (ब्रं. नं. वा.)

इति । भाष्यकृता व्याख्यातं च—

'यद्यपि सच्चित्तः' (द्र: भा.)

इत्यादिना ।

---

परमं साम्यम् इति । अत्र साम्यशब्दः सादृश्यमेव अभिधत्ते, न त्वैक्यम् । समशब्दस्य सादृश्य एव हि प्रसिद्धिप्राचुर्यम् । मुख्यार्थे सम्भवति हि लाक्षणिकार्थ-स्वीकारो नोपपद्यते (श्र. प्र) ॥

परविद्यासु—ब्रह्मविद्यासु । सर्वासु—परैः सगुणविषयत्वेन, निर्गुणविषयत्वेन चोक्तासु दहरसद्विद्याक्षरविद्यादिषु । आनन्देति । इदं उपास्यस्य सगुणत्वाय । विकल्प इति । इदं प्राप्यस्य सगुणत्वाय । युक्तम्—गुणयुक्तमेव प्राप्यम् । सच्चित्तः—सद्विद्यानिष्ठः ।

यद्यपि सच्चित्तः न निर्भुग्नदैवतं गुणगणं मनसाऽनुधावेत्; तथाऽपि अन्तर्गुणामेव देवतां भजते । तत्राऽपि सगुणैव देवता प्राप्यते इति व्याख्यातम् इत्यर्थः । अस्य च अयमर्थः—अपहतपाप्मत्वादिगुणं दैवताद्विभक्तं यद्यपि दहरविद्यानिष्ठ इव, सद्विद्यानिष्ठः न

---

[1] तथा–पा.

'ब्रह्म वेद ब्रह्मैव भवति' (मुण्ड. उ. 3-2-9)

इत्यत्राऽपि—

'नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्' (मुण्ड. उ. 3-2-8)

'निरञ्जनः परमं साम्यमुपैति' (मुण्ड. उ. 3-1-3)

'परंज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते' (छां. उ. 8-12-2)

इत्यादिभिः ऐकार्थ्यात् प्राकृतनामरूपाभ्यां विनिर्मुक्तस्य निरस्ततत्कृतभेदस्य ज्ञानैकाकारतया ब्रह्मप्रकारता उच्यते। प्रकारैक्ये च तत्त्वव्यवहारः मुख्य एव। यथा "[1]सेयं[1] गौः' इति। अत्राऽपि—

'विज्ञानं प्रापकं प्राप्ये परे ब्रह्मणि पार्थिव।
प्रापणीयस्तथैवात्मा प्रक्षीणाशेषभावनः॥' (वि. पु. 6-7-93)

इति, परब्रह्मध्यानात् आत्मा परब्रह्मवत् प्रक्षीणा[2]शेष[2]भावनः—कर्मभावनाब्रह्मभावनोभयभावनेति भावनात्रयरहितः प्रापणीयः इत्यभिधाय,

---

स्मरेत्। तथापि, स्वरूपानुबन्धित्वात् सकलकल्याणगुणस्य, केनचित् परदेवतासाधारणेन निखिलजगत्कारणत्वादिना उपास्यमानाऽपि देवता, वस्तुस्वरूपानुबन्धिसर्वकल्याणगुणविशिष्टैव उपास्यते ; अतः सगुणमेव ब्रह्म तत्राऽपि प्राप्यमिति सद्विद्या-दहरविद्ययोः विकल्प इत्यर्थः इति (भा. प्र)।

ब्रह्मैव भवति—ब्रह्मपर्यन्तस्वरूपाविर्भाववान् भवति। नामरूपादिति। प्राकृतनामरूपप्रहाणम् अनेनोक्तम्। निरञ्जनः इति साम्यप्रतिपत्त्यर्थम्। परं ज्योतिरित्यादि तस्यैव साम्यस्य स्वाभाविकत्वज्ञापकम्। मुख्य एव—लाक्षणिकगङ्गादिपदवत् न अत्यन्तामुख्यः। न हि मुक्तस्य अपरिच्छिन्नज्ञानानन्दत्वेऽपि जगत्कारणत्वानुगुणगुणबृहत्वं, स्वरूपबृहत्वं वा अस्ति। सेयं गौरिति। आकारैक्येऽपि तत्त्वव्यवहारस्य अत्यन्तामुख्यत्वाभावे दृष्टान्तोऽयम् (श्रु. प्र)।

---

[1] सोऽयम् इ, झ.		[2] शेषकर्म-आ.

'क्षेत्रज्ञः करणी ज्ञानं करणं [1]तस्य वै[1] द्विज ।
निष्पाद्य मुक्ति[2]कार्यं हि[2] [3]कृतकृत्यं[3] [4]निवर्तयेत्[4] ॥' (वि. पु. 6-7-94)

इति करणस्य [5]परब्रह्म[5]ध्यानरूपस्य प्रक्षीणाशेषभावनात्मस्वरूपप्राप्त्या कृतकृत्यत्वेन निवृत्तिवचनात् यावत्सिद्धि अनुष्ठेयम् इत्युक्त्वा,

'तद्भावभावमापन्नः तदाऽसौ परमात्मना ।
भवत्यभेदी भेदश्च तस्याज्ञानकृतो भवेत् ॥' (वि. पु. 6-7-95)

इति मुक्तस्य स्वरूपमाह । तद्भावः—ब्रह्मणो भावः—स्वभावः, [6]न तु स्वरूपैक्यम्[6]; 'तद्भावभावमापन्नः' इति द्वितीयभावशब्दानन्वयात्, पूर्वोक्तार्थविरोधाच्च । यत् ब्रह्मणः प्रक्षीणाशेषभावनत्वम्, तदापत्तिः—तद्भावभावापत्तिः । यदा एवमापन्नः, तदा [7]असौ[7] परमात्मना अभेदी भवति—भेदरहितो भवति ।

ज्ञानैकाकारतया परमात्मना [8]एकप्रकारस्य[8] अस्य तस्माद्भेदः देवादिरूपः । तदन्वयः अस्य कर्मरूपाज्ञानमूलः ; न स्वरूपकृतः । स तु देवादिभेदः परब्रह्मध्यानेन

---

क्षेत्रज्ञ इति । यावत् क्षेत्रज्ञावस्थः तावत्, करणी—उपासकः । तस्य करणं ज्ञानम् [ उपासनम् ] । तत् मुक्तिरूपं कार्यं निष्पाद्यैव निवर्तयेत्, न तु मुक्तेः पूर्वमेव । न हि मुक्तस्य उपासननिवृत्तिः विधेया । अतः यावन्मोक्षम् अनुष्ठेयत्वमुक्तमिति भावः । तद्भावभावेत्यादिश्लोके 'तद्भाव' इति उपमानबहुव्रीहिः । भाष्यस्थतद्भावशब्दः न बहुव्रीहिः; किन्तु तत्पुरुषः । समासे व्याचिख्यासिते सति हि बहुव्रीहिविशिष्टरूपेण पदोपादानम् । तच्छब्द-भावशब्दमात्रस्य व्याचिख्यासितत्वात् । 'तच्छब्देन ब्रह्म, प्रथमभावशब्देन स्वभावश्च उच्यते इत्यर्थः । 'भावो लीला . . . . .स्वभावयोः' इति नैघण्टुकाः (श्रु. प्र) । पूर्वोक्तार्थविरोधाच्चेति । हेयप्रत्यनीकत्व-हेयार्हत्वाद्विरोधः—अर्थविरोधः । एवं शब्दार्थ-पर्यालोचनाभ्यां 'भाव'शब्दस्य स्वभाववाचित्वमुपपादितम् (श्रु. प्र) ।

---

[1] तेन तत्–ज, ड.
[2] कार्यं वै–आ, इ, झ.
[3] कृतकृत्यः–इ.
[4] निवर्तते–आ, ड.
[5] ब्रह्म–आ.
[6] न स्वरूपम्–झ.
[7] अयं–अ, इ.
[8] एकस्वभावस्य–ट.

मूलभूताज्ञानरूपे कर्मणि विनष्टे, हेत्वभावात् निवर्तते इति अभेदी भवति। यथोक्तम्—

'[1]एकस्वरूप[1]भेदस्तु बाह्यकर्मवृतिप्रजः।
देवादि[2]भेदेंऽपध्वस्ते[2] [3]नास्त्यनावरणो[3] हि सः॥' (वि. पु. 2-14-33)

एतदेव विवृणोति—

'विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते।
आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति? ॥' (वि. पु. 6-7-96)

इति। विभेदः—विविधो भेदः—देवतिर्यङ्[4]मनुष्यस्थावरात्मक[4]:। यथोक्तं शौनकेनापि—

'चतुर्विधोऽपि भेदोऽयं मिथ्याज्ञाननिबन्धनः।' (वि. ध. 100-21)

इति। आत्मनि [5]ज्ञानरूपे[5] देवादिरूपविविधभेदहेतुभूतकर्माख्याज्ञाने परब्रह्मध्यानेन आत्यन्तिकनाशं गते सति, हेत्वभावात्, [6]असन्तं[6] परस्मात् ब्रह्मणः आत्मनः

---

एकस्वरूपेति। कर्मैव वृतिः बाह्यम् आन्तरं च। बहिर्विषयप्रावण्यहेतुः बाह्यं कर्म। आत्मप्रावण्यहेतुः आन्तरम्। तदेव वृतिः, तया प्रकर्षेण जातः। बाह्यकर्म, शरीरद्वारकम् एकस्वरूपस्यात्मनः आन्तरं भेदं करोति। द्वारभूतदेवादिशरीरभेदे नष्टे सति आन्तरो भेदः नास्ति। सः–निवृत्तदेवादिभेदः आत्मा, कर्मावरणरहितो हि इत्यर्थः (श्रु. प्र)। मिथ्याज्ञाननिबन्धन इति। मिथ्याज्ञानम् आत्मविषयभ्रान्तिज्ञानम्। तत् कर्मद्वारा उत्तरोत्तरदेवादिभेदहेतुः इत्यर्थः। हेत्वभावात्—कर्मरूपहेत्वभावात्। आत्मनः औपाधिकः भेदः उपाध्यपगमे नश्यति इत्यर्थः। असन्तम्—अपरमार्थम्—अनित्यम्—कादाचित्कम्।

---

[1] एकत्वं रूप–अ.
[2] भेदेऽविध्वस्ते–इ,
[3] नास्त्येवावरणो–पा.
[4] मनुष्यात्मकः–इ.
[5] ज्ञानस्वरूपे–इ, ज.
[6] अनन्तरं–इ.

[1]देवादिरूप[1]भेदम् कः करिष्यति? इत्यर्थः।

'अविद्या कर्मसंज्ञाऽन्या' (वि. पु. 6-7-61)

इति हि अत्रैवोक्तम् ॥

[अद्वैतपरत्वेन पराभिमतगीतोक्तिविवरणम्]

'क्षेत्रज्ञं चापि मां विद्धि' (भ. गी. 13-2)

इत्यादिना [2]अन्तर्यामिरूपेण सर्वस्यात्मतया ऐक्याभिधानम्[2]। अन्यथा—

'क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥' (भ. गी. 15-16)

'उत्तमः पुरुषस्त्वन्यः . . . . . . . ॥' (भ. गी. 15-17)

इत्यादिभिः विरोधः। अन्तर्यामिरूपेण सर्वेषामात्मत्वं तत्रैव भगवता अभिहितम्—

'ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन [3]तिष्ठति[3] ॥' (भ. गी. 18-61)

इति,

'सर्वस्य चाहं हृदि संनिविष्टः ॥' (भ. गी. 15-15)

इति च।

'अहमात्मा गुडाकेश सर्वभूताशयस्थितः।' (भ. गी. 10-20)

इति च तदेवोच्यते। 'भूत'शब्दो हि आत्म[4]पर्यन्तदेहवचन[4]ः। यतः सर्वेषाम् अयम् आत्मा [5]तत एव सर्वेषां[5] तच्छरीरतया पृथगवस्थानं प्रतिषिध्यते—

कः करिष्यति इति। उपाध्यभावादविद्यमानं भेदं क उत्पादयेत्? इत्यर्थः।

अन्यथेति, पराभिमतार्थस्य पूर्वापरविरोधं दर्शयति। अन्तर्यामिरूपेणेति। न केवलम् 'उत्तमः पुरुषस्त्वन्यः' इति भेदप्रतिपादनात्, तद्विरोधेन स्वरूपैक्यपरत्वाभावः, सामानाधिकरण्योपपादकम् अन्तर्यामित्वं कण्ठोक्तमपि इत्यर्थः।

हृद्देशे—हृद्देशस्थे आत्मनि। भूत . . . .वचनः, अस्य तथात्वम् उत्तरार्धेनावगम्यते। 'न हिंस्यात् सर्वा भूतानि' इत्यादिप्रयोगाच्च। यत इति। निषेधस्य विहिततादात्म्यशेषत्वादिति भावः।

---

[1] देवादिरूपम्–इ.

[2] अन्तर्याम्यैक्यविधानम्–इ.

[3] तिष्ठति इति–इ, क, घ, ङ, च, झ, ट.

[4] पर्यन्तवचनः– ,

[5] ततः– .

न तदस्ति विना यत् स्यात्' (भ. गी. 10-39)

इति। भगवद्विभूत्युपसंहारश्चायमिति, तथैव अभ्युपगन्तव्यम्। ततः इदमुच्यते—

'यद्यद्विभूतिमत् सत्त्वं श्रीमदूर्जितमेव वा।
तत्तदेवावगच्छ त्वं मम तेजोंऽशसम्भवम् ॥' (भ. गी. 10-41)
'विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत् ॥' (भ. गी. 10-42)

इति।

अतः शास्त्रेषु न निर्विशेष वस्तुप्रतिपादनमस्ति। नापि अर्थजातस्य भ्रान्तत्व-प्रतिपादनम्। नापि चिदचिदीश्वराणां स्वरूपभेदनिषेधः ॥

---

न तदस्ति विनेत्यादि। अविनाभावशब्दस्य सम्बन्धनियमवाचित्वात् इति भावः। भगवदिति। 'एतां विभूतिं योगं च' इति प्रक्रमात् विभूतिपरत्वमवगम्यते। अतः उपक्रमानुगुण एव उपसंहारः इत्यर्थः। न हि विभूतित्वं विधाय तदेव निषेद्धुं शक्यमिति भावः। विभूतिमत्—नियाम्यवत्। श्रीमत्—भोग्यसमृद्धिमत्। ऊर्जितम्—बलवत्। कल्याणगुणारम्भेषु उद्युक्तम्। तेजः—पराभिभवनसामर्थ्यम्—प्रशासनम्। तेजोंऽश-सम्भवम्—नियमनशक्तमदाज्ञालवाधीनम्।

अत इति। श्रुतियोजनाप्रभृतिप्रतिपादितैः न्यायैः इत्यर्थः। भ्रान्तत्वम्—भ्रान्तिसिद्धत्वम्। स्वरूपभेदेति। चेतनेषु अचिद्धर्मबुद्धिः, परतन्त्रेषु स्वतन्त्रबुद्धिश्च भ्रमः। न तु स्वरूपभेदधीः इत्यभिप्रायः। अचिदुपादानं दृष्टान्ततया (श्रु. प्र)॥

— अविद्यायां सप्तविधाः अनुपपत्तयः —

[ अविद्यादूषणार्थं परोक्तार्थानुवादः ]

यदप्युच्यते—निर्विशेषे स्वयंप्रकाशे वस्तुनि दोषपरिकल्पितम् [1]ईशेशि[1]तव्याद्यनन्तविकल्पं सर्वं जगत्। दोषश्च स्वरूपतिरोधानविविधविचित्रविक्षेपकरी सदसदनिर्वचनीया अनाद्यविद्या। सा च अवश्याभ्युपगमनीया 'अनृतेन हि प्रत्यूढाः' इत्यादिभिः श्रुतिभिः, ब्रह्मणः [2]तत्त्वमस्यादिवाक्य[2]सामानाधिकरण्यावगत-जीवैक्यानुपपत्त्या च।

सा तु न सती; भ्रान्ति-बाधयोः अयोगात्।

नाऽपि असती; ख्याति-बाधयोश्च अयोगात्।

अतः कोटिद्वयविनिर्मुक्ता इयम् अविद्या, इति तत्त्वविदः—इति ॥

[ तत्र आश्रयानुपपत्तिः-(1) ]

तदयुक्तम्; सा हि किमाश्रित्य भ्रमं जनयति?

न तावत् जीवमाश्रित्य; अविद्यापरिकल्पितत्वात् जीवभावस्य।

नापि ब्रह्म आश्रित्य; तस्य [3]स्वयंप्रकाश[3]ज्ञान[4]स्वरूपत्वेन[4] अविद्याविरोधित्वात्। सा हि ज्ञानबाध्या अभिमता।

---

भ्रान्ति . . . अयोगात्—भ्रान्तिविषयत्व-बाधविषयत्वयोः अन्यथानुपपत्तेः ॥

सा हि इति। आश्रयानुपपत्तिवर्णनमिदम्। उत्तरत्र च षट् अनुपपत्तयः उद्भाव्यन्ते। किमाश्रित्येति। न किञ्चिदपि इत्यर्थः।

न तावदिति। जीवे सिद्धे अविद्यासिद्धिः, अविद्यासिद्धौ जीवसिद्धिरित्यन्योन्याश्रयः इत्यर्थः (श्रु. प्र)। सा हीति। ब्रह्मविषयाज्ञानस्य तत्प्रकाशबाध्यत्वात् विरोधः।

---

[1] ईश्वरेशि–आ, इ, ख, ङ, ज, झ.
[2] तत्त्वमस्यादि–आ, इ.
[3] स्वप्रकाश–आ, ख, घ, छ, झ.
[4] रूपत्वेन–इ, झ.

'ज्ञानरूपं परं ब्रह्म तन्निवर्त्यं मृषात्मकम् ।
अज्ञानं चेत् तिरस्कुर्यात् कः प्रभु[1]स्तन्निवर्तने[1] ॥

ज्ञानं ब्रह्मेति चेद्ज्ञानमज्ञानस्य निवर्तकम् ।
ब्रह्मवत् तत्प्रकाशत्वात् तदपि ह्यनिवर्तकम् ॥

ज्ञानं ब्रह्मेति विज्ञानमस्ति चेत् स्यात् प्रमेयता ।
ब्रह्मणोऽननुभूतित्वं त्वदुक्त्यैव प्रसज्यते ॥' (ना. मु. श्लो)

'ज्ञानस्वरूपं ब्रह्म' इति ज्ञानम् तस्याः अविद्यायाः बाधकम् , न स्वरूपभूतं ज्ञानम्—इति चेत् ,

न, उभयोरपि ब्रह्मस्वरूपप्रकाशत्वे सति [2]अन्यतरस्य अविद्याविरोधित्वम्[2], [3]अन्यतरस्य न[3], इति विशेषानवगमात् ।

एतदुक्तं भवति—'[4]ज्ञानस्वरूपं[4] ब्रह्म' [5]इत्यनेन ज्ञानेन[5] ब्रह्मणि यः स्वभावः अवगम्यते, सः ब्रह्मणः स्वयंप्रकाशत्वेन स्वयमेव प्रकाशते [6]इति, अविद्याविरोधित्वे[6] न कश्चिद्विशेषः स्वरूप-तद्विषयज्ञानयोः— इति ॥

---

ज्ञानरूपम्—स्वप्रकाशम् (श्रु. प्र) । मृषात्मकम् इदं हेतुगर्भम् । तत्प्रकाशत्वात्—स्वरूपानतिरिक्तप्रकाशत्वात् (श्रु. दी) । न हि शुक्लभास्वरद्रव्ये गृहीते आप्तवाक्यादिभिः 'शुक्लभास्वरं द्रव्यम्' इत्येतावति शतशः प्रतिपन्नेऽपि रूप्यभ्रमनिवृत्तिः (श्रु. प्र) ।

ज्ञानस्वरूपमित्यादिना द्वितीयश्लोकार्थः ।

ब्रह्म . . . . शत्वे सति—स्वरूपविषयज्ञानत्वे [समाने] सति । विशेषानवगमात्—विषयवैषम्याभावात् । मानधीत्वस्य अप्रयोजकत्वं शुक्लभास्वरज्ञाने दृष्टम् इति ।

एतदित्यादि । सत्यत्वादिकमपि स्वरूपानतिरिक्तमिति स्वभावशब्दस्य भावः । एवम् एकस्य देशद्वयकालद्वयसम्बन्धरूपविषयवैषम्यात् 'सोऽयम्' इति धीः द्वित्वभ्रमविरोधिनी । तदभावात् 'अयम्' इति धीः न विरोधिनी इति फलितम् (श्रु. दी) ॥

---

[1] स्तन्निवर्तकः–ख, ज.
[2] अविशेषात् एकस्य अविरोधित्वम्–इ.
[3] अन्यतरस्याविरोधित्वम्–ङ.
[4] ज्ञानरूपम्–इ, ख. छ. ज.
[5] इत्यनेन इ.
[6] इति, अतः तद्विरोधित्वे–इ.

[ ब्रह्मविषयप्रमाणज्ञानं भ्रमनिवर्तकमिति कल्पस्य दूषणम् ]

किञ्च अनुभवस्वरूपस्य ब्रह्मणः अनुभवान्तराननुभाव्यत्वेन, भवतः न [1]तद्विषयं ज्ञान[1]मस्ति। अतः ज्ञानम् अज्ञानविरोधि चेत्, [2]स्वयमेव विरोधि भवति[2] इति न अस्याः ब्रह्माश्रयत्वसम्भवः। शुक्त्यादयस्तु स्वयाथात्म्यप्रकाशे स्वयम् असमर्थाः स्वाज्ञानाविरोधिनः, [3]तन्निवर्तने च[3] ज्ञानान्तरमपेक्षन्ते। ब्रह्म तु स्वानुभवसिद्धस्वयाथात्म्यम् इति स्वाज्ञानविरोध्येव। तत एव निवर्तकान्तरं च न अपेक्षते ॥

[प्रपञ्चमिथ्यात्वविषयकं ज्ञानं भ्रमनिवर्तकमिति पक्षस्य दूषणम्]

अथोच्येत – ब्रह्मव्यतिरिक्तस्य मिथ्यात्वज्ञानम् अज्ञानविरोधि—इति,

न ; इदं ब्रह्मव्यतिरिक्तमिथ्यात्वज्ञानं, किम् ब्रह्मयाथात्म्याज्ञानविरोधि ? उत प्रपञ्चसत्यत्वरूपाज्ञानविरोधि ? इति विवेचनीयम्।

न तावत् ब्रह्मयाथात्म्याज्ञानविरोधि ; अतद्विषयत्वात्। ज्ञानाज्ञानयोः एकविषयत्वेन हि विरोधः।

प्रपञ्चमिथ्यात्व[4]ज्ञानं[4] तत्सत्यत्वरूपाज्ञानेन विरुध्यते। तेन प्रपञ्चसत्यत्वरूपाज्ञानमेव बाधितमिति, ब्रह्मस्वरूपाज्ञानं तिष्ठत्येव।

---

स्वयमेवेति। अजडत्वादित्यर्थः। असमर्थाः ; जडत्वात् ॥

प्रपञ्चसत्यत्वरूपाज्ञानेति। कथं प्रपञ्चसत्यत्वम् अज्ञानमित्युच्यते ? अज्ञानं हि ज्ञानप्रतिबन्धकम्। न हि प्रपञ्चसत्यत्वं कस्यचित् ज्ञानं प्रतिबध्नाति।—इति चेत्, आच्छादकाज्ञानम् एवंभूतम्। प्रपञ्चसत्यत्वं तत्प्रतिभासश्च विक्षेपरूपाज्ञानमिति परैः अभ्युपगमात् तथोक्तिः। प्रपञ्चसत्यत्व-तत्प्रतिभासरूपाज्ञानविरोधि इत्यर्थः।

विरोधः इति। विरोधे हि निवृत्तिः इत्यर्थः।

---

[1] तद्विषयज्ञान–ख, घ, ज, झ.

[2] अज्ञानमेव न सम्भवति–इ.

[3] तन्निवर्तने–इ, झ.

[4] ज्ञानं च–झ.

ब्रह्मस्वरूपाज्ञानं नाम तस्य [1]सद्वितीयत्वमेव[1]। तत्तु तद्व्यतिरिक्तस्य मिथ्यात्वज्ञानेन निवृत्तम्। स्वरूपं तु स्वानुभवसिद्धम्—इति चेत्,

न; ब्रह्मणः अद्वितीयत्वं स्वरूपं स्वानुभवसिद्धमिति, तद्विरोधि सद्वितीयत्व-[2]रूपाज्ञानं[2], तद्बाधश्च न स्याताम्।

अद्वितीयत्वं धर्मः—इति चेत्,

न; अनुभव[3]स्वरूपस्य[3] ब्रह्मणः अनुभाव्यधर्मविरहस्य भवतैव [4]प्रतिपादित-त्वात्[4]। अतः ज्ञान[5]स्वरूपस्य[5] ब्रह्मणः विरोधादेव न अज्ञानाश्रयत्वम्॥

[अविद्यया ब्रह्मणः तिरोधानानुपपत्तिः (2)]

किं च—अविद्यया प्रकाशैकस्वरूपं ब्रह्म तिरोहितम्—इति वदता, स्वरूपनाश एव उक्तः स्यात्। प्रकाशतिरोधानं नाम प्रकाशोत्पत्तिप्रतिबन्धः, विद्यमानस्य विनाशो वा। प्रकाशस्य अनुत्पाद्यत्वाभ्युपगमेन प्रकाशतिरोधानं प्रकाशनाश एव॥

[अविद्यास्वरूपानुपपत्तिः (3)]

अपि च निर्विषया निराश्रया स्वप्रकाशा इयम् अनुभूतिः स्वाश्रयदोषवशात् अनन्ताश्रयम् अनन्तविषयमात्मानम् अनुभवति, इत्यत्र, किम् अयं स्वाश्रयदोषः परमार्थभूतः, उत अपरमार्थभूतः? इति विवेचनीयम्।

---

सद्वितीयत्वमेव—सद्वितीयत्वज्ञानमेव।

विरोधादेव—पूर्वोक्तादेव (श्रु. प्र)॥

प्रतिबन्धः—प्रागभावः। विनाशः—प्रध्वंसः। अतः स्वरूपातिरेकिप्रकाश-तिरोधानाख्यावस्थाद्वयानभ्युपगमात् स्वरूपनाश एव तिरोधानं स्यादित्यर्थः॥

---

[1] सद्वितीयत्वज्ञानमेव-आ.
[2] स्वरूपाज्ञानं-आ, इ, ज्ञानम्-आ.
[3] रूपस्य-आ, इ.
[4] उपपादितत्वात्-इ, झ.
[5] रूपस्य-इ, ख, घ, छ, ट.

न तावत् परमार्थः ; अनभ्युपगमात् ।

नाऽपि अपरमार्थः ; तथा सति हि द्रष्टृत्वेन वा, दृश्यत्वेन वा, दृशित्वेन वा अभ्युपगमनीयः ।

न तावत् दृशिः ; दृशिस्वरूपभेदानभ्युपगमात् । भ्रमाधिष्ठानभूतायास्तु साक्षाद्दृशेः माध्यमिकपक्ष[1]प्रसङ्गेन[1] अपारमार्थ्यानभ्युपगमाच्च । द्रष्टृ-दृश्ययोः, तदवच्छिन्नायाः दृशेश्च काल्पनिकत्वेन, मूलदोषान्तरापेक्षया अनवस्था स्यात् ।

अथ—एतत्परिजिहीर्षया परमार्थसती अनुभूतिरेव ब्रह्मरूपा दोषः—इति चेत्,

ब्रह्मैव चेत् दोषः, प्रपञ्चदर्शनस्यैव तत् मूलं स्यात् ; किं प्रपञ्चतुल्याविद्यान्तर-परिकल्पनेन ? ब्रह्मणः दोषत्वे सति, तस्य नित्यत्वेन अनिर्मोक्षश्च स्यात् । अतः यावत् ब्रह्मव्यतिरिक्तपारमार्थिकदोषानभ्युपगमः ; न तावत् भ्रान्तिः उपपादिता भवति ॥

---

न परमार्थः इति । परमार्थत्वे हि अद्वैतहानिप्रसङ्गः ।

नापि अपरमार्थः इति । अपरमार्थत्वात् मूलदोषान्तरापेक्षया अनवस्था स्यात् इति दूषणम् कोटित्रयस्यापि साधारणम् ।

दृशि . . . गमात्—अनवच्छिन्नदृशिद्वयानभ्युपगमात् – अनवच्छिन्नाधिष्ठानभूतदृशि-स्वरूपापेक्षया अतिरिक्तायाः दोषभूतायाः अपरमार्थभूतायाः अनवच्छिन्नदृशेः अनभ्युपगमात् इत्यर्थः (श्रु. प्र, भा. प्र) । काल्पनिकत्वेन—अपरमार्थत्वेन । इदं दोषान्तरापेक्षायां हेतुः ।

एतत्परिजिहीर्षया—अपरमार्थत्वे अनवस्था, परमार्थत्वे अद्वैतहानिः इत्येतद्दोष-परिजिहीर्षया । अनुभूतेरेव दोषत्वात् न अद्वैतहानिः । तस्याः पारमार्थ्यात् न अनवस्था, इति च भावः ।

अतः—प्रतिशिरः अभिहितैः दूषणैः । ब्रह्मव्यतिरिक्तेति अनिर्मोक्षप्रसङ्गपरिहाराय । पारमार्थिकेति अनवस्थापरिहाराय ।

---

[1] सम्भवेन–ट.

[ अनिर्वचनीयत्वानुपपत्तिः (4) ]

अनिर्वचनीयत्वं च किमभिप्रेतम् ?

सदसद्विलक्षणत्वम्—इति चेत्,

तथाविधस्य वस्तुनः प्रमाणशून्यत्वेन अनिर्वचनीयतैव स्यात् ।

एतदुक्तं भवति—सर्वं हि वस्तुजातं प्रतीतिव्यवस्थाप्यम् । सर्वा च प्रतीतिः सदसदाकारा । सदसदाकारायास्तु प्रतीतेः सदसद्विलक्षणं विषयः, इति अभ्युपगम्यमाने, सर्वम् सर्वप्रतीतेः विषयः स्यात्—इति ॥

[ अविद्यायां प्रमाणानुपपत्तिप्रदर्शनार्थं पूर्वपक्षोपन्यासः ]

अथ स्यात्—वस्तुस्वरूपतिरोधानकरम् आन्तरबाह्यरूपविविधाध्यासोपादानम् सदसदनिर्वचनीयम् अविद्याऽज्ञानादिपदवाच्यम् वस्तुयाथात्म्यज्ञाननिवर्त्यं ज्ञानप्रागभावातिरेकेण भावरूपमेव किञ्चित् वस्तु प्रत्यक्षानुमानाभ्यां प्रतीयते । तदुपहितब्रह्मोपादानश्च अविकारे स्वप्रकाशचिन्मात्रवपुषि तेनैव तिरोहितस्वरूपे प्रत्यगात्मनि अहंकार-ज्ञान-ज्ञेयविभागरूपः अध्यासः । तस्यैव अवस्थाविशेषेण अध्यासरूपे जगति ज्ञानबाध्यसर्परजतादिवस्तु-तत्तज्ज्ञानरूपाध्यासोऽपि जायते । कृत्स्नस्य मिथ्यारूपस्य

---

अनिर्वचनीयत्वम्—विद्वत्सन्निधौ दुरुपपादत्वम् ।

सर्वं . . . . स्यात्—'सदसद्विलक्षणम्' इति या प्रतीतिः तत्रापि सदसदेव विषयः स्यात् । प्रतीत्यनुगुणं हि नीलपीतादि व्यवस्थाप्यते । तस्मात् तादृश्याः प्रतीतेः तादृश एव विषयः, न तु सदसद्विलक्षणः इति (श्रु. प्र) ॥

तदुपहितेति । अविद्याश्रयेत्यर्थः (श्रु.प्र) । अविकारे इति । अविकारत्वात्, स्वप्रकाशत्वात्, प्रत्यक्त्वाच्च विकारास्पदजडपराग्रूपपरिणामः न उपपद्यते इत्यर्थः । तेनैव—अध्यासहेतुनैव । अहङ्कारः अज्ञानं च आन्तराध्यासः । ज्ञेयं बाह्याध्यासः । तस्यैव—दोषस्यैव । अवस्थाविशेषेण—कादाचित्कावस्थाभेदेन, रज्जुसर्पाद्यध्यासः । अध्यासरूपे—अध्यस्तरूपे । कर्मणि घञ् ।

तदुपादानत्वं च, मिथ्याभूतस्य अर्थस्य [1]मिथ्याभूतमेव कारणं[1] भवितुमर्हति इति हेतुबलात् अवगम्यते ॥

[ अविद्याविषये प्रत्यक्षस्य प्रमाणता ]

कारणाज्ञानविषयं प्रत्यक्षं तावत् 'अहम् अज्ञः, माम् अन्यं च न जानामि' इति अपरोक्षावभासः। अयं तु न ज्ञानप्रागभावविषयः; स हि षष्ठप्रमाणगोचरः। अयं तु 'अहं सुखी' इतिवत् अपरोक्षः।

अभावस्य [2]प्रत्यक्षत्वा[2]भ्युपगमेऽपि अयमनुभवः न [3]आत्मज्ञानाभावविषयः[3]; अनुभववेलायामपि ज्ञानस्य विद्यमानत्वात्। अविद्यमानत्वे, ज्ञानाभावप्रतीत्यनुपपत्तेश्च।

एतदुक्तं भवति—'अहम् अज्ञः' इत्यस्मिन् अनुभवे 'अहम्' इति आत्मनः अभावधर्मितया, ज्ञानस्य च प्रतियोगितया अवगतिः अस्ति वा, न वा?

---

हेतुबलात्—कार्य-कारणयोः सजातीयत्वदर्शनलक्षणात्। सुवर्णजातीयस्य हि सुवर्णमेव उपादानं दृष्टं, तद्वदिति भावः (श्रु. प्र) ॥

अहम् अज्ञ इति। 'अहम् अज्ञः' इत्यस्य विवरणम् 'माम् अन्यं च न जानामि' इति। अज्ञः इति अज्ञानस्वरूपकीर्तनम्। 'न जानामि' इति आच्छादनरूपकार्यकथनम्। कारणाज्ञानशब्देन कार्यरूपाज्ञानव्यावृत्तिः। षष्ठप्रमाणगोचरः—प्रत्यक्षागोचरः। अयं तु . . . . अपरोक्ष इति। परोक्षप्रमाणानि प्रत्यक्षव्यतिरिक्तानि। तस्मात् परोक्षप्रमाणविषयः प्रागभावः न अपरोक्षप्रमाणविषयभूतमज्ञानं भवितुमर्हति इत्यर्थः (श्रु. प्र, श्रु. दी)।

अनुभवेत्यादि। ज्ञानस्य विद्यमानत्वे ग्राह्याभावात्, अविद्यमानत्वे च ग्राहकाभावात् न तदभावप्रतीतिः इत्यर्थः।

---

[1] मिथ्याकारणं-इ. [2] प्रत्यक्षगोचरत्वा—ड.

[3] आत्मज्ञानविषयः -ट. आत्मनि ज्ञानाभावविषयः—इ, ङ, छ, ज, झ.

अस्ति चेत्, विरोधादेव [1]न ज्ञानाभावानुभव[1]सम्भवः ।

नो चेत्, धर्मि-प्रतियोगिज्ञानसव्यपेक्षः ज्ञानाभावानुभवः सुतरां न [2]सम्भवति[2] ।

ज्ञानाभावस्य अनुमेयत्वे, अभावाख्यप्रमाणविषयत्वे च इयम् अनुपपत्तिः समाना । अस्य अज्ञानस्य भावरूपत्वे, धर्मि-प्रतियोगिज्ञानसद्भावेऽपि विरोधाभावात्, अयम् अनुभवः भावरूपाज्ञानविषय एव अभ्युपगन्तव्यः—इति ।

[ भावरूपाज्ञानस्य साक्षिचैतन्यविरोधशङ्का-परिहारौ ]

ननु च भावरूपमपि अज्ञानं, वस्तुयाथात्म्यावभासरूपेण साक्षिचैतन्येन विरुध्यते !

मैवम्; साक्षिचैतन्यं न वस्तुयाथात्म्यविषयम्, अपि तु अज्ञानविषयम् । अन्यथा मिथ्यार्थावभासानुपपत्तेः । न हि अज्ञानविषयेण ज्ञानेन अज्ञानं निवर्तते, इति [3]न विरोधः[3] ।

---

ज्ञानस्य चेति । अयं ज्ञानशब्दः आत्म-घटादिविषयज्ञानसाधारणः (श्रु. प्र) ।

ननु .....विरुध्यत इति । वस्तुयाथात्म्यज्ञाननिवर्त्यम् अज्ञानं वस्तुयाथात्म्याभासंरूपेण साक्षिचैतन्येन विरुध्यते इति चोद्याशयः (श्रु. प्र) । [साक्षिचैतन्यम्—अविद्याविशिष्टं ब्रह्म । अत्र 'साक्षिपदस्वारस्यात् साक्षिचैतन्यस्य वस्तुयाथात्म्यावगाहित्वम् अवश्यंभावि' इत्यभिमानेन तद्रूपतोक्तिः । निवर्तकसद्भावे निवर्त्यसत्ता न घटते - इति विरोधोक्तिः ।]

न वस्तु ...... विषयमिति । याथात्म्यशब्देन निष्कृष्टम् अद्वितीयत्वलक्षणं स्वरूपं विवक्षितम् (श्रु. प्र) । [ तच्च स्वरूपं प्रमाण(वृत्ति)ज्ञानस्यैव विषयः, न साक्षिचैतन्यस्य—इति याथात्म्यविषयकत्वाभावात्, अज्ञानविषयकत्वाच्च भावरूपाज्ञानेन साकं न विरोधः—इति पूर्वोक्तविरोधपरिहारः इति भाव·] । अन्यथा—स्वसाक्षिस्वरूपप्रकाशमात्रस्यैव वस्तुयाथात्म्यविषयत्वे (अज्ञानविषयत्वाभावे वा) । न हीति । न हि रजतविषयकज्ञानेन रजतं निवर्त्यम्; साधकस्य बाधकत्वायोगात् । इत्यर्थः (श्रु. प्र. भा. प्र) ।

---

[1] अज्ञानानुभव—च·          [2] सम्भवति इति—आ·

[3] विरोधः—ट·

ननु च इदं भावरूपमपि अज्ञानं विषयविशेषव्यावृत्तमेव साक्षिचैतन्यस्य विषयो भवति। स विषयः [1]प्रमाणाधीन[1]सिद्धिः इति, कथमिव साक्षिचैतन्येन अस्मदर्थव्यावृत्तम् अज्ञानं विषयीक्रियते ?

नैष दोषः; सर्वमेव वस्तुजातं ज्ञाततया अज्ञाततया वा साक्षिचैतन्यस्य विषयभूतम्। तत्र जडत्वेन ज्ञाततया सिध्यत एव प्रमाणव्यवधानापेक्षा। अजडस्य तु प्रत्यग्वस्तुनः स्वयं सिध्यतः न प्रमाणव्यवधानापेक्षा इति, सदैव

---

[ ननु चेत्यादि, विषयविशेषव्यावृत्तम्—अवच्छेदकविशेषज्ञाप्यस्ववैलक्षण्यवत्। दृश्यविशेषस्य घटादेः विशेषणतया प्रतीयमानं यत् तद्गतरूपादिकं, तदपि दृश्यमेव। ⌈तथा साक्षिचैतन्यस्य—अविद्याप्रतिबिम्बितचितः दृश्यं यत् 'अहं माम् अन्यं च न जानामि' इत्येवं रूपम् अज्ञानं, तत्र आश्रयतया विषयतया वा विशेषणीभूतस्य अस्मदर्थब्रह्मादेश्च स्वयंप्रकाशत्वेन साक्षिचैतन्याविषयत्वम्। तथा च विशेषणांशस्य साक्षिचैतन्याविषयत्वे विशिष्टस्याऽपि अविषयत्वम् इति, कथं साक्षिचैतन्यम् अज्ञानविषयकम्? ततश्च अज्ञानाविषयकं साक्षिचैतन्यं कुतो वा अज्ञानाविरोधि? इति शङ्काशयः।] विषयविशेषः—अवच्छेदकविशेषः [आश्रयः विषयो वा]। स विषयः—अवच्छेदकविशेषः [अस्मदर्थरूपः] (श्रु. प्र)।

[प्रमाणाधीनसिद्धिः—प्रमाण(वृत्ति)ज्ञाने एव विषयीभवन्, न तु साक्षि-चैतन्ये। अस्मदर्थव्यावृत्तम्—'देवदत्तज्ञानं घटज्ञानं' इति देवदत्ताद्याश्रय-घटादिविषयसम्बन्धेनेव 'अहम् अज्ञः' इति अज्ञानाश्रयतया, 'माम् न जानामि' इति अज्ञानविषयतया च अवच्छेदकीभूतः इतराश्रितात्, इतरविषयकाच्च ज्ञानात् स्वाश्रितस्य स्वविषयकस्य ज्ञानस्य व्यावर्तकः यः अस्मदर्थः, तेन स्वसम्बन्धात् इतरविलक्षणतया ज्ञापितम्।]

सर्वमेवेति। अस्मदर्थोऽपि सर्वशब्दवाच्यान्तर्भूतः। ज्ञाततया अज्ञाततया वा—ज्ञानान्तरसापेक्षं तन्निरपेक्षं वा। साक्षिचैतन्यस्य विषयभूतमिति। साक्षिचैतन्येन प्रतिभातीत्यर्थः। अस्मदर्थस्य साक्षिचैतन्यविषयत्वम् औपचारिकम्; स्वयंप्रकाशस्य स्वस्य विषयत्वायोगात्। जडस्य स्वयंप्रकाशत्वायोगात् प्रमाणाधीनसिद्धि सत्, तत् दृश्यविशेषणं भवति।

---

[1] प्रमाणानधीन—ङ.

[1]अज्ञानस्य व्यावर्तकत्वेन[1] अवभासः युज्यते। तस्मात् न्यायोपबृंहितेन प्रत्यक्षेण भावरूपमेव अज्ञानं प्रतीयते ॥

[ भावरूपस्याज्ञानस्य अनुमानतः सिद्धिशङ्का ]

तदिदं भावरूपम् अज्ञानम् अनुमानेनाऽपि सिध्यति—

विवादाध्यासितं प्रमाणज्ञानम्—स्वप्रागभावव्यतिरिक्त-स्वविषयावरण-स्वनिवर्त्य-स्वदेशगतवस्त्वन्तरपूर्वकम्; अप्रकाशितार्थप्रकाशकत्वात्, अन्धकारे प्रथमोत्पन्नप्रदीप-प्रभावत्—इति।

---

असदर्थस्तु स्वयंप्रकाशतया स्वयमेव सिद्ध्यन् अज्ञानावच्छेदकः इत्यर्थः। दृश्यावच्छेदकत्वात् दृश्यम् इति चोद्यम्। तत् जडत्वप्रयुक्तम् इति सोपाधिकम्—इति परिहारः। तस्मात्—अभावरूपत्वपक्षे उक्तविरोधात्, भावरूपत्वपक्षे तदभावाच्च। न्यायोपबृंहितेनेति। पक्ष-द्वयेऽपि विरोध-तदभावरूपन्यायानुगृहीतेनेत्यर्थः ॥

[तदिदम्—सदसद्विलक्षणत्वात् अनिर्वचनीयतया निर्णीतम् 'अज्ञः' इति गृह्यमाणम्] विवादाध्यासितमिति। अनेन धारावाहिकज्ञानीयोत्तरोत्तरविज्ञानेषु न बाधशङ्का। प्रमाणेति विशेषणम् ब्रह्मस्वरूपे ज्ञाने बाधितत्वशङ्कावारणाय। प्रमाणपदम् प्रमापरम्। [महावाक्य-जन्यशाब्दापरोक्षज्ञानं मिथ्याज्ञाननिवर्तकत्वेनाभिमतं प्रमाज्ञानमित्यर्थः। स्वम्—प्रमाणज्ञानम्, स्वदेशः—बद्धो जीवः, तद्गतं वस्त्वन्तरम्—अविद्यापदवाच्यम् अज्ञानम्, तत् पूर्वम्—स्वप्राक्काले भवं यस्य, तत् तत्पूर्वकम्। तत्—अज्ञानं, स्वेन—प्रमाणज्ञानेन, निवर्त्यम्—स्वसमानाधिकरणाभावप्रतियोगि, स्वविषयस्य ब्रह्मात्मैकत्वस्य, आवरणम्—तिरोधायकम्; प्रमाणज्ञानोदयपर्यन्तं ब्रह्मात्मैकत्वज्ञानानुदयात्। स्वप्रागभावात्—प्रमाणज्ञानप्रागभावात्, व्यतिरिक्तम्—भिन्नम्, इति। अप्रकाशितोऽर्थः—एकत्र ब्रह्मात्मैकत्वम्। अपरत्र दृश्यमानं घट-पटादि। अन्धकारे इति। अत्र स्वम्—प्रथमोत्पन्नप्रदीपप्रभा, स्वदेशः—अपवरकादिः। तद्गतं वस्त्वन्तरम्—अन्धकारः, स च स्वेन—प्रभया निवर्त्यः; प्रभोत्पत्त्यनु-पदमेव तत्र अन्धकारनाशात्। तथैव अन्धकारः स्वविषयस्य—प्रभाप्रकाश्यस्य घटादेः,

---

[1] अज्ञानव्यावर्तकत्वेन—पा.

आलोकाभावमात्रं वा, रूपदर्शनाभावमात्रं वा तमः, न [1]द्रव्यान्तरम्[1]। तत् कथं भावरूपाज्ञानसाधने निदर्शनतया उपन्यस्यते?—इति चेत्,

उच्यते—बहुलत्व-विरलत्वाद्यवस्थायोगेन, रूपवत्तया च उपलब्धेः द्रव्यान्तरमेव तमः इति निरवद्यम्—इति॥

[ भावरूपाज्ञाननिरासारम्भः, तत्र निवर्त्य-निवर्तकविरोधश्च ]

अत्रोच्यते—'अहम् अज्ञः' 'माम् अन्यं च न जानामि' इत्यत्र, उपपत्तिसहितेन केवलेन च प्रत्यक्षेण न भावरूपम् अज्ञानं प्रतीयते। यस्तु—ज्ञानप्रागभावविषयत्वे विरोधः उक्तः, स हि भावरूपाज्ञानेऽपि तुल्यः।

विषयत्वेन, आश्रयत्वेन [2]च[2] अज्ञानस्य व्यावर्तकतया प्रत्यगर्थः प्रतिपन्नो वा, अप्रतिपन्नो वा?

प्रतिपन्नश्चेत्, तत्स्वरूपज्ञाननिवर्त्यं तदज्ञानं तस्मिन् प्रतिपन्ने, कथमिव तिष्ठति?

---

आवरणभूतः—प्रकाशप्रतिबन्धकः। स्वप्रागभावापेक्षया—प्रभाप्रागभावापेक्षया, व्यतिरिक्तः—भिन्नः इति।] स्वप्रागभावं, स्वोत्पादकादृष्टं, स्वप्रतिबन्धकादृष्टम्, विषयगताम्, अज्ञाततां च व्युदसितुं क्रमेण विशेषणानि (भा. प्र)। प्रमाणज्ञानेन अज्ञाने निरस्ते वेद्यगतचैतन्यम् अभिव्यक्तं भवति इति हि तत्परिपाटी। अभिव्यक्तिप्रागभावस्य विषयावरणत्वं प्रकाशविरोधित्वम्, न तु तत्प्रतिबन्धकत्वम्।

द्रव्यान्तरमिति। तमः खलु चलं नीलं परापरविभागवत्।
प्रसिद्धद्रव्यवैधर्म्यान्नवभ्यो भेत्तुमर्हति॥ इति।

अत्र विद्यमानपरापरशब्दार्थः बहुलत्व-विरलत्वशब्देनोक्तः। रूपवत्तया इति पदेन नील-शब्दार्थः। इति निरवद्यमिति—प्रमाणसिद्धत्वेन, तर्कबाधानुपपत्त्या च निरवद्यमिति॥

केवलेनेति दृष्टान्ततयोक्तम्। उपपत्तिदूषणे कृते केवलप्रत्यक्षं न साधकमित्यर्थः। प्रतिपन्नशब्देन भासनमुच्यते। तत्स्वरूपेति। स्वरूपज्ञानम्—स्वरूपावभासः। स्वतो वा,

---

[1] द्रव्यम्-इ, छ, ज, झ. [2] वा-इः

अप्रतिपन्नश्चेत्, व्यावर्तकाश्रयविषयज्ञानशून्यम् अज्ञानं कथमनु[1]भूयेत[1] ?

[ विशदाविशदविभागात् अविरोधशङ्का, तत्परिहारश्च ]

अथ—विशदस्वरूपावभासः अज्ञानविरोधी। अविशदस्वरूपं तु प्रतीयते इति, आश्रयविषयज्ञाने सत्यपि न अज्ञानानुभवविरोधः—इति,

हन्त तर्हि ज्ञान[2]प्रागभावोऽपि[2] विशदस्वरूपविषयः। आश्रयप्रतियोगिज्ञानं तु अविशदस्वरूपविषयम् इति न कश्चिद्विशेषः; अन्यत्राभिनिवेशात्॥

[ अज्ञानस्य भावरूपत्वेऽपि सापेक्षता ]

भावरूपस्य अज्ञानस्यापि हि 'अज्ञानम्' इति सिध्यतः प्रागभावसिद्धाविव

---

प्रमाणान्तरेण वा स्वरूपावभासनिवर्त्यम् इत्यर्थः। 'इदं रजतम्' इत्यत्र 'इदं शुक्लभास्वरम्' इत्येवंरूपप्रमाणज्ञानशते जातेऽपि भ्रमानिवृत्तिदर्शनात् प्रमाणज्ञानत्वम् अप्रयोजकम् इति सिद्धवत्कारेण एतदुक्तम्।

व्यावर्त.... शून्यम्—आश्रयतया, विषयतया च व्यावर्तकः प्रत्यगर्थः; तदवभासशून्यम् (श्रु. प्र)॥

हन्त तर्हीति। प्रत्यगर्थस्य प्रमाणज्ञानेन अवभासः विशदावभासः। सः स्वपक्षेऽपि तुल्यः इत्याशयः। विशदेति। विशदस्वरूपम्, [विषयः—] अवच्छेदकं यस्य, सः विशदस्वरूपविषयः। विशदस्वरूपस्य प्रागभावावच्छेदकत्वं स्वविषयज्ञानद्वारा। ज्ञानः प्रागभावोऽपि स्वविषयप्रागभावावच्छिन्नः इत्यर्थः। ज्ञानस्य च अभावावच्छेदकत्वं प्रतियोगितया। विशदस्वरूपज्ञानं प्रागभावप्रतियोगि इति यावत्। अविशदेति। आश्रयज्ञानस्य अविशदस्वरूपविषयत्वम्—अविशदप्रत्यगर्थविषयत्वम्। प्रतियोगिज्ञानस्य अविशदस्वरूपविषयत्वम्—अभावप्रतियोगिभूताविशदज्ञानविषयत्वम्। आश्रयतया भासमानं प्रत्यगर्थस्वरूपम् अविशदम्; प्रतियोगितया स्मर्यमाणं ज्ञानम् इदानीमविशदविषयत्वात्, अविद्यमानत्वाच्च अविशदमिति तदुभयविषयं ज्ञानम् अविशदस्वरूपविषयम्। तच्च विद्यते। विशदज्ञानं तु अविद्यमानम् अभावप्रतियोगि इति न विरोधः इति (श्रु. प्र)॥

---

[1] भूयते-इ.   [2] प्रागभावः-इ.

सापेक्षत्वम् अस्त्येव । तथाहि—'अज्ञानम्' इति ज्ञानाभावः, तदन्यः, तद्विरोधी वा । त्रयाणामपि तत्स्वरूपज्ञानापेक्षा अवश्याश्रयणीया ।

यद्यपि तमस्स्वरूपप्रतिपत्तौ प्रकाशापेक्षा न विद्यते ; तथापि 'प्रकाशविरोधि' इत्यनेन आकारेण प्रतिपत्तौ प्रकाशप्रतिपत्त्यपेक्षा अस्त्येव । भवदभिमताज्ञानं न कदाचित् स्वरूपेण सिध्यति, अपि तु अज्ञानमित्येव । तथा सति ज्ञानाभाववत् तदपेक्षत्वं समानम् ॥

[ अज्ञानस्य ज्ञानप्रागभावतासमर्थनम् ]

ज्ञानप्रागभावस्तु भवतापि अभ्युपगम्यते, प्रतीयते च इति, उभयाभ्युपेतः ज्ञानप्रागभाव एव 'अहम् अज्ञः, माम् अन्यं च न जानामि' इत्यनुभूयते इति अभ्युपगन्तव्यम् ॥

[ अज्ञः इति प्रत्यक्षस्य भावरूपाज्ञानविषयत्वे प्रतिकूलतर्कः ]

नित्यमुक्तस्वप्रकाशचैतन्यैकस्वरूपस्य ब्रह्मणः अज्ञानानुभवश्च न सम्भवति ; स्वानुभवस्वरूपत्वात् ।

---

अभ्युपगम्यते इति । 'अहमज्ञः' इति प्रतिपन्नस्य अभावरूपत्वे हि विप्रतिपत्तिः । न तु अभावानभ्युपगमः । अन्यथा प्रमाणाज्ञानस्य प्रागभावाभावात् अनादित्वेन तन्निरसनीयभावरूपाज्ञानानुदयप्रसङ्गात् । अतः ज्ञानाभावः त्वयाऽभ्युपगतः इति । प्रतीयते चेति । लोके तत्तज्ज्ञानाभावविवक्षया 'ज्ञानं नाऽस्ति' इति व्यवहारदर्शनादिति । अप्रतिपन्ने च विवक्षानुपपत्तेरिति (श्रु. प्र) ॥

नित्येति । इदं पदं हेतुगर्भम् । नित्यमुक्तत्वम्—परमार्थतो दोषासंस्पृष्टत्वम् । अतः परमार्थदोषो न सम्भवति । अज्ञानेति, अपरमार्थपरानुभवोऽपि न सम्भवति इत्यल हेतुः । स्वानुभवेति, अविद्यानिवृत्तिदशायाम् अनुवर्तमानम् अविद्यावभासप्रत्यनीकं स्वानुभवैकस्वभावत्वं हेतुतया विवक्षितम् । न तु भ्रमवेलायामपि विद्यमानम् स्वयंप्रकाशत्वमात्रम् (श्रु. प्र) ॥

स्वानुभवस्वरूपमपि तिरोहित[1]स्वरूपम्[1] अज्ञानम् अनुभवति—इति चेत्,

किमिदं तिरोहितस्वरूपत्वम्?

अप्रकाशितस्वरूपत्वम्—इति चेत्,

स्वानुभवस्वरूपस्य कथम् अप्रकाशितस्वरूपत्वम्?

स्वानुभवस्वरूपस्याऽपि अन्यतः अप्रकाशितस्वरूपत्वम् [2]उपपद्यते[2]—इति चेत्,

एवं तर्हि प्रकाशाख्यधर्मानभ्युपगमेन प्रकाशस्यैव स्वरूपत्वात्, अन्यतः स्वरूपनाश एव स्यात्, इति पूर्वमेवोक्तम् ॥

[भावरूपाज्ञानविषयत्वे दूषणान्तरम्]

किञ्च ब्रह्मस्वरूपतिरोधानहेतुभूतम् [3]एतत् अज्ञानं[3] स्वयम् अनुभूतं सत् ब्रह्म तिरस्कारोति, ब्रह्म तिरस्कृत्य स्वयं तदनुभवविषयो भवति, इति अन्योन्याश्रयणम्।

अनुभूतमेव तिरस्करोति—इति चेत्,

यदि अतिरोहितस्वरूपमेव ब्रह्म अज्ञानम् अनुभवति! तदा तिरोधानकल्पना '[4]निष्प्रयोजना[4]' स्यात्, अज्ञानस्वरूपकल्पना च; ब्रह्मणः अज्ञानदर्शनवत् अज्ञानकार्यतयाऽभिमतप्रपञ्चदर्शनस्यापि सम्भवात्।

---

अन्योन्येति। अपरमार्थत्वात् न सत्तया तिरस्कारकम्, अपि तु प्रतीयमानतयेति, अनुभवपूर्वकत्वं तिरस्कारस्य; अतिरस्कृतस्य स्वानुभवस्वरूपस्य ब्रह्मणः अज्ञानानुभवासम्भवात् तिरस्कारपूर्वकोऽनुभवः इति (श्रु. प्र)।

ब्रह्मण इत्यादि। यथा अतिरोहितस्वरूपस्याऽपि अपरमार्थभूताज्ञानानुभवसम्भवः, तथा अपरमार्थभूतप्रपञ्चानुभवोऽपि अतिरोहितस्य सम्भवति इति, तदर्था तिरोधानकल्पना, तदर्था आच्छादकाविद्याकल्पना च निष्फलेत्यर्थः (श्रु. प्र)।

---

[1] स्वस्वरूपं-आ, इ, ग, छ, ज, ट. स्वस्वरूपं तं-पा.

[2] आपद्यते-इ, च, छ, ज, झ, ञ. [3] एवाज्ञानं-इ.

[4] निष्फला-क.

किं च—ब्रह्मणः अज्ञानानुभवः किं [1]स्वतः[1], अन्यतो वा ?

स्वतश्चेत्, अज्ञानानुभवस्य स्वरूपप्रयुक्तत्वेन अनिर्मोक्षः स्यात्; अनुभूतिस्वरूपस्य ब्रह्मणः अज्ञानानुभवस्वरूपत्वेन, मिथ्यारजतबाधकज्ञानेन रजतानुभवस्याऽपि निवृत्तिवत्, निवर्तकज्ञानेन अज्ञानानुभूतिरूपब्रह्मस्वरूपनिवृत्तिर्वा ।

अन्यतश्चेत्, किं तत् अन्यत् ?

अज्ञानान्तरं—इति चेत्, अनवस्था स्यात् ।

ब्रह्म तिरस्कृत्यैव स्वयम् अनुभवविषयो भवति—इति चेत्,

तथासति इदम् अज्ञानम् काचादिवत् स्वसत्तया ब्रह्म तिरस्करोति इति, ज्ञानबाध्यत्वम् अज्ञानस्य न स्यात् ।

अथ—इदमज्ञानम् स्वयमनादि ब्रह्मणः स्वसाक्षित्वम्, ब्रह्मस्वरूपतिरस्कृतिं च युगपदेव करोति । अतः न अनवस्थादयः दोषाः—इति,

नैतत्; स्वानुभव[2]स्वरूपस्य ब्रह्मणः[2] स्वरूपतिरस्कृतिमन्तरेण साक्षित्वापादनायोगात् ।

---

[स्वरूपप्रयुक्तत्वेन—स्वभावनिबन्धनत्वेन । इतराप्रयोज्यत्वेनेति यावत् ।] स्वतःपक्षे दूषणद्वयम्—अनिर्मोक्षः, ब्रह्मस्वरूपनिवृत्तिश्च । रजतानुभवस्याऽपि इति अपिशब्देन रजतस्य च निवृत्तिः सूचिता ।

अन्यतःपक्षे अनवस्था दोषः ।

तिरस्कृत्येति । एवं सति सत्तया तिरस्कारकम्, न प्रतीयमानतया इति स्यात् । तदानीं काचादिवत् परमार्थत्वेन ज्ञाननिवर्त्यत्वं न सिध्यति इति । [काचः—दृष्टिमान्द्यहेतुः नेत्रदोषः] (भा. द) ।

अथेति । तिरस्कारस्य अज्ञानानुभवस्य च यौगपद्यशङ्केयम् ।

स्वानुभवेति । इदं हेतुगर्भविशेषणम् । स्वानुभवस्वरूपत्वस्य स्वाभाविकत्वेन, परानुभवः हेतुना विना नोपपद्यते इत्यर्थः (श्रु. प्र) । आपादनायोगादिति । यौगपद्ये

---

[1] स्वतो वा—आ.    [2] स्वरूपस्य—ख, ज.

हेत्वन्तरेण तिरस्कृतम्—इति चेत्,

तर्हि अस्य अनादित्वम् अपास्तम्। अनवस्था च पूर्वोक्ता।

अतिरस्कृतस्वरूपस्यैव साक्षित्वापादने—ब्रह्मणः स्वानुभवैकतानता च न स्यात्॥

[ पूर्वोक्तविशदाविशदावभासदूषणम् ]

अपि च—अविद्यया ब्रह्मणि तिरोहिते, तत् ब्रह्म न किंचिदपि प्रकाशते? उत किञ्चित् प्रकाशते?

पूर्वस्मिन् कल्पे—प्रकाशमात्रस्वरूपस्य ब्रह्मणः अप्रकाशे, तुच्छतापत्तिः असकृदुक्ता।

उत्तरस्मिन् कल्पे—सच्चिदानन्दैकरसे ब्रह्मणि कोऽयमंशः तिरस्क्रियते? को वा प्रकाशते?

---

तिरोधेः—अनुभवं प्रति पूर्वभावाभावात् न हेतुत्वमिति, परानुभवस्य अहेतुकतया स्वरूपप्रयुक्तत्वे, स्वानुभवस्वरूपत्वं च न स्यादिति साक्षित्वापादनानुपपत्तिः (श्रु. दी)।

[हेत्वन्तरेणेति। तिरस्कारकत्वेनाभिमतात् अज्ञानादतिरिक्तेन हेतुनेत्यर्थः।]

अनादित्वमपास्तमिति। तिरोधानपूर्वकानुभवात्पूर्वं स्वरूपेण सत्त्वाभावात् अनादित्वहानिः इत्यर्थः। अनवस्थोक्तिः ज्ञानानिवर्त्यत्वस्यापि उपलक्षणम्; अनन्तरपूर्वोक्तिः।

[एकताननेति। 'एकतानोऽनन्यवृत्तिः एकाग्रैकायनावपि' इति अमरः (3-1-79)।] चकारात् अनिर्मोक्षादिरपि (भा. द)॥

अपि चेति। विशदाविशदावभासस्यैव दूषणमुच्यते अनेन।

पूर्वस्मिन्निति। पूर्वोक्तदूषणातिदेशोऽयम्। [तुच्छतेति। स्वरूपस्यैव नाशादिति]

उत्तरस्मिन्निति। सत्-चित्-आनन्दादिशब्दानामपि स्वरूपमात्रपरत्वेनाभ्युपगमात् तिरस्कृतातिरस्कृतविभागः अनुपपन्नः इत्यर्थः। कोऽयमिति। अंशभेदः वक्तुमशक्यः इति।

निरंशे निर्विशेषे प्रकाशमात्रे वस्तुनि आकारद्वयासम्भवेन तिरस्कारः प्रकाशश्च युगपत् न सङ्गच्छेते ।

अथ—सच्चिदानन्दैकरसं ब्रह्म अविद्यया तिरोहितस्वरूपम् अविशदमिव लक्ष्यते —इति,

प्रकाशमात्रस्वरूपस्य विशदता, अविशदता वा किं रूपा ?

एतदुक्तं भवति—यः सांशः सविशेषः प्रकाशविषयः, तस्य सकलावभासः विशदावभासः । कतिपयविशेषरहितावभासश्च अविशदावभासः । तत्र य आकारः अप्रतिपन्नः, तस्मिन् अंशे प्रकाशाभावादेव प्रकाशावैशद्यं न विद्यते । यश्च अंशः प्रतिपन्नः, तस्मिन्नंशे तद्विषयप्रकाशः विशद एव । अतः सर्वत्र प्रकाशांशे अवैशद्यं न सम्भवति । विषयेऽपि स्वरूपे प्रतीयमाने तद्गतकतिपयविशेषाप्रतीतिरेव अवैशद्यम् । तस्मात् अविषये निर्विशेषे प्रकाशमात्रे ब्रह्मणि—स्वरूपे प्रकाशमाने [1]तद्गतकतिपय[1]-विशेषा[2]प्रतिपत्ति[2]रूपावैशद्यं नाम अज्ञानकार्यम् न [3]सम्भवति—इति[3] ॥

[ विशदाविशदावभासस्यैव मुखान्तरेण दूषणम् ]

अपि च इदम् अविद्याकार्यम् अवैशद्यं तत्त्वज्ञानोदयात् निवर्तते, न वा ?

अनिवृत्तौ, अपवर्गाभावः ।

---

प्रकाशमात्रे—अविषयभूते । युगपदिति । न हि त्वया कालभेदेन प्रकाश-तिरस्कारौ उच्येते, अपि तु युगपदेव । तदानीमंशभेदाभावात् तौ न सङ्गच्छेते इति ।

किं रूपेति—अनुपपन्ना इत्यर्थः ।

प्रकाशाभावादिति । धर्म्यभावात् धर्माभावः इत्यर्थः । विषयेऽपीति । एकस्मिन् वस्तुनि कतिपयांशस्य, कतिपयाकारस्य वा अनवभासः—समुदितरूपस्य अवैशद्यम् । न तु तत्रापि प्रकाशमानांशस्य इत्यर्थः (श्रु. प्र) । स्वरूपे प्रकाशमाने इत्यादेः पूर्वत्र 'ब्रह्मणि' इत्यत्र न अन्वयः, अपि तु उत्तरत्रैवेति । अज्ञानकार्यमवैशद्यं ब्रह्मणि न सम्भवति इति । कतिपयविशेषाप्रतिपत्तिशब्दः कतिपयांशाप्रतिपत्तेरपि उपलक्षणार्थः ।

---

[1] कतिपय-ख, ध. [2] प्रतीति—पा.

[3] सम्भवति—पा.

निवृत्तौ च, वस्तु किं रूपम्?—इति विवेचनीयम्।

विशदस्वरूपम्—इति चेत्,

तत् विशदस्वरूपं प्राक् अस्ति, न वा?

अस्ति चेत्, अविद्याकार्यम् अवैशद्यम्, तन्निवृत्तिश्च न स्याताम्!

नो चेत्, मोक्षस्य कार्यतया अनित्यता स्यात्!

[दूषणान्तराणि]

अस्य अज्ञानस्य आश्रयानिरूपणादेव असम्भवः पूर्वमेव उक्तः। अपि च अपरमार्थदोषमूलभ्रमवादिना निरधिष्ठानभ्रमासम्भवोऽपि दुरुपपादः; भ्रमहेतुभूतदोष-दोषाश्रयत्ववत् अधिष्ठानापारमार्थ्येऽपि भ्रमोपपत्तेः। [1]ततश्च[1] सर्वशून्यत्वमेव स्यात्॥

---

न स्यातामिति। विशदस्वरूपस्य अविद्याविरोधित्वात् इति भावः।

मोक्षस्य—मुक्तस्वरूपस्य [विशदस्वरूपस्य]। अनित्यतेति। भावरूपत्वे सति कार्यं हि अनित्यम्। वैशद्यं च भावरूपम्। अतः परमते त्वयोक्तदूषणं तवैवापततीत्यर्थः। प्राक् असतः पश्चात् उत्पन्नस्य वैशद्यस्य अनित्यत्वप्रसङ्गः कालात्ययापदिष्टः [बाधितः]; शास्त्रेण तस्य नित्यतया प्रतिपादितत्वात् इति चेत्, तदा ब्रह्मणः सविशेषत्वं स्यात् इत्यभिप्रायः॥

आश्रयेति। पूर्वोक्ता आश्रयानुपपत्तिः प्रतिकूलतर्क इत्यर्थः (श्रु. प्र)। अपि चेत्यादि। स्वरूपानादितया, प्रवाहानादितया, दुर्घटतया, स्वपरनिर्वाहकतया वा अनवस्थापरिहारः अधिष्ठानेऽपि तुल्यः। अधिष्ठानापारमार्थ्यं न दृष्टं चेत्, दोषमृषात्वमपि न दृष्टमिति भावः (श्रु. दी)। भ्रमोपपत्तेरिति। यथा दोष-दोषाश्रयत्वादेः अपारमार्थ्येऽपि भ्रमः सम्भवति, तद्वत् अधिष्ठानापारमार्थ्येऽपि भ्रमः सम्भवतीति। [ततश्चेति। ततश्च—अधिष्ठानापारमार्थ्येऽपि भ्रमोपपत्तितश्च। सर्वेति। सर्वभ्रमाधिष्ठानतया किंचन आवश्यकमिति खलु ब्रह्माङ्गीकारः। निरधिष्ठानभ्रमोपपत्तौ सर्वशून्यत्वमेव॥]

---

[1] इतश्च—आ.

[ उक्ताज्ञाने अनुमानप्रमाणदूषणम् ]

यदुक्तम्—अनुमानेनाऽपि भावरूपम् अज्ञानं सिद्ध्यति—इति,

तदयुक्तम्; अनुमानासम्भवात्।

ननु उक्तमनुमानम्!

सत्यमुक्तम्, दुरुक्तं तु तत्; अज्ञानेऽपि अनभिमताज्ञानान्तर[1]साधनेन[1] विरुद्धत्वात् हेतोः। तत्र अज्ञानान्तरासाधने, हेतोः अनैकान्त्यम्। साधने च, तत् अज्ञानम् अज्ञानसाक्षित्वं निवारयति। ततश्च अज्ञानकल्पना निष्फला स्यात्॥

[ अनुमाने दूषणान्तरम् ]

दृष्टान्तश्च साधनविकलः; दीपप्रभायाः अप्रकाशितार्थप्रकाशकत्वाभावात्। सर्वत्र ज्ञानस्यैव हि प्रकाशकत्वम्; सत्यपि दीपे ज्ञानेन विना विषयप्रकाशाभावात्।

---

अज्ञानान्तरेति। अज्ञानविषयकाज्ञानान्तरेत्यर्थः। विरुद्धत्वात्—अभ्युपेत-सिद्धान्तविरोधिहेतुवचनरूपात् न्यायसूत्रे प्राचां संमतात् विरुद्धत्वात्; न तु साध्याभावसाधक-हेतुत्वरूपात्। एतत्सूचनायैव अनभिमतेति। अनुमेयम् अज्ञानमेव; तस्यैव साध्य-त्वात्। अत एव अनुमितेः अप्रकाशितार्थप्रकाशकत्वम्। अनुमेयाज्ञानावारकं च अज्ञानान्तरं साधनीयम्। अत्रानुमितौ हेतोः अप्रकाशितार्थप्रकाशकत्वस्य सत्त्वे साध्याभावे व्यभिचारः। साध्यसत्त्वे उक्तं विरुद्धत्वमिति। निवारयतीति। यत् प्रथमाज्ञान-प्रकाशकत्वं [साक्षित्वरूपं] चैतन्यस्य, तन्निवारकमेव स्यात् द्वितीयाज्ञानम् इत्यर्थः (भा. द. आशयः)। ततश्चेति। मृषार्थः न सत्तया कार्यकृत्, इति तिरोधानरूपकार्यकरत्वाभावात् नैष्फल्यमित्यर्थः (श्रु. दी)॥

साधनविकल इति। [हेतुशरीरे यत् प्रकाशकत्वम्] तत् साक्षात् प्रकाशकत्वरूप-मिति कल्पे दूषणमिदम्। ज्ञानस्यैव हि इति। उक्तं प्रकाशकत्वं परम्परया इति कल्पे हेतोः

---

[1] साधने—पा.

इन्द्रियाणामपि ज्ञानोत्पत्तिहेतुत्वमेव, न प्रकाशकत्वम्। प्रदीपप्रभायास्तु चक्षुरिन्द्रियस्य ज्ञानमुत्पादयतः, विरोधितमोनिरसनद्वारेण उपकारकत्वमात्रमेव। प्रकाशकज्ञानोत्पत्तौ व्याप्रियमाणचक्षुरिन्द्रियोपकारकहेतुत्वमपेक्ष्य, दीपस्य प्रकाशकत्वव्यवहारः।

न अस्माभिः ज्ञानतुल्यप्रकाशकत्वाभ्युपगमेन दीपप्रभा निदर्शिता; अपि तु [1]ज्ञानस्येव[1] स्वविषयावरण[2]निरसनपूर्वक[2]प्रकाशकत्वम् अङ्गीकृत्य—इति चेत्,

न; नहि विरोधिनिरसनमात्रं प्रकाशकत्वम्; अपि तु अर्थपरिच्छेदः। व्यवहारयोग्यतापादनम् इति यावत्। तत्तु ज्ञानस्यैव। यदि उपकारकाणामपि अप्रकाशितार्थप्रकाशकत्वम् अङ्गीकृतम्, तर्हि इन्द्रियाणाम् उपकारक[3]तमत्वेन[3] अप्रकाशितार्थप्रकाशकत्वम् अङ्गीकरणीयम्। तथा सति तेषां स्वनिवर्त्यवस्त्वन्तरपूर्वकत्वाभावात्, हेतोः अनैकान्त्यम्—इति, अलमनेन॥

---

पक्षे [अज्ञाने] असिद्धिः फलितेति भावः। इन्द्रियाणामिति। साक्षाद्वा, परम्परया वा प्रकाशकत्वमात्रम् इति कल्पे इन्द्रियेषु अनैकान्त्यम्; तेषां स्वनिवर्त्यवस्त्वन्तरपूर्वकत्वाभावात्, साक्षाद्वा, परम्परया वा प्रकाशकयोः अन्यतरत्वात् तेषाम्।

अपि तु इति। उक्तं प्रकाशकत्वं स्वविषयावरणनिरासकत्वरूपम् इति पक्षोद्भावनमिदम्। निरसनपूर्वकेति। निरसनद्वारकेत्यर्थः।

नहीति। ज्ञानस्य विषयावरणनिरसनरूपप्रकाशकत्वं न ह्यस्ति। तद्धि साध्यम्, न सम्प्रतिपन्नम्। ततश्च साध्याविशिष्टता (श्रु. प्र)। व्यवहारेति परिच्छेदशब्दस्य परिमितिपरत्वशङ्काव्यावृत्तये। व्यवहारयोग्यता—व्यवहारप्रतिसम्बन्धित्वम् (श्रु. प्र)॥

---

[1] ज्ञानस्यैव—पा. [2] निरसनरूप-इ.

[3] त्वेन

[ भावरूपाज्ञानानुमानस्य प्रतिकूलतर्कपराहतिः ]

प्रतिप्रयोगाश्च—

1. विवादाध्यासितम् अज्ञानम्—न ज्ञानमात्रब्रह्माश्रयम्; अज्ञानत्वात्, शुक्तिकाद्यज्ञानवत्। ज्ञात्राश्रयं हि तत्।

2. विवादाध्यासितम् अज्ञानम्—न [1]ज्ञानमात्रब्रह्मावरणम्[1]; अज्ञानत्वात्, शुक्तिकाद्यज्ञानवत्। विषयावरणं हि तत्।

3. विवादाध्यासितम् अज्ञानम्—न ज्ञाननिवर्त्यम्; ज्ञानविषयानावरणत्वात्। यत् ज्ञाननिवर्त्यम् अज्ञानम्, तत् ज्ञानविषयावरणम्। यथा शुक्तिकाद्यज्ञानम्।

4. ब्रह्म—न अज्ञानास्पदम्; ज्ञातृत्वविरहात्, घटादिवत्।

5. ब्रह्म—न अज्ञानावरणम्; ज्ञानाविषयत्वात्। यत् अज्ञानावरणम्, तत् ज्ञानविषयभूतम्। यथा शुक्तिकादि।

---

प्रतिप्रयोगाः—प्रतिकूलतर्काः। तर्कस्याऽपि व्याप्तिमूलत्वात् प्रयोगाः इत्युक्तम्। स्वदेशगतत्व-स्वविषयावरणत्व-स्वनिवर्त्यत्वानां प्रतिकूलमनुमानत्रयं यथाक्रमम् अज्ञानम् पक्षीकृत्योच्यते।

1. विवादाध्यासितम्—ब्रह्माश्रयम्, अतदाश्रयम् इति विवादास्पदम्। ततश्च शुक्त्याद्यज्ञानव्यावृत्तिः। तद्धि जीवाश्रयम्। अप्रामाणिकमपि भावरूपमज्ञानं, ज्ञानमात्रं ब्रह्म च अभ्युपगम्य प्रतिकूलतर्काः उच्यन्ते। ज्ञात्राश्रयमिति। एवं व्याप्तिः दर्शिता। अज्ञानत्वे, ज्ञानानाश्रयत्वप्रसङ्गः इत्युक्तं भवति। अज्ञानं चेत्, ज्ञानं नाश्रयेत (श्रु. प्र, भा. प्र)।

2. विषयावरणं हीति। अज्ञानत्वे, ज्ञानानावरणत्वप्रसङ्गः इत्यर्थः।

3. अनावरणत्वादिति। ज्ञेयानावरणत्वे, ज्ञानानिवर्त्यत्वप्रसङ्गः इत्यर्थः।

4. ब्रह्मेत्यादि। अथ ब्रह्म पक्षीकृत्य प्रतिकूलतर्कत्रयमुच्यते। न अज्ञानेति। अज्ञानाश्रयत्वे, ब्रह्मणः ज्ञातृत्वप्रसङ्गः इत्यर्थः।

5. न अज्ञानावरणमिति। ब्रह्मणः अज्ञानावरणत्वे, ज्ञेयत्वप्रसङ्गः इत्यर्थः।

---

[1] ज्ञानावरणम्–ज्ञ.

6. ब्रह्म—न ज्ञाननिवर्त्याज्ञानम्; ज्ञानाविषयत्वात्। यत् ज्ञाननिवर्त्याज्ञानम्, तत् ज्ञानविषयभूतम्। यथा शुक्तिकादि।

7. विवादाध्यासितम् प्रमाणज्ञानम्—स्वप्रागभावातिरिक्ताज्ञानपूर्वकं न भवति; प्रमाणज्ञानत्वात्, भवदभिमताज्ञानसाधनप्रमाणज्ञानवत्।

8. ज्ञानम्—न वस्तुनो विनाशकम्; शक्तिविशेषोप[1]बृंहणविरहे[1] सति ज्ञानत्वात्। यत् वस्तुनो विनाशकम्, तत् शक्तिविशेषोप[2]बृंहितं ज्ञानम्[2], अज्ञानं च दृष्टम्: यथा ईश्वर-योगिप्रभृतिज्ञानम्। यथा च मुद्गरादि।

9. भावरूपम् अज्ञानम्—न ज्ञानविनाश्यम्; भावरूपत्वात्, [3]घटादिवत् इति[3] ॥

---

6. न ज्ञानेति। [ज्ञानेन निवर्त्यम्—ज्ञाननिवर्त्यम्, ज्ञाननिवर्त्यम् अज्ञानं यस्य, तत्—ज्ञाननिवर्त्याज्ञानम्।] ब्रह्मणः ज्ञाननिवर्त्याज्ञानत्वे, ज्ञेयत्वप्रसङ्गः इत्यर्थः।

7. विवादेत्यादि। अथ प्रमाणज्ञानं पक्षीकृत्य प्रागभावव्यतिरिक्तत्वस्य प्रतिकूलस्तर्कः। स्वप्रागभावेति। प्रमाणज्ञानत्वे, प्रागभावातिरिक्ताज्ञानपूर्वकत्वाभावप्रसङ्गः इत्यर्थः। यद्वा अनुमानमेवेदम्। धारावाहिकज्ञानेषु प्रथमस्य पक्षत्वम्, उत्तरोत्तरज्ञानानां सपक्षत्वमपि हि उपपद्यते।

8. ज्ञानं न वस्तुनः इति। [अनेन] व्यतिरेक्यनुमानमुक्तम्। यत् वस्तुनः इति। व्यतिरेकव्याप्तिं द्विधा दर्शयत्यनेन। 'शक्तिविशेषोपबृंहणविरहे सति ज्ञानत्वात्' इति विशिष्टो हेतुः। तत्र शक्तिविशेषानुपबृंहितज्ञानव्यतिरिक्तत्वाविशेषात् शक्तिविशेषोपबृंहितं ज्ञानम्, तदनुपबृंहितम् अज्ञानं च द्वयमपि व्यतिरेकव्याप्तिभूमिरिति उभयत्र व्याप्तिर्दर्शिता (श्रु. प्र)।

9. भावरूपम् इत्यादिना च प्रसङ्गः (श्रु. दी)। भावरूपत्वे ज्ञानमात्रनिवर्त्यत्वं न स्यादित्यर्थः ॥

---

[1] बृंहितज्ञानविरहे—ख. घ, ज.
[2] बृंहितज्ञानम्—पा.
[3] घटादिवत्—इ.

[ अन्तिमे प्रतिकूलतर्के व्याप्तिभङ्गशङ्कापरिहारौ ]

अथोच्येत—बाधकज्ञानेन पूर्वज्ञानोत्पन्नानां भयादीनां विनाशो दृश्यते—इति,

नैवम्; न हि ज्ञानेन तेषां विनाशः; क्षणिकत्वेन तेषां स्वयमेव विनाशात्, कारणनिवृत्त्या च पश्चादनुत्पत्तेः। क्षणिकत्वं च तेषाम्—ज्ञानवत् उत्पत्तिकारणसंनिधाने एव उपलब्धेः, अन्यथा अनुपलब्धेश्च अवगम्यते। अक्षणिकत्वे च भयादीनाम्—भयादिहेतुभूतज्ञानसन्ततौ अविशेषेण सर्वेषां ज्ञानानां भयाद्युत्पत्तिहेतुत्वेन, अनेकभयोपलब्धिप्रसङ्गाच्च ॥

[ अविद्यानुमानप्रयोगदूषणम् ]

'स्वप्रागभावव्यतिरिक्तवस्त्वन्तरपूर्वकम्' इति व्यर्थविशेषणोपादानेन प्रयोगकुशलता च आविष्कृता। अतः 'अनुमानेनाऽपि'[1] न भावरूपाज्ञानसिद्धिः ॥

---

अथेति। भावरूपत्व-ज्ञाननिवर्त्यत्वयोः न व्याप्तिः; भयादेः भावरूपस्य ज्ञाननिवर्त्यत्वदर्शनादिति शङ्केयम्। पूर्वज्ञानोत्पन्नानाम्—पूर्वभ्रान्तिज्ञानोत्पन्नानाम्। भ्रान्तित्वेन ज्ञायमानपूर्वज्ञानोत्पन्नानाम्—बाध्यज्ञानोत्पन्नानाम् इति यावत् (श्रु. प्र, भा. प्र)।

नैवमिति। फलविनाश्यानि हि स्वाश्रयविनाशाधीननश्वरव्यतिरिक्तक्षणिकानि। उक्तविशेषणेन ज्वालाव्यावृत्तिः।. तथा भयाद्यपि कम्पादिकार्यं जनयित्वा स्वयं नश्यतीत्यर्थः (श्रु. प्र)। कारणनिवृत्त्येति। कारणभूतभ्रान्तिज्ञानादिनिवृत्त्या कार्यभूतभयादिसन्तत्यनुत्पत्तेः न सदोपलब्धिः इत्यर्थः। क्षणिकत्वं चेति। स्थायिनो हि घटादयः दण्डचक्रादिकारणनिवृत्तावपि उपलभ्यन्ते। न तथा ज्ञानदीपज्वालादिः। तथा भयादेरपि कारणसंनिधानतन्निवृत्त्यनुविधायिसद्भावासद्भावतया क्षणिकत्वं निश्चितम् इत्यर्थः.। अक्षणिकत्वे चेति। स्थायिनो हि घटादयः प्रतिक्षणमुत्पाद्यमानाः बहवः युगपत् उपलभ्यन्ते। तथा अत्राऽपि प्रसजेत् इति भावः (श्रु. प्र) ॥

व्यर्थेति। स्वशब्दः, प्राक्शब्दः, अभावव्यतिरिक्तशब्दः, अन्तरशब्दश्च निरर्थकाः; वस्तुशब्दो हि भाववाची (श्रु. प्र) ॥

---

[1] अनुमानेन—ढ.

[ अविद्यायां प्रमाणान्तरस्याप्यभावः ]

श्रुति-तदर्थापत्तिभ्याम् अज्ञानासिद्धिः अनन्तरमेव वक्ष्यते। '[1]मिथ्यार्थस्य[1] मिथ्यैव उपादानं भवितुमर्हति' इत्येतदपि, 'न विलक्षणत्वात्' (ब्र. सू. 2-1-4) इत्यधिकरणन्यायेन परिह्रियते। अतः अनिर्वचनीयाज्ञानविषया न काचिदपि प्रतीतिः अस्ति ॥

[ ख्यातिविचारारम्भः ]

प्रतीति-भ्रान्ति-बाधैरपि न तथा अभ्युपगमनीयम्। प्रतीयमानमेव हि प्रतीति-भ्रान्ति-बाधविषयः। आभिः प्रतीतिभिः, प्रतीत्यन्तरेण च अनुपलब्धम् आसां विषयः—इति, न युज्यते कल्पयितुम् ॥

[ अनिर्वचनीयख्यातिः ]

शुक्त्यादिषु रजतादिप्रतीतेः, प्रतीतिकालेऽपि 'तत् नास्ति' इति बाधेन च

---

मिथ्यार्थस्येत्यादि, कार्य-कारणयोः सालक्षण्यम् आवश्यकमिति, कार्यम्—मिथ्या-कारणकम्; मिथ्याभूतत्वात्, सामान्येन घट-कटकादिवत् इत्यनुमानमपि 'न विलक्षणाधि-करण'न्यायेन (ब्र. सू. 2-1-4) व्याप्यत्वासिद्धम् इत्याशयः (द. उ) ॥

प्रतीतिः—भ्रान्त्यभ्रान्तिसाधारणरूपा। भ्रान्तिः—विद्यमानभेदाग्रहणपूर्वकसाधा-रणाकारग्रहणजन्या स्वविषयान्यथात्वविशेषिता प्रवृत्त्यादिहेतुभूता। बाधः—आरोपितविरुद्धा-धिष्ठानाकारावगाहिनी बुद्धिः। तथा—अनिर्वचनीयत्वेन। प्रतीयमानमिति। प्रती-त्युल्लिख्यमानम् इत्यर्थः। प्रतीत्यादीनां स्वविषयोल्लेखमात्रेण अनिर्वचनीयसिद्धिः इत्यस्य दूषणमिदम्। न हि नीलोल्लेखः पीतोल्लेखतया अङ्गीकार्यः; तथा सति सर्वोपप्लवप्रसङ्गात् इति भावः। आभिरिति। प्रतीति-भ्रान्ति-बाधशब्दोपात्ताभिः प्रत्यक्षप्रतीतिभिः इत्यर्थः। प्रतीत्यादीनाम् अन्यथानुपपत्त्या अनिर्वचनीयसिद्धिः इत्यस्य दूषणमिदम्। प्रतीत्यन्तरेण—प्रमाणान्तरेण ॥

---

[1] मिथ्यार्थस्य हि—पा.

अन्यस्य अन्यथाभानायोगाच्च 'सदसदनिर्वचनीयम् अपूर्वमेव इदं रजतं दोषवशात् प्रतीयते' इति कल्पनीयम्—इति चेत्,

[ अन्यथाख्यातेः अपरिहार्यता ]

न ; तत्कल्पनायामपि अन्यस्य अन्यथाभानस्य अवर्जनीयत्वात् । अन्यथाभानाभ्युपगमादेव ख्याति-प्रवृत्ति-बाध-भ्रमत्वानाम् उपपत्तेः, अत्यन्तापरिदृष्टाकारणकवस्तुकल्पनायोगात् । कल्प्यमानं हि इदम् अनिर्वचनीयं, न तावत् 'अनिर्वचनीयम्' इति प्रतीयते ; अपि तु 'परमार्थरजतम्' इत्येव । 'अनिर्वचनीयम्' इत्येव प्रतीतं चेत्, भ्रान्ति-बाधयोः प्रवृत्तेरपि असम्भवः ।

अतः अन्यस्य अन्यथाभानविरहे प्रतीति-प्रवृत्ति-बाध-भ्रमत्वानाम् अनुपपत्तेः, तस्य अपरिहार्यत्वाच्च 'शुक्त्यादिरेव रजताद्याकारेण अवभासते' इति भवता अभ्युपगन्तव्यम् ।

ख्यात्यन्तरवादिनां च सुदूरमपि गत्वा अन्यथावभासः अवश्याश्रयणीयः ; असत्ख्यातिपक्षे—सदात्मना, आत्मख्याति 'पक्षे'[1]—अर्थात्मना, अख्यातिपक्षेऽपि—

---

अन्यस्येति । परस्मिन् भासमाने तु न परं भासते यतः ।
तेनान्यस्यान्यथाभानं प्रतीत्यैव पराहतम् ॥ इति भावः ॥

नेति । अन्यत्रैव सता आकारेण पुरोवर्तिनः विशिष्टताभानम्—अन्यथाभानम् । प्रतिपन्नाकारस्य पुरोवर्तिनि अभावनिश्चयश्च प्रवृत्तिबाधसचिवात् 'नास्ति' इति प्रत्ययात् । न हि मण्यादिना प्रतिबद्धाग्नेः अग्नित्वं नास्तीति प्रत्ययः इति प्रसिद्धम् । कल्प्यमानं हीति । 'अनिर्वचनीयम्' इत्येव प्रतीत्यभ्युपगमे—प्रतीतेः भ्रमरूपत्वम्, बाधः, प्रवृत्तिश्च न स्युः । निर्वचनीयत्वेन प्रतीतं चेत्, अन्यस्य अन्यथाऽवभासः अवर्जनीयः इत्यर्थः ।

तस्य—अन्यथाभानस्य ।

ख्यात्यन्तरेति । यथार्थख्यातिव्यतिरिक्तपक्षेषु अन्यथाख्यातिपक्षः प्रबलः इत्यभिप्रायः । सुदूरमपि गत्वा—पदकपरम्परामुक्त्वापि । असत्ख्यातीति । अयं

---

[1] पक्षे च-पाः

अन्यविशेषणम् अन्यविशेषणत्वेन, ज्ञानद्वयं [1]एकत्वेन च[1], विषयासद्भावपक्षेऽपि— विद्यमानत्वेन ॥

[अनिर्वचनीयोत्पत्तेः अकारणकता]

किं च—अनिर्वचनीयम् अपूर्वरजतम् अत्र जातम्—इति वदता, तस्य जन्मकारणं वक्तव्यम् ;

न तावत् तत्प्रतीतिः ; तस्याः तद्विषयत्वेन तदुत्पत्तेः प्राक् आत्मलाभा-योगात् ।

निर्विषया जाता तत् उत्पाद्य, तदेव विषयीकरोति—इति महतामिदमुप-पादनम् ।

---

माध्यमिकपक्षः । 'असत्' इति प्रतीतं चेत्, भ्रमत्व-बाध-प्रवृत्त्यसम्भवः । 'सत्' इति चेत्, अन्यथाभानम् इति । आत्मख्यातीति । अयं योगाचारपक्षः । आत्मशब्दः ज्ञानपरः । 'ज्ञानम्' इति प्रतीतं चेत्, प्रवृत्त्याद्यसम्भवः । 'अर्थः' इति प्रतीतौ अन्यस्य अन्यथाभानम् इति । अख्यातीति । [अयं प्राभाकरमीमांसकपक्षः । तत्र हि 'इदं रजतम्' इत्यादौ इदमर्थे पुरोवर्तिनि शुक्त्यादौ स्थितस्य रजतभेदादेः अग्रहणात्—अख्यातेः, रजतार्थिनः प्रवृत्त्यादिरिति ।] 'इदं रजतम्' इति ज्ञानं किमेकम् ? उत ज्ञानद्वयात्मकम् ? इति विकल्पने, एकं ज्ञानम् इति पक्षे दूषणम् अन्येति । इदं समानाधिकरणधीबलादापादितम्, न तु तदुपगतम् । विषयेति । माध्यमिकमते ज्ञानमपि नास्ति । योगाचारमते ज्ञानाभिन्नतया विषयोऽप्यस्ति । एतन्मते तु ज्ञानमपि नाऽस्ति, विषयोऽपि नाऽस्ति इति विशेषः (श्रु. प्र, श्रु. दी, भा. प्र) ।

तस्याः—प्रत्यक्षप्रतीतेः । तद्विषयत्वेन—विद्यमानविषयकारणकत्वेन । कारणं हि नियतपूर्वभावि इति भावः (श्रु. प्र) । तदुत्पत्तेः—रजतोत्पत्तेः । आत्मलाभः—स्वरूपप्राप्तिः (भा. द) ।

महतामिदमुपपादनमिति [विपरीतलक्षणा] । तस्याः [प्रत्यक्षप्रतीतेः] वृत्तिज्ञानत्वेन विषयरहितावस्थाऽस्वीकारेण [अनिर्वचनीयरजतं प्रति] कारणत्वाभ्युपगमे अपसिद्धान्तापातात्,

---

[1] एकत्वेन–ड.

अथ इन्द्रियादिगतो दोषः,
तन्न ; तस्य पुरुषाश्रयत्वेन अर्थगतकार्यस्य उत्पादकत्वायोगात् ।

नाऽपि इन्द्रियाणि ; तेषां ज्ञानकारणत्वात् ।

नाऽपि दुष्टानि इन्द्रियाणि ; तेषामपि [1]स्वकार्यभूते ज्ञाने[1] एव हि विशेषकरत्वम् ।

अनादिमिथ्याज्ञानोपादानत्वं तु पूर्वमेव निरस्तम् ॥

[ अनिर्वचनीयस्य बुद्धिशब्दान्वयनियमानुपपत्तिः ]

किं च—अपूर्वम् अनिर्वचनीयम् इदं वस्तुजातं रजतादिबुद्धि-शब्दाभ्यां कथमिव विषयीक्रियते, न घटादिबुद्धि-शब्दाभ्याम् ?

---

निर्विषयख्यातिवादिनामिव तत्प्रभावेन प्रवृत्त्यादिसिद्धौ अनिर्वचनीयक्लृप्तिवैयर्थ्यात्, विषयरूपकारणेन विना उत्पत्तिवचनात्, विरम्यव्यापारवचनाच्च अत्यन्तमनुपपन्नम् इत्यर्थः ।

इन्द्रियादीति आदिपदेन विषयगतदोषः पुरुषस्य अनवधानं वा गृह्यते । अयोगादिति । दूरत्वादिदोषस्य विषयगतत्वेऽपि, पुरुषगतत्वस्याऽपि सम्भवात् उभयत्र कार्यम् उत्पाद्यम्, न विषयमात्रे ; नियामकाभावात् । अतः पुरुषे इव विषयेऽपि न सम्भवतीत्याशयः ।

नापीन्द्रियाणि इति । पुरुषगतज्ञानाख्यकार्यकरत्वम् अन्वयव्यतिरेकावस्थितम् । विषये तु इन्द्रियजन्यं कार्यान्तरं न दृष्टम् । तत्क्लृप्तिः अन्यथैवोपपत्त्या निरस्ता इति भावः ।

नाऽपि दुष्टानीति । अन्वयव्यतिरेकादिकमतिलङ्घ्य दृष्टान्तमात्रेण न किंचित् साधयितुं शक्यमिति भावः ।

अनादीति । तस्य स्वरूपानादित्वात् तत्कार्यमपि प्रागेव स्यादिति ॥

[ कथं न घटादीति । अनिर्वचनीये रजतादिभेदस्येव, घटादिभेदस्यापि अविशेषात् इति ।]

---

[1] स्वकार्यभूतज्ञाने—क.

रजतादिसादृश्यात्—इति चेत्,

तर्हि 'तत्सदृशम्' इत्येव प्रतीति-शब्दौ स्याताम्!

[1]रजतादि[1]जातियोगात्—इति चेत्,

सा किं परमार्थभूता? [2]अपरमार्थभूता वा[2]?

न तावत् परमार्थभूता; तस्याः अपरमार्थान्वयायोगात्।

नाऽपि अपरमार्थभूता; परमार्थान्वयायोगात्, अपरमार्थे परमार्थबुद्धि-शब्दयोः निर्वाहकत्वायोगाच्च—इत्यलम् अपरिणतकुतर्कनिरसनेन॥

[ सर्वत्राऽबाधिता यथार्थख्यातिः ]

अथवा—

---

सादृश्यादिति। प्रातिभासिकस्य रजतादेः अर्थक्रियाकारिव्यावहारिकरजतादिसादृश्यात् इत्यर्थः।

तत्सदृशमित्येवेति। यदि तत्सदृशे तद्बुद्धिः, तदा गवये गोबुद्धिवत् अन्यथाख्यातिः स्यात् इति, एवकाराभिप्रायः।

सा—रजतादिजातिः।

अपरमार्थेति। अपरमार्थव्यक्त्यन्वयायोगादित्यर्थः। व्यक्तिबाधेऽपि जातेः अबाधितत्वप्रसङ्गः। जातिरपि हि बाध्यते! इति भावः।

परमार्थान्वयायोगात्—आपणस्थरजतव्यक्त्यन्वयायोगात्। व्यक्त्यवस्थानेऽपि जातेः कदाचित् बाधितत्वप्रसङ्गः। न हि आपणस्थरजते कदाचिदपि रजतत्वं बाध्यते इति भावः। परमार्थबुद्धि-शब्दयोः—परमार्थविषयबुद्धि-शब्दयोः। परमार्थ[भूतायां] व्यक्तौ जातिः अनन्विता चेत्, तस्याः क्वचिदपि परमार्थबुद्धिशब्दहेतुत्वादर्शनात् भ्रान्तिस्थलेऽपि परमार्थबुद्धिशब्दनिर्वाहकत्वं न स्यादित्यर्थः (श्रु. प्र.)॥

अथवेत्यादि। वक्ष्यमाणायाः यथार्थख्यातेः स्वसिद्धान्तत्वं दर्श्यतेऽनेन।

---

[1] रजतत्वादि-झ.   [2] उत अपरमार्थभूता वा-झ, उत अपरमार्थभूता-इ.

यथार्थं सर्वविज्ञानमिति वेदविदां मतम् ।
श्रुतिस्मृतिभ्यः सर्वस्य सर्वात्मत्वप्रतीतितः ॥ १ ॥

'बहु स्या'मिति सङ्कल्पपूर्वसृष्टयाद्युपक्रमे ।
'तासां त्रिवृतमेकैका'मिति श्रुत्यैव 'चोदितम्'[1] ॥ २ ॥

त्रिवृत्करणमेवं हि प्रत्यक्षेणोपलभ्यते ।
'यदग्ने रोहितं रूपं तेजस'स्तदपामपि ॥ ३ ॥

शुक्लं कृष्णं पृथिव्याश्चेदन्नावेत्र त्रिरूपता ।
श्रुत्यैव दर्शिता तस्मात् सर्वे सर्वत्र सङ्गताः ॥ ४ ॥

पुराणे चैवमेवोक्तं वैष्णवे सृष्ट्युपक्रमे ।
'नानावीर्याः पृथग्भूतास्ततस्ते संहतिं विना ॥ ५ ॥

नाशक्नुवन् प्रजाः स्रष्टुमसमागम्य [2]कृत्स्नशः[2] ।
समेत्यान्योन्यसंयोगं परस्परसमाश्रयाः ॥ ६ ॥

---

वेदविदाम्—भगवद्बोधायननाथमुनिमिश्रादीनाम् (श्रु. प्र)। [सर्वविज्ञानम्—सर्वाऽपि ख्यातिः ।] सृष्टयादीति । सृष्टयादिः उपक्रमः यस्य प्रकरणस्य, तस्मिन् । आदिशब्देन स्थिति-प्रलयौ, नामरूपप्रक्रिया च गृह्येते । उत्पत्तौ फलस्य पश्चाद्भावेऽपि, सङ्कल्पे पूर्वभावित्वज्ञापनाय बहु स्यामित्याद्युपात्तम् । उत्पन्नावस्था हि अस्तित्वम् । उत्पद्यमानावस्था हि जायमानता । ते हि 'स्याम् , प्रजायेय' इत्युक्ते । तेन सङ्कल्पे पश्चाद्भाविनः त्रिवृत्करणस्य नामरूपव्याकरणात् प्राग्भावसिद्धिः । उत्पत्तौ त्रिवृत्करणपश्चाद्भावपाठः अर्थक्रमबाध्यः इति भावः (श्रु. दी)। प्रत्यक्षेणेति । अग्न्यादिषु कतिपयव्यक्तिषु त्रिरूपत्वप्रदर्शनम् न इयत्ताबुद्ध्या ; अपि तु अण्डान्तर्भूतस्यैव प्रत्यक्षयितुं योग्यत्वात् पूर्वोक्तत्रिवृत्करणसम्भावनाप्रदर्शनार्थम् इति भावः । संहतिः —संहतत्वम्—पृथक्स्थित्यर्हसंयोगमात्रम् । असमागम्येति । समागतत्वम्—पृथक्स्थित्यनर्हसंश्लेषविशेषः । परस्परेति । एकैकस्मिन् भूते सर्वभूतानि सन्ति चेत् , सर्वे शब्दाः सर्वत्र प्रयुज्येरन् ! इत्यस्य उत्तरमिदम् । अन्येषां भूतानां समाश्रितानाम्

---

[1] बोधितम्– I.

[2] कृत्स्नतः–इ.

महदाद्या विशेषान्ता ह्यण्ड'मित्यादिना ततः ।
सूत्रकारोऽपि भूतानां त्रिरूपत्वं [1]तथा[1]ऽवदत् ॥ ७ ॥

'त्र्यात्मकत्वात्तु भूयस्त्वा'[2]दिति तेना[2]ऽभिधाभिदा ।
सोमाऽभावे च पूतीकग्रहणं श्रुति[3]चोदितम्[3] ॥ ८ ॥

सोमावयवसद्भावादिति न्यायविदो विदुः ।
व्रीह्यभावे च नीवारग्रहणं व्रीहिभावतः ॥ ९ ॥

तदेव सदृशं तस्य "यत्[4] तद्द्रव्यैकदेशभाक् ।
शुक्त्यादौ रजतादेश्च भावः श्रुत्यैव बोधितः ॥ १० ॥

रूप्यशुक्त्यादि[5]निर्देशभेदो[5] भूयस्त्वहेतुकः ।
रूप्यादिसदृशश्चाऽयं शुक्त्यादिरुपलभ्यते ॥ ११ ॥

अतस्तस्याऽत्र सद्भावः प्रतीतेरपि निश्चितः ।
कदाचिच्चक्षुरादेस्तु दोषात् शुक्त्यंशवर्जितः ॥ १२ ॥

---

एकं भूतं समाश्रयः । आश्रिताश्रयभावश्च न्यूनाधिकभावनिबन्धनः । तत्कृता शब्दव्यवस्था इति भावः (श्रु. प्र) ।

**सूत्रेति** । सूत्रकारोऽपि [त्रिरूपत्वम्] अवदत् इति अन्वयः । **ततः**—अस्य अर्थस्य श्रुतिस्मृतिसिद्धत्वात् । वक्ष्यमाणस्य सदृशे सदृशान्तरसद्भावस्योपयोगित्वात्, भूते भूतान्तरसद्भावः उक्तः । **तेन**—भूयस्त्वेन । **अभिधाभिदा**—अभिधानव्यवस्था । **सोमेति**, सदृशे सदृशान्तरसद्भाव उक्तः । **न्यायविदः**—परीक्षकाः । 'सोमाभावे पूतीकान् अभिषुणुयात्' इत्ययं विधिः नियमार्थः ; सोमाभावे तत्सदृशद्रव्यान्तरेषु स्वत एव प्रवृत्तेः । **व्रीहिभावतः**—व्रीह्यवयवसद्भावतः । **रजतादेः**—रजताद्यवयवस्य । **श्रुत्यैव** —प्रतिनिधिश्रुत्या, त्रिवृत्करणश्रुत्या वा । तेजःप्रचुररूप्यांशः त्रिवृत्करणात् सिध्यतीत्यर्थः । **रूप्यादीति** । शुक्तिरूप्ययोः सादृश्ये सति हि शुक्तौ रूप्यसद्भावसिद्धिः, शब्दव्यवस्थायाः

---

[1] ततो–आ. [2] दित्येतेना–अ.
[3] बोधितम्–पा. दर्शितम्–आ. [4] यद्यद्–पा.
[5] निर्देश्यो भेदो–पा, निर्देश्यभेदो–ट.

रजतांशो गृहीतोऽतो रजतार्थी प्रवर्तते ।
दोषहानौ तु शुक्त्यंशे गृहीते तन्निवर्तते ॥ १३ ॥

अतो यथार्थं रूप्यादिविज्ञानं शुक्तिकादिषु ।
बाध्य-बाधकभावोऽपि भूयस्त्वेनोपपद्यते ॥ १४ ॥

शुक्तिभूयस्त्ववैकल्य-साकल्यग्रहरूपतः ।
नाऽतो मिथ्यार्थ-सत्यार्थविषयत्वनिबन्धनः ॥

एवं सर्वस्य सर्वत्वे व्यवहारव्यवस्थितिः ॥ १५ ॥

[स्वाप्नार्थसत्यतासमर्थनम्]

स्वप्ने च प्राणिनां पुण्य-पापानुगुणम्, भगवतैव तत्तत्पुरुषमात्रानुभाव्याः

---

भूयस्त्वहेतुकत्वसिद्धिश्च, इत्यस्य उत्तरमिदम् । **प्रतीतेः**—रूप्यसदृशतया प्रतीतेः । **कदाचिदिति** । शुक्त्यादौ रजताद्यवयवसद्भावश्चेत्, सदा गृह्येत । प्रवृत्तिश्च सदा स्यात्, बाधश्च नोपपद्येत इत्यत्रोत्तरमिदम् । **दोषात्**—शुक्त्यंशाग्रहहेतुभूतात् । प्रचुरग्रहणाभिभूतत्वाभावात्, अदृष्टवशाच्च रजतग्रहणम् (श्रु. प्र) । **बाध्येत्यादि** । शुक्तिभूयस्त्वेन तज्ज्ञानस्य बाधकत्वम् । तत एव रजताल्पत्वं सिद्धम् । तेन रजतज्ञानस्य बाध्यत्वम् इत्यर्थः । **भूयस्त्ववैकल्येन ग्रहः**—भूयस्त्वविरहेण ग्रहः । तदग्रहः इति फलितम् । **भूयस्त्वसाकल्येन ग्रहः**—तत्सहिततया ग्रहः । तयोः ग्रहयोः रूपात्—स्वभावात्—तथाविधग्रहणात्मकत्वात् । पूर्वोत्तरयोः ज्ञानयोः तथारूपत्वात् बाध्यबाधकभावः इत्यर्थः । ज्ञानस्य बाध्यत्वम्—न स्वरूपतः, न च विषयतः; किंतु बाध्यप्रवृत्तिकत्वम् । उत्तरज्ञानस्य बाधकत्वम्—पूर्वज्ञानजन्यप्रवृत्तिनिवारकत्वम् । [नाऽत इति । अतः बाध्यबाधकभावः मिथ्यार्थ-सत्यार्थविषयत्वनिबन्धनो न, इति अन्वयः।] मिथ्यार्थसत्यार्थशब्दाभ्यां पराभिमतमिथ्यात्व-सत्यत्वे विवक्षिते (श्रु. प्र) । **एवमिति** । भूयस्त्वसाकल्य-वैकल्याभ्याम् इत्यर्थः । **व्यवहारव्यवस्थितिः**—हानोपादानादिनियमः (श्रु. प्र) । इष्टभेदाग्रहः प्रवर्तकः । अनिष्टभेदाग्रहः निवर्तकः (भा. प्र) ॥

**स्वप्ने चेति** । उक्तरीत्या सदृशे सदृशान्तरस्य, भूते भूतान्तरस्य च सद्भावः स्वाप्नार्थेषु वक्तुं न शक्यत इति, स्वाप्नार्थबुद्धेः कथं याथार्थ्यम्? इत्यस्य उत्तरमिदम् । पुण्य-पापेति ।

तत्तत्कालावसानाः [1]तथाभूताश्च[1] अर्थाः सृज्यन्ते। तथा हि श्रुतिः स्वप्नविषया—

'न तत्र रथाः, न रथयोगाः, न पन्थानो भवन्ति। अथ रथान् रथयोगान् पथः सृजते। न तत्राऽऽनन्दाः मुदः प्रमुदो भवन्ति।. अथाऽऽनन्दान् मुदः प्रमुदः सृजते। न तत्र [2]वेशान्ताः[2] पुष्करिण्यः स्रवन्त्यो भवन्ति। अथ वेशान्तान् पुष्करिण्यः स्रवन्त्यः सृजते। स हि कर्ता।'
(बृ. उ. 6-3-10)

इति।

यद्यपि सकलेतर[3]पुरुषा[3]नुभाव्यतया तदानीं न भवन्ति; तथाऽपि तत्त[4]त्पुरुषमात्रा[4]नुभाव्यतया तथाविधान् अर्थान् ईश्वरः सृजति। स हि कर्ता। तस्य सत्यसंकल्पस्य आश्चर्यशक्तेः तथाविधं कर्तृत्वं सम्भवति इत्यर्थः।

'य एषु सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाणः।
तदेव शुक्रं तद्ब्रह्म तदेवाऽमृतमश्नुते॥

---

केषांचित् सुखरूपतायाः, केषांचित् दुःखरूपतायाश्च उपपत्तये इदम्। भगवतैव—जगत्स्रष्ट्रैव। तत्तदित्यनेन सर्वदा, सर्वैः नोपलभ्यते इत्युक्तम्। न भवन्तीति। दृष्टसजातीयाः न भवन्ति इत्यर्थः। 'सृजते' इति पदविरोधपरिहाराय 'न भवन्ति' इति निषेधस्य सङ्कोचो हि उत्सर्गापवादन्यायेन कृतः। अतः नाऽत्र स्वरूपनिषेधः। जाग्रदवस्थानुभूतवस्तुसजातीयाः अनेकपुरुषानुभाव्याः, कालान्तरस्थायिनश्च न भवन्ति इति [ निषेधार्थः ] (श्रु. प्र)। स हि कर्ता इति। सर्वशक्तिर्हि कर्ता, किमनुपपन्नम्? इति। तच्छब्दः न प्रकृतजीवपरः, अपि तु प्रसिद्धपरमात्मपरः।

य एषु इति, स्वाप्नार्थसृष्टेः ईश्वरकर्तृकत्वस्फुटीकरणार्थं श्रुत्यन्तरम्।

---

[1] तथाभूताः—इ.
[2] वेदान्ताः—आ, इ, क, च, ज, ट.
[3] पुरुषमात्रा—ट.
[4] पुरुषा—ग, ट.

'[1]तस्मिंल्लोकाः[1] श्रिताः सर्वे तदु नाऽत्येति कश्चन ॥' (कठ. उ. 5-8)

[2]इति च[2] । सूत्रकारोऽपि—

'सन्ध्ये सृष्टिराह हि' (ब्र. सू. 3-2-1)

'निर्मातारं चैके पुत्रादयश्च' (ब्र. सू. 3-2-2)

इति सूत्रद्वयेन, [3]स्वाप्नेषु[3] अर्थेषु जीवस्य [4]स्रष्टृत्वम् आशङ्क्य,

'मायामात्रं तु कार्त्स्न्येनाऽनभिव्यक्तस्वरूपत्वात्' (ब्र. सू. 3-2-3)

इत्यादिना, न जीवस्य सङ्कल्पमात्रेण स्रष्टृत्वमुपपद्यते[4]: जीवस्य स्वाभाविकसत्य-सङ्कल्पत्वादेः[5] कृत्स्नस्य संसारदशायाम् अनभिव्यक्तस्वरूपत्वात् । ईश्वरस्यैव तत्त-त्पुरुषमात्रानुभाव्यतया आश्चर्यभूता सृष्टिरियम् ।

'तस्मिंल्लोकाः श्रिताः सर्वे तदु नाऽत्येति कश्चन ॥' (कठ. उ. 5-8)

इति परमात्मैव [6]तत्र स्रष्टा[6] [7]इत्यवगम्यते—इति परिहरति[7] ॥

[ स्वाप्नार्थसत्यत्वानुपपत्तिशङ्कापरिहारः ]

अपवरकादिषु शयानस्य स्वप्नदृशः स्वदेहेनैव देशान्तरगमन-राज्याभिषेक-

---

सूत्रकारोऽपीति स्वाप्नार्थानां पारमार्थ्यं पूर्वपक्षीकृत्य, अपारमार्थ्यं सिद्धान्तितं सूत्र-कारेण ; अतः अयं श्रुतेः न अर्थः इति शङ्काव्युदासाय । स्वाप्नार्थसत्यत्वं सूत्रकाराभिमतमेवे-त्याशयः । तस्मिंल्लोका इति । जीवस्यापि स्वप्नदशायां सत्यसङ्कल्पत्वाद्याविर्भावः कल्प्यत इति तु न युक्तम् ; अनन्यथासिद्धस्यैव हि कल्पकत्वम् । परमात्मलिङ्गश्रवणेन स्वाप्नार्थसृष्टेः परमात्मनैव उपपन्नत्वात् न जीवस्य स्वरूपाविर्भावः कल्प्यः इत्यर्थं (श्रु. प्र) ॥

अपवरकादिष्विति । अपवरके शयानस्य देशान्तरगमनादेः पारमार्थ्यं कथमुपपद्यते? इत्यस्योत्तरमिदम् । स्वयमेव स्वदुःखावहवस्तुसृष्ट्यनुपपत्तेश्च न तदा जीवस्य स्वरूपाविर्भावः

---

[1] तल्लोकाः—इ.
[2] इति—इ.
[3] स्वाप्नेषु अपि—इ, ड.
[4] स्रष्टृत्वम्....मुपपद्यते—इ, पुस्तके नास्ति ।
[5] सङ्कल्पादेः—आ, इ.
[6] स्रष्टा—इ.
[7] इत्यवगम्यते—इ.

[1]शिरश्छेदादयश्च[1] पुण्य-पापफलभूताः शयानदेहसरूपसंस्थानदेहान्तरसृष्ट्या उपपद्यन्ते ॥

[ भ्रमविशेषेषु याथार्थ्योपपादनम् ]

पीत-शङ्खादौ तु—नयनवर्तिपित्तद्रव्य[2]संभिन्नाः[2] नायनरश्मयः शङ्खादिभिः संयुज्यन्ते। तत्र [3]पित्तगत[3]पीतिमाभिभूतः शङ्खगत[4]शुक्लिमा[4] न गृह्यते। अतः सुवर्णानुलिप्तशङ्खवत् 'पीतः शङ्खः' इति प्रतीयते। पित्तद्रव्यं, तद्गतपीतिमा च [5]अतिसौक्ष्म्यात्[5] पार्श्वस्थैः न गृह्यते। पित्तोपहतेन तु स्वनयननिष्क्रान्ततया अति-सामीप्यात् सूक्ष्ममपि गृह्यते। तद्ग्रहणजनितसंस्कारसचिवनायनरश्मिभिः दूर-स्थमपि गृह्यते।

जपाकुसुमसमीपवर्तिस्फटिकमणिरपि—तत्प्रभाभिभूततया 'रक्तः' इति गृह्यते। जपाकुसुमप्रभा वितताऽपि स्वच्छद्रव्य[6]संयुक्ततया[6] स्फुटतरम् उपलभ्यते—इति उप-लब्धिव्यवस्थाप्यमिदम्।

---

कल्प्यः इति च अर्थसिद्धम्; शिरश्छेदादयः इत्युक्तत्वात्। सरूपे देहान्तरे शयानदेहव्यवहारः भेदाग्रहकृतः; न तु अन्यथाख्यातिकृतः ॥

पीतेति। पीतशङ्खादौ ईश्वरसृष्टत्वश्रुतिः दर्शयितुं न शक्यते—इत्यस्योत्तरमिदम्। [संभिन्नाः—संमिश्राः। अभिभवः—स्वसजातीयग्रहणकृतम् अग्रहणम्।] तद्ग्रहणेति। यथा अतिदूरमुत्पतितः पतगः न द्रष्टुं शक्यते, तथापि सन्निकर्षोत्पतनकालादारभ्य निरन्तर-मवेक्ष्यमाणः तज्जनितसंस्कारवद्भ्यां चक्षुर्भ्यां दूरेऽपि गृह्यते, तद्वत् इत्यर्थः।

जपाकुसुमेति। जपाकुसुमस्फटिकादौ चाक्षुषदोषसंसर्गः दुर्वचः—इत्यस्य उत्तरमिदम्। जपाकुसुम-स्फटिक-मरीचिकाजलालातचक्रादिषु द्रव्यान्तरेण संबन्धात् यथार्था प्रतीतिः इति निर्वाहः।

---

[1] शिरश्छेदादयः—इ.
[2] संमिश्रानां—इ.
[3] पित्तद्रव्यगत—इ, झ.
[4] श्वेतिमा—क.
[5] अतिसूक्ष्मतया—इ, झ.
[6] संयुक्ता—पा.

मरीचिकाजलज्ञानेऽपि—तेजःपृथिव्योरपि अम्बुनो विद्यमानत्वात्, इन्द्रियदोषेण तेजःपृथिव्योः अग्रहणात्, अदृष्ट[1]वशाच्च[1] अम्बुनः ग्रहणात् यथार्थत्वम्।

अलातचक्रेऽपि—अलातस्य द्रुततरगमनेन सर्वदेशसंयोगात् अन्तरालाग्रहणात्, तथा प्रतीतिः उपपद्यते। चक्रप्रतीतावपि अन्तरालाग्रहणपूर्वकतत्तद्देशसंयुक्ततत्तद्वस्तुग्रहणमेव। क्वचित् अन्तरालाभावात् अन्तरालाग्रहणम्, क्वचित् शैघ्र्यात् अग्रहणम्—इति विशेषः। अतः तदपि यथार्थम्।

दर्पणादिषु—निजमुखादिप्रतीतिरपि यथार्था। दर्पणादिप्रतिहतगतयो हि [2]नायन[2]रश्मयः दर्पणादिदेशग्रहणपूर्वकं निजमुखादि गृह्णन्ति। तत्राऽपि अतिशैघ्र्यात् अन्तराला[3]ग्रहणात्[3], तथा प्रतीतिः।

दिङ्मोहेऽपि—दिगन्तरस्य अस्यां दिशि विद्यमानत्वात्, अदृष्टवशेन एतद्दिगंशवियुक्तः दिगन्तरांशो गृह्यते। अतः दिगन्तरप्रतीतिः यथार्थैव।

---

मरीचिकेति। मरीचिकाजलधियः याथार्थ्योपपादनमिदम्। अदृष्टेति। अदृष्टस्य नियामकत्वं सर्वैरपि ख्यात्यन्तरवादिभिः अभ्युपेत्यम्। अन्यथा सर्वेषां सर्वदा सर्वत्र सर्वविषयभ्रमप्रसङ्गात्। कदाचिदपि भ्रमाभावप्रसङ्गाच्च (श्रु. प्र)।

[अलातेति। 'अङ्गारोऽलातमुल्मुकम्' इति (अमरः 2-9-30)।] अन्तरालाग्रहणात्— अलातस्य तत्तत्प्रदेशेन पूर्वापरसंयोगयोः मध्यकालाग्रहणात्–क्रमाग्रहणात् (श्रु. दी)। चक्रप्रतीतिः—सम्यक्चक्रप्रतीतिः।

दर्पणादिष्विति। दर्पणादिषु सव्यदक्षिणविपर्यासः कथम्?— इति चेत्, आपेक्षिको हि सव्यदक्षिणभावः। तत्र स्वाभिमुखतया विपर्यस्तसव्यदक्षिणभावस्य दर्पणस्य, मुखस्य च अन्तरालाग्रहणमेव विपर्यासः दर्पणदेशगतः। तेन अगृहीतान्तरालं मुखमिति, अभिमुखस्य दर्पणस्य, मुखस्य च अन्तरालाग्रहणात् आभिमुख्यप्रतीतेः याथार्थ्यम्। एवं मलिनत्वाल्पत्वादि च।

दिङ्मोहेऽपीति। [सर्वत्र] सर्वदिक्सद्भावेऽपि प्राच्यादिव्यवहारः प्रतियोग्यपेक्षया।

---

[1] वशात्–इ. [2] नयन–इ.

[3] ग्रहणतया–इ.

द्विचन्द्रज्ञानादावपि — अङ्गुल्यवष्टम्भतिमिरादिभिः [1]नायन[1]तेजोगतिभेदेन सामग्रीभेदात्, सामग्रीद्वयम् अन्योन्यनिरपेक्षं चन्द्रग्रहणद्वयहेतुर्भवति। तत्र एका सामग्री स्वदेशविशिष्टं चन्द्रं गृह्णाति। द्वितीया तु किञ्चिद्वक्रगतिः चन्द्र-समीपदेशग्रहणपूर्वकं चन्द्रं स्वदेशवियुक्तं गृह्णाति। अतः सामग्रीद्वयेन युगपत् देशद्वयविशिष्टचन्द्र[2]ग्रहणे[2], ग्रहणभेदेन ग्राह्याकारभेदात्, एकत्व[3]ग्रहणाभावाच्च[3] 'द्वौ चन्द्रौ' इति भवति प्रतीतिविशेषः। [4]देशान्तरस्य[4] तद्विशेषणत्वम्, देशान्तरस्य अगृहीतस्वदेशचन्द्रस्य च निरन्तरग्रहणेन भवति। तत्र सामग्रीद्वित्वं पारमार्थिकम्। तेन देशद्वयविशिष्टचन्द्रग्रहणद्वयं च पारमार्थिकम्। ग्रहणद्वित्वेन चन्द्रस्यैव ग्राह्या-कारद्वित्वं च पारमार्थिकम्।

[5]तत्र[5] 'विशेषणद्वयविशिष्टचन्द्रग्रहणद्वयस्य एक एव चन्द्रः [6]ग्राह्यः' इति[6] ग्रहणे, [7]प्रत्यभिज्ञानवत्[7] केवलचक्षुषः सामर्थ्याभावात्, चाक्षुषज्ञानं [8]तथैव[8] अवतिष्ठते। द्वयोः

---

तत्र दिगन्तरप्रतियोगिनः, दिगन्तरस्य च निरन्तरभानम्। अतः यथार्थविषयत्वमिति। दिशां बहुत्वं च 'पद्भ्यां भूमिर्दिशः श्रोत्रात्' (तै. आर. पु. 3-12-15) इत्यवगम्यते।

[ **तिमिरम्** —नेत्ररोगविशेषः। 'तिमिरं ध्वान्ते नेत्रामयान्तरे' (मेदिनी)।] **वक्रेति।** स्वतः ऋजुप्रसारिणोऽपि चाक्षुषतेजसः वक्रत्वं संभवति; दर्पणादिना तद्दर्शनात्। इहाऽपि अङ्गुल्यवष्टम्भाद्यादिना तदुपपत्तिः (श्रु. प्र)। **द्वयं चेति।** ग्रहणद्वयम् अतिशैघ्र्यात् अगृहीतक्रमम्। अत एव अगृहीतपरस्परभेदं च इति भावः।

**चक्षुषः सामर्थ्याभावादिति।** न हि केवलं चक्षुः ऐक्यप्रतिपत्तिसमर्थं दृष्टं देवदत्तादिषु; अपि तु संस्कारसंस्कृतमेव समर्थं दृष्टम्। संस्कारस्य विलम्बितभावित्वात् न तदानीम् ऐक्यप्रतिपत्तिरित्यर्थः। **तथैव अवतिष्ठते**—अगृहीतैकत्वचन्द्रमात्रविषयम् अवतिष्ठते। **द्वयोश्चक्षुषोरिति।** स्वतो निर्दोषस्य इन्द्रियस्य सदोषत्वं हि कार्यकल्प्यम्, तथा एकसामग्री-

---

[1] नयन–इ.

[2] ग्रहणेऽपि–इ.

[3] ग्रहणाच्च–आ, ग्रहणाभावात्–ट.

[4] देशान्तरस्य च–अ, आ, इ, च, ज.

[5] अत्र–अ.

[6] ग्राह्यत इति–इ.

[7] प्रत्यभिज्ञावत्–इ.

[8] तस्यैव–ड.

चक्षुषोः एकसामग्रचन्तर्भावेऽपि तिमिरादिदोषभिन्नं चाक्षुषं तेजः सामग्रीद्वयं भवति इति कार्यकल्प्यम् । अपगते तु दोषे स्वदेशविशिष्टस्य चन्द्रस्य एकग्रहणवेद्यत्वात्, [1]'एकश्चन्द्रः'[1] इति भवति प्रत्ययः । दोषकृतं तु सामग्रीद्वित्वम्, [2]तत्कृतं[2] ग्रहण[3]द्वित्वम्[3], तत्कृतं ग्राह्याकारद्वित्वं च इति निरवद्यम् ।

अतः सर्वं विज्ञानजातं यथार्थम् इति सिद्धम् । ख्यात्यन्तराणां दूषणानि तैस्तै[4]र्वादिभिरेव[4] प्रपञ्चितानि इति, न तत्र यत्नः क्रियते ।

अथवा किमनेन बहुना उपपादनप्रकारेण ?

प्रत्यक्षानुमानागमाख्यं प्रमाणजातम्, आगमगम्यं च निरस्तनिखिलदोषगन्धम् अनवधिकातिशयासंख्येयकल्याणगुणगणं सर्वज्ञं सत्यसङ्कल्पं परं ब्रह्म अभ्युपगच्छतां किं न सेत्स्यति ? किं नोपपद्यते ?

भगवता हि परेण ब्रह्मणा क्षेत्रज्ञपुण्यपापानुगुणं तद्भोग्यत्वाय अखिलं जगत् सृजता सुखदुःखोपेक्षाफलानुभवा[5]नुभाव्याः[5] पदार्थाः सर्वसाधारणानुभवविषयाः, केचन तत्तत्पुरुषमात्रानुभवविषयाः तत्तत्कालावसानाः तथा तथा अनुभाव्याः सृज्यन्ते ।

---

भूतयोः चक्षुषोः सामग्रीद्वित्वमपीति भावः । आकारद्वित्वम् इति । स्वदेशविशिष्टत्वम् एकः आकारः । अगृहीतान्तरालं प्रदेशान्तरम् एकः आकारः । तस्य आकारत्वं विशेषणत्वम् । चाक्षुषतेजोगतिभेदरूपसामग्रीद्वयजन्यम् अतिशैघ्रयात् अगृहीतक्रमम् अगृहीतभेदं च ज्ञानद्वयम्; अगृहीतैकत्वं चन्द्रम्, अगृहीतान्तरालं देशान्तरं च निरन्तरं गृह्णाति । ततः द्विचन्द्रव्यवहारः इत्यर्थः । इति निरवद्यम् इति । यथार्थख्यातिसमर्थनम् इत्यर्थः ।

'अथवा किमनेन' इत्यादिपाठो बहुषु कोशेषु दृश्यते । व्याख्यातृभिः व्याख्यातश्च । तत्र परागर्थविषयापरोक्षप्रमेषु एकेनैवोत्तरेण परिहारः कृतो भवति ।

सेत्स्यति इति प्रमाणास्तित्वम् । किंनोपपद्यते इति उपपत्तिः ।

सृजतेति । अनेन अस्यार्थस्य श्रुतिमूलत्वं सूचितम्; कृत्स्नकार्यकारणत्वात् ब्रह्मणः । 'इदं सर्वमसृजत' (तै. उ. आन. 6-2) इति हि श्रुतिः । प्रतीयमानत्वाविशेषात् इदमपि तत्सृष्टम् इत्यर्थः ।

---

[1] एकचन्द्रः—इ, घ, ट.
[2] तत्कृतं च—इ.
[3] द्वित्वं च—इ.
[4] र्वादिभिः—इ.
[5] दनुभाव्याः-अ.

[1]तत्र[1] बाध्य-बाधकभावः सर्वानुभवविषयतया, तद्रहिततया च उपपद्यते—[2]इति सर्वं समञ्जसम्[2] ॥

[ श्रुत्यादिभिः न अनिर्वचनीयाज्ञानसिद्धिः ]

यत्पुनः—सदसदनिर्वचनीयमज्ञानं श्रुतिसिद्धम्—इति,

तदसत् ;

'अनृतेन हि प्रत्यूढाः (छां. उ. 8-3-2)

इत्यादिषु, अनृतशब्दस्य अनिर्वचनीयानभिधायित्वात् । ऋतेतरविषयो हि अनृत-शब्दः । 'ऋतम्' इति कर्मवाचि ;

'ऋतं पिबन्तौ' (कठ. उ. 3-1)

इति वचनात् । [3]ऋतं कर्म[3]—फलाभिसन्धिरहितं परमपुरुषाराधनवेषं तत्प्राप्तिफलम् । [4]अत्र[4] तद्व्यतिरिक्तं सांसारिकफलं कर्म—अनृतम् ; ब्रह्मप्राप्तिविरोधि ।

---

तत्रेति । न हि तत्तदेकपुरुषानुभाव्यानां, तत्तत्कालावसायिनां च सुखादीनां मिथ्यात्वम् इति भावः (श्रु. प्र) ॥

अनृत . . . . नभिधायित्वात् इति । पूर्वनिरस्तप्रकारेण अनिर्वचनीयस्य अप्रामाणिकत्वात् तत्र व्युत्पत्तिर्नास्तीति भावः । ऋतेतरेत्यादि । 'हि'शब्देन संप्रतिपत्तिः सूचिता । ऋताभावस्य ऋतविरोधिनश्च ऋतभूतब्रह्माश्रयत्वानुपपत्त्या तदन्य एव नञर्थः त्वयाऽपि वक्तव्यः, इति भावः । कर्मवाचि—पुण्यकर्मवाचि, न तु सत्यवाचि इत्यर्थः (श्रु. प्र) । अनृतम् इति तदन्यपापकर्मवाचि । वचनादिति । 'सुकृतस्य लोके' इति हि उच्यते । 'एवमनृतात्' इत्यादौ पुण्यप्रतियोगि पापं हि अनृतशब्देनोक्तमिति द्रष्टव्यम् । ऋतमिति । इष्टानिष्टफलत्वयोः पुण्यपापशब्दप्रवृत्तिनिमित्तत्वात् मुमुक्षून् प्रति नरकादिवत्, स्वर्गादेरपि मोक्षविरोधित्वेन अनिष्टत्वात्, ऋतशब्देन मोक्षैकसाधनम् 'स्वकर्मणा तमभ्यर्च्य' (भ. गी. 18-46) इत्याद्युक्तं कर्म अभिधीयते । अनृतशब्देन तद्व्यतिरिक्तसांसारिकफलदं सर्वकर्म उच्यते इत्यर्थः ।

---

[1] तत्र च-ङ.  [2] इति सर्वम्-आ.

[3] ऋतं हि शास्त्रविहितं कर्म-आ.  [4] अतः-ङ.

'एतं ब्रह्मलोकं न विन्दन्ति अनृतेन हि प्रत्यूढाः' (छां. उ. 8-3-1)
इति वचनात् ।

'नाऽसदासीन्नो सदासीत्' (तै. ब्रा. 2-8-9-8)
इत्यत्राऽपि सदसच्छब्दौ चिदचिद्व्यष्टिविषयौ ; उत्पत्तिवेलायां सत्त्यच्छब्दाभिहितयोः चिदचिद्व्यष्टिभूतयोः वस्तुनोः अप्ययकाले [1]अचित्समष्टि[1]भूते तमश्शब्दाभिधेये वस्तुनि प्रलयप्रतिपादनपरत्वात् अस्य वाक्यस्य । नाऽत्र कस्यचित् सदसदनिर्वचनीयता उच्यते ; सदसतोः काल[2]विशेषे असद्भाव[2]मात्रवचनात् ।

अत्र तमश्शब्दाभिहितस्य अचित्समष्टित्वं श्रुत्यन्तरात् अवगम्यते—
'अव्यक्तमक्षरे लीयते, अक्षरं तमसि लीयते' (सुबा. उ. 2)
इति ॥

---

इति वचनादिति । 'एतं ब्रह्मलोकं न विन्दन्ति' इत्यादिवचनात् अनृतशब्दस्य मोक्षविरोधिकर्मपरत्वं ज्ञायते इति । नाऽसदासीदिति । 'अनादि मत्परं ब्रह्म न सत्तान्नासदुच्यते' (भ. गी. 13-12) इति वचनं यथा ब्रह्मणः परस्य न अनिर्वचनीयत्वपरम्, तथा इहापीत्याशयः (श्रु. दी) । [सदस . . . विषयौ—सच्छब्दः चिद्व्यष्टिविषयः, असच्छब्दः अचिद्व्यष्टिविषयः इति यथासंख्यमन्वयः । चिद्व्यष्टिः—सृज्यमानो जीवः, सच्छब्दवाच्यः ; स्वरूपविकाररहितत्वात् । अचिद्व्यष्टिः—सृज्यमाना जडात्मिका प्रकृतिः, असच्छब्दवाच्या ; स्वरूपविकारात्मकपरिणामवत्वात् ।] उत्पत्तीति । उत्पन्नस्य हि प्रलयः । उत्पत्तिश्च चिदचिद्व्यष्ट्योः श्रुतिसिद्धा । अतः तयोः अत्र प्रलयः उच्यते इत्यर्थः । कार्यावस्थचेतनस्य सच्छब्दोक्तत्वात्, इह सच्छब्देन तदन्यवाचकेन असच्छब्देन च कार्यावस्थचेतनाचेतननिषेधः कृतः ः वाक्यान्तरैकार्थ्यात् इत्यर्थः । अचित्समष्टीत्यादि । 'तम आसीत्तमसा गूढम्' (तै. ब्रा. 2-8-9) इति तदनन्तरवाक्याभिप्रायेणोक्तम् । कालविशेष इति । न हि कालविशेषे अनिर्वचनीयत्वमभ्युपगम्यते (श्रु. प्र) ।

---

[1] चिदचित्समष्टि—ङ. [2] विशेषासद्भाव—थ.

[ तमश्शब्दस्य श्रुतिगतस्य अनिर्वचनीयाज्ञानपरत्वशङ्का-परिहारौ ]

सत्यं तमश्शब्देन अचित्समष्टिरूपायाः प्रकृतेः सूक्ष्मावस्था उच्यते। तस्यास्तु—

'मायां तु प्रकृतिं विद्यात्' (श्वे. उ. 4-10)

इति मायाशब्देन अभिधानात्, अनिर्वचनीयत्वम्—इति चेत्,

नैतदेवम्; मायाशब्दस्य अनिर्वचनीयवाचित्वं न दृष्टम् इति।

मायाशब्दस्य मिथ्यापर्यायत्वेन [1]अनिर्वचनीय[1]वाचित्वम्—इति चेत्,

तदपि नाऽस्ति। न हि सर्वत्र मायाशब्दः मिथ्याविषयः; आसुर-[2]राक्षसास्त्रादिषु[2] सत्येष्वेव मायाशब्दप्रयोगात्। यथोक्तम्—

'तेन मायासहस्रं तच्छम्बरस्याशुगामिना।
बालस्य रक्षता देह[3]मैकैकश्येन सूदितम्[3] ॥' (वि. पु. 1-19-20)

इति ॥

---

[सत्यमित्यादि। तमश्शब्देन प्रकृतिः अभिधीयते इत्यत्र न विवादः। परं सा प्रकृतिः का? इति चिन्तने, श्रुत्यन्तरानुगुण्यात् मायारूपैव वाच्येति पर्यवसानगत्या अनिर्वचनीयत्वं इति भावः।]

मिथ्यापर्यायत्वेनेति। ऐन्द्रजालिकादिषु मायावित्वप्रयोगदर्शनात् माया-मिथ्याशब्दयोः पर्यायत्वात् अनिर्वाच्यस्य मिथ्यात्वाच्च इति शङ्काशयः]।

तदपि नास्ति—मायाशब्दस्य मिथ्यापर्यायत्वमेव नास्ति। यथोक्तमिति। न हि ज्ञानबाध्यानामेकैकशः शस्त्रच्छेद्यत्वमस्ति। तस्मात् मायाशब्दस्य सत्यपरत्वम् इति (श्रु. प्र) ॥

---

[1] अनिर्वचनीयत्व—आ, इ, घ.

[2] राक्षसशस्त्रादिषु—आ, इ, घ.

[3] मेकैकं च निपूदितम्—पा.

[ मायाशब्दार्थः सप्रमाणः ]

अतः मायाशब्दः विचित्रार्थसर्गकराभिधायी। प्रकृतेश्च मायाशब्दाभिधानम्, विचित्रार्थसर्गकरत्वादेव।

'अस्मान्मायी सृजते विश्वमेतत् तस्मिंश्चाऽन्यो मायया संनिरुद्धः' (श्वे. उ. 4-9) इति, मायाशब्दवाच्यायाः प्रकृतेः विचित्रार्थसर्गकरत्वं दर्शयति। परमपुरुषस्य च तद्वत्तामात्रेण मायित्वमुच्यते; न अज्ञत्वेन। जीवस्यैव हि मायया निरोधः श्रूयते —

'तस्मिंश्चाऽन्यो मायया संनिरुद्धः' (श्वे. उ. 4-9)

इति,

'अनादिमायया सुप्तो [1]यदा जीवः[1] प्रबुध्यते' (माण्डू. का. 1-16)

इति च।

'इन्द्रो मायाभिः पुरुरूप ईयते' (बृ. उ. 4-5-19)

[2]इत्यत्राऽपि[2] विचित्राः [3]शक्तयः[3] अभिधीयन्ते। अत एव हि—

---

अत इति। अनुयायिन एव प्रवृत्तिनिमित्तत्वात्, मायाशब्दप्रयोगविषयेषु सर्वेषु अनुगतम् आश्चर्यत्वमेव मायाशब्दप्रवृत्तिनिमित्तम्। आश्चर्यत्वं च विस्मयनीयत्वम्; तच्च विचित्रार्थसर्गकरत्वात्। विचित्रशब्दश्च नानाविधवाची। नानाविधकार्यकरत्वात् प्रकृतेरपि विस्मयनीयत्वम्। सत्येषु असत्येष्वपि मायाशब्दप्रयोगविषयेषु आश्चर्यत्वं विद्यते इति, प्रकृतेः आश्चर्यत्वमेव मायाशब्दप्रयोगे निबन्धनमिति भावः (श्रु. प्र)।

मायित्वमिति। 'मायी' इति पदेनोक्तः मायासम्बन्धः, न तत्तिरोभाव्यत्वम्; अपि तु तच्छेषित्वम्। जीवस्यैव तु तत्तिरोधेयत्वम्, तस्यैव तथात्वश्रवणात्। अना-दीति। मायाभिभवः जीवस्यैवेत्यस्मिन्नर्थे परोक्तमेवेदं वचनम् इत्यर्थः। शक्तय इति। 'मायाभिः' इति बहुवचनात्, अनेकविचित्रशक्त्यभिधायित्वम् अवगम्यते (श्रु. प्र)। [तस्यैव अनुवादोऽयम्। तदभिमतायाः अविद्यायाः न तावद्बहुत्वम्, एकत्वाभ्युपगमात् इति।

---

[1] जीवः—इ.

[2] इत्यत्र च—इ.

[3] शक्तयः निखिलभेदस्रष्ट्र्यः—थ.

'भूरि त्वष्टेव राजति'

इत्युच्यते । [1]न हि मिथ्याभिभूतः[1] कश्चित् विराजते ।

'मम माया दुरत्यया' (भ. गी. 7-14)

इत्यत्राऽपि 'गुणमयी' इति वचनात्, सैव त्रिगुणात्मिका प्रकृतिरुच्यत इति, न श्रुतिभिः सदसदनिर्वचनीयाज्ञानप्रतिपादनम् ॥

[ श्रुत्यर्थापत्त्या अनिर्वचनीयाज्ञानसिद्धेः दूषणम् ]

नाऽपि ऐक्योपदेशानुपपत्त्या । न हि—

'तत् त्वमसि' (छां. उ. 6-8-7)

इति जीवपरयोः ऐक्योपदेशे सति, सर्वज्ञे सत्यसङ्कल्पे सकलजगत्सर्ग-स्थिति-विनाश-हेतुभूते तच्छब्दावगते प्रकृते ब्रह्मणि विरुद्धाज्ञानपरिकल्पनाहेतुभूता [2]काचिदपि[2] अनुपपत्तिः दृश्यते । ऐक्योपदेशस्तु 'त्वं'शब्देनापि जीवशरीरकस्य ब्रह्मण एवाऽभिधानात् उपपन्नतरः ।

---

भूरीति । त्वष्टेव—वर्धकिरिव, भूरि—'बहु स्याम्' इति सङ्कल्पेन बहूभूय, राजति—प्रकाशते इत्यर्थः ।]

[ऐक्योपदेशस्य—'तत्-त्वमसि' इति श्रुतिवाक्यकृतस्य त्वं-तत्पदार्थयोरभेदोपदेशस्य, अनुपपत्त्याऽपि—अनिर्वचनीयाज्ञानसिद्धिं विना असङ्गतत्वेनापि हेतुना, न—अनिर्वचनीयाज्ञानसिद्धिः न भवति इत्यर्थः ] न हीत्यादि । अज्ञानापरिकल्पने अनुपपत्तिर्नाऽस्ति, तत्कल्पने एव अनुपपत्तिः ; विरुद्धधर्मश्रवणात्—इत्यभिप्रायेण तच्छब्दावगतविशेषणान्युक्तानि । समानविभक्तिश्रुत्या हि ऐक्यापरित्यागः । तथा श्रुतहानस्य अन्याय्यत्वात् शब्दावगतविशेषाः स्वीकार्याः इति भावः । ऐक्योपदेशस्त्विति । जीव परयोः हेयसंबन्ध-तदनर्हत्वाभ्यां हि ऐक्यविरोधः । जीवशरीरकस्य परमात्मनः ऐक्याभिधाने हेयसंम्बन्धस्य जीवद्वारकतया विरोधः परिहृतः इत्यर्थः । उपपन्नतरः—मुख्यतया उपपन्नः इति भावः ॥

---

[1] न हि मिथ्याभूतः—इ, न मिथ्याभूतः—द.　　[2] काऽपि—इ.

'अनेन जीवेनाऽत्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि' (छां. उ. 6-3-2) इति सर्वस्य वस्तुनः परमात्मपर्यन्तस्यैव हि [1]नामरूप[1]भाक्त्वमुक्तम्। अतः न ब्रह्मा-ज्ञानपरिकल्पनम् ॥

[ ब्रह्माज्ञानवादस्य इतिहास-पुराणाभ्यामसिद्धिः ]

इतिहास-पुराणयोरपि [2]न ब्रह्मा[2]ज्ञानवादः [3]क्वचिदपि दृश्यते[3]।

ननु—

'ज्योतींषि विष्णुः' (वि. पु. 2-12-38)

इति 'ब्रह्मैकमेव तत्त्वम्' इति प्रतिज्ञाय, 'ज्ञानस्वरूपो भगवान् यतोऽसौ' इति 'शैलाब्धि-धरादिभेदभिन्नस्य जगतः ज्ञानैकस्वरूपब्रह्माज्ञानविजृम्भितत्त्वम्' अभिधाय, 'यदा तु शुद्धं निजरूपि' इति '[4]ज्ञानस्वरूपस्यैव[4] ब्रह्मणः स्वस्वरूपावस्थितिवेलायां वस्तु-भेदाभाव[5]दर्शनेन[5] अज्ञान विजृम्भि[6]तत्वमेव[6]' स्थिरीकृत्य,

'वस्त्वस्ति किम् ?' (वि. पु. 2-12-41)

'मही घटत्वम्' (वि. पु. 2-12-42)

---

ब्रह्मैकमेवेति। जडाजडयोः स्वरूपैक्यायोगेन सामानाधिकरण्यस्य बाधार्थत्वात्, तद्व्यतिरिक्तस्य मिथ्यात्वकथनाच्च इति भावः। अज्ञानविजृम्भितत्त्वमिति। [श्लोके विज्ञान-पदं वर्तते।] 'विविधं ज्ञायते, विपरीतं ज्ञायते वा येन' इति करणव्युत्पत्त्या विज्ञानम्—अविद्या इति [अज्ञानपदघटितं व्याख्यानम्]। वस्तुभेदाभावेति। जडोपलक्षिते वस्तुनि जडगतभेदाः न सम्भवन्ति इत्यर्थः। श्लोके 'वस्तुषु वस्तुभेदाः' इत्यत्र वस्तुषु इति बहु-वचने न तात्पर्यम्। स्थिरीकृत्येति। व्यतिरेकमुखेन अविद्यापरिकल्पितत्वं स्थिरीकृत्येत्यर्थः।

---

[1] नाम—द.
[2] ब्रह्मा—इ.
[3] न दृश्यते—इ.
[4] ज्ञानभूतस्यैव—इ.
[5] प्रदर्शनेन—आ, इ, ड.
[6] तत्वम्—थ, द.

इति श्लोकद्वयेन 'जगदुपलब्धिप्रकारेणाऽपि वस्तुभेदानाम् असत्यत्वम्' उपपाद्य, 'तस्मान्न विज्ञानमृते' इति प्रतिज्ञातं 'ब्रह्मव्यतिरिक्तस्य असत्यत्वम्' उपसंहृत्य,

'विज्ञानमेकम्' (वि. पु. 2-12-43)

इति 'ज्ञान'स्वरूपे[1] ब्रह्मणि भेददर्शननिमित्ताज्ञानमूलं निजकर्मैव' इति स्फुटीकृत्य, 'ज्ञानं विशुद्धम्' इति 'ज्ञानस्व'रूपस्य ब्रह्मणः[2] स्वरूपं' विशोध्य, 'सद्भाव 'एवं[3] भवतो मयोक्तः' इति 'ज्ञानस्वरूपस्य ब्रह्मण एव सत्यत्वम्, न अन्यस्य; अन्यस्य च असत्यत्वमेव। तस्य भुवनादेः सत्यत्वं व्यावहारिकम्' इति तत्त्वं तव उपदिष्टम्, इति हि उपदेशो दृश्यते !

नैतदेवम्; अत्र भुवनकोशस्य विस्तीर्णं स्वरूपम् उक्त्वा, पूर्वमनुक्तं रूपान्तरम् —

---

जगदुपलब्धिप्रकारेणाऽपि—न केवलं शास्त्रप्रमाणेन, लौकिकजडग्राहिप्रमाणेनाऽपि। न विज्ञानमृते इति श्लोकार्धेन अनात्मभूतविजातीयभेदनिषेधोपसंहारः। विज्ञानमेकम् इत्यर्धं सजातीयरूपात्मभेदनिषेधपरम्। भेददर्शन . . . कर्मैवेति। भेददर्शनम्—सजातीयभेददर्शनम्। तत् उत्तरोत्तरभाविकार्याज्ञानहेतुः। तस्यापि पूर्वं कर्मैव इत्यर्थः। 'यः देवादिशरीरभेदहेतुः स एव' इति एवकाराभिप्रायः। ज्ञानं विशुद्धम् इति स्वगतभेदनिषेधः। विशुद्धं विमलम्—अविद्या-तत्कृतभेददर्शनरहितम्। सद्भावः—तत्त्वम्। व्यावहारिकम् इति 'संव्यवहारभूतम्' इति [श्लोकस्थपदतात्पर्यम्]। इति हि उपदेशः दृश्यते इति। तस्मात् इतिहास-पुराणयोः ब्रह्माज्ञानवादो न दृश्यते इति वक्तुं न शक्यम्। [इति पूर्वपक्षः]।

नैतदेवमिति। चिन्मात्रब्रह्मणः अविद्यासम्बन्धित्वम्, अविद्याकल्पितत्वेन प्रपञ्चस्य मिथ्यात्वं च यदुक्तं न तत् प्रामाणिकम् इत्यर्थः। अत्र- -अस्मिन् [विष्णुपुराणे] द्वितीयांशे। विस्तीर्णं स्वरूपम्—संसृष्टं स्थूलरूपम्। अनुक्तं रूपान्तरम्—वियुक्तं सूक्ष्मरूपम्। उत्तरत्र

---

[1] स्वरूपस्य—थ. [2] रूपब्रह्मणः—द.

[3] एषः—पा,

'संक्षेपः श्रूयताम्' (वि. पु. 2-12-36)

इत्यारभ्य अभिधीयते ॥

[ ब्रह्मणः पूर्वमनुक्त रूपान्तरम् ]

चिदचिन्मिश्रे जगति चिदंशः, वाङ्मनसागोचरस्वसंवेद्यस्वरूपभेदः ज्ञानैकाकारतया अस्पृष्टप्राकृतभेदः अविनाशित्वेन, 'अस्ति'शब्दवाच्यः। अचिदंशस्तु, चिदंशकर्मनिमित्तपरिणामभेदः विनाशी इति, 'नास्ति'शब्दाभिधेयः। उभयं तु परब्रह्मभूतवासुदेवशरीरतया तदात्मकम् इति, एतद्रूपं सङ्क्षेपेण अत्राऽभिहितम् ॥

[ प्रतिज्ञातार्थोपपादनम् ]

तथा हि—

'यदम्बु वैष्णवः कायस्ततो विप्र वसुन्धरा।
पद्माकारा समुद्भूता पर्वताब्ध्यादिसंयुता ॥' (वि. पु. 2-12-37)

इति अम्बुनः [1]विष्णोः शरीरत्वेन[1]', 'अम्बुपरिणामभूतं ब्रह्माण्डमपि विष्णोः कायः। [2]तस्य च[2] विष्णुः आत्मा' इति, सकलश्रुतिगत[3]तादात्म्योपदेशो[3]पबृंहणरूपस्य

---

मिथ्यात्वं विवक्षितं चेत्, पूर्वं विस्तरेण कथनम् अनुपपन्नम्। न हि पूर्वमेव भ्रान्तस्य भ्रमान्तरापादनं कार्यम्। तस्मात् पूर्वं विस्तरेण भुवनकोशस्य कथितत्वात् न मिथ्यात्वं विवक्षितमिति भावः ॥

उभयमिति। चिदचिद्रूपम् अन्योन्यसंसृष्टं, निष्कृष्टं च भगवच्छरीरम् इत्यर्थः (श्रु. प्र)। एतद्रूपम्—अर्थरूपम् (श्रु. दी) ॥

ब्रह्माण्डमपीति। न हि बाल्यावस्थायां शरीरभूतस्य वस्तुनः अवस्थान्तरे चेतनेन स्वरूपैक्यमस्ति, अपि तु सर्वावस्थमपि तद्वस्तु शरीरमेवेति भावः। आत्मेति—आत्मेत्यभिप्रेत्य। सकलश्रुति . . . रूपस्येति। अनधीतशाखास्वपि तादात्म्योप-

---

[1] विष्णुशरीरत्वेन—वा.

[2] तस्य—द.

[3] तादात्म्यो—द.

सामानाधिकरण्यस्य 'ज्योतींषि विष्णुः' इत्यारभ्य वक्ष्यमाणस्य शरीरात्मभाव एव निबन्धनम् [1]इत्याह[1] ।

अस्मिन् शास्त्रे पूर्वमपि एतत् असकृदुक्तम्—

'तानि सर्वाणि तद्वपुः' (वि. पु. 1-22-86)

'तत्सर्वं वै हरेस्तनुः' (वि. पु. 1-22-38)

'स एव सर्वभूतात्मा विश्वरूपो यतोऽव्ययः' (वि. पु. 1-2-69)

इति । तदिदं शरीरात्मभा[2]वायत्तं[2] तादात्म्यं सामानाधिकरण्येन [3]व्यपदिश्यते[3]— 'ज्योतींषि विष्णुः' इति ॥

[ अस्ति-नास्त्यात्मकतया जगद्विभागविधा ]

अत्र अस्त्यात्मकं, नास्त्यात्मकं च जगदन्तर्गतं वस्तु विष्णोः कायतया विष्ण्वात्मकम् इत्युक्तम् । इदम् अस्त्यात्मकम्, इदं नास्त्यात्मकम्, अस्य च नास्त्यात्मकत्वे हेतुः अयम् इत्याह 'ज्ञानस्वरूपो भगवान् यतोऽसौ' इति ।

---

देशोऽस्ति । तस्य अयमेवार्थः—इति ज्ञापनं तादात्म्योपदेशस्य उपबृंहणम् (इत्यर्थः) । अत्र इतिशब्दत्रयस्य 'अनेन श्लोकेन भगवान् इममर्थमभिप्रेत्य अयमर्थ इत्याह' इति अन्वयप्रकारः

पूर्वमपि—'विश्वरूपो यतोऽव्ययः', 'सर्वगत्वादनन्तस्य स एवाऽहम्' इत्यादावपि । एतत्—सामानाधिकरण्यस्य शरीर-शरीरिभावनिबन्धनत्वम् । उक्तम्—कण्ठोक्तम् । व्यपदिश्यते इति । संसृष्टस्य भगवदात्मकत्वमुक्तम् इत्यर्थः । 'प्रधानादि विशेषान्तं चेतनाचेतनात्मकम्' इत्युक्तत्वात् 'ज्योतिः' इत्यादिशब्दाः संसृष्टजीववाचिनः ॥

अत्र अस्त्यात्मकमिति । ज्योतींषीत्यादिश्लोकस्थपादत्रयेण व्यष्टिव्यवस्थयोः संसृष्टयोः तदात्मकत्वमुक्तम् । चतुर्थपादेन निष्कृष्टयोरपि [चिदचितोः] भगवदात्मकत्वमुक्तम् इत्यर्थः (श्रु. प्र) । हेतुः अयम् इति । अचिदंशस्य नाऽस्त्यात्मकत्वनिबन्धनमेव तात्पर्यविषयः ।

---

[1] इत्याहुः—च, ज. [2] वापन्नम्—वा.

[3] व्यपदिशति—इ.

अशेषक्षेत्रज्ञात्मना अवस्थितस्य भगवतः, ज्ञानमेव 'स्वाभाविकं रूपम्'[1], न देव-मनुष्यादिवस्तुरूपम्। यत एवम्, तत एव अचिद्रूपदेव[2]मनुष्य[2]शैलाब्धिधरादयश्च तद्विज्ञानविजृम्भिताः—तस्य ज्ञानैकाकारस्य सतः देवाद्याकारेण [3]स्वात्म[3]वैविध्यानुसन्धानमूलाः—देवाद्याकारानुसन्धान[4]मूलकर्ममूलाः[4] इत्यर्थः।

यतश्च अचिद्वस्तु क्षेत्रज्ञकर्मानुगुणपरिणामास्पदम्, ततः तत् 'नास्ति'शब्दाभिधेयम्, इतरत् 'अस्ति'शब्दाभिधेयम् इति अर्थादुक्तं भवति। तदेव विवृणोति 'यदा तु शुद्धं निजरूपि' इति।

यदा एतत् ज्ञानैकाकारम् आत्मवस्तु देवाद्याकारेण स्वात्मनि वैविध्यानुसन्धानमूल[5]सर्व[5]कर्मक्षयात्, निर्दोषं परिशुद्धं निज[6]रूपि[6] भवति; तदा देवाद्या-

---

तस्य हि मिथ्यात्वशङ्का व्युदसनीया। अतः तस्य परिणामित्वात् नास्त्यात्मकत्वे एव तात्पर्यम्। चिदंशस्य तु अपरिणामित्वात् अस्त्यात्मकत्वं फलितमिति भावः।

अशेषेति। ['अशेषमूर्तिः' इत्यत्र अशेषपदस्य अचित्परत्वानुपपत्त्या] अशेषशब्दः क्षेत्रज्ञविषयः। अस्मिन् श्लोके 'अशेषमूर्तिः' इत्यनेनाऽपि सामानाधिकरण्यस्य शरीर-शरीरिभावनिबन्धनत्वं ज्ञायते इत्यभिप्रायः। अत्र ज्ञानस्वरूपत्वं विशेषणभूतस्य जीवस्यैव विधीयते; यथा 'लोहितोष्णीषाः ऋत्विजः प्रचरन्ति' (पू. मी. 3-8-12) [इदं पञ्चमाधिकरणे उल्लिखितम्] इत्यत्र विशेषणीभूतोष्णीषगतं लौहित्यमेव विधेयं परम्परया ऋत्विक्प्रचारकर्मविशेषणं तद्वत्। दित्र्यात्मस्वरूपगतं ज्ञानस्वरूपत्वं तु नाऽत्रोच्यते; 'सर्वकर्मक्षये' इति विवरणानुपपत्तेः। विज्ञानम्—विविधज्ञानम्।

तदेव विवृणोति इति। विज्ञानविजृम्भितत्वमेव व्यतिरेकमुखेन विवृणोतीत्यर्थः।

निर्दोषम्—शरीरसम्बन्धरहितम्। परिशुद्धम्—तत्कृतरागद्वेषसुखदुःखादिरहितम्। निजरूपि—आविर्भूतस्वरूपम्। [देवाद्याकारेणैकीकृत्यात्मकल्पनेत्यादि सङ्कल्पतरोः इत्यादेः

---

[1] स्वाभाविकरूपम्—द.
[2] मनुष्याः—थ.
[3] स्वात्मनि—द.
[4] मूलाकर्ममूलः—थ.
[5] सकल—इ.
[6] रूपि इति—थ.

कारेणैकीकृत्य आत्म[1]कल्पना[1]मूलकर्मफलभूताः [2]तद्भोगार्थाः वस्तुषु[2] वस्तुभेदाः न भवन्ति।

ये देवादिषु वस्तुषु आत्मतया अभिमतेषु भोग्यभूताः देव-मनुष्य-शैलाब्धि-धरादिवस्तुभेदाः, ते तन्मूलभूतकर्मसु विनष्टेषु न भवन्तीति, अचिद्वस्तुनः कादाचित्का[3]वस्थाविशेष[3]योगितया 'नास्ति' शब्दाभिधेयत्वम्। इतरस्य सर्वदा निजसिद्ध-[4]ज्ञानैकाकारत्वेन[4] 'अस्ति'शब्दाभिधेयत्वम् इत्यर्थः। प्रतिक्षणम् अन्यथाभूततया कादाचित्कावस्थायोगिनः [5]अचिद्वस्तुनः 'नास्ति[5]'शब्दाभिधेयत्वमेव इत्याह 'वस्त्वस्ति किम्?' इति।

'अस्ति'शब्दाभिधेयो हि आदि-मध्य-पर्यन्तहीनः सततैकरूपः पदार्थः, तस्य कदाचिदपि 'नास्ति'बुद्ध्यनर्हत्वात्। अचिद्वस्तु किञ्चित् क्वचिदपि तथाभूतं न दृष्ट-चरम्। ततः किम्? इत्यत्राह—

'यच्चान्यथात्वम्' (वि. पु. 2-12-41)

---

विवरणम् [] देहात्मनोः एकीकृत्याऽनुसन्धानफलं देवाद्याकारेण स्वात्मवैविध्यानुसन्धानम्। तद्भोगार्थाः इति। सुखादिभोगद्वारभूतत्वात् देवादिभेदाः कर्मफलम् इत्यर्थः। भोगस्थान-भोगोपकरणानां भोगसिद्धिप्रयोजकत्वमेव भोग्यत्वम् इत्यर्थः। सप्तम्यन्तवस्तुशब्दः जीव-पर्यन्तदेहपरः। द्वितीयवस्तुशब्दः देवादिशरीरमात्रपरः। वस्तुभेदाः—देवादिशरीर-भेदाः। अत्र वस्तुभेदशब्देन भेदस्य वस्तुरूपत्वात् पारमार्थ्यमपि फलितम् (श्रु. प्र)।

प्रतिक्षणमिति। जगदुपलब्धिप्रकारेणाऽपि वस्तुभेदानां परिणामित्वमुपपाद्यते श्लोकद्वयेन। तत्र प्रथमस्य वाक्यार्थः अयम्। श्लोकस्य नास्तिशब्दाभिधेयतापरत्वम् 'यदस्ति यन्नाऽस्ति' इत्युपक्रमावगतम्। अस्मिन् श्लोके प्रयोजकशिक्षा।

अस्तिशब्देति। सततैकरूपतया अस्तिशब्दवाच्यत्वे सति हि पूर्वार्धोक्तस्य तदभावस्य नाऽस्तिशब्दाभिधेयताहेतुत्वसिद्धिः।

---

[1] कल्पन—वा.
[2] तद्भोगार्थवस्तुषु—द.
[3] वस्था—वा.
[4] ज्ञानैकस्वरूपत्वेन—आ, इ.
[5] नास्ति—थ.

इति । यद्वस्तु प्रतिक्षणम् अन्यथात्वं याति, तत् उत्तरोत्तरावस्थाप्राप्त्या पूर्वपूर्वावस्थां जहाति इति, तस्य पूर्वावस्थस्य उत्तरावस्थायां न प्रतिसन्धानमस्ति । अतः सर्वदा तस्य नास्तिशब्दाभिधेयत्वमेव । तथा हि उपलभ्यते इत्याह 'महीघटत्वम्' इति ।

स्वकर्मणा देव-मनुष्यादिभावेन [1]स्तिमिता[1]त्मनिश्चयैः स्वभोग्यभूतम् अचिद्वस्तु प्रतिक्षणम् अन्यथाभूतम् आलक्ष्यते—अनुभूयते इत्यर्थः । एवं सति किमपि अचिद्वस्तु अस्ति [2]शब्दार्हम्[2] आदि-मध्य-पर्यन्तहीनं सततैकरूपम् आलक्षितम् अस्ति किम् ? नह्यस्ति, इत्यभिप्रायः ।

यस्मात् एवम् , तस्मात् ज्ञानस्वरूपात्मव्यतिरिक्तम् अचिद्वस्तु कदाचित् क्वचित् केवलास्तिशब्दवाच्यं न भवति इत्याह 'तस्मान्न विज्ञानमृते' इति ।

---

न प्रतिसन्धानमिति । 'कुतस्तत्त्वम्' इत्यस्यार्थः । तत्त्वम्—तस्य भावः । 'तदिदम्' इति प्रतिसन्धानानर्हत्वं फलितम् इत्यर्थः । कुतश्शब्दः प्रमाणप्रतिक्षेपपरः । कुतः प्रमाणात् ? इत्यर्थः । पूर्वावस्थस्य भूयः तथात्वे प्रमाणं च प्रत्यभिज्ञा । अतः प्रमाणे प्रतिक्षिप्ते प्रतिसन्धानं निषिद्धं भवति इति भावः । अन्यथा 'न तत्तथा' इत्यनेन पौनरुक्त्यं स्यात् । महीघटत्वम् इत्यत्र याति इति पूर्वश्लोकात् अनुषङ्गः ।

देवमनुष्यादिभावेनेति । देवादिदेहसंसर्गेणेत्यर्थः । कर्मणः आत्मनिश्चयविरोधित्वं सद्वारकमित्याशयः । स्तिमितम्—प्रतिबद्धम् । अस्थिरे भोग्यत्वबुद्धिः स्थिरतरसुखरूपात्मनिश्चयस्तैमित्यात् इति भावः । अनुभूयते इति 'आलक्ष्यते' इत्यस्य चाक्षुषज्ञाने प्रयोगप्राचुर्यात् तद्व्यावृत्त्यर्थम् ।

यस्मात् एवं, तस्मात्—परिणामत्वादेव, न तु ज्ञानबाध्यत्वात् इत्यर्थः । अचिद्वस्तुशब्देन 'वस्तुजात'शब्दार्थः उक्तः । 'जात'शब्दशिरस्कः 'वस्तु'शब्दः न नित्यवाची । केवलेति अविच्छिन्नास्तिशब्दवाच्यत्वव्यावृत्त्यर्थम् ।

---

[1] अस्तमिता—थ. [2] शब्दाभिधेयम्—थ.

आत्मा तु सर्वत्र ज्ञानैकाकारतया देवादिभेदप्रत्यनीकस्वरूपोऽपि देवादिशरीर-प्रवेशहेतुभूतस्वकृतविविधकर्ममूलदेवादिभेदभिन्नात्मबुद्धिभिः [1]तेन तेन[1] रूपेण बहुधा अनुसंहितः इति, तत् भेदानुसन्धानं न आत्मस्वरूपप्रयुक्तम् इत्याह 'विज्ञानमेकम्' इति ।

आत्मस्वरूपं तु कर्मरहितम्, तत एव मलरूपप्रकृतिस्पर्शरहितम् । ततश्च तत्प्रयुक्तशोक-[2]मोह-लोभा[2]द्यशेषहेयगुणासङ्गि, उपचयापचयानर्हतया एकम्, तत एव सदा एकरूपम् । तच्च [3]वासुदेव[3]शरीरम् इति तदात्मकम्, अतदात्मकस्य कस्य-चिदपि अभावादित्याह 'ज्ञानं विशुद्धम्' इति ।

चिदंशः सदा एकरूपतया, सर्वदा 'अस्ति'शब्दवाच्यः । अचिदंशस्तु [4]क्षण[4]-परिणामित्वेन सर्वदा नाशगर्भः इति, सर्वा 'नास्ति'शब्दाभिधेयः । [5]एवंरूप[5]-

---

सर्वत्र—सर्वशरीरेषु । ज्ञानैकाकारतया—ज्ञानत्वैकाकारतया । भावप्रधानो निर्देशः । स्वरूपतः धर्मतश्च अविशेषेण ज्ञानत्वं सद्वारकमद्वारकं च आकारो हि भवति । एकशब्देन सङ्कोच-विकास-दुःखरूपत्वादिव्युदासश्च । विविधेति भेदशब्दार्थः । बुद्धि-शब्देन चित्तशब्दार्थः उक्तः । बुद्धेः भेदश्च आत्मनि आरोप्यमाणदेवाद्याकाररूपविषय-भेदात् । बहुधा—देवत्वादिबहुप्रकारविशिष्टतया । न आत्मस्वरूपप्रयुक्तम्—औपाधि-कमित्यर्थः ।

ततश्च—तत एव । हेतोः नैरपेक्ष्यसूचकः 'च'शब्दः । उपचयापचयौ—वृद्धिक्षयौ । तदर्हत्वम्—सावयवत्वम् । सावयवत्वाभावादेव एकशब्दवाच्यत्वम् । निरव-यवत्वम्—एकत्वम् इत्यर्थः । ज्ञानं विशुद्धमित्यादि । 'ज्ञानस्वरूपः' 'यदा तु' इति श्लोकौ चिदचित्साधारणौ । 'वस्त्वस्ति' इत्यादिसार्धश्लोकद्वयम् अचिदसाधारणम् । 'विज्ञानम्' इत्यादिसार्धश्लोकः चिदसाधारणः इति विभागः ।

---

[1] केन—द. [2] मोहा—इ.

[3] वासुदेवस्य—थ. [4] प्रतिक्षण—झ, वा.

[5] एवंरूपं—झ.

चिदचिदात्मकं जगत् वासुदेवशरीरं तदात्मकम् इति, जगद्याथात्म्यं सम्यगुक्तम् इत्याह 'सद्भाव एवम्' इति ।

अत्र 'सत्यम्, असत्यम्' इति, 'यदस्ति, यन्नास्ति' इति [1]प्रक्रान्तस्य[1] उपसंहारः । [2]एतत्[2] ज्ञानैकाकारतया समम् अशब्दगोचरस्वरूपभेदमेव अचिन्मिश्रं भुवनाश्रितं देवमनुष्यादिरूपेण सम्यग्व्यवहारार्हभेदं यत् वर्तते, तत्र हेतुः कर्मैव [3]इत्युक्तम् इत्याह[3]—

'एतत्तु यत्' (वि. पु. 2-12-45)

इति । तदेव विवृणोति—

'यज्ञः पशुः' (वि. पु. 2-12-46)

इति ।

[4]जगद्याथात्म्यज्ञान[4]प्रयोजनम्—मोक्षोपाययतनम्, इत्याह—

'यच्चैतत्' (वि. पु. 2-12-47)

इति ॥

---

तदात्मकमिति । भगवदात्मकत्वं शरीर-शरीरिभावरूपेण, न तु स्वरूपैक्येनेत्यर्थः । सद्भाव इति न परमतमुक्तम्, किन्तु तत्त्वमेव इत्यभिप्रायः । एवंशब्दः श्लोके यथाशब्दप्रतियोगी । सत्यं ज्ञानम्, असत्यम् अन्यच्च यथा अवस्थितम्; एवं सद्भावः उक्तः इत्यन्वयः । अतः सत्यासत्यशब्दवाच्यत्वनिर्वाहकापरिणमित्व-परिणामित्वे, भगवदात्मकत्वं च यथाशब्दविवक्षितं भवति ।

अत्रेति । उपक्रमे अस्ति-नास्तिशब्देन, उपसंहारे सत्यासत्यशब्देन इति शब्दान्तरनिर्देशस्य अन्येष्वपि शब्देषु क्वचिदेवंश्रुतेषु इदमेव प्रवृत्तिनिमित्तमित्यभिप्रायः । भुवनाश्रितम्—अण्डान्तर्गतम्—भोगस्थानगतम् । सम्यक्शब्दः स्पष्टत्वपरः ॥

---

[1] प्रकारान्तरस्य—द.
[2] एतावत्—द, एवम्—वा.
[3] इत्याह—ट.
[4] जगद्याथार्थ्यज्ञान—वा.

[ श्लोकानां परोक्तार्थाननुगुणता ]

अत्र निर्विशेषे परे ब्रह्मणि, तदाश्रये सदसदनिर्वचनीये च अज्ञाने, जगतः तत्कल्पितत्वे [1]च[1] अनुगुणं किञ्चिदपि पदं न दृश्यते।

'अस्ति-नास्ति'शब्दाभिधेयं चिदचिदात्मकं कृत्स्नं जगत्, परमस्य [2]परेशस्य परस्य[2] ब्रह्मणः विष्णोः कायत्वेन, तदात्मकम्। ज्ञानैकाकारस्य आत्मनः देवादि-विविधाकारानुभवे, अचित्परिणामे च हेतुः—वस्तुयाथात्म्यज्ञानविरोधि क्षेत्रज्ञानां कर्मैव, इति प्रतिपादनात्, अस्ति-नास्ति सत्यासत्यशब्दानां च सदसदनिर्वचनीय-वस्त्वभिधानासामर्थ्याच्च नास्त्यसत्यशब्दौ अस्ति सत्यशब्दविरोधिनौ। अतश्च ताभ्याम् [3]असत्त्वं[3] हि [4]प्रतीयते[4], न अनिर्वचनीयत्वम्।

अत्र च अचिद्वस्तुनि नास्त्यसत्यशब्दौ न तुच्छत्व-मिथ्यात्वपरौ प्रयुक्तौ। अपि तु विनाशित्वपरौ। 'वस्त्वस्ति किम्', 'मही घटत्वम्' [5]इत्यत्राऽपि[5] विना-शित्वमेव हि उपपादितम्; न निष्प्रमाणकत्वम्, ज्ञानबाध्यत्वं वा; एकेनाकारेण एकस्मिन् काले अनुभूतस्य कालान्तरे परिणामविशेषेण अन्यथा उपलब्ध्या नास्तित्वोप-पादनात्। तुच्छत्वं हि प्रमाणसम्बन्धानर्हत्वम्। बाधोऽपि [6]यद्देश[6]कालादि-

---

अस्तीत्यादि। 'किञ्चिदपि पदं न दृश्यते' इति न वाच्यम्; नास्त्यादिशब्दाः, सामानाधिकरण्यम्, अज्ञानवाचिपदजातं च अनुगुणमित्यत्रोत्तरमिदम्। परमस्य इति। परम-परेशादिशब्दानां भवत्पक्षे मुख्यार्थासिद्धिः इति भावः। अस्ति . . शब्दानां च इति। चः त्वर्थः। अस्ति-सत्यशब्दौ दृष्टान्तार्थौ, यथा अस्ति-सत्यशब्दौ न सद्विलक्षणपरौ, तथा नास्त्यसत्यशब्दावपि न असद्विलक्षणपरौ इत्यर्थः। नास्तीत्यादि। अनिर्वचनीयवस्त्वभि-धानसामर्थ्योपपादनमिदम्। अर्थद्वारको विरोधः।

तुच्छत्वं हीति। विनाशित्वं तुच्छत्व-मिथ्यात्वव्यावृत्तमिति प्रतिपादनाय इदम्

---

[1] वा—क, ग, घ, च, छ, झ, ञ, ट.
[2] परेशस्य—वा.
[3] असत्यत्वम्—थ.
[4] प्रतिपाद्यते—इ.
[5] इत्यत्र—इ, घ.
[6] देश—इ.

सम्बन्धितया यत् 'अस्ति' इति उपलब्धम्, तस्य तद्देश-कालादिसम्बन्धितया 'नाऽस्ति' इति उपलब्धिः ; न तु कालान्तरे अनुभूतस्य कालान्तरे परिणामादिना 'नाऽस्ति' इति उपलब्धिः ; कालभेदेन विरोधाभावात् । अतः न मिथ्यात्वम् ।

एतदुक्तं भवति—ज्ञानस्वरूपम् आत्मवस्तु आदि-मध्य-पर्यन्त[1]हीनं[1] सततैक-[2]स्वरूपमिति[2], स्वत एव सदा [3]अस्ति[3]शब्दवाच्यम् । अचेतनं तु क्षेत्रज्ञभोग्यभूतं [4]तत्कर्मा[4]नुगुण[5]परिणामि विनाशि[5] इति, सर्वदा नास्त्यर्थगर्भमिति नास्त्यसत्यशब्दाभिधेयम्—इति ।

यथोक्तम्—

'यत्तु कालान्तरेणाऽपि नान्यसंज्ञामुपैति वै ।
परिणामादिसम्भूतां तद्वस्तु नृप तच्च किम् ॥' (वि. पु. 2-13-100)

---

परिणामादिनेति । 'परिणाम'शब्दः परिणामसामान्यपरः, तद्विशेषपरश्च । यथा 'वाद'-शब्दः सर्वकथासाधारणः, वीतरागकथामात्रपरश्च तद्वत् । अत्र अयं 'परिणाम'शब्दः वर्धमानावस्थावाची, 'परिणामर्धिजन्मभिः' (वि. पु. 1-2-13) इति प्रयोगात् (श्रु. प्र) । कालभेदेनेति । कालान्तरानुभूतस्य कालान्तरे नास्तीत्युपलब्धिः कथं न बाधः ? इत्यस्योत्तरमिदम् । विरोधे हि बाधः इत्यर्थः । अत इति । बाध्यत्वं हि मिथ्यात्वमित्यभिप्रायः ।

सततेति । सततैकरूपत्वम् अस्तिशब्दप्रवृत्तिनिमित्तम् । विनाशगर्भत्वं नास्तिशब्दप्रवृत्तिनिमित्तमित्यर्थः । उत्तरावस्थाप्राप्तिर्हि पूर्वावस्थस्य विनाशः । तदवस्थस्य सैव उत्पत्तिः । तस्मात् 'नास्ति'शब्दाभिधेयत्वम् अचिद्वस्तुनः । चिद्वस्तुनस्तु अवस्थान्तरापत्त्यवस्थान्तरप्रहाणाभावेन एकरूपत्वात् न विनाशगर्भत्वम् । अतः तत् 'अस्ति'शब्दवाच्यमेव । यत् सदा अस्त्येव, तत् 'अस्ति'शब्दवाच्यम् । 'अप एव भक्षयतीति अब्भक्षः' इतिवत् ।

यथोक्तमित्यादि । 'अस्ति-नास्ति' इत्येतत्प्रवृत्तिनिमित्तमिदमेवेत्यत्र प्रमाणवर्णनम् ।

---

[1] रहितं—इ, वा.
[2] रूपमिति—इ.
[3] अस्तीति—इ.
[4] तत्तत्कर्मा—इ.
[5] परिणामविनाशि—द.

'अनाशी परमार्थश्च प्राज्ञैरभ्युपगम्यते ।
तत्तु [1]नाऽस्ति[1] न सन्देहो नाशिद्रव्योपपादितम् ॥' (वि. पु. 2-14-24)

इति । देश-काल-कर्मविशेषापेक्षया अस्तित्व-[2]नाऽस्तित्वयोगिनि[2] वस्तुनि केवलास्ति बुद्धिबोध्यत्वम् अपरमार्थः इत्युक्तम् । आत्मन एव केवलास्तिबुद्धिबोध्यत्वमिति सः 'परमार्थः' इत्युक्तम् ॥

[ दशश्लोक्युक्तार्थानुवादः ]

श्रोतुश्च मैत्रेयस्य—
'विष्ण्वाधारं यथा चैतत् त्रैलोक्यं समवस्थितम् ।
[3]परमार्थश्च[3] मे प्रोक्तो यथा ज्ञानं प्रधानतः ॥' (वि. पु. 2-13-2)

[4]इति[4] अनुभाषणाच्च, 'ज्योतींषि विष्णुः' इत्यादिसामानाधिकरण्यस्य आत्मशरीरभाव एव निबन्धनम्, चिदचिद्वस्तुनोश्च अस्ति-नास्तिशब्द[5]प्रयोग[5]निबन्धनं ज्ञानस्य अकर्मनिमित्त[6]स्वाभाविकरूपत्वेन[6] प्राधान्यम्, अचिद्वस्तुनश्च तत्कर्मनिमित्तपरिणामित्वेन अप्राधान्यम् इति प्रतीयते ॥

---

कर्मविशेषापेक्षयेति । पालन-रञ्जनादिसद्भावासद्भावाभ्यां राजत्व-पितृत्वादिरूपेण अस्तित्वं नास्तित्वं च कर्मापेक्षम् । केवलास्तिबुद्धिबोध्यत्वम्—स्वाभाविकास्तित्वयोगित्वबुद्धिविषयत्वम् ॥

प्रधानतः इति । द्व्येकयोः इतिवत् भावप्रधानः निर्देशः । प्राधान्येनेत्यर्थः । प्राधान्यम् उत्कर्षः । तदेकधार्यद्रव्यत्वं हि शरीरस्य लक्षणम् । अतः विष्ण्वाधारमित्यनेन आत्मशरीरभावः सिद्धः (श्रु. प्र) । प्राधान्याप्राधान्ये—उत्कर्षापकर्षौ । तौ च अपरिणामित्व-परिणामित्वलक्षणौ, न अमिथ्यात्व-मिथ्यात्वलक्षणौ । धर्मिणि सति हि

---

[1] नाशि—वा.
[2] योगिनि—थ.
[3] परमार्थस्तु—न.
[4] इत्यादि—पा.
[5] योग—वा.
[6] स्वाभाविकस्वरूपत्वेन—थ, द.

[ वेदान्तानां निर्विशेषब्रह्मविज्ञानेन अविद्यानिवृत्तिपरत्वशङ्का-परिहारौ ]

यदुक्तम् — निर्विशेषब्रह्म[1]विज्ञानादेव[1] अविद्यानिवृत्तिं वदन्ति श्रुतयः—इति,

तदसत् ;

'वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात् ।
तमेवं विद्वानमृत इह भवति नाऽन्यः पन्था विद्यतेऽयनाय ॥'

(तै. आर. पु. 3-13-2)

'सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि' (तै. ना. उ. 1-8)

'न तस्येशे कश्चन तस्य नाम महद्यशः' (तै. ना. उ. 2-10)

'य एनं विदुरमृतास्ते भवन्ति' (तै. ना. उ. 1-11)

इत्याद्यनेकवाक्यविरोधात् । ब्रह्मणः सविशेषत्वादेव सर्वाण्यपि वाक्यानि सविशेषज्ञानादेव मोक्षं वदन्ति । [2]शोधकवाक्यान्यपि[2] 'सविशेषमेव ब्रह्म' प्रतिपादयन्तीति उक्तम् ॥

---

प्राधान्याप्रधान्ये । प्रतीतिमात्रसिद्धं हि मिथ्या । अतः न तत्र अप्राधान्यशब्दः स्वरसः इत्यभिप्रायः ॥

**वेदाहमिति ।** अनेन निग्रहादिविशिष्टविषयज्ञानमेव उपायः, नाऽन्यः इत्युक्तम् । **विद्युतः इति ।** विद्युद्वर्णात् इत्यर्थः । 'आदित्यवर्णम्' इत्यनेन ऐकार्थ्यात् । **न तस्येशे** इत्यनेन उपायभूतं ज्ञानान्तरं नाऽस्ति इति फलितम्, अधिकज्ञेयान्तराभावात् । **ब्रह्मण इति ।** सद्विद्यादिष्वपि सगुणविषयत्वोपपादनात्, यथावस्थितस्वरूपविषयज्ञानस्यैव मोक्षोपायत्वात्, तान्यपि सविशेषज्ञानोपायत्वपराणि इत्यर्थः ।

---

[1] ज्ञानादेव—वा. [2] शोधकान्यपि—द.

[ तत्त्वमस्यादिसामानाधिकरण्यान्यथाऽनुपपत्त्या निर्विशेषसिद्धेः निरासः ]

तत्त्वमस्यादिवाक्येषु सामानाधिकरण्यं न निर्विशेषवस्त्वैक्यपरम् ; 'तत् त्वम्'-पदयोः सविशेषब्रह्माभिधायित्वात् । तत्पदं हि सर्वज्ञं सत्यसङ्कल्पं जगत्कारणं ब्रह्म [1]परामृशति[1],

'तदैक्षत बहु स्याम्' (छां. उ. 6-2-3)

इत्यादिषु तस्यैव प्रकृतत्वात् ।

तत्समानाधिकरणं 'त्वं'पदं च [2]अचिद्विशिष्ट[2]जीवशरीरकं [3]ब्रह्म[3] प्रतिपादयति ; प्रकारद्वयावस्थितैकवस्तुपरत्वात् सामानाधिकरण्यस्य । प्रकारद्वयपरित्यागे प्रवृत्तिनिमित्तभेदासम्भवेन सामानाधिकरण्यमेव परित्यक्तं स्यात्, द्वयोः पदयोः लक्षणा च ।

---

तत्त्वमस्यादीति । परैः सामानाधिकरण्यं चतुर्धा हि तत्र तत्र अभ्युपेतम्–1) शोधकवाक्येषु सामानाधिकरण्यम् अतद्व्यावृत्तिमुखेन वस्त्वैक्यपरम्, 2) 'तत् त्वमसि' इत्यादौ जीवब्रह्मणोः सामानाधिकरण्यम् अन्वयमुखेन उपलक्षितवस्त्वैक्यपरम्, 3) अचिद्ब्रह्मणोस्तु 'सर्वं खल्विदं ब्रह्म' इत्यादौ अतात्विकरूपारोपणेन सामानाधिकरण्यम्, 4)'ज्योतींषि विष्णुः' इत्यादौ बाधार्थम् इति । हिः हेतौ । प्रकृतत्वादिति । तच्छब्दस्य प्रकृतसर्वाकारविशिष्टवस्तुपरामर्शित्वं व्युत्पत्तिसिद्धम् । यथा 'शुक्ला शोभनाक्षी मदीया पूर्णशृङ्गा गौः, तामानय' इति । अतः प्रकृतसर्वाकारप्रहाणे प्रतिसन्धानानर्हस्य वस्तुनः प्रकृतत्वमेव नाऽस्तीति तच्छब्दस्य वस्तुमात्रपरत्वं लाक्षणिकं स्यात् [इत्यर्थः] ।

अचिद्विशिष्टेति । अज्ञत्वादिगुणानां सर्वज्ञत्वादिगुणके परमात्मनि विरोधः सद्वारकतया परिहृतः इत्यर्थः । प्रकारद्वयावस्थितम्—प्रकारद्वयविशिष्टम् । प्रकृत'तत्-त्वं'पदप्रवृत्तिनिमित्तपरः प्रकारद्वयशब्दः न्यूनत्वनिवर्तकः, न तु प्रकारत्रित्वादिव्यवच्छेदपरः । द्वयोः पदयोरिति । अविरोधेन मुख्यतया निर्वाहे सम्भवति, एकस्यापि पदस्य लक्षणा न युक्ता । विरोधे सत्यपि एकपदलक्षणयैव अविरोधः सिध्यतीति, पदद्वयलक्षणा अनुपपन्ना इत्यर्थः ।

---

[1] प्रतिपादयति–पा. [2] अचिद्विशिष्टं–द.

[3] परब्रह्म–इ.

'सोऽयं देवदत्तः' इत्यत्रापि न लक्षणा; भूत-वर्तमानकालसम्बन्धितया ऐक्यप्रतीत्यविरोधात्। देशभेदविरोधश्च कालभेदेन [1]परिहृत[1]ः।

[ परपक्षे दूषणान्तरम् ]

'तदैक्षत बहु स्याम्' (छां. उ. 6-2-3)

इति उपक्रमविरोधश्च। एकविज्ञानेन सर्वविज्ञान[2]प्रतिज्ञानं[2] च न घटते। ज्ञान-स्वरूपस्य निरस्तनिखिलदोषस्य सर्वज्ञस्य [3]समस्तकल्याण[3]गुणात्मकस्य अज्ञानम्, तत्कार्यानन्तापुरुषार्थाश्रयत्वं च [4]भवति[4]॥

[ सामानाधिकरण्यस्य बाधार्थतानिरासः ]

बाधार्थत्वे च सामानाधिकरण्यस्य—"[5]त्वम् तत्[5]"पदयोः अधिष्ठानलक्षणा, निवृत्तिलक्षणा च, इति लक्षणादयः ते एव दोषाः। इयांस्तु विशेषः—'नेदं रजतम्' इति[6]वत् अप्रतिपन्नस्यैव[6] बाधस्य अगत्या परिकल्पनम्; 'तत्'पदेन अधिष्ठानातिरेकिधर्मानुपस्थापनेन बाधानुपपत्तिश्च।

अधिष्ठानं तु प्राक् तिरोहितम्, अतिरोहितस्वरूपं तत्पदेन उपस्थाप्यते—इति चेत्,

---

सोऽयमिति। तत्र हि देश-कालविशिष्टाकारे देशकालान्तरान्वयविरोधात् लाक्षणिकमेव पदद्वयम् [इत्यत्र परिहारोऽयम्]॥

नेदं रजतमितिवदिति। 'शुक्तिरेव रजतम्' इत्यत्र प्रमाणान्तरेण 'नेदं रजतम्' इति बाधस्य प्रतिपन्नत्वात् बाधकल्पनम्। अत्र बाधस्य अप्रतिपन्नत्वेऽपि अगत्या बाधकल्पनम् इत्यर्थः (श्रु. प्र)। बाधानुपपत्तिरिति। 'शुक्तिरेव रजतम्' इत्यत्र शुक्तित्वरूपं विरुद्धधर्मं शब्द एव उपस्थापयति। अतः तत्र बाधकल्पनम्। अत्र तु अधिष्ठानमात्रं लक्षयता तत्पदेन शुक्तित्ववत् विरुद्धधर्मानुपस्थापनात् बाधकल्पनम् अनुपपन्नम् इत्यर्थः।

अधिष्ठानं त्विति। तत् अधिष्ठानम् अतिरोहितस्वरूपं यथा भवति, तथा उपस्थाप्यते

---

[1] परिहीयते–द.
[2] प्रतिज्ञा—ज्ञ.
[3] कल्याण—इ.
[4] न संभवति–इ, ज्ञ, वा.
[5] तत् त्वं'—ज्ञ.
[6] पदप्रतिपन्नस्यैव—द.

न; [1]प्राक् अधिष्ठाना[1]प्रकाशे तदाश्रयभ्रम-बाधयोः असंभवात् ।

[2]भ्रमाश्रयम्[2] अधिष्ठानम् अतिरोहितम्--इति चेत्,

तदेव अधिष्ठानस्वरूपं भ्रमविरोधि, इति तत्प्रकाशे सुतरां न तदाश्रयभ्रम-बाधौ । अतः अधिष्ठानातिरेकि पारमार्थिकधर्म-तत्तिरोधानानभ्युपगमे भ्रान्ति-बाधौ दुरुपपादौ । अधिष्ठाने हि पुरुषमात्राकारे प्रतीयमाने, तदतिरेकिणि पारमार्थिके राजत्वे तिरोहिते सत्येव व्याधत्वभ्रमः । राजत्वोपदेशेन च तन्निवृत्तिर्भवति, न अधिष्ठानमात्रोपदेशेन; तस्य प्रकाशमानत्वेन अनुपदेश्यत्वात्, भ्रमानुपमर्दित्वाच्च ॥

[ स्वपक्षे उक्तदोषाणामभावः ]

जीव[3]शरीरक[3]जगत्कारणब्रह्मपरत्वे—मुख्यवृत्तं [4]पदद्वयम्[4] । प्रकारद्वय

---

इति क्रियाविशेषणम् । अप्रकाशितविरोधिप्रकाशनं हि बाधकल्पनम्, न तु धर्मोपस्थापनमेव बाधकल्पनम् इति नियमः अस्ति । अतः 'तत्'पदेन प्रागप्राकाशितविरोध्यधिष्ठानस्वरूपप्रकाशनात् बाधकल्पनम् इत्यर्थः (श्रु. प्र) ।

तदाश्रयेति । तदधिष्ठानकेत्यर्थः (श्रु. प्र) ।

भ्रमाश्रयमिति । भ्रमः आश्रयः—विषयी यस्य, तत् इति बहुव्रीहिः । भ्रमः विषयी । अधिष्ठानं विषयः (भा. द) ॥ आरोप्याकाराधिकरणभूतम् इत्यर्थः । भ्रमाश्रयत्वायेति [यावत्] ।

पारमार्थिकेति । भ्रमविरोध्याकारस्य अपारमार्थिकत्वे अध्यस्तरूपमेव सत्यं स्यात् । यथा शुक्तित्वापारमार्थ्ये रजतत्वमेव सत्यं भवतीति [इत्याशयः] (श्रु. प्र) । अधिष्ठाने हीति । अत्र राजकुमारसमाधिः भगवतो भाष्यकारस्य ।

'राजसूनोः स्मृतिप्राप्तौ व्याधभावो निवर्तते ।
यथैवमात्मनोऽज्ञस्य तत्त्वमस्यादिवाक्यतः ॥' (भा. प्र) ॥

मुख्यवृत्तमिति लक्षणाहानिरुक्ता ।

---

[1] अधिष्ठाना—इ.
[2] भ्रमाश्रयभूतम्—इ.
[3] शरीर—द.
[4] परपदद्वयम्—द.

विशिष्टैकवस्तुप्रतिपादनेन सामानाधिकरण्यं च सिद्धम्। निरस्तनिखिलदोषस्य समस्त-कल्याणगुणात्मकस्य ब्रह्मणः जीवान्तर्यामित्वमपि ऐश्वर्यम् अपरं प्रतिपादितं भवति, उपक्रमानुकूलता च। एकविज्ञानेन सर्वविज्ञानप्रतिज्ञोपपत्तिश्च; सूक्ष्मचिदचिद्वस्तु-शरीरस्यैव ब्रह्मणः स्थूलचिदचिद्वस्तुशरीरत्वेन कार्यत्वात्।

'तमीश्वराणां परमं महेश्वरम्' (श्वे. उ. 6-7)

'पराऽस्य शक्तिर्विविधैव श्रूयते' (श्वे. उ. 6-8)

'अपहतपाप्मा . . . . सत्यकामः सत्यसङ्कल्पः' (छां. उ. 8-1-5)

इत्यादिश्रुत्यन्तराविरोधश्च॥

[ तत्त्वमसि इत्यत्र उद्देश्योपादेयविभागचिन्तयाऽपि न निर्विशेषवस्त्वैक्यसिद्धिः ]

'तत् त्वमसि' इत्यत्र उद्देश्योपादेयविभागः कथम्?—इति चेत्,

नाऽत्र किञ्चिदुद्दिश्य किमपि विधीयते;

'ऐतदात्म्यमिदं सर्वम्' (छां. उ. 6-8-7)

---

निरस्तेत्यादिना तत्पदोक्तगुणाविरोधः। उपक्रमेति 'सदेव सोम्येदम्', 'तदैक्षत' इति उपक्रमाविरोधः उक्तः। सूक्ष्मेति। विशिष्टं कारणम्, तदेव कार्यम् इति प्रतिज्ञोपपत्तिः इत्यर्थः (श्रु. प्र)। तमीश्वराणाम् इति श्रुत्यन्तराविरोधः (श्रु. प्र)॥

तत् त्वमसि . . . कथम्? इति। वाक्यं च उद्देश्योपादेयविभागवत्। उद्देश्यं हि अवगतम्। उपादेयम्—विधेयम् अनवगतम्। अत्र [तत् त्वमसि इत्यत्र] 'तत्'पदं न उद्देश्यसमर्पणपरम्; सार्वज्ञ्यादिगुणकत्वस्य प्रत्यक्षाद्यगोचरत्वात्। 'त्वं'शब्दस्य च अन्तर्यामिपरत्वे सति, उद्देश्यसमर्पकत्वम् अनुपपन्नम्; अन्तर्यामिणः प्रत्यक्षाद्यविषयत्वात्। तस्मात् 'त्वं'शब्देन जीवमात्रम् उद्दिश्य, तस्य 'तत्'पदेन ब्रह्मभावः विधीयते इति अभ्युपगन्तव्यम्। तत्र विरोधात्, निर्विशेषवस्त्वैक्यपरं सामानाधिकरण्यं भवति इत्यभिप्रायः।

ऐतदात्म्यमिति। प्रमाणान्तरागोचरार्थस्य कथमविधानम्? इत्यपेक्षायाम्—न केवलं प्रत्यक्षाद्यवगतार्थविषयमेव वाक्यम् अनुवादकम्, अपि तु वाक्यान्तरप्रतिपन्नार्थविषयमपि अनुवादकम् इत्यभिप्रायः।

इत्यनेनैव प्राप्तत्वात् । [1]अप्राप्ते हि[1] शास्त्रमर्थवत् । 'इदं सर्वम्' इति सजीवं जगत् निर्दिश्य, 'ऐतदात्म्यम्' इति, तस्य एष आत्मा [2]इति[2] प्रतिपादितम् । [3]तत्र च हेतुरुक्तः[3]—

'सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः [4]सत्प्रतिष्ठाः' (छां. उ. 6-8-4) इति[4] ।

'सर्वं खल्विदं ब्रह्म तज्जलानिति शान्तः' (छां. उ. 3-14-.)

[5]इतिवत्[5] ॥

[ब्रह्म-तदितरयोः तादात्म्यस्य शरीरात्मभावकृतत्वे श्रुतयः]

तथा श्रुत्यन्तराणि च ब्रह्मणः, तद्व्यतिरिक्तस्य चिदचिद्वस्तुनश्च शरीरात्मभावमेव तादात्म्यं वदन्ति—

---

प्राप्तत्वादिति । अस्मिन्नेव प्रकरणे प्रथमप्रतिपन्ननामरूपव्याकरणश्रुत्यैव परमात्मशरीरभूतचिदचिद्वाचकशब्दानां परमात्मपर्यन्ताभिधायित्वं च ज्ञातमिति भावः । अप्राप्ते हीति । अप्रतिपन्नार्थविषयं शास्त्रम् अज्ञातज्ञापनरूपप्रयोजनवत् इत्यर्थः । अतः तदेव उद्देश्योपादेयविभागवत्; न तु प्रकृतनिगमनरूपं वाक्यम् । अतः अस्य [तत्त्वमसि] निगमनवाक्यस्य प्रतिपन्नार्थविषयत्वात् न उद्देश्योपादेयविभागवत्त्वम् इति भावः ।

सर्वं खल्वित्ति । सर्वशब्दः कार्यावस्थचिदचिच्छरीरकपरमात्मपरः । ब्रह्मशब्दस्य असङ्कोचेन स्वरूप-रूप-गुणैः निरवधिकबृहत्त्ववाचित्वात् , निष्कृष्टब्रह्मणः कारणत्वानुपपत्तिरूपार्थसामर्थ्याच्च ब्रह्मशब्दः कारणावस्थचिदचिद्विशिष्टपरः । एवम् उभयावस्थचिदचित्प्रकारिणः ब्रह्मणः एकत्वं सामानाधिकरण्यप्रतिपाद्यमिति कार्यकारणावस्थप्रकार्येकत्वम् अस्य वाक्यस्य अर्थः । चिदचित्प्रकारित्वं प्रातिपदिकबोध्यम् । अवस्थाद्वयविशिष्टवस्त्वेकत्वं सामानाधिकरण्यबोध्यम्, इति न वाक्यभेदः (श्रु. प्र) ॥

---

[1] अप्राप्ते—थ.
[2] इति तत्र—वा.
[3] हेतुरप्युक्तः-वा.
[4] सत्प्रतिष्ठाः—ट.
[5] इति च—इ.

'अन्तः प्रविष्टः शास्ता जनानां सर्वात्मा' (तै. आर. 3-11-3)

'यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरः यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयति स त आत्माऽन्तर्याम्यमृतः' (बृ. उ. 5-7-3)

'य आत्मनि तिष्ठन् आत्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयति स त आत्माऽन्तर्याम्यमृतः' (बृ. उ. 5-7-26, मा. पा)

'यः पृथिवीमन्तरे संचरन् (सुबा. उ. 7)

इत्यारभ्य,

'यस्य मृत्युः शरीरम् . . . . यं मृत्युर्न वेद, एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः' (सुबा. उ. 7)

'तत्सृष्ट्वा । तदेवानुप्राविशत् । तदनुप्रविश्य (तै. उ. आन. 6-2)

---

'अन्तः प्रविष्टः शास्ता' इत्येतत् सर्वात्मशब्दव्याख्यानरूपम्। अनेन शरीरात्मभाव उक्तः । अन्तःप्रविश्य नियाम्यत्वं हि शरीरत्वम् ।

'यः पृथिव्यां', 'य आत्मनि तिष्ठन्' इति पर्यायद्वयेन चेतनाचेतनयोः भगवन्तं प्रति शरीरत्वमुक्तम् । आत्मनोऽन्तर इति 'आत्मनि तिष्ठन्' इत्युक्ते 'वेद्यामग्निः तिष्ठति' 'तिलेषु तैलं तिष्ठति' इतिवत् बहिरबहिःस्थितिसाधारण्यं स्यात्, [अतश्च अन्यतरमात्रेऽपि पर्यवस्येत् (भा. प्र)] इति तद्वैशद्यार्थम्। 'अन्तरो यमयति' इत्यनेन शरीरलक्षणमुक्तम् । तस्मात् तन्नियाम्यं तच्छरीरम् इत्यर्थः । न च अयं निर्देशः 'शिलापुत्रकस्य शरीरम्' इतिवत्; अपवादकाभावे व्यतिरेकनिर्देशस्वारस्यभङ्गायोगात् । 'यं पृथिवी न वेद' इति दृष्टान्तार्थम्। यथा अचेतनं न वेत्ति, तथा चेतनोऽपि इति भावः । 'य आत्मनि' इति पर्यायेण परिशुद्धात्मनः भगवच्छरीरत्वमुच्यते । नक्षत्रचन्द्रादित्यादीनाम् अचित्संसृष्टचेतनविशेषाणां परमात्मशरीरत्वस्य पृथगुक्तत्वात् । 'यमात्मा न वेद' इति इयत्तया वेदननिषेधः, भगवत्प्रसादेन विना तज्ज्ञानस्य शक्यत्वनिषेधो वा क्रियते ।

'यः पृथिवीमन्तरे सञ्चरन्' इति 'कारणावस्थमपि भगवतः शरीरम् । शरीरी च नारायणाख्यः देवताविशेषः' इति ज्ञापयितुम् । मृत्युः—तमश्शब्दवाच्या प्रकृतिः । तत्रैव

'सच्च त्यच्चाभवत्' (तै. उ. आन. 6-3)

इत्यादीनि । अत्राऽपि—

'अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि' (छां. उ. 6-3-2)

इति ब्रह्मात्मकजीवानुप्रवेशेनैव सर्वेषां वस्तुत्वं, शब्दवाच्यत्वञ्च प्रतिपादितम् ।

'तदनुप्रविश्य' (तै. उ. आन. 6-2)

'सच्च त्यच्चाभवत्' (तै. उ. आन. 6-3)

इत्यनेनैकार्थ्यात्, जीवस्याऽपि ब्रह्मात्मकत्वं ब्रह्मानुप्रवेशादेव [1]इत्यवगम्यते[1] ॥

[ ऐतदात्म्यशब्दार्थव्याख्यानिगमनम् ]

अतः चिदचिदात्मकस्य सर्वस्य वस्तुजातस्य ब्रह्मतादात्म्यम् आत्म-शरीर-भावादेव इत्यवगम्यते । तस्मात् ब्रह्मव्यतिरिक्तस्य कृत्स्नस्य तच्छरीरत्वेनैव वस्तुत्वात्, तस्य प्रतिपादकोऽपि शब्दः तत्पर्यन्तमेव स्वार्थम् अभिदधाति । अतः सर्वशब्दानां लोकव्युत्पत्त्यवगततत्तत्पदार्थविशिष्टब्रह्माभिधायित्वं [2]सिद्धमिति[2],

---

'तमः'शब्दस्थाने 'मृत्यु'शब्दपाठात् । अत्राऽपि—स्वप्रकरणेऽपि । जीवेनाऽऽत्मना—जीवशरीरकेण मया । 'व्याघ्रेण भूत्वा बहवो मयात्ताः' इतिवत् । वस्तुत्व शब्दवाच्यत्वञ्च इति । तत्तद्देवादिवस्तुत्वं, देवादिशब्दवाच्यत्वं च इत्यर्थः । अनेन 'नामरूपे' इति पदं व्याचष्टे ॥

अत इत्यादि । 'ऐतदात्म्य'शब्दार्थव्याख्याननिगमनमिदम् । तस्मात् — उदाहृतवाक्यैः शरीर-शरीरिभावप्रतिपादनात्, तस्य तत्तन्नामभाक्त्वनिर्वाहकत्वाच्च । अतः सर्वशब्दानमिति । [शब्दानां] लोके तत्तद्वस्तुमात्रपर्यन्तत्वेन व्युत्पन्नतया परमात्मपर्यन्ताभिधाने व्युत्पत्तिभङ्गप्रसङ्गः, ब्रह्मणः एकत्वेन द्वित्व-बहुत्वानुपपत्तिश्च [इत्याशङ्कायाः उत्तरमिदम्] । सिद्धमिति । नाऽत्र व्युत्पत्तिविरोधः; व्युत्पन्नार्थापरित्यागात् । ब्रह्मणः लौकिकप्रमाणा-

---

[1] इति निश्चीयते—वा.  [2] सिद्धम्-ट.

'ऐतदात्म्यमिदं सर्वम्' (छां. उ. 6-8-7)

इति प्रतिज्ञातार्थस्य

'तत्त्वमसि' (छां. उ. 6-8-7)

इति सामानाधिकरण्येन, [1]विशेषे[1] उपसंहारः ॥

[ अन्येषां मते सामानाधिकरण्यादीनाम् अनुपपत्तिः ]

अतः निर्विशेषवस्त्वैक्यवादिनः, भेदाभेदवादिनः, केवलभेदवादिनश्च वैयधिकरण्येन, सामानाधिकरण्येन च [2]ब्रह्मात्मभावोपदेशाः सर्वे[2] परित्यक्ताः स्युः ।

एकस्मिन् वस्तुनि कस्य तादात्म्यम् उपदिश्यते ?

तस्यैव—इति चेत्,

---

गोचरतया तत्पर्यन्तव्युत्पत्त्यभावः, न तु अवाचकतया इति, सः अन्यथासिद्धः । तत्तत्पदार्थविशिष्टशब्देन ब्रह्मणोऽपि द्वित्व-बहुत्वादिकं सद्वारकमुपपन्नमिति भावः । विशेषे उपसंहार इति । वैयधिकरण्येन प्रतिज्ञातस्य सामानाधिकरण्येन उपसंहारः, सामान्येन प्रतिज्ञातस्य विशेषे उपसंहारः इत्यर्थः । 'तदैक्षत' इति तच्छब्दार्थः, 'ऐतदात्म्यम्' इति जीवस्य ब्रह्मात्मकत्वम्, 'अनेन जीवेन' इति जीववाचिनां शब्दानां ब्रह्मपर्यन्तत्वञ्च प्रतिपन्नमिति नाऽत्र उद्देश्योपादेयविभागः ॥

अतः—जगद्ब्रह्मणोः श्रुतिभिः शरीर-शरीरिभावप्रतिपादनात्, तस्य तत्तन्नामभाक्त्वनिर्वाहकत्वाच्च । भेदाभेदवादिशब्देन औपाधिकस्वाभाविकभेदाभेदवादिनोः द्वयोरपि तन्त्रेणोक्तिः (भा. प्र) । [अचिद्ब्रह्मणोः भेदाभेदौ स्वाभाविकौ । चिद्ब्रह्मणोस्तु अभेदः स्वाभाविकः, भेदस्तु औपाधिकः ; मुक्तौ अभेदवचनात्, इति भास्करमतम् । चिद्ब्रह्मणोरपि भेदाभेदौ स्वाभाविकौ ; मुक्तौ भेदस्यापि निर्देशात्, इति यादवप्रकाशमतमिति विवेकः ।] केवलभेदशब्देन स्वपर्यवसितभेदो विवक्षितः । तद्वादिनश्च वैशेषिकादयः । वैयधिकरण्यम्, 'अस्यैष आत्मा' इत्येवंरूपत्वात् उपदेशस्य ।

---

[1] विशेषेण—वा. [2] सर्वे ब्रह्मात्मभावोपदेशाः—वा.

तत् [1]स्ववाक्येनैव[1] अवगतमिति, न तादात्म्योपदेशावसेयमस्ति किञ्चित्।

कल्पितभेदनिरसनम्—इति चेत्,

तत्तु न सामानाधिकरण्य-तादात्म्योपदेशावसेयम् इति उक्तम्। सामानाधिकरण्यं तु ब्रह्मणि प्रकारद्वयप्रतिपादनेन विरोधमेव आवहेत्।

भेदाभेदवादे तु—ब्रह्मण्येव उपाधिसंसर्गात्, [2]तत्प्रयुक्ताः जीवगताः दोषाः[2] ब्रह्मण्येव प्रादुःष्युः इति, निरस्तनिखिलदोषकल्याणगुणात्मकब्रह्मात्मभावोपदेशा हि विरोधादेव परित्यक्ताः स्युः।

स्वाभाविकभेदाभेदवादेऽपि—ब्रह्मणः स्वत एव जीवभावाभ्युपगमात्, गुणवत् दोषाश्च स्वाभाविकाः भवेयुः इति, निर्दोषब्रह्मतादात्म्योपदेशः विरुद्ध एव।

---

स्ववाक्येन—'सत्यं ज्ञानम्' इत्यादिना स्वरूपपरवाक्येन।

तत्तु नेति। प्रकारद्वयोपस्थापकत्वात् इति भावः (श्रु. प्र)।

विरोधादेवेति। क्लेशकर्माद्यस्पृष्टः सार्वज्ञ्यादिगुणको हि ईश्वरः। अतः ईश्वरस्य निर्दोषस्य तदनर्हानीश्वरतादात्म्यव्याघातात् ईश्वरतादात्म्योपदेशः विरुद्धः इत्यर्थः। परित्यक्ताः स्युः इति। परित्यागः फलितः इत्यर्थः।

गुणवदित्यादि। ब्रह्मणः ईश्वरांशेन सार्वज्ञ्यादिगुणा इव जीवांशेन दोषा अपि स्वाभाविकाः भवेयुः। 'अनादिर्भगवान् कालः' (वि. पु. 1 2-26) इति संसारप्रवाहानन्त्येन दोषाः नित्याः स्युः इत्यर्थः। विरुद्ध एवेति। हेयानर्हतादात्म्यं हि पुरुषार्थः। स्वरूपैक्ये च ब्रह्मणः हेयार्हत्वात् हेयार्हब्रह्मतादात्म्यधीः न हेयापहा। तत्तादात्म्यानुभवोऽपि अपुरुषार्थश्च इति, उपायत्व-प्राप्यत्वदिरोधात् तादात्म्योपदेशपरवाक्यस्य प्रयोजनपर्यवसानं न स्यात् [इति भावः।] (श्रु. प्र)।

---

[1] स्ववाक्येन—पा. [2] तत्प्रयुक्तजीवगतदोषाः—वा.

केवलभेदवादिनां च—अत्यन्तभिन्नयोः केनाऽपि प्रकारेण ऐक्यासंभवादेव ब्रह्मात्मभावो[1]पदेशाः[1] न [2]सम्भवन्ति[2] इति, सर्ववेदान्तपरित्यागः स्यात् ॥

[ पूर्वपक्षापेक्षया स्वपक्षे वैलक्षण्यम् ]

निखिलोपनिष[3]त्प्रसिद्धं कृत्स्नस्य[3] ब्रह्मशरीरभावम् 'आतिष्ठमानैः[4] [5]ब्रह्मात्मभावोपदेशाः[5] सर्वे सम्यक् उपपादिताः भवन्ति। जाति-गुणयोरिव द्रव्याणामपि शरीरभावेन [6]विशेषणत्वेन[6], 'गौरश्वो मनुष्यो देवो [7]जातः पुरुषः[7] कर्मभिः' इति सामानाधिकरण्यं लोकवेदयोः मुख्यमेव दृष्टचरम्।

जाति-गुणयो[8]रपि[8] द्रव्यप्रकारत्वमेव 'खण्डो गौः, शुक्लः पटः' [9]इति[9] सामानाधिकरण्यनिबन्धनम्। मनुष्यत्वादिविशिष्टपिण्डानामपि [10]आत्मनः प्रकार[10]-तयैव पदार्थत्वात्, 'मनुष्यः पुरुषः षण्डः [11]योषित्[11] आत्मा जातः' इति सामानाधि-

---

अत्यन्तभिन्नयोः—प्रकार प्रकारिभावरहितयोः। केनाऽपि प्रकारेण—विशेष्यांशतोऽपि ॥

सम्यक्शब्देन मुख्यत्वं विवक्षितम् (श्रु. प्र)। जातिगुणयोरिति मुख्यत्वोपपादनम्। [जातिगुणसादृश्यं द्रव्याणाम् अपृथक्सिद्धत्वांशेन।]

जातिगुणयोरपीति। अमुख्यत्वेऽपि प्रयोगः सम्भवेत्। तच्च देहस्य द्रव्यत्वात्। अद्रव्यत्वे सति प्रकारत्वं हि मत्वर्थीयप्रत्ययनिरपेक्षसामानाधिकरण्ये प्रयोजकम् इत्यत्रोत्तरमिदम् (श्रु. दी)। प्रकारशब्दः विशेषणमात्रपरः।

---

[1] पदेशः—थ.

[2] भवति—थ.

[3] स्कृत्स्नस्य प्रसिद्धं—वा, थ.

[4] आतिष्ठमानैः कृत्स्नस्य—पा.

[5] ब्रह्मतादात्म्यकोपदेशाः—इ.

[6] विशेषणत्वे—इ.

[7] जातः—वा.

[8] रपि हि—इ, ड.

[9] इति तथा—व

[10] आत्मप्रकार—द.

[11] ाषिद्वा—वा.

करण्यं सर्वत्र अनुगतम् इति, प्रकारत्वमेव सामानाधिकरण्यनिबन्धनम्; न परस्पर-व्यावृत्ताः जात्यादयः।

स्वनिष्ठानामेव हि द्रव्याणां कदाचित् क्वचित् द्रव्यविशेषणत्वे मत्वर्थीयप्रत्ययो दृष्टः 'दण्डी, कुण्डली' [1]इति[1], न पृथक्प्रतिपत्ति-स्थित्यनर्हाणां द्रव्याणाम्। तेषां विशेषणत्वं सामानाधिकरण्यावसेय[2]मेव[2] ॥

[ शरीरशरीरिभावस्थले सामानाधिकरण्यस्य लाक्षणिकत्वशङ्कापरिहारौ ]

यदि 'गौः अश्वः मनुष्यः देवः पुरुषः योषित् षण्डः आत्मा कर्मभिर्जातः' इत्यत्र 'खण्डो मुण्डो गौः, शुक्लः पटः, कृष्णः पटः' इति जातिगुणवत् आत्म-प्रकारत्वं मनुष्यादिशरीराणाम् इष्यते; तर्हि, जातिव्यक्त्योरिव प्रकार-प्रकारिणोः शरीरात्मनोरपि नियमेन सह प्रतिपत्तिः स्यात्! न [3]चैवं[3] दृश्यते। न हि नियमेन गोत्वादिवत् आत्माश्रयतयैव आत्मना सह मनुष्यादिशरीरं पश्यन्ति। अतः 'मनुष्यः आत्मा' इति सामानाधिकरण्यं लाक्षणिकमेव।

नैतदेवम्: मनुष्यादिशरीराणामपि आत्मैकाश्रयत्वम्, तदेकप्रयोजनत्वम्, तत्प्रकारत्वं च जात्यादितुल्यम्। आत्मैकाश्रयत्वम् – आत्मविश्लेषे शरीरस्य विनाशात्

---

परस्परव्यावृत्ताः—परस्पराननुयायिनः। जात्यादयः—जातित्वादयः।

स्वनिष्ठानामेव हीति। अपृथक्सिद्धप्रकारवाचित्वमेव मत्वर्थीयप्रत्ययनिरपेक्षसामाना-धिकरण्यप्रयोजकमित्यर्थः ॥

यदीत्यादि। यत्र यत्र नियतप्रकारत्वं, तत्र तत्र सहोपलम्भनियमो दृष्टः। शरीरे तु सहोपलम्भनियमाभावात् अपृथक्सिद्धविशेषणत्वमनुपपन्नम्। तस्मात् सामानाधिकरण्यं लाक्षणिकमित्यभिप्रायेण।

मनुष्यादिशरीराणामिति। आत्मैकाश्रयत्व-तदेकार्थत्वयोः अन्यतरान्वितं प्रकारत्वम्

---

[1] इतिवत्–ट. [2] मेव ननु इति–आ.

[3] चेदं–थ.

अवगम्यते । आत्मैकप्रयोजनत्वं च—[1]तत्कर्म[1]फलभोगार्थतयैव सद्भावात् । तत्प्रकार-त्वमपि 'देवः, मनुष्यः' इति आत्मविशेषणतयैव प्रतीतेः ।

एतदेव हि गवादिशब्दानां व्यक्तिपर्यन्तत्वे हेतुः । एतत्स्वभावविरहादेव, [2]दण्ड-कुण्डला[2]दीनां विशेषणत्वे 'दण्डी, कुण्डली' इति मत्वर्थीयप्रत्ययः । देव-मनुष्यादिपिण्डानाम् आत्मैकाश्रयत्व-तदेकप्रयोजनत्व-तत्प्रकारत्वस्वभावात् 'देवः मनुष्यः आत्मा' इति लोक-वेदयोः सामानाधिकरण्येन व्यवहारः । जाति-व्यक्त्योः नियमेन सह प्रतीतिः ; उभयोश्चाक्षुषत्वात् । आत्म[3]नस्तु[3] अचाक्षुषत्वात्, चक्षुषा शरीर-ग्रहणवेलायाम् आत्मा न गृह्यते ।

पृथग्ग्रहणयोग्यस्य [4]प्रकारतैक[4]स्वरूपत्वं दुघटम्—

इति मावोचः ; जात्यादिवत् तदेकाश्रयत्व-तदेकप्रयोजनत्व-तद्विशेषणत्वैः शरीर-स्याऽपि तत्प्रकारतैकस्वभावत्वावगमात्। सहोपलम्भनियमस्तु एकसामग्रीवेद्यत्वनिबन्धनः

---

अपृथक्सिद्धविशेषणत्वमित्यर्थः । तत्प्रकारत्वमपीति । विशेष्यप्रतीतिसिद्धौ तत्पृथक्-सिद्धत्वेन प्रतीत्यभावः तत्प्रकारत्वशब्देन विवक्षितः । प्रतीतेरिति पञ्चमीनिर्देशः औप-चारिकः । [आत्मविशेषणतयैव प्रतीतिरेव तत्प्रकारत्वमित्यर्थः ।]

[एतदेव—नियमेन आत्मानं प्रति विशेषणत्वमेव ।] देवमनुष्यादीति । ईदृशं प्रकारत्वमेव पक्षे मत्वर्थीयप्रत्ययनिरपेक्षसामानाधिकरण्ये हेतुः इत्याशयः । नियमेन सह प्रतीतिरिति । सहोपलम्भनियमस्य अन्यथासिद्धिः उच्यते । सहोपलम्भनियमस्तु एकसामग्रीवेद्यत्वप्रयुक्तः, न तु अपृथक्सिद्धविशेषणत्वप्रयुक्तः इत्यर्थः । चाक्षुषत्वं प्रदर्शनार्थम् ।

प्रकारतैकस्वरूपम् इति । स्वरूपम्—धर्मः । प्रकारत्वमेव धर्मः यस्य, तत प्रकारतैकस्वरूपम् । एकशब्देन कदाचिदप्रकारत्वस्य व्युदासः । ततश्च दण्डकुण्डलादि-वैषम्यम् ।

सहोपलम्भेति । अनेन पूर्वं चाक्षुषत्वोक्तिः एकसामग्रीवेद्यत्वप्रदर्शनार्था इति स्पष्टम्।

---

[1] तत्तत्कर्म—इ, घ, ङ, छ, झ.
[2] दण्डा—वा.
[3] नश्च
[4] प्रकारतयैक—ध, न.

इत्युक्तम्। यथा—चक्षुषा पृथिव्यादेः गन्धरसादिसम्बन्धित्वं स्वाभाविकमपि न गृह्यते, एवम् चक्षुषा गृह्यमाणं शरीरम् आत्मप्रकारतैकस्वभावमपि न तथा गृह्यते; आत्मग्रहणे चक्षुषः सामर्थ्याभावात्।

न एतावता शरीरस्य 'तत्प्रकारत्व'[1]स्वभावविरहः; तत्प्रकारतैकस्वभावत्वमेव सामानाधिकरण्यनिबन्धनम्। आत्म[2]प्रकारतया प्रतिपादन[2]समर्थस्तु शब्दः सहैव प्रकारतया प्रतिपादयति॥

[ शब्दस्य शरीरिपर्यन्तानभिधायित्वशङ्का-परिहारौ ]

ननु च —शाब्देऽपि व्यवहारे 'शरीर'शब्देन शरीरमात्रं गृह्यते इति न आत्मपर्यन्तता शरीरशब्दस्य—

नैवम्; आत्मप्रकारभूतस्यैव शरीरस्य [3]पदार्थ[3]विवेकप्रदर्शनाय निरूपणात्, निष्कर्षकशब्दोऽयम्; यथा—'गोत्वम्, शुक्लत्वम्, आकृतिः, गुणः' इत्यादिशब्दाः।

---

यथेति। न हि अचाक्षुषस्यापि गन्धस्य पृथिवीनियतप्रकारत्वहानिः। एवंशब्दः यथाशब्द-प्रतिनिर्देशरूपः।

एतावता—चक्षुषा ग्रहणाभावमात्रात्। न तत्प्रकारत्वस्वभावहानिः। एकसामग्री-वेद्यत्वस्य अपृथग्विशेषणताव्यापकत्वाभावात्, तदेकाश्रयत्वादिप्रयोजकान्तरसद्भावाच्च इति भावः। प्रतिपादयतीति। शरीरस्य अपृथग्विशेषणत्वे सति केनाऽपि प्रमाणेन तत् तथा उपलभ्येतेत्यत्रोत्तरम् (श्रु. प्र)॥

[निष्कर्षकशब्दः—प्रकारतैकस्वभावस्यापि वस्तुनः प्रकारिणः सकाशात् पृथक्कृत्य, बोधकः शब्दः। गोशब्दतः गोत्वबोधे गोरूपविशेष्यसहभावेनैव गोः नियतप्रकारतया गोत्व-भानेऽपि 'गोत्वम्' इति शब्देन गोत्वबोधे गवांशं परित्यज्य, गोत्वमात्रं, विनैव प्रकारतां

---

[1] तत्प्रकार—ध, न.

[2] प्रकारताप्रतिपादन—द.

[3] पदार्थस्व—थ.

अतः गवादिशब्दवत् देवमनुष्यादिशब्दाः आत्मपर्यन्ताः ॥

[चिदचिद्वाचिनां शब्दानां परमात्मपर्यन्ताभिधायिता ]

एवम् देवमनुष्यादिपिण्डविशिष्टानां जीवानाम् परमात्मशरीरतया तत्प्रकारत्वात्, जीवात्मवाचिनः शब्दाः परमात्मपर्यन्ताः । अतः परस्य ब्रह्मणः प्रकारतयव चिदचिद्वस्तुनः पदार्थत्वमिति तत्सामानाधिकरण्येन प्रयोगः । अयमर्थः वेदार्थसङ्ग्रहे समर्थितः । इदमेव शरीरात्मभावलक्षणं तादात्म्यम्—

'आत्मेति तूपगच्छन्ति ग्राहयन्ति च' (ब्र. सू. 4-1-3)

इति वक्ष्यति ।

'आत्मेत्येव तु गृह्णीयात्' (ब्र. नं. वा)

इति च वाक्यकारः ॥

---

भासते । अतः गोत्वशब्दः निष्कर्षकः शब्दः ।] अयं द्विविधः—वैवक्षिकनिष्कर्षकः, नियतनिष्कर्षकश्चेति । तत्र शरीरादिशब्दाः नियतनिष्कर्षकाः । आत्मादिशब्दाः वैवक्षिकनिष्कर्षकाः ; गोत्वादिशब्दवत् शुक्लादिशब्दवच्च । प्रयोगस्य व्यवस्थापकत्वात् निष्कर्षकानिष्कर्षकविभागोऽपि हि प्रयोगाधीनः । तद्वत् अयमपि विभागः तन्मूलः । आत्मपर्यन्ताः—आत्मपर्यन्तशक्तयः । शरीरवाचिशब्दैः आत्मबोधनम्—शक्तिनिबन्धनतया मुख्यमित्यर्थः ॥

अत इत्यादि । एवम् 'तत्त्वमसि' इति वाक्येन चिदचिच्छरीरकस्य कारणावस्थस्य, कार्यावस्थस्य च ब्रह्मणः एकत्वं प्रतिपादितम् । 'तत्'पदम् सार्वज्ञ्यादिगुणकजगच्छरीरकब्रह्मपरम् । 'त्वं'पदं च कार्याचित्संसृष्टजीवविशेषणविशिष्टब्रह्मपरम् । पदद्वयस्थसमानविभक्त्या कारणावस्थस्य, कार्यावस्थस्य च ब्रह्मणः एकत्वमवगम्यते । अतः [illegible] वस्थप्रकार्यैकत्वम् अनेन वाक्येन प्रतिपादितम् ॥

[ उक्तानामर्थानां संक्षेपेण प्रतिपादनम् ]

अत्रेदं तत्त्वम्—अचिद्वस्तुनः चिद्वस्तुनः [1]परस्य च[1] ब्रह्मणः भोग्यत्वेन भोक्तृत्वेन च, [2]ईशितृत्वेन च[2] स्वरूपविवेकमाहुः काश्चन श्रुतयः—

'अस्मान्मायी सृजते विश्वमेतत् तस्मिंश्चान्यो मायया संनिरुद्धः' (श्वे. उ. 4-9)

'मायां तु प्रकृतिं विद्यात् मायिनं तु महेश्वरम्' (श्वे. उ. 4-10)

'क्षरं प्रधानममृताक्षरं हरः क्षरात्मानावीशते देव एकः' (श्वे. उ. 1-10)

'अमृताक्षरं हरः' इति भोक्ता निर्दिश्यते। [3]प्रधानम्[3] आत्मनः भोग्यत्वेन हरतीति—हरः।

'स कारणं करणाधिपाधिपो न चाऽस्य कश्चिज्जनिता न चाधिपः' (श्वे. उ. 6-9)

'प्रधानक्षेत्रज्ञपतिर्गुणेशः' (श्वे. उ. 6-16)

'पतिं विश्वस्यात्मेश्वरं शाश्वतं शिवमच्युतम्' (तै. ना. उ. 11-3)

'ज्ञाज्ञौ द्वावजावीशनीशौ' (श्वे. उ. 1-9)

---

अत्रेदं तत्त्वमिति। सकलश्रुतीनां मुख्यार्थत्वज्ञापनार्थं तेषु तेषु प्रदेशेषु विप्रकीर्णम् उक्तानामर्थानां संकलय्य प्रदर्शनेन सुग्रहत्वापादनार्थम् आरम्भः। भोग्यत्वेन भोक्तृत्वेन चेति। 'च'शब्दः ईशितव्यत्वेन तयोः एककोटिनिवेशात्। मायां त्विति 'अस्मान्मायी' इत्यत्र मायाशब्दार्थं निष्कष्टुम् (श्रु. प्र)। क्षरं प्रधानमिति 'अन्य'शब्दवाच्यः आत्मा इति स्पष्टयितुम्। प्रधानमिति अर्थान्तरभ्रमहेतुत्वात् 'हर'शब्दव्याख्या। स कारणमिति ईश्वरेशितव्यतारूपभेदप्रदर्शनम्। प्रधानेति 'करणाधिपाधिप'शब्दव्याख्यानार्थम्। गुणेशः—गुणानां सत्त्वरजस्तमसां नियन्ता। पतिमिति अनन्येश्वरत्वप्रदर्शनम्। अनेन शेष-शेषित्वलक्षणभेदोऽपि सिद्धः। शेषिणि 'पति'शब्दः रूढः। 'ज्ञाज्ञौ द्वौ' इति

---

[1] परस्य—द.    [2] ईशितृत्वेन—वा.

[3] प्रधानं हि—इ.

'नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्'

(कठ. उ. 5-13)

'भोक्ता भोग्यं प्रेरितारं च मत्वा' (श्व. उ. 1-12)

'तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति' (मुण्ड. उ. 3-1-1)

'पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनाऽमृतत्वमेति' (श्व. उ. 1-6)

'अजामेकां लोहितशुक्लकृष्णां बह्वीं प्रजां जनयन्तीं सरूपाम् ।
अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः ॥'

(तै. ना. उ. 10-5)

'समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः ।
जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः ॥' (श्वे. उ. 4-7)

इत्याद्याः । स्मृतावपि—

'अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा' (भ. गी. 7-4)

'अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम् ।
जीवभूतां महाबाहो ययेदं धार्यते जगत् ॥' (भ. गी. 7-5)

'सर्वभूतानि कौन्तेय! प्रकृतिं यान्ति मामिकाम् ।
कल्पक्षये पुनस्तानि कल्पादौ विसृजाम्यहम् ॥ (भ. गी. 9-7)

---

मुखान्तरेणाऽपि भेदसिद्धिः । नित्यो नित्यानामिति उत्पत्तिप्रलयाभावप्रतिपादनम् । भोक्ता भोग्यमिति आकारान्तरेणाऽपि भेदः । तयोरन्य इति भगवतः अस्पृष्टदोषत्व-प्रदर्शनम् । पृथक् इति भेदज्ञानस्य मोक्षहेतुत्वम् । अजामेकामिति मुक्तौ भेदमाह । समाने वृक्षे इति जीवेश्वरयोः स्वतो भेदम्, सविशेषत्वं च स्पष्टयितुम् । पृथक्त्वज्ञानस्य मोक्षोपायत्वपरस्य वाक्यद्वयस्य मध्ये 'अजामेकाम्' इत्यादिवाक्यमुपात्तम्, 'समाने वृक्षे' 'अजामेकाम्' इति प्रधानप्रसङ्गोपेतत्वसाम्यात् । जुष्टम्—प्रीयमाणम् ।

अष्टधा भिन्ना प्रकृतिर्मम इत्यनेन कारणावस्थायामपि भेदसिद्धिः (श्रु. प्र) । प्रकृतिं मामिकां कल्पक्षये यान्ति इत्यत्राऽपि तथा ।

'प्रकृतिं स्वामवष्टभ्य विसृजामि पुनः पुनः ।
भूतग्राममिमं कृत्स्नमवशं प्रकृतेर्वशात् ॥' (भ. गी. 9-8)

'मयाऽध्यक्षेण प्रकृतिः सूयते सचराचरम् ।
हेतुनाऽनेन कौन्तेय [1]जगद्धि परि[1]वर्तते ॥' (भ. गी. 9-10)

'प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि' (भ. गी. 13-19)

'मम योनिर्महद्ब्रह्म तस्मिन् गर्भं दधाम्यहम् ।
संभवः सर्वभूतानां ततो भवति भारत ! ॥' (भ. गी. 14-3)

इति। जगद्योनिभूतं महद्ब्रह्म मदीयं प्रकृत्याख्यं भूतसूक्ष्मम् अचिद्वस्तु [2]यत्, तस्मिन्[2] चेतनाख्यं गर्भं यत् संयोजयामि, [3]ततः[3] [4]मत्कृतात्[4] चिदचित्संसर्गात् देवादिस्थावरान्तानाम् अचिन्मिश्राणां सर्वभूतानां सम्भवः भवति इत्यर्थः ।

एवं भोक्तृभोग्य[5]रूपेण[5] [6]अवस्थितयोः[6] सर्वावस्थावस्थितयोः चिदचितोः परमपुरुषशरीरतया तन्नियाम्यत्वेन तदपृथक्स्थितिम्, परमपुरुषस्य च आत्मत्वमाहुः काश्चन श्रुतयः—

'यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद, यस्य पृथिवी शरीरं, यः पृथिवीमन्तरो यमयति' (बृ. उ. 5-7-7)

---

प्रकृतिं स्वामवष्टभ्य विसृजामि इति तत्सिद्धिः । मयाऽध्यक्षेण इत्यत्र तु स्वभावासङ्करः, कारणावस्थायां भेदश्च सिद्ध्यतः। प्रकृतिं पुरुषम् इत्यत्र अनादित्वकण्ठोक्तिः । मम योनिः इत्यत्राऽपि कारणावस्थायां भेदसिद्धिः । जगद्योनिभूतम् इत्यादिना उदाहृतस्मृतिवचनेषु व्याख्येयांशव्याख्या । जगद्योनिशब्देन 'त्रिगुणं तज्जगद्योनिः' (वि. पु. 1-2-21) इति वचन स्मार्यते। भूतसूक्ष्मम् इति कार्यावस्थाव्यावृत्त्यर्थम् उक्तम् ।

एवमिति । एवं चिदचिदीश्वराणां भेदे सति एकत्वावधारणं कथम् उपपद्यते ? इति

---

[1] जगद्विपरि—इ.　　[2] यस्मिन्—वा.

[3] अतः—द.　　[4] मत्सङ्कल्पात्—द.

[5] स्वरूपेण—थ.　　[6] स्थितयोः—थ.

इत्यारभ्य,

'य आत्मनि तिष्ठन् आत्मनोऽन्तरः यमात्मा न वेद, यस्यात्मा शरीरं, य आत्मानमन्तरो यमयति स त आत्माऽन्तर्याम्यमृतः' (बृ. उ. मा. प. 5-7-22)

इति। तथा—

'यः पृथिवीमन्तरे सञ्चरन् यस्य पृथिवी शरीरं यं पृथिवी न वेद' (सुबा. उ. 7)

इत्यारभ्य,

'योऽक्षरमन्तरे सञ्चरन् यस्याक्षरं शरीरं यमक्षरं न वेद, यो मृत्युमन्तरे संचरन् यस्य मृत्युः शरीरं यं मृत्युर्न वेद एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः' (सुबा. उ. 7)

अत्र मृत्युशब्देन 'तमः'शब्दवाच्यं सूक्ष्मावस्थम् अचिद्वस्तु अभिधीयते ; अस्यामेव उपनिषदि—

'अव्यक्तमक्षरे [1]लीयते[1], अक्षरं तमसि [2]लीयते[2]' (सुबा. उ. 2)

इति वचनात्,

'अन्तः प्रविष्टःशास्ता जनानां सर्वात्मा' (तै. आर. 3-11-3)

इति च ॥

---

शङ्कायां घटकश्रुतीनामवतारणम् (श्रु. प्र)। यः पृथिवीमिति। 'यः पृथिवीमन्तरे सञ्चरन्' इति सुबालोपनिषदि श्रूयते।

मृत्युशब्देनेति। मरण-यमादिव्यावृत्त्यर्थं मृत्युशब्दं व्याचष्टे। लीयते इति वचनादिती। क्रमप्रत्यभिज्ञानात् इत्यर्थः। 'यस्याऽव्यक्तं शरीरम्' 'यस्य मृत्युः शरीरम्' इति क्रमो हि 'अव्यक्तमक्षरे लीयते, अक्षरं तमसि लीयते' इति क्रमेण सङ्गच्छते। तमसः एकीभावमात्रं श्रुतम्, न लयः ; तमस्त्वप्रहाणाभावात्। कार्यानुपयुक्ततमश्शरीरके देवे कार्योपयुक्तस्य तस्य एकीभावः। मृत्युसंज्ञस्य तमसः शरीरत्वश्रवणात् विशेषणभूततमसा तमसः एकीभावः युक्तः। अन्तः प्रविष्ट इति सर्वात्मत्वविवरणाय। अनेनाऽपि शरीरात्म-

---

[1] विलीयते— [2] विलीयते—पा·

[ भेदश्रुति-घटकश्रुत्योः अविरोधेन ऐक्यश्रुतीनामर्थवर्णनम् ]

एवम् सर्वावस्थावस्थितचिदचिद्वस्तुशरीरतया तत्प्रकारः परमपुरुष एव कार्यावस्थ-कारणावस्थजगद्रूपेण अवस्थितः इति, इममर्थं ज्ञापयितुं काश्चन श्रुतयः 'कार्यावस्थं कारणावस्थं [1]च जगत्[1] स एव' इत्याहुः—

'सदेव सोम्येदमग्र आसीदेकमेवाऽद्वितीयम्' (छां. उ. 6-2-1)

'तदैक्षत बहु स्यां प्रजायेयेति, तत्तेजोऽसृजत' (छां. उ. 6-2-3)

इत्यारभ्य,

'सन्मूलाः सोम्यमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः' (छां. उ. 6-8-4)

'ऐतदात्म्यमिदं सर्वं तत् सत्यं स आत्मा, तत्त्वमसि [2]श्वेतकेतो' (छां. उ. 6-8-7)

इति। तथा[3]—

'सोऽकामयत। बहु स्यां प्रजायेयेति। स तपोऽतप्यत। स तपस्तप्त्वा। इदं सर्वमसृजत।' (तै. उ. आन. 6-2)

इत्यारभ्य,

'सत्यं चानृतं च सत्यमभवत्' (तै. उ. आन. 6-3)

इत्याद्याः। अत्राऽपि श्रुत्यन्तरसिद्धः चिदचितोः परमपुरुषस्य च स्वरूपविवेकः स्मारितः—

---

भावः फलितः। अन्तःप्रविश्य नियाम्यत्वं हि शरीरत्वम्। अन्तःप्रवेशशास्तिभ्यां नृप-गगनादिव्यावृत्तिरिति इदमपि लक्षणम् भाष्यकाराभिप्रेतम् (श्रु. प्र) ॥

एवमित्यादि भेदश्रुति-घटकश्रुत्योः अविरोधेन ऐक्यश्रुतीनामर्थमाह। सन्मूला इति घटकतयोपात्तम्। अत्राऽपि—छान्दोग्यप्रकरणे, तैत्तिरीयप्रकरणे च इत्यर्थः।

---

[1] जगत्—थ.  [2] श्वेतकेतो—वा.

'हन्ताऽहमिमास्तिस्रो देवता अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि' (छां. उ. 6-3-2)

इति,

'तत् सृष्ट्वा। तदेवाऽनुप्राविशत्। तदनुप्रविश्य' (तै. उ. आन. 6-2)

'सच्च त्यच्चाभवत् . . . . विज्ञानं चाविज्ञानं च। सत्यं चानृतं च सत्यमभवत्' (तै. उ. आन. 6-3)

इति च। 'अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य' इति जीवस्य ब्रह्मात्मकत्वम् — 'तदनुप्रविश्य सच्च त्यच्चाऽभवत्', 'विज्ञानं चाऽविज्ञानं च' इत्यनेन ऐकार्थ्यात्, आत्मशरीरभावनिबन्धनम्, इति [1]विज्ञायते। एवम्भूतमेव नामरूपव्याकरणम्—

'तद्धेदं तर्ह्यव्याकृतमासीत्, तन्नाम-रूपाभ्यां व्याक्रियत' (बृ. उ. 3-4-7)

इत्यत्राऽपि उक्तम् ॥

[ स्वमते एकविज्ञानेन सर्वविज्ञानप्रतिज्ञोपपत्तिः ]

अतः कार्यावस्थः कारणावस्थश्च स्थूलसूक्ष्मचिदचिद्वस्तुशरीरः परमपुरुष एवेति,

---

हन्ताहमित्यादि छान्दोग्ये। तत्सृष्ट्वेत्यादि तैत्तिरीये।

एवम्भूतमेवेति। सर्वशाखाप्रत्ययन्यायेन क्वचिदनुक्तस्य अन्यतो ग्राह्यत्वात् क्वचित् ज्ञातः अनुप्रवेशः कार्योपयोगितया अपेक्षितत्वात् अन्यत्राऽपि स्वीकार्य इत्यभिप्रायः। 'एवम्भूत'-शब्दः अनुप्रवेशपूर्वकत्वपरः। अनेन नामरूपव्याकरणश्रुत्युपादानेन जीवानाम् उत्पत्ति-प्रलयौ नामरूपव्याकरण-तदभावौ, न तु स्वरूपनिष्पत्ति-विनाशौ इत्यु भवति। [तथा] कालविशेषोक्तम् ऐक्यम्—नामरूपव्याकरणाभावमात्रम्, न तु स्वरूपैक्यम् इति [च] ॥

अत इत्यादि। कार्य-कारणयोः ऐक्यप्रतिपादनात्, एकविज्ञानेन सर्वविज्ञानप्रतिज्ञानात्, सामानाधिकरण्याच्च इति त्रिधा हि अद्वैतगतिः। अत्र पूर्वोक्तद्वयम् असदुक्त-

---

[1] ज्ञायते–थ.

कारणात् कार्यस्य अनन्यत्वेन कारणविज्ञानेन कार्यस्य [1]ज्ञाततया[1], एकविज्ञानेन [2]सर्वविज्ञानं[2] समीहितम् उपपन्नतरम् ।

'अहमिमास्तिस्रो देवता अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि' (छां. उ. 6-3-2)

इति, 'तिस्रो देवताः' इति सर्वम् अचिद्वस्तु निर्दिश्य, तत्र स्वात्मकजीवानुप्रवेशेन नामरूपव्याकरणवचनात्, सर्वे वाचकाः शब्दाः [3]अचिद्विशिष्टजीव[3]विशिष्टपरमात्मन एव वाचकाः इति, कारणावस्थपरमात्मवाचिना शब्देन कार्यवाचिनः शब्दस्य सामानाधिकरण्यं मुख्यवृत्तम् । अतः स्थूलसूक्ष्मचिद[4]चित्प्रकारकं[4] ब्रह्मैव कार्यं कारणं चेति ब्रह्मोपादानं जगत् ॥

[ ब्रह्मणः उपादानत्वे स्वभावासाङ्कर्योपपादनम् ]

सूक्ष्मचिदचिद्वस्तु[5]शरीरं[5] ब्रह्मैव कारणमिति ब्रह्मोपादानत्वेऽपि संघातस्य

---

प्रकारेण उपपन्नम् इति 'अत' इत्यादि भाष्येणोक्तं भवति। विशिष्टं कारणम्, तदेव कार्यम् इति कारणात् कार्यस्य अनन्यद्रव्यत्वम् । अतः कार्यकारणयोरैक्यपराणां श्रुतीनां तयोः एकद्रव्यत्वमेव प्रतिपाद्यम्, न तु विशिष्टत्वनिषेधः ; तस्य विहितत्वात् । एकविज्ञानेन सर्वविज्ञानमपि एवमेव, यथा मृत्पिण्डेन तत्कार्यज्ञानेऽपि पिण्डगतरूपादिनिषेधः न कृतः स्यात्, तद्वत् । उपपन्नतरम् इति तरप्प्रत्ययेन मुख्यत्वं सर्वत्राऽपि विवक्षितम् ।

अहमिमा इति सद्विद्योपक्रमगतस्य एकविज्ञानेन सर्वविज्ञानस्य मुख्यत्वमुक्तम् । अथ तदुपसंहारगतस्य 'तत्त्वमसि' इति सामानाधिकरण्यस्य मुख्यत्वमुच्यते । अत इति । भाव्यवस्थाविशेषवतः प्रागवस्थायोगो हि उपादानत्वम् । अतः अवस्थाविशेषौ स्थूल-सूक्ष्म-शब्दाभ्यां दर्शितौ । अनेन कालविशेषावच्छिन्नैकत्वावधारणं नाम-रूपविभागाभावाभिप्रायमिति फलितम् ॥

सूक्ष्मेत्यादि । उपादानत्वेऽपि स्वभावासाङ्कर्योपपादनम् ।

---

[1] विज्ञाततया—वा.
[2] सर्वविज्ञानं च—पा.
[3] अचिज्जीवविशिष्ट—पा.
[4] चित्प्रकारं—थ.
[5] शरीरकं—इ, घ, ङ, थ, द.

उपादानत्वेन चिदचितोः ब्रह्मणश्च स्वभावा[1]सङ्करोऽपि उपपन्नतरः[1]। यथा— शुक्ल-कृष्ण-रक्ततन्तुसंघातोपादानत्वेऽपि चित्रपटस्य तत्तत्तन्तुप्रदेशे एव शौक्ल्यादि-सम्बन्धः इति, कार्यावस्थायामपि न सर्वत्र वर्णसङ्करः; तथा—चिदचिदीश्वरसङ्घातो-पादानत्वेऽपि जगतः कार्यावस्थायामपि भोक्तृत्व-भोग्यत्व-नियन्तृत्वाद्यसङ्करः। तन्तूनां पृथक्स्थितियोग्यानामेव पुरुषेच्छया कदाचित् संहतानां कारणत्वं कार्यत्वञ्च। इह तु [2]चिदचितोः सर्वावस्थयोः परमपुरुषशरीरत्वेन[2] तत्प्रकारतयैव पदार्थत्वात्, तत्प्रकारः परमपुरुषः [3]सर्वदा सर्व[3]शब्दवाच्यः इति विशेषः। स्वभावभेदः तदसङ्करश्च तत्र च अत्र च तुल्यः ॥

[ब्रह्मणः अविकृतत्व-कार्यत्व-निर्गुणत्वानां श्रत्युक्तानामुपपत्तिः]

एवं च सति परस्य ब्रह्मणः कार्यानुप्रवेशेऽपि स्वरूपान्यथाभावाभावात् अविकृत-त्वम् उपपन्नतरम्। स्थूलावस्थस्य नामरूपविभागविभक्तस्य चिदचिद्वस्तुनः आत्म-तया अवस्थानात् [4]कार्यत्वमपि[4] उपपन्नतरम्। अवस्थान्तरापत्तिरेव हि कार्यता।

---

तन्तूनामिति। न हि तन्तुषु अन्योन्यगुणप्रधानभावः अस्ति इति, न तत्र अन्यतम-वाचिशब्देन समुदायः उच्यते। अत्र तु सर्वप्रकारस्य भगवतः सर्वशब्दवाच्यत्वम् उपपन्नमिति, अन्यतमवाचिशब्देनाऽपि विशिष्टमेवोच्यते इति, विशिष्टस्यैव कारणत्वात् प्रागपि भेदः अस्तीति, स्वभावासङ्करः उपपन्न इत्यर्थः। स्वभावभेद इति। साधर्म्य केनाकारेण? [इत्यस्योत्तरम्] ॥

एवं चेति। रुमा(लवणाकर)गतेतरपदार्थानां लवणत्वापत्तिवत् ब्रह्मणः अन्यथाभाव-माशङ्क्य [समाधानमिदम्]। अवस्थान्तरेति। अविकारश्रुतीनां प्रकृतिगतस्वरूपान्यथाभाव-रूपविकारः ब्रह्मणि नास्तीत्यर्थः। कार्यावस्थचिदचिन्नियमनरूपावस्थान्तरापत्तिः ब्रह्मणः कार्य-त्वम् इति, कार्यत्ववादिनीनां श्रुतीनामर्थः। न हि कारणावस्थनियमनं कार्यावस्थनियमनं भवति। तत्तदवस्थचिदचिन्नियमनरूपविशेषा एव ब्रह्मणः अवस्थाः। स्वरूपान्यथाभाव-

---

[1] सङ्करोऽप्युपपन्नतरः—द.
[2] सर्वावस्थयोः परमपुरुषशरीरत्वेन चिदचितोः—व.
[3] सर्व—थ.
[4] कार्यत्वम्—आ.

निर्गुणवादाश्च परस्य ब्रह्मणः [1]हेयगुणासम्बन्धात्[1] उपपद्यन्ते ।

'अपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः' (छां. उ. 8-1-5)

इति हेयगुणान् प्रतिषिध्य,

'सत्यकामः सत्यसंकल्पः' (छां. उ. 8-1-5)

इति कल्याणगुणान् विदधती इयं श्रुतिरेव अन्यत्र सामान्येनावगतं गुणनिषेधम्, हेय-गुणविषयं व्यवस्थापयति ।

'ज्ञानस्वरूपं ब्रह्म' इति वादश्च—सर्वज्ञस्य सर्वशक्तेः [2]निखिल[2]हेयप्रत्यनीक-कल्यणगुणाकरस्य ब्रह्मणः स्वरूपं [3]ज्ञानैक[3]निरूपणीयम्, [4]स्वयंप्रकाश[4]तया ज्ञानस्वरूपं च इत्यभ्युपगमात् उपपन्नतरः ।

'यः सर्वज्ञः सर्ववित्' (मुण्ड. उ. 1-1-10)

'पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च' (श्वे. उ. 6-8)

'विज्ञातारमरे केन विजानीयात् ?' (बृ. उ 4-4.14)

इत्यादिकाः ज्ञातृत्वम् आवेदयन्ति ;

'सत्यं ज्ञानम्' (तै. उ. आन. 1-1)

---

ज्ञानसङ्कोचादिरूपविकारास्तु सद्वारकावस्थाः इत्यर्थः । श्रुतिरेवेति । मतान्तरोक्तनिर्वाहेषु श्रुतहानिः अश्रुतकल्पनं च अस्ति । अत्र तु निर्वाहः श्रौत एव श्रुतानुगुणश्चेति वैषम्यम् इति भावः । [सामान्येनेत्यादि । अयं सामान्यविशेषन्यायः । तत्स्वरूपं तु—सामान्यशब्दस्य विशेषपदोपस्थापिते पर्यवसानम् ।]

सर्वज्ञस्य इत्यादिपदानि मङ्गलगुणविशेषविधायिवाक्यस्मरणार्थानि । ईश्वरस्य ज्ञातृत्वात् ज्ञानैकनिरूपणीयत्वमुक्तम् । ज्ञातुर्हि ज्ञानं निरूपकम् । उपपन्नतरः इत्यत्र तरपः मुख्यत्व-मर्थः । यः सर्वज्ञ इत्यादि । ज्ञानस्वरूपत्व-ज्ञानगुणकत्वप्रतिपादनपराः श्रुतयः एताः ।

---

[1] हेयगुणाभावात्-आ, द.

[2] अखिल—वा.

[3] विज्ञानैक—थ.

[4] स्वप्रकाश—आ, इ.

इत्यादिकाश्च ज्ञानैकनिरूपणीयतया स्वप्रकाशतया च ज्ञानस्वरूपताम् ॥

[ भेद-निषेधश्रुतीनामर्थवर्णनम् ]

'सोऽकामयत बहु स्याम्' (तै. उ. आन. 6-2)

'तदैक्षत बहु स्याम्' (छां. उ. 6-2-3)

'तन्नामरूपाभ्यां व्याक्रियत' (बृ. उ. 3-4-7)

इति ब्रह्मैव स्वसङ्कल्पात् विचित्र-[1]स्थिर-त्रसरूप[1]तया नानाप्रकारमवस्थितमिति, तत्प्रत्यनीकाब्रह्मात्मकवस्तुनानात्वम् अतत्त्वम् इति, तत् प्रतिषिध्यते —

'मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति' (कठ. उ. 4-10)

'नेह नानाऽस्ति किंचन !' (कठ. उ. 4-11)

'यत्र हि द्वैतमिव भवति . . . तदितर इतरं पश्यति . . . 'यत्र त्वस्य सर्वमात्मैवाऽभूत् . . . तत् केन कं पश्येत् ? तत् केन कं विजानीयात् ?'
(बृ. उ. 4-4-14)

इत्यादिना । न पुनः,

'बहु स्याम्, प्रजायेय' (छां. उ. 6-2-3)

---

ज्ञानस्वरूपताम्—उभयथाऽपि ज्ञानव्यपदेशयोग्यताम् । ज्ञानगुणकत्वस्य, ज्ञानस्वरूपत्वस्य च विहितत्वात् उभयमपि उपपन्नम् इत्यर्थः (श्रु. प्र) ॥

विचित्रस्थिरत्रसरूपतया — विचित्रस्थिरत्रसशरीरतया । अब्रह्मात्मकेति ब्रह्मान्तर्यामिकत्वरहितत्वमुक्तम् । विहितव्यतिरिक्तस्वनिष्ठवस्तुनानात्वमित्यर्थः । प्रतिषिध्यत इति । ऐक्यश्रुतीनां प्रकारैक्यपरत्वात् ऐक्यश्रुतिशेषभूतभेदनिषेधोऽपि तदनुरोधेन प्रकारिभेदनिषेध एव भवितुमर्हति इत्यर्थः । निषेधसामान्यं हि विशेषविधाने दृष्टे तद्व्यतिरिक्तविषयं दृष्टम् । 'न हिंस्यात्' इत्यादिषु विशेषविधानं सामान्यनिषेधः बाधते चेत्, वैधहिंसायाः अधर्मत्वप्रसङ्गः इत्यभिप्रायः ।

---

[1] स्थिररूप—थ, स्थिरचरस्वरूप—धा.

इत्यादिश्रुतिसिद्धं स्वसङ्कल्पकृतं ब्रह्मणः नानानामरूपभाक्त्वेन नानाप्रकारत्वमपि निषिध्यते ।

'यत्र त्वस्य सर्वमात्मैवाऽभूत्' (बृ. उ. 4-4-14)

[1]इत्यादि[1] निषेधवाक्यादौ च तत् स्थापितम्,

'सर्वं तं परादात् योऽन्यत्राऽऽत्मनः सर्वं वेद' (बृ. उ. 4-4-6)

'तस्य ह वा एतस्य महतो भूतस्य निश्वसितमेतत् [2]यदृग्वेदो यजुर्वेदः[2]'
(बृ. उ. 6-5-11)

इत्यादिना ॥

[ पूर्वोक्तव्याख्याविधाने श्रुत्यादिसर्वसामरस्यम् ]

एवं चिदचिदीश्वराणां [3]स्वरूपभेदम्, स्वभावभेदं[3] च वदन्तीनाम्, कार्यकारणभावम्, कार्यकारणयोः अनन्यत्वं च वदन्तीनाम् सर्वासां श्रुतीनाम् अविरोधः; चिदचितोः परमात्मनश्च सर्वदा शरीरात्मभावम्, शरीरभूतयोः कारणदशायां नामरूपविभागानर्हसूक्ष्मदशापत्तिम्, [4]कार्यदशायां च[4] तदर्हस्थूलदशापत्तिं वदन्तीभिः श्रुति-

---

सर्वं तं परादात्——सर्वं कर्तृ तं परादात्—पराकुर्यात् । योऽन्यत्रेति । 'अन्यत्र' इत्यव्ययं 'विना'शब्दपर्यायम् । ब्रह्मणः पृथग्भूतं तदविनाभावरहितं नास्ति इत्यर्थः । भेदविशेषनिषेधदर्शनात् सामान्येन भेदनिषेधोऽपि तत्रैव पर्यवस्यति ; 'छागो वा मन्त्रवर्णात्' (पू. मी. 6-8-9) इति न्यायात् इति भावः (श्रु. प्र) । निश्वसितं —अनायासेनोत्पन्नम् । सङ्कल्पमात्रविजृम्भितम् इति यावत् (भा. प्र) ॥

अविरोध इति । असदुक्तनिर्वाहः श्रुतिभिरेवोक्तः, श्रुत्यनुगुणश्च । तत्कृतनिर्वाहः श्रुतिविरुद्धः, अश्रुतः, तर्काभासमूलश्च इत्यर्थः ।

---

[1] इति—इ.  [2] यदृग्वेदः—आ, इ, ख.

[3] स्वभावभेदं स्वरूपभेदं—वा.  [4] कार्यदशायां—द.

भिरेव ज्ञायते इति, ब्रह्माज्ञानवादस्य, औपाधिकब्रह्मभेदवादस्य, अन्यस्याऽपि अपन्याय-मूलस्य सकलश्रुतिविरुद्धस्य न कथञ्चिदपि अवकाशो दृश्यते।

चिदचिदीश्वराणां पृथक्स्वभावतया तत्तच्छ्रुतिसिद्धानां, शरीरात्मभावेन प्रकार-प्रकारितया श्रुतिभिरेव [1]प्रतिपन्नानां[1] [2]श्रुत्यन्तरेण[2] कार्यकारणभावप्रतिपादनम्, कार्य-कारणयोः ऐक्यप्रतिपादनं [3]च हि अविरुद्धम्[3]।

यथा—आग्नेयादीन् षट् यागान्, उत्पत्तिवाक्यैः पृथगुत्पन्नान्, समुदायानु-[4]वादि[4]वाक्यद्वयेन समुदायद्वयत्वमापन्नान्,

'दर्शपूर्णमासाभ्याम्' (कात्या. श्रौ. सू. 4-2-47)

इति अधिकार[5]वाक्यं[5] कामिनः कर्तव्यतया विदधाति; तथा—चिदचिदीश्वरान् विविक्त-स्वरूपस्वभावान्,

'क्षरं प्रधानममृताक्षरं हरः क्षरात्मानावीशते देव [6]एकः[6]' (श्वे. उ. 1-10)

'पतिं विश्वस्याऽऽत्मेश्वरम्' (तै. ना. उ. 11-3)

---

अन्यस्येति स्वाभाविकभेदाभेदं स्वनिष्ठभेदं चाह। अपन्यायमूलस्य सकलश्रुतिविरुद्धस्य इति सर्वत्रान्वेति।

षट् यागान् इति। आग्नेयः, अग्नीषोमीयोपांशुयाजौ, ऐन्द्रौ द्वौ, ऐन्द्राग्नः, (आग्नेयः) इति षट् यागाः। उत्पत्तिवाक्यम्—प्रथमप्रतिपत्तिजनकं वाक्यम्। पृथगु-त्पन्नान्—पृथक् प्रतिपादितान्। उत्पत्तिवाक्यानि—'यदाग्नेयोऽष्टाकपालो अमावास्यायां च पौर्णमास्यां चाच्युतो भवति' (तै. सं. 2-6-3-4) [ताभ्यामेतमग्नीषोमीयमेकादशकपालं पूर्णमासे प्रायच्छत' (तै. सं. 2-5-2-3)] इत्यादीनि। समुदायानुवादिवाक्यद्वयेन—'य एवं विद्वान् पौर्णमासीं यजते (तै. सं. 1-6-9-1) 'य एवं विद्वानमावास्यां यजते' (तै. सं. 1-6-9-2) इत्येताभ्याम्। 'दर्शपूर्णमासाभ्याम्' इति स्वर्गसाधनत्वाकारेणैकीकृत्य तत्कर्तव्यतया विद-धातीत्यर्थः।

---

[1] प्रतिपन्नतया-इ. [2] श्रुत्यन्तरे-इ.

[3] अविरुद्धमिति सिद्धम्-थ, च हि अविरुद्धमिति सिद्धम्-वा.

[4] वाद्-पा. [5] वाक्येन-थ.

[6] एकः, प्रधानक्षेत्रज्ञपतिर्गुणेशः-(श्वे. उ. 6-16)-झ.

'आत्मा नारायणः परः' (तै. ना. उ. 11-4)

इत्यादिवाक्यैः [1]पृथक्[1] प्रतिपाद्य,

'यस्य पृथिवी शरीरम्' (बृ. उ. 5-7-7)

'यस्याऽऽत्मा शरीरम्' (बृ. उ. मा. प. 5-7-26)

'यस्याऽव्यक्तं शरीरम् .... यस्याऽक्षरं शरीरम् . . . एष सर्वभूतान्तरात्मा-ऽऽपहतपाप्मा दिव्यो देव एको नारायणः' (सुबा. उ. 7)

[2]इत्यादिभिः[2] वाक्यैः, चिदचितोः सर्वावस्थावस्थितयोः—परमात्मशरीरताम्, परमात्मनः तदात्मतां च प्रतिपाद्य, शरीरिभूतपरमात्माभिधायिभिः सद्ब्रह्मात्मादिशब्दैः [3]कारणावस्थः कार्यावस्थश्च[3] परमात्मा एक एवेति, पृथक् प्रतिपन्नं वस्तुत्रितयम्—

'सदेव सोम्येदमग्र "आसीदेकमेवाऽद्वितीयम्"' (छां. उ. 6-2-1)

'ऐतदात्म्यमिदं सर्वम्' (छां. उ. 6-8-7)

'सर्वं खल्विदं ब्रह्म' (छां. उ. 3-14-1)

इत्यादिवाक्यं प्रतिपादयति। चिदचिद्वस्तुशरीरिणः परमात्मनः—परमात्मशब्देनाऽ-

---

शरीरिभूतेति। कारणावस्थः कार्यावस्थश्च परमात्मा एकः इति वचनभङ्ग्या पृथक्-प्रतिपन्नं वस्तुत्रयं प्रतिपादयतीत्यर्थः। चिदचिद्वस्त्वित्यादि। आग्नेयादिसमुदाये अन्यतम-वाचिशब्दैः समुदायाभिधानं न दृष्टम्। अत्र तु परमात्मवाचिभिः शब्दैः समुदायाभिधानं कथम्? [इत्यस्योत्तरमिदम्]। [अयंभावः] तत्र अन्योन्यं प्रकार-प्रकारिभावाभावात् अन्यतम-वाचिशब्देन न समुदायाभिधानम्। अत्र तु शब्दसामर्थ्यात् अर्थसामर्थ्याच्च तथाभावादु-पपन्नम्। [तथा हि] चिदचितोः अपृथक्सिद्धप्रकारत्वात् निष्कृष्टब्रह्मणः कारणत्वानुपपत्त्या च प्रकारिवाचिशब्देन विशिष्टोपस्थापनसिद्धिः। सत्-ब्रह्मशब्दौ विशिष्टस्य सत्त्वबृहत्वयोगात् विशिष्टोपस्थापनसमर्थौ। आत्मशब्दश्च व्याप्तिरूपप्रवृत्तिनिमित्तस्य व्याप्यसापेक्षत्वात् विशिष्टो-

---

[1] पृथक् पृथक्—थ. [2] इत्यादि—ङ.

[3] कारणकार्यावस्थश्च—पा, कारणकार्यावस्थ — .

[4] आसीत्—वा.

भिधाने हि नाऽस्ति विरोधः ; यथा—मनुष्यपिण्डशरीरकस्य आत्मविशेषस्य 'अयमात्मा सुखी' इति आत्मशब्देनाऽ[1]भिधाने[1], इत्यलमतिविस्तरेण ॥

[ भावरूपाज्ञाने निवृत्त्यनुपपत्तिप्रतिपादनम् ]

यत्पुनरिदमुक्तम्—ब्रह्मात्मैकत्वविज्ञानेनैव अविद्यानिवृत्तिः युक्ता—इति,

तदयुक्तम् ; बन्धस्य पारमार्थिकत्वेन ज्ञाननिवर्त्यत्वाभावात् । पुण्यापुण्यरूप-कर्मनिमित्तदेवादिशरीरप्रवेश-तत्प्रयुक्तसुखदुःखानुभवरूपस्य बन्धस्य मिथ्यात्वं कथमिव शक्यते वक्तुम् ?

[ एतन्मते निवृत्त्युपपत्तिवर्णनम् ]

एवंरूपबन्धनिवृत्तिः—भक्तिरूपापन्नोपासनप्रीतपरमपुरुषप्रसादलभ्या—इति, पूर्व-मेवोक्तम् । भवदभिमतस्य ऐक्यज्ञानस्य यथावस्थितवस्तुविपरीतविषयस्य मिथ्यारूपत्वेन बन्धविवृद्धिरेव फलं भवति ;

---

पस्थापकः इति । यथेत्यादि । 'अयमात्मा सुखी' इति आत्मविशेषस्य सुखित्वविधाने शरीर-रहितस्य आत्मनः वैषयिकसुखासम्भवात् तादृशसुखोपयुक्तमनुष्यादिपिण्डविशिष्टत्वम् अर्थतः सिध्यति तद्वदिति भावः (श्रु. प्र) ॥

बन्धस्येत्यादि । अर्थक्रियाकारित्वात्, उत्पत्तिमत्वात्, प्रायश्चित्तशास्त्राच्च न बन्ध-मिथ्यात्वम् । तेषां प्रामाणिकत्वमिति भावः (श्रु. दी) ॥

एवंरूपेति । परमार्थस्य ज्ञाननिवर्त्यत्वं दृष्टद्वारा नोपपद्यते ; अपि तु अदृष्टद्वारा । यथा सत्यसर्पदष्टविषस्य उपासनप्रीतगरुडप्रसादात् निवृत्तिः, न तु 'मिथ्या' इति ज्ञानात्, तथा इत्यर्थः । प्रपञ्चस्य ज्ञानानिवर्त्यत्वम् उक्तम् । भवदभिमतस्येति । तत्त्वज्ञानं हि मोक्षोपायः । भिन्नविषयस्य अभेदज्ञानस्य अतत्त्वज्ञानरूपत्वात्, विपरीतफलत्वम् इत्यर्थः ।

---

[1] भिधानं—थ.

'मिथ्यैतदन्यद्द्रव्यं हि नैति तद्द्रव्यतां यतः' (वि. पु. 2-14-27)

इति शास्त्रात्,

'उत्तमः पुरुषस्त्वन्यः' (भ. गी. 15-17)

'पृथगात्मानं प्रेरितारं च मत्वा' (श्वे. उ. 1-6)

इति, जीवात्मविसजातीयस्य तदन्तर्यामिणः ब्रह्मणः ज्ञानम्, परमपुरुषार्थलक्षणमोक्ष-साधनम् इत्युपदेशाच्च ।

अपि च [1]भवदभिमतस्याऽपि[1] [2]निवर्तकज्ञानस्य[2] मिथ्या[3]रूपत्वात्[3], तस्य निवर्त-कान्तरं मृग्यम् ।

निवर्तकज्ञानमिदम्—स्वविरोधि सर्वं [4]भेदजातं[4] [5]निवर्त्य[5], क्षणिकत्वात् स्वय-मेव [6]नश्यति[6]—इति चेत्,

न; तत्स्वरूप तदुत्पत्ति विनाशानां काल्पनिकत्वेन 'विनाश-तत्कल्पनाकल्पक-रूपाविद्यायाः निवर्तकान्तरम् अन्वेषणीयम् ।

तद्विनाशः ब्रह्मस्वरूपमेव—इति चेत्,

---

मिथ्यैतदिति अद्वैतस्य अतथ्यत्वे प्रमाणम् । उत्तम इति ऐक्यस्य अतात्विकत्व-कण्ठोक्तिः दर्शिता । ऐक्यस्य असत्यत्वं यथा फलति, तथा भेदज्ञानस्यैव मोक्षहेतुत्वम् [उच्यते अनेन] स्मृति-वचसोः सङ्गत्यर्थम् ।

अपि चेति तर्कविरोधमाह ।

निवर्तकज्ञानमिति । दावानल-विषनाशकविषदृष्टान्ताभिप्रायेण ।

नेति । विनाशस्य ब्रह्मव्यतिरिक्तत्वात् घटादेरिव काल्पनिकत्वम् । यथा स्वप्नपदार्थ-स्वरूप-तदुत्पत्ति-स्थितीनां काल्पनिकत्वात् नाशश्च काल्पनिकः, तथा इति भावः । विनाशे-

---

[1] भवदभिमतस्य—पा. [2] निवर्तकज्ञानस्यापि—पा.

[3] स्वरूपत्वात्—थ. [4] भेदज्ञानं—इ.

[5] विनिवर्त्य—पा. [6] विनश्यति—पा.

तथासति—निवर्तकज्ञानोत्पत्तिरेव न स्यात्; तद्विनाशे तिष्ठति, तदुत्पत्त्य-सम्भवात् ॥

[ निवर्तकज्ञानस्य ज्ञात्रनुपपत्तिः ]

अपि च—चिन्मात्रब्रह्मव्यतिरिक्तकृत्स्ननिषेधविषयज्ञानस्य कोऽयम् ज्ञाता ?

अध्यासरूपः—इति चेत्,

न ; तस्य निषेध्यतया निवर्तकज्ञानकर्मत्वात्, तत्कर्तृत्वानुपपत्तेः ।

ब्रह्म[1]स्वरूपम्[1]—इति चेत्,

ब्रह्मणः निवर्तकज्ञानं प्रति ज्ञातृत्वम्, किं स्वरूपम्, उत अध्यस्तम् ?

अध्यस्तं चेत्,

अयम् अध्यासः, तन्मूलाविद्यान्तरं च निवर्तकज्ञानाविषयतया तिष्ठत्येव । निवर्तकज्ञानान्तराभ्युप[2]गमे[2], तस्याऽपि त्रिरूपत्वात्, ज्ञात्रपेक्षया अनवस्था स्यात् ।

---

त्यादि । विनाशः कल्प्यः । तद्विषयभ्रमबुद्धिः कल्पना । कल्पकः भ्रमाश्रयादिः । एवं रूपाविद्यायाः इत्यर्थः ।

तथासतीत्यादि । भावरूपस्य नाशो हि उत्तरावस्थाप्राप्तिः । सा चात्र अनुपपन्ना ; ब्रह्मव्यतिरिक्तस्य अवस्थावतः अन्यस्य स्थित्यभ्युपगमे, अद्वैतहानिप्रसङ्गादिति पूर्वस्मिन् पक्षे दूषणं प्रकारान्तरेणाप्युक्तम् । अस्मत्पक्षे हि कर्म भगवत्प्रीत्यप्रीतिरूपम् । तत्र यः संसारफलानुगुणः सङ्कल्पः, तत् विनाश्यं कर्म । यस्तु मोक्षानुगुणः सङ्कल्पः, स एव पूर्वस्य नाशः इति उपपन्नमेव 'धातुः प्रसादान्महिमानमीशम्' (तै. ना. उ. 10-1) इत्यादि ॥

कोऽयम् ज्ञातेति । प्रमाणजन्यज्ञानं हि साश्रयमेव दृष्टम् ।

कर्मत्वात् कर्तृत्वानुपपत्तेरिति । कर्म-कर्तृत्वविरोधात् इति भावः ।

तिष्ठत्येवेति । ज्ञातृत्वाध्यासस्य, तन्मूलाविद्यान्तरस्य च निवृत्तौ निवर्तकान्तरसापेक्षत्वात, निवर्तकान्तरस्य च भवद्भिः अनभ्युपगमात्, तदुभयं तिष्ठत्येवेति निश्शेषावि [illegible] त्ति न्रयादित्यर्थः (श्रु. प्र) । त्रिरूपत्वात्—स्वरूपाश्रयविषयत्रयवत्वात् । त्रिपुटी ज्ञानं इति हि प्रसिद्धम् (भा. द) ।

---

[1] स्वरूपमेव—आ. छ, झ. स्वयमेव—इ, [2] गमे तु—वा.

ब्रह्मस्वरूपस्यैव ज्ञातृत्वे—अस्मदीय एव पक्षः परिगृहीतः स्यात् ।

निवर्तकज्ञानस्वरूपम्, [1]स्वस्य[1] ज्ञाता च ब्रह्मव्यतिरिक्तत्वेन स्वनिवर्त्यान्तर्गतम्—इति वचनम्, 'भूतलव्यतिरिक्तं कृत्स्नं देवदत्तेन छिन्नम्' [2]इत्यस्यामेव[2] छेदनक्रियायाम्, अस्य छेत्तुः, अस्याः छेदनक्रियायाश्च छेद्यानुप्रवेशवचनवत् उपहास्यम् । अध्यस्तः ज्ञाता स्वनाशहेतुभूतनिवर्तकज्ञाने स्वयं कर्ता च [3]न भवति[3]; स्वनाशस्य [4]अपुरुषार्थत्वात्[4] । तन्नाशस्य ब्रह्मस्वरूपत्वाभ्युपगमे भेद[5]दर्शन[5]-तन्मूलाविद्यादीनां [6]कल्पनमेव[6] न स्यात् ! इति, अलमनेन दिष्टहतमुद्गराभिघातेन ।।

[ कर्मविचारपूर्ववृत्तताधुक्ततमत्वम् ]

तस्मात् अनादिकर्मप्रवाहरूपाज्ञानमूलत्वात् बन्धस्य, तन्निबर्हणम् उक्तलक्षण-

---

ब्रह्मस्वरूपस्यैवेति । निरुपाधिकस्यैव ब्रह्मस्वरूपस्य अभ्युपगम्यमानं ज्ञातृत्वं स्वाभाविकमिति भवतामपि सिद्धान्तः स्यात् इत्यर्थः (श्रु. प्र) ।

छेद्यानुप्रवेशवचनवत् इति । छेद्यतया अनुप्रवेशवचनवत् इत्यर्थः । छेदनार्हदेहस्याऽपि छेत्तुः स्वच्छेद्यभूतलगतसर्ववस्तुकर्मकछेदनक्रियाकर्मत्वं दुर्घटम् । क्रियायास्तु छेद्यत्वासम्भवात् सुतराम् । तथा ज्ञातुः ज्ञाने जाते अध्यासाधीनसिद्धिकस्य तज्ज्ञानबाध्यत्वे सिद्धिः दुर्वचा । एवं बाधकज्ञाने सति बाध्यसिद्धेरेव अभावात् कस्य ब्रह्मव्यतिरिक्तत्वम् ? यदि तस्य व्यतिरिक्तत्वम्, तर्हि बाधके सत्यपि अध्यस्ततया सिद्धस्य कथं बाध्यानुप्रवेशः ? इति भावः (भा. द) ॥

तस्मादिति । अमिथ्यात्वात् बन्धस्य तन्निवर्तने धियः कर्मानपेक्षस्वरूपस्य वस्तुसामर्थ्यस्य असिद्धेः (श्रु. दी) । प्रवाहशब्दः स्वरूपानादित्वव्यावृत्त्यर्थम् । कर्मशब्दः अनिर्वचनीयव्यावृत्त्यर्थः । उक्तलक्षणज्ञानादेव—उपासनात्मकादेव ।

---

[1] स्वस्य—द.  [2] इत्येकस्यामेव—वा.

[3] न भवेत्—क.  [4] अपरमार्थत्वात्—थ.

[5] तद्दर्शन—आ, इ.  [6] कल्पनं—इ.

ज्ञानादेव। तदुत्पत्तिश्च अहरहरनुष्ठीयमानपरमपुरुषाराधनवेषात्म[1]याथात्म्य[1]बुद्धिविशेष-संस्कृतवर्णाश्रमोचितकर्मलभ्या ।

तत्र केवलकर्मणाम्—अल्पास्थिरफलत्वम्, अनभिसंहितफलपरमपुरुषाराधन-वेषाणां कर्मणाम्—उपासनात्मकज्ञानोत्पत्तिद्वारेण ब्रह्मयाथात्म्यानुभवरूपानन्तस्थिर-फलत्वं च कर्मस्वरूपज्ञानात् ऋते न ज्ञायते, केवलाकारपरित्यागपूर्वकयथोक्तस्वरूप-कर्मोपादानं च न सम्भवति इति, कर्मविचारानन्तरम्, तत एव हेतोः ब्रह्मविचारः कर्तव्यः इति 'अथाऽतः' इत्युक्तम् ॥

— इति महासिद्धान्तः —

---

तत्रेति । कर्मविचारादेव तस्य अल्पास्थिरफलत्वज्ञानं फलितमिति भावः । अनभि-संहितेति । 'यज्ञेन दानेन' इत्यादिकर्मविनियोजकवाक्यार्थज्ञानस्य पदार्थज्ञानपूर्वकत्वात्, पदार्थभूतकर्मस्वरूपाख्यविशेष्यज्ञानादृते उपासनद्वारा अनन्तस्थिरफलस्वरूपं विशेषणं च न ज्ञायते इति भावः । केवलाकारः—आत्मयाथात्म्यबुद्धिसंस्कारशून्याकारः (श्रु. प्र) । हानार्थम्, उपादानार्थं च हि कस्यचित् ज्ञानम् । तत्र फलद्वारा कर्म त्याज्यम्, स्वरूपेण उपादेयम् । उभयार्थं ज्ञानं कर्मविचारादृते न सिध्यति । तस्मात् कर्मविचारनिवृत्तौ, तज्ज्ञानफलं हानम्, उपादानं च न संभवतीत्यर्थः । ब्रह्मविचारः कर्तव्यः इति 'ब्रह्मजिज्ञासा'शब्दार्थः उक्तः ।

विचारस्य कर्तव्यतायां न अतीव विवादः । शाब्दः आर्थः इत्येतावदेव हि वैषम्यम् । 'अथातः' शब्दार्थ एव हि अतीव विवादः । अतः 'अथातः' इत्येतावदुपात्तम् । एवं सूत्रस्य अक्षरयोजना कृता (श्रु. प्र) ॥

॥ इति महासिद्धान्तटिप्पणी ॥

॥ श्रीः ॥

---

[1] याथार्थ्य—थ.

— अथ सूत्रकाराभिमतसूत्रार्थ¹योजनारम्भः —

( अधिकरणरचनोपयोगी श्रुतप्रकाशिकास्थः ग्रन्थभागः )

अक्षरयोजनायां—ब्रह्मविचारः कर्तव्य इत्युक्तत्वात्, ब्रह्मविचारारम्भो न युक्त इति पूर्वपक्षसमाप्तावुक्तत्वात्, ब्रह्मविचारारम्भो युक्त इति स्थितमिति सिद्धान्तस्योपसंहृतत्वाच्च दीपे कण्ठोक्तौ विषयः संशयश्चेहार्थसिद्धौ। ब्रह्मविचार इत्युक्तत्वात् ब्रह्ममीमांसा विषय इति सिद्धम्। आरम्भो न युक्तः, इति चोक्तत्वात् संशयःसिद्धः। ब्रह्ममीमांसा किमारम्भणीया, उतानारम्भणीयेति: तदर्थं चिन्त्यते—किं वेदान्ताः ब्रह्मणि प्रमाणम्, उत नेति: तदर्थं परीक्ष्यते—शब्दस्य-सिद्धवस्तुबोधनसामर्थ्यावधारणं संभवति, नेति: तदर्थं विचार्यते—किं वृद्धव्यवहारादन्यत्र शब्दार्थसंबन्धावधारणं संभवति, नेति: वृद्धव्यवहारे च शब्दस्य सिद्ध-वस्तुबोधकत्वावधारणं संभवति, नेति च। न संभवतीति पूर्वः पक्षः। संभवतीति सिद्धान्तः। यदा व्यवहारादन्यत्र न व्युत्पत्तिः, व्यवहारे च शब्दस्य सिद्धरूपार्थबोधकत्वा-वधारणं न संभवति—तदा शब्दस्य सिद्धवस्तुबोधनसामर्थ्याभावात् वेदान्तानामपि ब्रह्मणि परिनिष्पन्नरूपे प्रामाण्याभावनिश्चयवतः पुरुषस्य अनन्तस्थिरफलापातप्रतीतेः प्रामाण्यसंभावनाया असिद्धेर्विशिष्टहेत्वभावादनारम्भणीयेति पूर्वपक्षे फलफलिभावः। राद्धान्ते तु—यदा व्यवहारा-दन्यत्र व्युत्पत्तिर्व्यवहारे सिद्धवस्तुपरत्वावधारणं च संभवति, तदा शब्दस्य सिद्धरूपार्थे सामर्थ्यात् वेदान्तानामपि ब्रह्मणि परिनिष्पन्नरूपे प्रामाण्यात् प्रामाण्याभावनिश्चयरहितपुरुषस्य अनन्तस्थिर-फलरूपब्रह्मविषयापातप्रतीतिप्रामाण्यसंभावनासिद्धेः विशिष्टहेतुसिद्ध्या ब्रह्ममीमांसा आरम्भणीयेति विचाराणा फलफलिभावः।

---

¹ अथातो ब्रह्मजिज्ञासा ॥ १ ॥ अथ—पूर्ववृत्तात् अल्पास्थिरफलकेवलकर्माधि-गमादनन्तरम्, अतः—तथा कर्मणः अधिगतत्वादेव हेतोः; ब्रह्मजिज्ञासा—अनन्तस्थिर-फलब्रह्मविचारः, (कर्तव्या—कर्तव्यः।)

> विचारात्कर्मणां स्वल्पं फलं ज्ञात्वा मुमुक्षुणा।
> कर्तव्या ब्रह्मजिज्ञासा फलस्यानन्त्यमिच्छता॥ (ब्र. प, मा.-१)

[ वेदान्तानां ब्रह्मणि अप्रमाणत्वाशङ्का ]

[1]तत्र[1] पूर्वपक्षवादी मन्यते—वृद्धव्यवहारादन्यत्र शब्दस्य बोधकत्वशक्त्यवधारणासम्भवात्, [2]व्यवहारस्य च[2] [3]कार्यबुद्धिपूर्वकत्वेन[3] कार्यार्थे एव शब्दस्य प्रामाण्यमिति, [4]कार्यरूप[4] एव वेदार्थः। अतः न वेदान्ताः परिनिष्पन्ने [5]परे[5] ब्रह्मणि प्रमाणभावम् अनुभवितुमर्हन्ति ॥

[ सिद्धेऽर्थे शब्दस्य व्युत्पत्तिरित्यंशे भाट्टोक्तोदाहरणनिरासः ]

[6]न च[6] पुत्रजन्मादिसिद्धवस्तुविषयवाक्येषु—हर्षहेतूनां कालत्रयवर्तिनाम् अर्थानामानन्त्यात्,[7] सुलग्न[7]-सुखप्रसवादिहर्षहेत्वर्थान्तरोपनिपातसंभावनया च, प्रियार्थप्रतिपत्तिनिमित्तमुख[8]विकासा[8]दिलिङ्गेन अर्थविशेषबुद्धिहेतुत्वनिश्चयः ॥

---

तत्र—प्रपञ्चसत्यत्वे स्थिते सति (श्रु. प्र)। तत्र इत्यस्य अधिकरणान्तस्थेन 'स्थितम्' इति पदेनाऽन्वयः। प्रपञ्चसत्यत्वे स्थिते सति, मृषावाद्युक्ताधिकरणशरीरायोगात् एवमधिकरणशरीरं स्थितमित्यर्थः। (टिप्पणी-वी.रा) पूर्वपक्षवादी—प्राभाकरः, चोदनालक्षण एवार्थः वेदप्रतिपाद्यः। चोदना च क्रियायां प्रवर्तकं वचनमिति जैमिनिमतीयो वा। वृद्धः—व्युत्पन्नः, प्रयोज्यः, प्रयोजकश्च। तयोः व्यवहारः—वाचिकः, कायिकश्च। कार्यरूप एवेति। वेदस्य शब्दात्मकत्वात्, शब्दस्य च व्युत्पत्त्यपेक्षत्वात् इति भावः। अतः—वेदार्थस्य कार्यरूपत्वात्। न . . . अर्हन्ति—प्रामाण्यसंभावना च नास्ति; अयोग्यत्वात्। न हि प्रवृत्त्यभावे सति तस्य [वेदान्तवाक्यस्य] बोधकत्वं ज्ञायते इति (श्रु. प्र) ॥

न चेति। पुत्र . . . वाक्येषु प्रियार्थ . . . लिङ्गेन न च अर्थविशेषबुद्धिहेतुत्वनिश्चयः इत्यन्वयः। न चेत्युक्तार्थे हेतुद्वयम्—हर्षहेतूनाम् . . . आनन्त्यात् इति, सुलग्न . . . संभावनया च इति। अर्थानाम्—धनलाभादिरूपाणाम्। 'इदं वाक्यम्—पुत्रजननरूपार्थबुद्धिहेतुः; प्रियार्थप्रतिपत्तिहेतुत्वे सति एतदन्याहेतुत्वात्। इदं वाक्यम्—प्रियार्थप्रतिपत्तिहेतुः; स्वश्रवणानन्तरभाविमुखविकासकत्वात्' [इति द्वे अनुमाने

---

[1] अत्र—वा.
[2] व्यवहारस्य—इ.
[3] कार्यार्थबुद्धिपरत्वेन—च. अ.
[4] कार्यस्वरूप—इ
[5] परस्मिन्—वा.
[6] इति न च—इ.
[7] सुलग्नजन्म—आ, इ, वा.
[8] विकाश—वा.

[ सिद्धेऽर्थे शब्दस्य व्युत्पत्तिरित्यंशे नैयायिकोक्तोदाहरणव्युदासः ]

नाऽपि [1]व्युत्पन्नेतरपद[1]विभक्त्यर्थस्य पदान्तरार्थ[2]निश्चयेन[2], प्रकृत्यर्थनिश्चयेन वा शब्दस्य सिद्धवस्तुनि अभिधानशक्तिनिश्चयः ; ज्ञातकार्याभिधायिपदसमुदायस्य तदंश-विशेषनिश्चयरूपत्वात् तस्य ॥

[ सिद्धार्थव्युत्पत्तिविषये अद्वैरयुक्तोदाहरणनिरासः ]

न च सर्पाद्भीतस्य 'नाऽयं सर्पः, रज्जुरेषा' इति शब्दश्रवणसमनन्तरं भय-निवृत्तिदर्शनेन सर्पाभावबुद्धिहेतुत्वनिश्चयः ; अत्राऽपि 'निश्चेष्टम्, निर्विषम्, अचेतन-मिदं वस्तु' इत्याद्यर्थबोधेषु बहुषु सत्सु विशेषनिश्चयायोगात् ॥

---

आद्ये] अनन्तरं च वाक्यानि पक्षः, अर्थविशेषबुद्धिहेतुत्वनिश्चयाभावः साध्यः, आनन्त्यात्, संभावनया चेति हेतू (भा. द)। व्युत्पत्तिर्नाम शब्दस्य अर्थविशेषैः सह सम्बन्धग्रहणम्। न तु अर्थमात्रेणेति, एवं दूषणम् उक्तम् (श्रु. प्र) ॥

[ व्युत्पन्नेत्यादि। व्युत्पन्नौ—गृहीतसङ्गतिकौ, इतरपद-विभक्त्योः अर्थौ येन, तस्येत्यर्थः।] **पदान्तरार्थनिश्चयेन**—पदान्तरार्थनिश्चयदर्शनेन (भा. प्र)। उदाहरणम्—'कः कूजती'त्यस्य 'पिकः कूजती'त्युक्ते व्युत्पन्नकूजतिशब्दार्थेन व्युत्पित्सुना पिकशब्दार्थो ज्ञायते (श्रु. प्र)। **प्रकृत्यर्थनिश्चयेन**—प्रकृत्यर्थनिश्चयदर्शनेन (भा. प्र)। उदाहरणम्—'काष्ठैः पचति' इत्युक्ते व्युत्पन्नतृतीयार्थेन व्युत्पित्सुना काष्ठादिप्रकृत्यर्थः ज्ञायते (श्रु. प्र)। [**सिद्ध-वस्तुनि**—पिक-काष्ठादौ। नापि अभिधानशक्तिनिश्चयः इत्यन्वयः।] ज्ञातेत्यादि। इदानीं श्रुते अस्मिन् वाक्ये पूर्वं कार्यपरतया व्युत्पन्नवाक्यस्थकतिपयपददर्शनात् अयमपि पदसमु-दायः कार्याभिधायी इति ज्ञायते इत्यभिप्रायः। **तदंशविशेषः**—कार्यांशविशेषः। कार्यं हि अनेककारकविशिष्टम् (श्रु. प्र)। **तस्य**—पदान्तरार्थनिश्चयस्य, प्रकृत्यर्थनिश्चयस्य च। तस्य कार्यस्य विशेषणांशनिश्चयरूपत्वात् इत्यर्थः (श्रु. प्र) ॥

[**न चेति**। भीतस्य भयनिवृत्तिदर्शनेन लिङ्गेन 'नायं सर्पः' इत्यादिशब्दश्रवणसमन-न्तरकालिकेन इदं वाक्यं सर्पाभावबुद्धिहेतुः इत्येवं निश्चयः नैव शक्यः इति अन्वितार्थः। तत्र हेतुः 'अत्राऽपि' इत्यादि ॥]

---

[1] व्युत्पन्नेतर—ट.

[2] निश्चयेन वा—आ, वा.

[पदानाम् अन्यान्वितस्वार्थमात्रबोधकत्वमित्येतन्निरासः]

कार्यबुद्धि-प्रवृत्तिव्याप्तिबलेन शब्दस्य प्रवर्तकार्थावबोधित्वम् [1]उपगतम्[1] इति, सर्वपदानां कार्यपरत्वेन, सर्वैः पदैः कार्यस्यैव विशिष्टस्य प्रतिपादनात्, [2]न अन्यान्वित[2]-स्वार्थमात्रे पदशक्तिनिश्चयः ॥

[ इष्टसाधनत्वं प्रवर्तकोऽर्थः इति मतनिरासः ]

इष्टसाधनताबुद्धिस्तु [3]कार्यबुद्धि[3]द्वारेण प्रवृत्तिहेतुः, न स्वरूपेण; अतीतानागत-[4]वर्तमानेष्टो[4]पायबुद्धिषु प्रवृत्त्यनुपलब्धेः। इष्टोपायो हि 'मत्प्रयत्नादृते न सिध्यति, अतः मत्कृतिसाध्यः' इति बुद्धिः यावत् न जायते, तावत् न [5]प्रवर्तते[5] ॥

---

कार्येत्यादि। सर्वशब्दानामर्थः अनुयायी वक्तव्यः। अन्यान्वितस्वार्थाभिधायित्वं पदानामनुयायि; न तु कार्यान्वितस्वार्थाभिधायित्वम्। स्वस्य स्वान्वितत्वाभावेन लिङादिषु व्यभिचारात्। अन्यान्वितत्वं च सिद्धवस्तुनोऽपि स्यादिति कार्यरूपार्थे एव व्युत्पत्तिरिति निर्बन्धः अनुपपन्नः इत्याशयः अत्र निराक्रियते।

शब्दप्रयोगानन्तरं प्रवृत्तिदर्शनात्, शब्दस्य प्रवर्तकार्थावबोधकत्वात्, कार्यबुद्धेः प्रवृत्तेश्च व्याप्तिबलेन प्रवर्तकस्य कार्यरूपत्वात्, सर्वैः पदैः कार्यमेव विशिष्टं प्रतिपाद्यते। तस्मात् न अन्यान्वितस्वार्थमात्रे पदशक्तिनिश्चयः इत्याशयः (श्रु. प्र) ॥

इष्टेति। कार्यमेव प्रवर्तकं चेत्—प्रवर्तकस्य शब्दार्थत्वात्, सर्वशब्दानां कार्यपरत्वं स्यात्। इष्टसाधनताबुद्धेः प्रवर्तकत्वात्, नेदं युक्तमिति भाट्टानाम् आशङ्कायाः परिहारोऽयम्। कार्यबुद्धिः प्रवृत्तिव्याप्या। 'मयैव अद्य साधयितुं शक्यम्' इति बुद्धिः कार्यबुद्धिः। न तस्याः प्रवृत्तिव्यभिचारः। निर्धनस्य हि यागादिषु नैवंविधा प्रतिपत्तिः (श्रु. प्र) ॥

---

[1] अवगतम्—अ.
[2] कार्यान्वित—वा.
[3] कार्य—ड.
[4] वर्तमानानेकेष्टो—आ.
[5] प्रवृत्तिरेव—ड.

[ कार्यार्थस्यैव शब्दवाच्यतापूर्वपक्षनिगमनम् ]

अतः कार्यबुद्धिरेव प्रवृत्तिहेतुः इति, प्रवर्तकस्यैव शब्द[1]वाच्यतया[1] कार्यस्यै वेदवेद्यत्वात् , परिनिष्पन्नरूपब्रह्मप्राप्तिलक्षणानन्तस्थिरफला[2]प्रतिपत्तेः[2],

'अक्षय्यꣳह वै चातुर्मास्ययाजिनः सुकृतं भवति' (आप. श्रौ. सू. 2-1-1)

इत्यादिभिः कर्मणामेव [3]स्थिरफलत्व[3]प्रतिपादनाच्च कर्मफलाल्पास्थिरत्व-ब्रह्मज्ञान-फलानन्तस्थिरत्वज्ञानहेतुकः ब्रह्मविचारारम्भः न युक्तः—इति ॥

— सिद्धान्तप्रतिपादनारम्भः —

[ तत्र कार्ये एव शब्दव्युत्पत्तिरित्यत्र प्रामाणिकासंमतिः ]

अत्राऽभिधीयते—निखिललोकविदितशब्दार्थसम्बन्धावधारणप्रकारम् अपनुद्य, सर्वशब्दानाम् '[4]अलौकिकै कार्था[4]'र्थबोधित्वावधारणं प्रामाणिकाः न बहुमन्यते ॥

---

अत इत्यादि । 'मीमांसापूर्वभागज्ञातस्य कर्मणः अल्पास्थिरफलत्वात्, उपरितनभागावसेयस्य ब्रह्मणः अनन्ताक्षयफलत्वाच्च' इत्युक्तम् । शारीरकविचारस्य अधिकारिसिद्धौ खलु आरम्भणीयता । अधिकारिवैशिष्ट्यं तु कर्मविशेष्यकाल्पास्थिरफलत्वप्रकारकनिर्णयविशिष्ट-ब्रह्मविशेष्यकानन्तस्थिरफलत्वप्रकारकापातप्रतीतिमत्वमिति, तेन लभ्यते । तच्च असिद्धम्; कार्यानन्विते सिद्धार्थे ब्रह्मणि व्युत्पत्तिग्रहासम्भवात् , वेदान्तानां ब्रह्मणि तात्पर्यग्रहासम्भवेन ब्रह्मविषयकानन्तस्थिरफलापातप्रतीतिमत्त्वरूपविशेष्यांशासिद्धेः, उपासनविधिशेषभूतमन्त्रार्थवादादिभिरिव 'अक्षय्यं ह वै' इत्यादिभिरपि अनन्तस्थिरफलकर्मापातप्रतीतिरिति, विशेषणांशासिद्धश्चेति भावः (दर्शनोदयाशयः) ॥

अत्र —अस्मिन् पूर्वपक्षे । अभिधीयते —सूत्रकारैः परिहारोऽभिधीयते । निखिललोकेति । अन्यथावदता भवताऽपि वक्ष्यमाणप्रकारेणैव शब्दव्युत्पत्तिः कृता इति भावः । [अपनुद्य—दूरीकृत्य, विहाय वा । अलौकिकः एकोऽर्थः —यागादिवैदिककर्मसाध्यम् अपूर्वाख्यं सर्वलोकासंमतम् कार्यात्मकं वा ।] प्रामाणिकाः—प्रमाणेन अर्थं स्वीकुर्वन्तः (श्रु. प्र)॥

---

[1] वाचितया—वा. वाच्यत्वात्—द.  [2] पातप्रतिपत्तेः—वा.

[3] स्थिरत्व—वा. फलानां तत्स्थिरत्व—थ.  [4] अलौकिकार्था—ड.

[ बुद्धिपूर्वकव्युत्पत्त्या सिद्धेऽर्थे शब्दशक्तिग्रहः ]

एवं किल ! बालाः शब्दार्थसम्बन्धम् अवधारयन्ति—[1]माता-पितृ[1]प्रभृतिभिः अम्बा-तात-मातुलादीन्, शशि-पशु-नर-मृग-पक्षि-सर्पादींश्च 'एनम् अवेहि, इमं च अवधारय' इत्यभिप्रायेण [2]अङ्गुल्या[2] निर्दिश्य निर्दिश्य तैस्तैः शब्दैः तेषु तेष्वर्थेषु बहुशः शिक्षिताः, शनैश्शनैः [3]तैस्तैरेव शब्दैः[3] तेषु तेष्वर्थेषु [4]स्वात्मनां[4] बुद्ध्युत्पत्तिं दृष्ट्वा, शब्दार्थयोः सम्बन्धान्तरादर्शनात्, संकेतयितृपुरुषाज्ञानाच्च तेष्वर्थेषु तेषां शब्दानां प्रयोगः बोधकत्वनिबन्धनः—इति निश्चिन्वन्ति ।

पुनश्च व्युत्पन्नेतरशब्देषु '[5]अस्य शब्दस्य[5] अयम् अर्थः' इति पूर्ववृद्धैः

---

मातापितृप्रभृतिभिरिति । अयं भावः—यदा स्वयमेव बालः व्युत्पत्तिक्षमो भवति, तदानीमपि एनं वृद्धैः उपाध्यायादिभिः व्युत्पादयितुं श्रद्दधानाः मातापित्रादयः, स्वयं व्युत्पत्त्यक्षमदशायां न हि उपेक्षन्ते । किन्तु अक्षरशिक्षाद्युपयोगिनीः शिक्षाः प्रथमत एव स्वबुद्धिपूर्वकं कुर्वन्तीति । अम्बेति । अम्बा-तातप्रभृतिः सप्रतियोगिकः शब्दगणः, शशि-पशुप्रभृतिः अप्रतियोगिकः इति विभागः । असम्बन्धिशब्दव्युत्पत्तेः पूर्वमेव, अम्बा-तातादिशब्दव्युत्पत्तिः दृश्यते । सा च त्वदभिमतशब्दार्थसम्बन्धग्रहणे नोपपद्यते । . . . अतः बुद्धिपूर्विकैव प्रथमव्युत्पत्तिरिति (श्रु. प्र) । एनम्—बोधकं शब्दम् । इमम्—बोध्यमर्थम् । बहुशः—यावत् अङ्गुलिनिर्देश-शब्दप्रयोगसाहचर्यदर्शनजनितवासनाभूयस्त्वोदयेन स्वयमेव तत्तच्छब्दान् प्रयोक्तुम्, अर्थदर्शनमात्रेण शब्दं स्मर्तुम्, शब्दमात्रश्रवणेन अर्थं स्मर्तुं च क्षमा भवन्ति तावत् । शिक्षिताः—तैस्तैः शब्दैः तेषु तेष्वर्थेषु उत्पादितज्ञानाः । [सम्बन्धान्तरम्—जन्यजनकभावादि, व्याप्यव्यापकभावादि च । बोधकत्वनिबन्धनः—बोध्य-बोधकभावात्मकसम्बन्धाधीनः ।]

अस्य शब्दस्य अयमर्थः इति । अनेन न अन्विताभिधानभङ्गप्रसङ्गः ; प्रातिस्विकव्युत्पत्तेः समुदायज्ञानार्थत्वात् । न हि काव्यादिषु वाक्यार्थज्ञानोपयोगित्वेन संपाद्यमानं

---

[1] मातृ-पितृ–ध.

[2] अङ्गुल्यादिभिः–घ.

[3] तैस्तैः शब्दैरेव–वा.

[4] स्वात्मना–वा.

[5] अस्य–थ.

[1]शिक्षिताः[1] सर्वशब्दानामर्थमवगम्य, परप्रत्यायनाय तत्तदर्थावबोधि वाक्यजातं प्रयुञ्जते ॥

[ यादृच्छिकया व्युत्पत्त्याऽपि सिद्धेऽर्थे शब्दशक्तिग्रहः ]

प्रकारान्तरेणाऽपि शब्दार्थसम्बन्धावधारणं [2]सुशकम्[2] ; केनचित् पुरुषेण हस्तचेष्टादिना 'पिता ते सुखमास्ते इति देवदत्ताय ज्ञापय' इति प्रेषितः कश्चित् तज्ज्ञापने प्रवृत्तः, 'पिता ते सुखमास्ते' इति शब्दं प्रयुंक्ते । पार्श्वस्थः अन्यः व्युत्पित्सुः मूकवत् चेष्टाविशेषज्ञः तज्ज्ञापने प्रवृत्तमिमं ज्ञात्वा [3]अनुगतः, तज्ज्ञापनाय[3] प्रयुक्तम् इमं शब्दं श्रुत्वा 'अयं शब्दः तदर्थबुद्धिहेतुः' इति निश्चिनोति इति, 'कार्यार्थे एव व्युत्पत्तिः' इति निर्बन्धः निर्निबन्धनः ।

अतः – वेदान्ताः परिनिष्पन्नं परं ब्रह्म, तदुपासनं च अपरिमितफलं बोधयन्ति-इति, तन्निर्णयफलः ब्रह्मविचारः कर्तव्यः ॥

---

पदार्थज्ञानं वाक्यार्थज्ञानविरोधि । . . . एवं तैस्तैः पदैः परस्परान्वितस्वार्थाभिधानव्युत्पत्तेः, प्रतिपदम् अर्थव्युत्पत्तिः न विरोधिनी ; अपि तु उपयुक्तैव । शब्देन अन्वयपर्यन्ताभिधानं हि अन्विताभिधानम् ॥

प्रकारान्तरेणाऽपीति । एवं बुद्धिपूर्वकव्युत्पत्त्या शब्दानां सिद्धवस्तुपरत्वमुक्तम् । अत्र तु यादृच्छिकव्युत्पत्तावपि सिद्धार्थेऽपि व्युत्पत्तिः अस्तीत्युच्यते । मूकवदिति । शब्द-निरपेक्षं तत्तदर्थज्ञानं चेष्टादिना संभवति इत्यर्थः ।

अत इति । एवं सिद्धवस्तुनि शब्दव्युत्पत्त्युपपत्त्युपपादनेन वेदान्तानां ब्रह्मपरत्वमुपपन्नमिति भावः ॥

---

[1] पूर्ववत् शिक्षिताः–आ.                    [2] सुशकम्–द.

[3] अनुगततत्तज्ज्ञापनाय–इ.

[ वेदस्य कार्यार्थत्वेऽपि ब्रह्मविचारारम्भसमर्थनम् ]

कार्यार्थत्वेऽपि वेदस्य ब्रह्मविचारः कर्तव्य एव ।

कथम् ?

'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः'

(बृ. उ. 4-4-5, 6-5-6)

'सोऽन्वेष्टव्यः स विजिज्ञासितव्यः' (छां. उ. 8-7-1)

'विज्ञाय प्रज्ञां कुर्वीत' (बृ. उ. 6-4-21)

'दहरोऽस्मिन्नन्तर आकाशः, तस्मिन् यदन्तस्तदन्वेष्टव्यम्, तद्वाव विजिज्ञासितव्यम्' (छां. उ. 8-1-1)

'तत्राऽपि दहं गगनं विशोकस्तस्मिन्यदन्तस्तदुपासितव्यम्' (तै. ना. उ. 10-23)
इत्यादिभिः प्रतिपन्नोपासनविषयकार्याधिकृतफलत्वेन,

'ब्रह्मविदाप्नोति परम्' (तै. उ. आन. 1-1)

---

कार्यार्थत्वेऽपीति। वेदान्तानां कार्यार्थपरत्वम् अभ्युपगम्य, ब्रह्मविचारस्य कर्तव्यता अत्र उच्यते । . . . अनन्तस्थिरफलापातप्रतीतेः सिषाधयिषितत्वात् फलत्वेन तात्पर्यकथनम् अलोचितमिति फलतया सिद्धिः अत्र उच्यते । अनेकवाक्योपादानम् उपासने तात्पर्यातिशयज्ञापनार्थम्, उपसर्गविशेष-सन्प्रत्यययोगाऽयोगेऽपि अर्थभेदो नास्तीति ज्ञापनार्थं च (श्रु. प्र) ।

[प्रतिपन्नम्—पूर्वमज्ञातं सत्, एतैः वाक्यैः ज्ञातम् ।] उपासनविषयेत्यादि । विषयः—अपूर्वकार्यं विशिंषन् भावार्थः [यागादिः] (श्रु. प्र) ।

'विशब्दो हि विशेषार्थः सिनोतेर्बन्ध उच्यते । विशेषेण सिनोतीति विषयोऽतो नियामकः ॥' इत्यभियुक्तोक्तिः (भा. प्र) । यस्य कार्यस्य उपासनं विषयः, तस्मिन् कार्ये अधिकृतस्य पुरुषस्य फलत्वेन ब्रह्मप्राप्तिः श्रूयते इत्यर्थः (श्रु. दी) । उपासनं धात्वर्थः, तद्विषयकं कार्यं नियोगः विध्यर्थः, तदधिकृतः नियोज्यः पुरुषः, तस्मै नियोगेन अनुगृहीतं फलं

इत्यादिभिः ब्रह्मप्राप्तिः श्रूयते इति, ब्रह्मस्वरूप-तद्विशेषणानां दुःखासम्भिन्न[1]देशविशेष[1]-रूपस्वर्गादिवत्, रात्रिसत्र[2]प्रतिष्ठादिवत्[2], अपगोरण-शतयातनासाध्य-साधनभाववच्च कार्योपयोगितयैव [3]सिद्धेः[3] ॥

[ कार्यत्वस्य दुर्निरूपतया कार्ये व्युत्पत्तिः न सिध्यति ]

'गाम् आनय' इत्यादिष्वपि वाक्येषु न कार्यार्थे व्युत्पत्तिः; भवदभिमत-[4]कार्यस्य[4] दुर्निरूपत्वात् ।

---

ब्रह्मप्राप्तिरिति (भा. द) । तद्विशेषणानामिति ! विशेषणानि—गुणाः, विभूतयश्च । दुःखासंभिन्नेति । [दुःखासंभिन्नत्वम्—दुःखामिश्रत्वम् ॥

'यन्न दुःखेन संभिन्नं न च ग्रस्तमनन्तरम् ।

अभिलाषोपनीतञ्च तत्सुखं स्वःपदास्पदम् ॥ (गा. पु. 108-44) ]

विधिवाक्योक्तस्य फलस्य अर्थवादोक्तविशेषणे तात्पर्यमस्तीति ज्ञापनार्थम् । 'यस्मिन् नोष्णं न शीतं नाऽरतिः' इति श्रुतिः । स्वर्गाख्यफलं विधिगतम् । विशेषणमन्यत्र । रात्रिसत्रे-त्यादि । 'प्रतितिष्ठन्ति ह वा य एता रात्रीरुपयन्ति' इति श्रुतिः । 'प्रतिष्ठाकामः उपेयात्' इति वचनाभावेऽपि अर्थवादोक्तफले तात्पर्यम् अङ्गीकर्तव्यमित्यर्थः । रात्रिसत्रन्यायः—क्रतौ फलार्थवादम् अङ्गवत् कार्ष्णाजिनिः (पू. मी. सू. 4-3-17) । अपगोरणेत्यादि । 'तस्माद्ब्राह्मणाय नापगुरेत . . . योऽपगुरुते, तं शतेन यातयात्' (तै. सं. 2-6-10-1) इति श्रुतिः (श्रु. प्र) । [शंयौ च सर्वपरिदानात् (पू. मी. सू. 3-4-23)] अपगोरणम्—वधोद्यमः । शतयातना—नरकविशेषः (भा. प्र) । अनेन मोक्षोपायविरोधिफलेऽपि तात्पर्यं सिद्धम् इत्यभिप्रायः । कार्य . . . सिद्धेः इति अनुयायिहेतुः उक्तः । उपासनविषय-कार्योपयोगित्वात्, फलभूतब्रह्मस्वरूपे, तद्विशेषणगुणादौ, विधिविरोधिनि फले, संसारहेयत्वादौ च विवक्षा कार्येत्यर्थः ॥

कार्यार्थे—प्राधान्येन त्वदभिमते कृत्युद्देश्यलक्षणकार्ये । दुर्निरूपत्वादिति । स्वेद-श्रमादावपि कृतिसाध्यत्वात्, तद्व्यावृत्त्यर्थं क्रियाकार्येऽपि उद्देश्यत्वम् अङ्गीकार्यम् । त्वदुक्तो-द्देश्यत्वस्य दुर्निरूपतया तल्लक्षणकार्यस्य दुर्निरूपत्वात् इत्यर्थः (श्रु. प्र) ॥

---

[1] सुखविशेष—वा.　　[2] प्रतिष्ठावत्—पा, प्रतिष्ठ

[3] सिद्धिः—द.　　[4] कार्यत्वस्य—द.

कृतिभावभावि कृत्युद्देश्यं हि भवतः कार्यम् ।

[1]कृत्युद्देश्यत्वं च[1] कृतिकर्मत्वम् । कृतिकर्मत्वं च कृत्या प्राप्तुम् इष्टतमत्वम् । इष्टतमं च सुखम्, वर्तमान[2]दुःखस्य तन्निवृत्तिर्वा[2] । तत्र इष्ट[3]सुखादिना[3] पुरुषेण स्वप्रयत्नादृते यदि तदसिद्धिः प्रतीता, ततः प्रयत्नेच्छुः प्रवर्तते पुरुषः इति, न क्वचिदपि इच्छाविषयस्य कृत्यधीनसिद्धित्वमन्तरेण, कृत्युद्देश्यत्वं नाम किञ्चिदपि उपलभ्यते ।

इच्छाविषयस्य प्रेरकत्वं च प्रयत्नाधीनसिद्धित्वमेव ; तत एव प्रवृत्तेः ।

न च पुरुषानुकूलत्वं कृत्युद्देश्यत्वम् ; यतः सुखमेव पुरुषानुकूलम् ।

---

कृतिभावभावि—कृतिः आन्तरप्रयत्नः, तत्सद्भावानन्तरभावि । कृत्युद्देश्यम् इति, कृतिसाध्यत्वं भावार्थादिष्वप्यस्तीति तद्व्यावृत्त्यर्थम् ।

कृत्युद्देश्यत्वम्—कृतिप्रधानत्वम् । कार्यस्य कृतिसाध्यत्वम्, इष्टत्वम्, कृत्युद्देश्यत्वम् इति त्रयमपि तन्मते अभ्युपगतम् । इष्टत्व-कृतिसाध्यत्वे फल-भावार्थसाधारणे । कृतिप्रधानत्वं हि आकारद्वयविलक्षणं फलभावार्थव्यावर्तकं वर्ण्यते। 'कृतिसाध्यं प्रधानं यत्, तत् कार्यमभिधीयते' (प्र. प)। तत्र तृतीयाकारतयाभिमतं कृत्युद्देश्यत्वं कृतिसाध्यत्वेष्टत्वाकारयोः अन्यतराकारे पर्यवस्यति इत्यभिप्रायः। तत्रेत्यादि । तदपि इष्टस्य स्वप्रयत्नसाध्यत्वमेव इत्यर्थः । सुखादिनेति आदिशब्देन दुःखनिवृत्तिः उच्यते । स्वप्रयत्नादृते इत्यादि । कृतिसाध्यत्वातिरेकिकृतिकर्मत्वं नाम इष्टतमत्वे पर्यवस्यतीति भावः । प्रयत्नेच्छुः—चिकीर्षुः । प्रवर्तते—आन्तरप्रयत्नमिच्छन् सः तमुत्पादयति ।

इच्छाविषयस्येति । इष्टतमस्यैव रूपद्वयमस्ति—इच्छाविषयत्वं, प्रेरकत्वं चेति । तत्र [द्वितीयं रूपम्] प्रेरकत्वं कृत्युद्देश्यत्वं [भवतु] इत्यत्रोत्तरमिदम् ।

अनुकूलत्वम्—स्वत इष्टत्वम् ; न तु इष्टान्तरहेतुतया, अनिष्टनिवृत्तिरूपतया वा इष्टत्वम् ।

---

[1] कृत्युद्देश्यत्वं—वा.

[2] दुःखतन्निवृत्तिर्वा—अ.

[3] सुखार्थिना

न च दुःखनिवृत्तेः पुरुषानुकूलत्वम्; 'पुरुषानुकूलं सुखम्, तत्प्रतिकूलं दुःखम्' [1]इति हि[1] सुखदुःखयोः स्वरूपविवेकः। दुःखस्य प्रतिकूलतया तन्निवृत्तिः इष्टा भवति, न अनुकूलतया। अनुकूलप्रतिकूलान्वय[2]विरहे[2] स्वरूपेण अवस्थितिर्हि दुःखनिवृत्तिः। अतः सुखव्यतिरिक्तस्य क्रियादेः अनुकूलत्वं न सम्भवति। न सुखार्थतया तस्याप्यनुकूलत्वम्; दुःखात्मकत्वात् तस्य। [3]सुखार्थ[3]तयाऽपि '[4]तदुपादानेच्छा[4]'मात्रमेव भवति।

न च कृतिं प्रति शेषित्वं—कृत्युद्देश्यत्वम्; भवत्पक्षे शेषित्वस्य अनिरूपणात्।

न च परोद्देशप्रवृत्तकृतिव्याप्त्यर्हत्वं—'[5]शेषत्वम्[5]' इति, तत्प्रतिसम्बन्धी—शेषी इत्यवगम्यते; तथा सति कृतेः अशेषत्वेन तां प्रति '[6]तत्साध्यस्य[6]' शेषित्वाभावात्।

न च '[7]परोद्देश[7]'प्रवृत्त्यर्हतायाः '[8]शेषत्वेन[8]', परः शेषी – उद्देश्यत्वस्यैव '[9]निरूप्य[9]'-

---

एवं प्रतिकूलत्वम्—स्वतः अनिष्टत्वम्, न तु अनिष्टान्तरहेतुतया, इष्टनिवृत्तिरूपतया वा अनिष्टत्वम्। अतः दुःखनिवृत्तेः इष्टत्वम्; दुःखस्य प्रतिकूलत्वात् इत्यर्थः। स्वरूपेण अवस्थितिः सुखनिवृत्तिरूपा, दुःखनिवृत्तिरूपा च। क्रियादेः इति अपूर्वस्य अनुकूलत्वासम्भवे दृष्टान्ताभिप्रायेण। आदिशब्देन प्रयत्नः विवक्षितः। तस्य—क्रियादेः।

अनिरूपणात्—दुर्निरूपत्वात्।

परोद्देशेति। उत्पत्तिश्च प्रवृत्तिमद्व्यापारः। अतः प्रवृत्त्यर्हत्वम्—उत्पत्त्यर्हत्वम्। परोद्देशप्रवृत्त्यर्हतायाः शेषत्वरूपतया इत्यर्थः।

उद्देश्यत्वस्यैवेति। अयमर्थः—कृत्युद्देश्यत्वम्—कृतिशेषित्वम्। शेषित्वं च शेषप्रतिसम्बन्धित्वम्। शेषत्वम्-परोद्देशप्रवृत्त्यर्हत्वम् इत्युक्ते सति, उद्देश्यत्वं नाम उद्देश्यत्वं

---

[1] इति—वा.
[2] विरहेण—थ.
[3] सुखात्म—थ.
[4] तदुपादाने इच्छा—द.
[5] शेषित्वम्—द.
[6] तत्साध्यत्वस्य—वा.
[7] परोपदेश—इ.
[8] शेषित्वेन—द.
[9] अनिरूप्य—थ.

माणत्वात् , प्रधानस्याऽपि भृत्योद्देशप्रवृत्त्यर्हत्वदर्शनाच्च ।

प्रधानस्तु भृत्यपोषणेऽपि [1]स्वोद्देशेन[1] प्रवर्तते—इति चेत् ,

न ; भृत्योऽपि हि प्रधान[2]पोषणे[2] स्वोद्देशेनैव प्रवर्तते ।

कार्यस्वरूपस्यैव अनिरूपणात् , कार्यप्रतिसम्बन्धी शेषः, तत्प्रतिसम्बन्धी शेषी—इत्यपि असङ्गतम् ।

नाऽपि कृतिप्रयोजनत्वं कृत्युद्देश्यत्वम् ; पुरुषस्य कृत्यारम्भप्रयोजनमेव हि कृतिप्रयोजनम् । स च इच्छाविषयः ।

तस्मात् [3]इष्टत्वा[3]तिरेकिकृत्युद्देश्यस्यानिरूपणात् , कृतिसाध्यताकृतिप्रधानत्व[4]रूपं[4] कार्यं दुर्निरूपमेव ॥

---

इत्युक्तं भवति इति आत्माश्रयः ; उद्देश्यत्वनिरूपणोपयुक्तस्य शेषत्वनिरूपणस्य उद्देश्यनिरूपणसापेक्षत्वात् इति (श्रु. प्र) । भृत्योद्देशेति । [कृत्युद्देश्यत्वमित्यत्र] उद्देश्यशब्देन प्रयोजनभावाभिसन्धिः विवक्षितः ।

असङ्गतम् इति । कार्यस्वरूपे निरूप्यमाणे फलभावार्थविलक्षणाकारेण तन्निरूपणार्थं कार्यत्वं कृत्युद्देश्यत्वम् इत्युक्तम् । उद्देश्यत्वम्—शेषित्वम् , शेषित्वं च शेषप्रतिसम्बन्धित्वम् , शेषित्वं च कार्यप्रतिसम्बन्धित्वमित्युक्ते सति आत्माश्रयः स्यात् ; कार्यनिरूपणोपयुक्तशेषत्वनिरूपणस्य कार्यनिरूपणसापेक्षत्वात् इति ।

नाऽपि कृतीत्यादि । न हि कृतिर्नाम चेतयमाना काचित् प्रयोजनवती । तस्मात् कृतिप्रयोजनं नाम कृतिमत्पुरुषप्रयोजनम् इत्यर्थः । स चेति । तच्च इष्टत्वे पर्यवस्यतीत्यर्थः ।

कृतिप्रधानत्वशब्देन स्वेदादिव्यावृत्तिः । कृतिसाध्यताशब्देन आत्मव्यावृत्तिः । तस्य हि कृतिशेषत्वमस्ति । दुर्निरूपमेवेति । विशिष्टस्य लक्षणत्वात् , तत्र विशेष्ये दुर्निरूपे सति, विशिष्टमेव असिद्धमित्यर्थः । एवं तृतीयाकाररूपं प्रयोजनं दूषितम् ॥

---

[1] स्वोद्देशेनैव—ई.
[2] पोषे—वा.
[3] इष्टता—वा.
[4] स्वरूपं—थ. स्वरूप—न.

[ अपूर्वे स्वत इष्टत्व-कृतिसाध्यत्वरूपप्रयोजनस्वयोः निरासः ]

नियोगस्याऽपि साक्षा[1]दिपिविषय[1]भूतसुखदुःखनिवृत्तिभ्याम् अन्यत्वात्, तत्साधनतयैव इष्टत्वं, कृतिसाध्यत्वं च। अत एव हि तस्य क्रियातिरिक्तता। अन्यथा क्रियैव कार्यं स्यात्। स्वर्गकामपदसमभिव्याहारानुगुण्येन "लिङादिवाच्यं"[2] कार्यं—स्वर्गसाधनमेवेति, क्षणभङ्गिकर्मातिरेकि स्थिरं "स्वर्गसाधनम्"[3] अपूर्वमेव कार्यम् इति, स्वर्गसाधनतोल्लेखेनैव हि अपूर्वव्युत्पत्तिः।

अतः प्रथमम् अनन्यार्थतया प्रतिपन्नस्य कार्यस्य अनन्यार्थत्वनिर्वहणाय अपूर्वमेव पश्चात् स्वर्गसाधनं भवतीति उपहास्यम्; स्वर्गकामपदान्वितकार्याभिधायिपदेन

---

इषिः—इच्छा। नियोगस्याऽपि . . . अन्यत्वादिति। अत्र स्वत इष्टत्वम् —इच्छाविषयभूतार्थान्तरसाधनत्वविरहेण इष्टत्वं विवक्षितम्। तत् सुखस्य दुःखनिवृत्तेश्च समानम्। स्वत इष्टत्वं, तत्प्रयुक्तकृतिसाध्यत्वं च तयोरेव। तस्मात् द्वे अपि नियोगस्य न सिध्यतः इत्यर्थः। अन्यथा—साधनत्वेन सिद्ध्यनङ्गीकारे। क्रियैव—धात्वर्थ एव।

अतः—स्वर्गकामपदान्वयात्पूर्वं धात्वर्थमात्रस्यैव कार्यताप्रतिपत्तेः, तदन्वये तत्साधनतयैव प्रतिपत्तेश्च (श्रु. प्र)। प्रथमम् . . . भवतीति। अयमर्थः—यथा स्वप्राधान्यनिर्वहणाय अनुजीविनाम् अभिमतं प्रभुः प्रददाति, तद्वत् अपूर्वमपि स्वयं प्रधानतया प्रतिपन्नं स्वप्राधान्यनिर्वहणाय स्वं साधयतः पुरुषस्य स्वर्गं ददाति इति। यथा पञ्चिकायाम्—

आत्मसिद्ध्यनुकूलस्य नियोज्यस्य प्रसिद्धये।
कुर्वन् स्वर्गादिकमपि प्रधानं कार्यमेव नः॥ इति।

उपहास्यम्—समीपस्थैरपि हास्यम्। स्वर्गकामेत्यादि। स्वर्गकामपदान्वितलिङादिना

---

[1] दिच्छाविषय—वा.
[2] लिङादेर्वाच्यं—द.
[3] स्वर्गसाधनभूतम्—ई.

[1]प्रथममपि[1] अनन्यार्थत्वानभिधानात्, सुख-दुःखनिवृत्ति-तत्साधनेभ्यः अन्यस्य [2]अनन्यार्थस्य[2] कृतिसाध्यताप्रतीत्यनुपपत्तेश्च ॥

[ नियोगाख्यस्यापूर्वस्य सुखत्वरूपप्रयोजनत्वनिरासः ]

अपि च किमिदं [3]नियोगस्य[3] प्रयोजनत्वम् ?

सुखवत् नियोगस्याऽपि अनुकूलत्वमेव—इति चेत्,

किम् नियोगः सुखम् ? सुखमेव हि अनुकूलम् ।

सुखविशेषवत्, नियोगापरपर्यायं विलक्षणं सुखान्तरम्—इति चेत्,

किं तत्र प्रमाणम् ?—इति वक्तव्यम् ।

स्वानुभवश्चेत्,

न; विषयविशेषानुभवसुखवत्, 'नियोगानुभवसुखमिदम्' [4]इति भवताऽपि[4] न अनुभूयते ।

---

तत्साधनतयैवाऽभिधानात् 'प्रथमम् अनन्यार्थतया प्रतिपन्नम्' इति न वक्तुं युक्तम् इत्यर्थः (श्रु. प्र) ।

सुखेत्यादि । सुख-दुःखनिवृत्त्यन्यत्वात् स्वत इष्टतया कृतिसाध्यत्वम् अयुक्तम् । तत्साधनादन्यतया परम्परया इष्टत्वेन कृतिसाध्यत्वमपि अयुक्तम् इत्यर्थः ॥

किमिदमिति । किं[शब्दः] क्षेपे ।

नियोगापरपर्यायमिति । पर्यायशब्दबाहुल्यसम्भवात् अपरशब्दः । सुखान्तरमिति । यथा भौमसुखाद्विलक्षणं स्वर्गादिसुखं संभाव्यते, तथा ततोऽपि विलक्षणं सुखान्तरमिदम् इत्यर्थः ।

---

[1] प्रथमम्—थ.

[2] अनन्यार्थस्य कार्यस्य—द.

[3] प्रयोगस्य—थ.

[4] भवताऽपि—थ.

शास्त्रेण नियोगस्य पुरुषार्थतया प्रतिपादनात् [1]पश्चात्तु[1] भोक्ष्यते—इति चेत्,

किं तत् नियोगस्य [2]पुरुषार्थत्ववाचि[2] शास्त्रम् ?

न तावत् लौकिकं वाक्यम्; तस्य दुःखात्मकक्रियाविषयत्वात्। तेन [3]सुखादि[3]साधनतयैव कृतिसाध्यतामात्रप्रतिपादनात्।

नाऽपि वैदिकम्, तेनाऽपि [4]स्वर्गादि[4]साधनतयैव कार्यस्य प्रतिपादनात्।

नाऽपि नित्यनैमित्तिकशास्त्रम्; तस्याऽपि तदभिधायित्वं स्वर्गकामवाक्यस्था-पूर्वव्युत्पत्तिपूर्वकमिति, उक्त[5]रीत्या[5] तेनाऽपि सुखादि[6]साधन[6]कार्याभिधानम् अवर्ज नीयम्। नियतैहिकफलस्य कर्मणः अनुष्ठितस्य फलत्वेन तदानीमनुभूय-मानान्ना[7]द्यारोग[7]तादिव्यतिरेकेण नियोगरूपसुखानुभवानुपलब्धेश्च, 'नियोगः सुखम्' इत्यत्र न किंचन प्रमाणम् उपलभामहे।

अर्थवादादिष्वपि — स्वर्गादिसुखप्रकारकीर्तनवत्, नियोगरूपसुखप्रकारकीर्तनं भवताऽपि न दृष्टचरम्॥

[ लिङर्थनिष्कर्षः ]

अतः—विधिवाक्येष्वपि धात्वर्थस्य कर्तृव्यापारसाध्यतामात्रं शब्दानुशासन-

---

तस्य . . . प्रतिपादनात् इति। दुःखात्मकस्य सुखादिसाधनभूतधात्वर्थमात्रस्य कर्तव्यताप्रतिपादनात् इत्यर्थः (श्रु. प्र)।

नियतैहिकफलस्य— अप्रस्तुतप्रतिबन्धस्य [अनुत्पन्नप्रतिबन्धतया कर्मोत्पादकदेहे एव नियमेन अनुभूयमानफलस्य]। अनेन अन्त्येष्टिसापेक्षपरमापूर्वव्यावृत्तिः॥

अतः—उक्तप्रकारेण धात्वर्थातिरिक्त व्युत्पत्त्यभावात्, तथाविधस्य स्वतःपुरुषार्थ-

---

[1] पश्चात्—द.
[2] पुरुषार्थवादि—न.
[3] सुख—वा.
[4] स्वर्ग—वा.
[5] नीत्या—वा.
[6] साधनभूत—वा.
[7] घरोग-पा.

सिद्धमेव लिङादेः वाच्यम्—इति [1]अध्यवसीयते[1]। [2]धात्वर्थस्य च[2] यागादेः अग्न्यादिदेवतान्तर्यामिपरमपुरुषसमाराधनरूपता, समाराधितात् परमपुरुषात् फल-सिद्धिश्च—इति,

'फलमत उपपत्तेः' (ब्र. सू. 3-2-37)

इत्यत्र प्रतिपादयिष्यते।

अतः वेदान्ताः परिनिष्पन्नं [3]परं ब्रह्म[3] बोधयन्तीति, ब्रह्मोपासनफलानन्त्यं, स्थिरत्वं च सिद्धम्। चातुर्मास्यादिकर्मस्वपि 'केवलस्य कर्मणः[4] क्षयिफलत्वोपदेशात्, अक्षयफलश्रवणम्--

'वायुश्चान्तरिक्षं च; एतदमृतम्' (बृ. उ. 4-3-3)

इत्यादिवत् आपेक्षिकं मन्तव्यम्।

---

त्वाभावाच्च। कर्तृव्यापारः—प्रयत्नः। धात्वर्थस्य चेति। 'यज—देवपूजादौ' इति हि धातुः इति भावः।

अतः—सिद्धवस्तुनि बुद्धिपूर्वकं, यदृच्छया च आद्यव्युत्पत्तिसम्भवात्। अन्यथाऽपि विधिशेषतया सिद्धेश्च। क्षयिफलत्वेति 'तद्यथेहकर्मचितो लोकः क्षीयते' इत्यादिवाक्यम् अभिप्रेत्य। वायुश्चेति अक्षयफलश्रवणनिर्दाहः। न हि चातुर्मास्यादिवाक्येषु अक्षयफलश्रवणम् अर्थवादोक्तत्वात् त्यज्यते; अपि तु कर्मणाम् आवृत्तिविधानात, क्षयिफलत्वोपदेशाच्च। तस्मात् कर्मणां क्षयिफलत्वनिर्णयसिद्धिः। अतः, हेतौ [शास्त्रम् आरम्भणीयम्, विशिष्टाधिकारि-मत्वात्] विशेषणांशः सिद्धः (श्रु. प्र)।

---

[1] अवसीयते—न.
[2] धात्वर्थस्य—वा.
[3] ब्रह्म—वा. परब्रह्म—न.
[4] केवलकर्मणः—य, द.

अतः [1]केवलानां कर्मणाम्[1] अल्पास्थिरफलत्वात्, ब्रह्मज्ञानस्य च अनन्तस्थिर-[2]फलत्वात्[2] तन्निर्णयफलः ब्रह्मविचारारम्भः युक्तः इति स्थितम् ॥ १ ॥

॥ इति जिज्ञासाधिकरणम् ॥ १ ॥

---

स्थितम्—अविचाल्यतया सिद्धम् (भा. द)।

अस्य अधिकरणस्य अङ्गपञ्चकम्; यथाहुः—

'विषयः संशयश्चैव विचारो निर्णयस्तथा।
प्रयोजनेन सहितमेतत् स्यादङ्गपञ्चकम् ॥'

इति। 'ब्रह्ममीमांसा' विषयः। 'सा किम् आरम्भणीया, उत न?' इति संशयः। 'सिद्धवस्तुनि व्युत्पत्तिः नास्ति' इति विचारः [पूर्वपक्षः]। 'अस्ती'ति निश्चयः। 'आरम्भः' प्रयोजनम् इति।

'परीक्ष्य लोकान्' इत्यादिवाक्यं प्रथमसूत्रस्थन्यायसिद्धानुवादपूर्वकं गुरूपसदननियमविधिपरम्; 'गुरुमेवाऽभिगच्छेत्' इत्युक्तत्वात्। रागतः प्रवृत्तौ सत्याम्, अस्य सूत्रस्य वाक्यत्वं न घटते; उद्देश्योपादेयविभागवद्धि वाक्यम् (श्रु. प्र) ॥

[1] केवलकर्मणाम्—द.　　[2] फलत्वाच्च—ड, वा.

॥ इति जिज्ञासाधिकरणम् ॥

[ ब्रह्मणिः प्रतिपत्तिदौः स्थ्यनिरासपरम् ]

## जन्माद्यधिकरणम् ॥ १-१-२ ॥

[ अधिकरणार्थः — ब्रह्मणः सर्वकर्तृत्वम् ]

किं पुनस्तत् ब्रह्म, यत् जिज्ञास्य[1]मुच्यते ? इत्यत्राऽऽह[1]—

## * जन्माद्यस्य यतः ॥ १-१-२ ॥

---

**किं पुनरिति ।** शास्त्र-काण्ड-द्विकाध्याय-पाद-पेटिकाधिकरणरूपसम्बन्धिभेदेन सप्तविधासु सङ्गतिषु सङ्गत्यन्तराणां स्पष्टत्वात् अधिकरणसङ्गतिः [अनेनोक्ता]। शास्त्रसङ्गतिः—वेदार्थविचाररूपतया । काण्डसङ्गतिः—वेदान्तार्थविचाररूपत्वात् । द्विकसङ्गतिः—कारणविषयत्वात् । अध्यायसङ्गतिः—कारणविषयवाक्यतर्करूपत्वात् । पादसङ्गतिः—अयोगव्यवच्छेदविश्रान्तेः । पेटिकासङ्गतिः—शास्त्रारम्भार्थत्वात् । अतः इयम् अवान्तरसङ्गतिः । **जिज्ञास्यम्**—विचार्यम् । सकलेतरपुरुषार्थ-तत्साधनपरित्यागपूर्वकं प्राप्यत्वेन, उपेयत्वेन च यत् जिज्ञास्यमुक्तम् इत्यर्थः ।

---

**सूत्रम्**:—**अस्य**—विविधविचित्रभोग्यपूर्णस्य जगतः, **जन्मादि**—सृष्टि-स्थिति-लयादिरूपं कार्यजातम्, **यतः**—यस्मात् वस्तुनः प्रवर्तते. [तत्—सृष्टि-स्थिति-लयादिहेतुभूतं वस्तु] ब्रह्म—जिज्ञास्यतया पूर्वसूत्रोक्त ब्रह्मपदवाच्यम् ।

* अस्य जन्मस्थितिलयं जगतस्तु यतो भवेत् ।
सर्वज्ञात्सत्यसङ्कल्पात्तद्ब्रह्मेति जगौ श्रुतिः ॥ (अ. प. मा. २)

[1] मित्यत आह— .

[ सूत्रार्थवर्णनम् ]

जन्मादीति—सृष्टि-स्थिति-प्रलयम् । तद्गुणसंविज्ञानो बहुव्रीहिः[1] । अस्य-अचिन्त्यविविधविचित्ररचनस्य नियतदेशकालफलभोगब्रह्मादिस्तम्बपर्यन्तक्षेत्रज्ञमिश्रस्य जगतः । यतः—यस्मात् सर्वेश्वरात् निखिलहेयप्रत्यनीकस्वरूपात् सत्यसङ्कल्पात्

---

सृष्टीति । समाहारार्थे द्वन्द्वः, समुदायविवक्षायाम् । तद्गुणेति । तच्छब्देन विशेष्यम्, 'गुण'शब्देन विशेषणं च विवक्षितम् । 'सम्' इति एकीकारे । विशेषणं विशेष्यं च एककार्यान्वितत्वेन सह ज्ञापयति इत्यर्थः । समासस्थपदवाच्यस्याऽपि विशिष्ट-समुदायान्तर्गतत्वाकारेण हि अन्यपदार्थत्वं युज्यते ; स्वपदमात्रस्य तेनाऽकारेण तद्वाचकत्वा-भावात् । अचिन्त्येत्यादिविस्तरः सूत्रकारविवक्षितार्थकथनार्थः । तद्विवक्षा च श्रुति-विवक्षया । 'यतो वा इमानि भूतानि' इति श्रुतौ भूतशब्देन कार्यवर्गे अभिहितेऽपि, 'इमानि' इति पदम्, कार्यवर्गस्य धर्मिग्राहकप्रमाणसिद्धाकारविशेषपरम्, वैचित्र्यपरं च । श्रुतौ 'इमानि' इति बहुवचने सत्यपि, सौत्रम् 'अस्य' इत्येकवचनं, कृत्स्नस्य भुवनस्य एककार्यविशेषेण एककर्तृकत्वज्ञापनार्थम्, 'भूत'शब्दस्य देवादिचतुर्विधभूतमात्रपरत्वव्यावर्तनेन, भवनक्रिया-योगिकृत्स्नकार्यसमुदायात्मकजगद्विषयत्वज्ञापनार्थं च । अत एव हि भाष्ये जगतः इत्युक्तम् । अचिन्त्येत्यादिना अचिदंशवैचित्र्यमाह । अचिन्त्यत्वम्—जीवकर्तृकतया चिन्तयितुमशक्य-त्वम् । विविधत्वम् आकाशवाय्वादिभेदेन । विचित्रत्वम् प्रत्येकं तत्तद्व्यष्टिबाहुल्येन । अत्र रचना—संस्थानम् । सर्वेश्वरात् इति, न्यूनाधिकतत्त्वव्यवच्छेदार्थम् । निखिले-त्यादिना, कारणवाक्यशेषभूतशोधकवाक्यसिद्धं जिज्ञास्यत्वोपयोगिनं चिदचिद्व्यावर्तकाकारमाह । निखिलशब्देन अचिद्गतहेयाः षड्भावविकाराः, चिद्गतहेयाः क्लेशकर्मविपाकाशयाश्च विव-क्षिताः । प्रत्यनीकस्वरूपादिति । अद्वारकहेयसम्बन्धो व्युदस्तः, न तु सद्वारकः इत्यर्थः । सत्यसङ्कल्पादिति । स्वसङ्कल्पानुरूपं हेयसम्बन्धं, संश्रितेषु तद्वियोगं च कर्तुं समर्थः ।

---

[1] संविज्ञानबहुव्रीहिः—अः.

ज्ञानानन्दाद्यनन्तकल्याणगुणात् सर्वज्ञात् सर्वशक्तेः परमकारुणिकात् परस्मात् पुंसः, सृष्टि-स्थिति-प्रलयाः प्रवर्तन्ते, तत् ब्रह्म—इति सूत्रार्थः ॥

[ अधिकरणाङ्गभूतविषयप्रदर्शनम् ]

'भृगुर्वै वारुणिः। वरुणं पितरमुपससार। अधीहि भगवो ब्रह्म' (तै.उ.भृ. 1-1) इत्यारभ्य,

'यतो वा इमानि भूतानि जायन्ते। येन जातानि जीवन्ति। यत् प्रयन्त्यभिसंविशन्ति। तद्विजिज्ञासस्व। तद्ब्रह्म' (तै. उ. भृ. 1-2)

इति श्रूयते ॥

---

न च हेयं सर्वम् ईश्वरापेक्षया हेयम्। तत्सङ्कल्पनिव(र्व)र्त्यत्वेन तल्लीलारसावहत्वात् इति भावः। सत्यसङ्कल्पत्वं हेयप्रत्यनीकत्वोपपादकं कारणत्वजिज्ञास्यत्वोपयोगि च। ज्ञानेति धर्मिस्वरूपस्य जिज्ञास्यत्वोपयोगिनीं कल्याणतामाह। आनन्दत्वम्—स्वानुकूलत्वम्। आदिशब्देन सत्यत्वम् आनन्त्यं च विवक्षितम्। ज्ञानानन्देति भावप्रधाननिर्देशः। 'ज्ञानत्वानन्दत्वसत्यत्वानि न प्रादेशिकानि' इति अनन्तशब्दार्थः। कल्याणत्वम्—अन्येषामनुभवितॄणामपि अनुकूलत्वम्। ज्ञानत्वादयः कल्याणगुणाः यस्य, तस्मात् इत्यर्थः। धर्म-धर्मिणोः साधारणाकारः, ज्ञानत्वानन्दत्वादिः। सर्वज्ञादिति धर्मभूतज्ञानवत्तामाह। सर्वज्ञत्वं निमित्तत्वोपयोगि। सर्वशक्तित्वम् उपादानत्वोपयोगि। परमकारुणिकत्वम् जिज्ञास्यत्वकारणत्वोपयोगि। परस्मादिति उपायोपेययोः ऐक्यज्ञापनाय। पुंस इति देवताविशेषनिर्णयार्थम्। कारणवाक्येषु 'छागो वा मन्त्रवर्णात्' (पू. मी. सू. 3-8-31) इति सूत्रन्यायात् सद्ब्रह्मात्मादिसामान्यशब्दानां पुरुष-नारायणादिविशेषपर्यवसायित्वात्, सर्वश्रुतीनां नारायण एव पर्यवसानभूमिरेति, 'यतो वा इमानि' इत्यादिश्रुतेर्हृदयम्, इति सूत्रकारस्य भाव इति, भाष्यकाराभिप्रायः। सूत्रार्थ इति। अक्षरार्थः तात्पर्यार्थश्च इत्यर्थः (श्रु. प्र) ॥

'अधीहि भगवः' इति प्रश्नः निरतिशयबृहत्त्वाश्रयव्यक्तिविशेषजिज्ञासया। व्यक्तिविशेषस्य लक्षणमुच्यते 'यतो वा इमानि' इति। 'यतः, येन, यत्' इति यद्वृत्तयोगात् कारणत्वमनूद्यते। 'तद्ब्रह्म' इति कारणस्य ब्रह्मत्वं विधीयते। तेन कारणत्वस्य ब्रह्मलक्षणत्वं सिद्धं भवति। 'तद्विजिज्ञासस्व' इति विचारस्य, उपासनस्य वा न विधिः

[ अधिकरणाङ्गभूतः संशयः ]

तत्र संशयः—किम् अस्मात् वाक्यात्, ब्रह्म लक्षणतः प्रतिपत्तुं शक्यते, न वा ?—इति ॥

[ अधिकरणाङ्गभूतः पूर्वपक्षः ]

[ तत्र जन्मादीनां विशेषणतया लक्षणत्वानुपपत्तिः ]

किं प्राप्तम् ?

न शक्यमिति ।

---

विचारस्य रागप्राप्तत्वात्, उपासनात्मकज्ञानस्य 'ब्रह्मविदाप्नोति' इति प्राकरणिकवाक्यान्तर-सिद्धत्वात्, 'अधीहि भगवः' इति प्रश्नस्य तत्त्वपरत्वेन, उपायविषयत्वाभावाच्च । अतः उपदिश्यमानार्थे अवधानार्थं सन्देहनिवृत्त्यर्थं वा उक्तम् ॥

तत्र—तादृशे । पूर्वपक्षानुगुणेन विशेषणबहुत्वेन, सिद्धान्तानुगुणेन एकवचनान्त-ब्रह्मशब्दैक्येन च विशिष्टत्वं, संशयहेतुत्वेन अभिप्रेत्य तत्र इत्युक्तम् । संशय इति । ब्रह्म-मीमांसा किम् आरम्भणीया, उत अनारम्भणीया ? इति प्रथमविचारः, तदर्थं वेदान्ताः ब्रह्मणि प्रमाणम्, उत न ? इति द्वितीयविचारश्च चतुःसूत्रीसाधारणः ॥

एतदधिकरणासाधारणं संशयशरीरम्—'यतो वा इमानि' इत्यादिवाक्यं, ब्रह्म लक्षणतः प्रतिपादयितुं शक्नोति, उत न ? इति संशयः । तदर्थं संशय्यते—किं सृष्ट्यादीनां विशेषणत्वेन, उपलक्षणत्वेन च ब्रह्मलक्षणत्वं सम्भवति, न ? इति । तदर्थं—विशेषणपक्षे, किं विशेषणभेदेन विशेष्यभेदोऽस्ति, उत न ? इति । तदर्थं—किं विशेषणस्य विशेषणत्वं, स्वाश्रयसर्वधर्मव्यावर्तकतया ? उत विरोधिधर्मव्यावर्तकतया ? इति । उपलक्षणपक्षे, किमा-कारान्तरप्रतिपत्तिरस्ति, उत नाऽस्ति ? इति । सर्वधर्मव्यावर्तकतया विशेषणत्वम्, आकारा-न्तरप्रतिपत्तिश्च नाऽस्ति—इति पूर्वः पक्षः ।

विरोधिधर्मव्यावर्तकतयैव विशेषणत्वम्, आकारान्तरप्रतिपत्तिश्च अस्ति — इति राद्धान्तः ।

न तावत् जन्मादयः विशेषणत्वेन ब्रह्म लक्षयन्ति ; अनेकविशेषणव्यावृत्तत्वेन ब्रह्मणः अनेकत्वप्रसक्तेः । [1]विशेषणत्वं[1] हि [2]व्यावर्तकत्वम्[2] ।

ननु—'देवदत्तः श्यामो युवा लोहिताक्षः समपरिमाणः' इत्यत्र विशेषणबहुत्वेऽपि, एक एव देवदत्तः प्रतीयते ; एवम् अत्राऽपि एकमेव ब्रह्म भवति !

[3]नैवम्[3] ; तत्र प्रमाणान्तरेण ऐक्यप्रतीतेः, एकस्मिन्नेव विशेषणानाम् उपसंहारः ।

---

सर्वधर्मव्यावर्तकतया विशेषणत्वे, विशेष्यभेदप्रसङ्गेन जन्मादीनां विशेषणत्वायोगात्, आकारान्तरप्रतिपत्त्यभावे च उपलक्षणत्वायोगात्, उभयथाऽपि लक्षणत्वासम्भवात् इदं वाक्यं, ब्रह्म लक्षणतः प्रतिपादयितुं न शक्नोति इति, लक्षणदौस्स्थ्येन, ब्रह्मणि शास्त्रप्रामाण्याभावात् तद्विचारः अनारम्भणीयः—इति पूर्वपक्षे फलितम् ।

विरोधिधर्मव्यावर्तकतयैव विशेषणत्वे, विशेष्यभेदाभावात् जन्मादीनां विशेषणत्वोपपत्तेः, आकारान्तरप्रतिपत्तिसद्भावात् उपलक्षणत्वोपपत्तेश्च, उभयथाऽपि लक्षणत्वसम्भवात् इदं वाक्यं, ब्रह्म लक्षणतः प्रतिपादयितुं शक्नोति इति, लक्षणसौष्ठवेन ब्रह्मणि शास्त्रप्रामाण्योपपत्तेः, तद्विचारस्य आरम्भणीयत्वं—[इति] सिद्धान्ते फलितम् (श्रु. प्र) ।

**विशेषणत्वं हीति ।** विशेष्यते अनेन इति निर्वचनानुसारेण 'भेदकं विशेषणम्, भेद्यं विशेष्यम्, इति प्रसिद्धेः, 'खण्डो मुण्डः पूर्णशृङ्गः, नीलं शुक्लं पीतम्, अजो गजो महिषः' इत्यादिषु तथा दर्शनाच्च इति भावः ।

**नन्विति** सिद्धान्तिच्छायया ।

**उपसंहारः**—पर्यवसानम् ।

---

[1] विशेषणं–दः [2] व्यावर्तकम्–द.

[3] मैवम्–द.

अन्यथा तत्राऽपि [1]व्यावर्तकत्वेना[1]ऽनेकत्वम् अपरिहार्यम् । अत्र तु [2]अनेनैव[2] विशेषणेन लिलक्षयिषितत्वात् ब्रह्मणः, प्रमाणान्तरेण ऐक्यम् अनवगतमिति, व्यावर्तकभेदेन ब्रह्मबहुत्वम् अवर्जनीयम् ।

'ब्रह्म'शब्दैक्यात् अत्राऽपि ऐक्यं प्रतीयते—इति चेत्,

न; अज्ञातगो[3]व्यक्तेः जिज्ञासोः[3] पुरुषस्य, 'खण्डो मुण्डः पूर्णशृङ्गो गौः' इत्युक्ते, गोपदैक्येऽपि खण्डत्वादिव्यावर्तकभेदेन गोव्यक्तिबहुत्वप्रतीतेः, ब्रह्मव्यक्त्योऽपि बह्व्यः स्युः ।

अत एव लिलक्षयिषिते वस्तुनि, एषां विशेषणानां संभूय 'लक्षणत्वमपि'[4], अनुपपन्नम् ॥

---

अन्यथा—प्रमाणान्तरेण ऐक्यप्रतीत्यभावे सति । तत्राऽपि—देवदत्तादावपि (श्रु. प्र) । प्रमाणान्तरेणेति । अयं भावः—'एकमेवाऽद्वितीयम्' इत्यादिभिरपि न एकत्वनिश्चयः; तत्राऽपि एकत्वादिविशेषणभेदेन बहुत्वापत्तेः, 'एकम्' इत्यादिपदानाम् 'एको व्रीहिः' इत्यादिवत् निर्वाहसम्भवाच्च इति ।

ब्रह्मशब्दैक्यादिति । 'तद्ब्रह्म तद्ब्रह्म' इति मुहुर्मुहुरुक्तिर्वा, 'तानि ब्रह्माणि' इति बहुवचनं वा नाऽस्तीति भावः ।

अज्ञातगोव्यक्तेरिति । प्रत्यक्षेणादृश्यमानगोव्यक्तेः इत्यर्थः । एकवचनान्तधर्मिवाचिपदैक्यम्—विशेषणबहुत्वाधीनं विशेष्यबहुत्वं न बाधते; 'खण्डो मुण्डः पूर्णशृङ्गो गौः' इत्यत्र बहुत्वप्रतीतेः । जिज्ञासोरिति । गोसामान्यज्ञाने सति, अदृष्टगोव्यक्तित्वात् जिज्ञासासंभवात् प्रयोगसम्भवः इति भावः ।

अत एव—विशेषणभेदस्य स्वतः विशेष्यभेदापादकत्वादेव ॥

---

[1] व्यावर्तकत्वा—न.
[2] अनेकैनैव—वा.
[3] व्यक्तिजिज्ञासोः—वा.
[4] लक्षकत्वमपि—द. लक्षणत्वं—वा.

[जन्मादीनाम् उपलक्षणतयाऽपि लक्षणत्वानुपपत्तिः]

नाऽपि उपलक्षणत्वेन लक्षयन्ति ; आकारान्तराप्रतिपत्तेः। उपलक्षणानाम् एकेनाऽऽकारेण प्रतिपन्नस्य, केनचित् आकारान्तरेण प्रतिपत्तिहेतुत्वं हि दृष्टम् ; "[1]यत्र[1] अयं सारसः, सः देवदत्तकेदारः' इत्यादिषु।

ननु च—

'सत्यं ज्ञानमनन्तं ब्रह्म' (तै. उ. आन. 1-1)

इति प्रतिपन्नाकारस्य "जगज्जन्मादीनि" उपलक्षणानि भवन्ति—

न ; इतरेतरप्रतिपन्नाकारापेक्षत्वेन उभयोः लक्षणवाक्ययोः, अन्योन्याश्रयणात्। अतः न लक्षणतः ब्रह्म प्रतिपत्तुं शक्यते— इति ॥

---

आकारान्तराप्रतिपत्तेरिति। व्यापकनिवृत्त्या व्याप्यनिवृत्तिरिति भावः। उपलक्षणानामिति। उपलक्षणेन उपलक्ष्यप्रतिपत्तौ उपलक्षणम्, उपलक्ष्याकारः, पूर्वप्रतिपन्नाकारश्च इति आकारत्रयम् अवर्जनीयम् ; संप्रतिपन्नस्थलेषु तद्दर्शनात्। यथा — सारससम्बन्धः उपलक्षणम्। देवदत्तसम्बन्धित्वम् उपलक्ष्यम्। केदारत्वं पूर्वप्रतिपन्नाकारः। अतः अत्र तृतीयाकारप्रतिपत्त्यभावात् उपलक्षणत्वमनुपपन्नम् इत्यर्थः।

अन्योन्याश्रयणादिति। 'यतो वा इमानि' इत्यादिवाक्येन आकारान्तरप्रतिपत्तिः वक्तव्या। दूषयति नेति। सत्यत्वादयः किं विशेषणतया लक्षणभूताः, उत उपलक्षणतया। पूर्वस्मिन् कल्पे दूषणमुक्तम्। अन्यत्र च— आकारान्तरप्रतिपत्त्यपेक्षायाम् वाक्यान्तरेण चेत् ; अनवस्था एवेन चेत्, आत्माश्रय इति। अतः यतो वा इमानीत्यादिवाक्येन आकारान्तरप्रतिपत्तिर्वक्तव्या। यत्तश्च अन्योन्याश्रयः इति भावः। अतः—विशेषणत्वोपलक्षत्वायोगात् ॥

---

[1] यथा—न.

[1] जन्मादीनि—न.

[ अधिकरणाङ्गभूतः निर्णयः, सिद्धान्तो वा ]

[ तत्र जन्मादिभिः उपलक्षणीभूतैरपि ब्रह्मप्रतिपत्तिः ]

एवं प्राप्ते, अभिधीयते—जगत्सृष्टि-स्थिति-प्रलयैः [1]उपलक्षण[1]भूतैः ब्रह्म प्रतिपत्तुं शक्यते ।

न च उपलक्षणोपलक्ष्याकारव्यतिरिक्ताकारान्तराप्रतिपत्तेः [2]ब्रह्माप्रतिपत्तिः[2] ; उपलक्ष्यं हि अनवधिकातिशयबृहत् , बृंहणं [3]च[3] ; बृहतेर्धातोः तदर्थत्वात् । तदुपलक्षणभूताश्च जगज्जन्म स्थिति-लयाः ।

'यतः, येन, यत्' इति प्रसिद्धवत् 'निर्देशेन[4], यथाप्रसिद्धि [5]जन्मादिकारणम्[5] अनूद्यते । प्रसिद्धिश्च—

'सदेव सोम्येदमग्र आसीदेकमेवाऽद्वितीयम्' (छां. उ. 6-2-1)

'तदैक्षत बहु स्यां प्रजायेयेति । तत्तेजोऽसृजत' (छां. उ. 6-2-3)

---

एवं प्राप्ते, अभिधीयते इति । सूत्रकाराभिप्रेते पूर्वपक्षे प्राप्ते, तदभिप्रेतः तत्परिहार उच्यते इत्यर्थः । उपलक्षणम्—ज्ञाप्यबहिर्भूतः ज्ञाप्यप्रतीत्युपायः ॥

आकारान्तरम्—आकारविशेषः । स च उपलक्षणोपलक्ष्याकारातिरिक्तः इत्यपुनरुक्तिः । उप . . . बृंहणं चेति । अथर्वशिरसि 'बृहति बृंहयति तस्मात् उच्यते परं ब्रह्म' इति, श्रीमति वैष्णवे पुराणे 'बृहत्त्वात् बृंहणत्वाच्च ब्रह्मेति परिपठ्यते' इत्यादिनिर्वचनप्रसिद्धिद्योतकः 'हि'शब्दः । तदर्थत्वादिति । बृहत्वस्य स्वरूपतो, गुणतश्च विवक्षितत्वात् बृंहणत्वरूपबृहत्त्वमपि धात्वर्थान्तर्गतमिति भावः ।

---

[1] उपलक्षणी—द, न.

[2] ब्रह्मणः अप्रतिपत्तिः—इ, घ, झ. ब्रह्मणोऽप्रतिपत्तिः —वा.

[3] च ब्रह्म—वा.

[4] जन्मादिकारणनिर्देशेन—पा.

[5] जगज्जन्मादिकारणम्—अ, इ, वा. जन्मादिकारणसिद्धम्—द.

इति एकस्यैव सच्छब्दवाच्यस्य निमित्तोपादानरूपकारणत्वेन । तदपि, "[1]सदेव इदम् अग्रे[1] एकमेवाऽऽसीत्' इति [2]उपादानतां[2] प्रतिपाद्य, 'अद्वितीयम्' इति अधिष्ठात्रन्तरं प्रतिषिध्य,

'तदैक्षत बहु स्यां प्रजायेयेति । तत्तेजोऽसृजत' (छां. उ. 6-2-3)

इति एकस्यैव प्रतिपादनात् । तस्मात् 'यन्मूलाः जगज्जन्म-स्थिति-लयाः, तत् ब्रह्म' इति, [3]जन्म-[3]स्थिति-लयाः, 'स्वनिमित्तोपादानभूतं वस्तु ब्रह्म' इति लक्षयन्ति ॥

[ कारणत्वाक्षिप्ततृतीयाकारप्रतिपादनम् ]

जगन्निमित्तोपादानताक्षिप्तसर्वज्ञत्व-सत्य[4]सङ्कल्पत्व[4]-विचित्रशक्तित्वाद्याकारबृहत्वेन प्रतिपन्नं ब्रह्म [5]इति च[5], जन्मादीनां तथा प्रतिपन्नस्य [6]लक्षणत्वेन[6], न आकारान्तरा-प्रतिपत्तिरूपा अनुपपत्तिः ॥

---

तदपि—निमित्तोपादानत्वरूपकारणत्वमपि । तदैक्षत . . . असृजत इति उपादानत्वाधिष्ठात्रन्तरनिवारणयोः उपपादनं कृतम् । तस्मादिति । यथा उपलक्षणेन सारसेन [सह] केदारस्य अधिकरणत्वेन सम्बन्धित्वम्, यथा च चन्द्रदेशस्य शाखायाश्च ऋजुभावः सम्बन्धः, तथा ब्रह्मणः उपलक्षणभूतजन्मादिभिः हेतु-हेतुमद्भावः सम्बन्धः इत्युक्तं भवति ; यथाप्रसिद्धि अनुवादरूपतया वाक्यस्य । निमित्तान्तरशङ्का च अर्थात् परिहृता भवति ॥

जगदित्यादि । निमित्तोपादानकारणत्वाक्षिप्ततृतीयाकारः [उच्यतेऽनेन] । आक्षिप्तेत्यादि । यतश्शब्दसारितवाक्येषु हि सार्वज्ञ्यावगमः । अतः एवमुक्तम् । आकारबृहत्वेनेति गुणानामपरिच्छिन्नतया तद्विशिष्टस्य ब्रह्मशब्दवाच्यतायोग्यत्वज्ञापनार्थमुक्तम् । 'यः सर्वज्ञः' इत्यादिवाक्यावगतसार्वज्ञ्यादीनामुपलक्षणत्वाभावात् न अन्योन्याश्रयः । इति च—अतश्च ॥

---

[1] इदमग्रे सत्—थ.
[2] उपादानतां च—थ.
[3] जगज्जन्म—आ, इ, वा.
[4] सङ्कल्पत्वयुक्त—अ.
[5] इति—थ.
[6] लक्षकत्वेन—न.

[जन्मादीनां विशेषणतया ब्रह्मलक्षणत्वोपपत्तिः]

जगज्जन्मादीनां विशेषणतया [1]लक्षणत्वे[1]ऽपि न कश्चित् दोषः। लक्षणभूतान्यपि विशेषणानि स्वविरोधिव्यावृत्तं [2]वस्तु[2] लक्षयन्ति। अज्ञातस्वरूपे वस्तुनि एकस्मिन् लिलक्षयिषितेऽपि, परस्पराविरोध्यनेक[3]विशेषणलक्षणत्वं[3] न भेदमापादयति; विशेषणानाम् [4]एकाश्रयतया प्रतीतेः[4] एकस्मिन्नेव उपसंहारात्। खण्डत्वादयस्तु विरोधादेव गोव्यक्तिभेदमापादयन्ति। अत्र तु कालभेदेन जन्मादीनां न विरोधः॥

[सत्यज्ञानादीनां लक्षणत्वोपपत्तिः, उक्तान्योन्याश्रयपरिहारश्च]

'यतो वा [5]इमानि भूतानि जायन्ते[5]' (तै. उ. भृ. 1-2)

---

विशेषणतयेति। ज्ञाप्यान्तर्भूतः ज्ञाप्यप्रतीत्युपायः विशेषणम्। लक्षणभूतानि—व्यावर्तकभूतानि (श्रु. प्र)। स्वविरोधिव्यावृत्तम्— नियतभिन्नाश्रयविशेषणाश्रयात् व्यावृत्तम्; न तु अविरुद्धविशेषणाश्रयात् व्यावृत्तम्। न भेदमापादयतीति। 'देवदत्तः श्यामो युवा' इत्युदाहरणमभिप्रेतम्। अप्रत्यक्षविषयेऽपि एकवचनान्तधर्मिवाचकपदैक्यात् विशेष्यैक्यं प्रतीयते इत्यर्थः। एकाश्रयतदेति। अविरुद्धविशेषणभेदः न विशेष्यभेदकः इत्यर्थः। विरोधादिति विपक्षभूतखण्डादिषु बहुत्वनियामकमुक्तम्। कालभेदेनेति। विशेष्यब्रह्मबहुत्वेऽपि जगज्जन्मादीनां यौगपद्यव्याघातात्, कालभेदेन अविरोधः आश्रयणीयः। विशेष्यैक्येऽपि तथैवाऽविरोधः इत्यर्थः। अत्र बहुत्वैकत्वयोः को निर्णायकः? इति चेत्, नियतभिन्नाश्रयदृष्टविशेषणबहुत्वं विशेष्यैक्यविरोधि। अनियतभिन्नाश्रयादृष्टविशेषणबहुत्वं न ऐक्यविरोधि इति॥

---

[1] लक्षकत्वे—द.  [2] ब्रह्म—न.
[3] विशेषणत्वं—थ.  [4] एकाश्रयत्वप्रतीतेः—थ, द.
[5] इमानि—पा.

इत्यादि[1]कारणवाक्येन[1] प्रतिपन्नस्य जगज्जन्मादिकारणस्य ब्रह्मणः सकलेतरव्यावृत्तं स्वरूपमभिधीयते—

'सत्यं ज्ञानमनन्तं ब्रह्म' (तै. उ. आन. 1-1)

इति। तत्र सत्यपदं—निरुपाधिकसत्तायोगि ब्रह्म आह। तेन विकारास्पदम् अचेतनम्, [2]तत्संसृष्टः चेतनश्च[2] व्यावृत्तः; नामान्तरभजनार्हावस्थान्तरयोगेन, तयोः निरुपाधिकसत्तायोगरहितत्वात्। ज्ञानपदम्—नित्यासङ्कुचितज्ञानैकाकारम् आह। तेन कदाचित् सङ्कुचितज्ञानत्वेन, मुक्ताः व्यावृत्ताः। अनन्तपदम्—देश-काल-वस्तु-परिच्छेद[3]रहितं स्वरूपम्[3] आह। सगुणत्वात् स्वरूपस्य, स्वरूपेण गुणैश्च आनन्त्यम्।

---

कारणवाक्येनेति। 'यतो वा' इत्यनेन लक्षणवाक्येन कारणत्वमेव लक्षणत्वेनोक्तमिति अस्य कारणवाक्यत्वम्। 'सदेवे'त्यादीनि कारणत्वप्रापकवाक्यानि। निरुपाधिकसत्ता—निर्विकारत्वम्। केनाऽपि परिणामविशेषेण तत्तदवस्थस्य सत्ता—सोपाधिकसत्ता। निरुपपदं 'सत्य'पदम् असङ्कोचात् स्वरूपतो धर्मतश्च एकरूपत्वं ज्ञापयतीति अचित्संसृष्टजीवव्यावृत्तिः। ज्ञानपदमिति। 'इदानीम्' 'अस्मिन् विषये' इत्याद्युपपदरहितं 'ज्ञान'पदम् असङ्कुचितत्वं नित्यत्वञ्च ज्ञानस्य दर्शयति। नित्यासंकुचितेति। नित्यासङ्कुचितज्ञानत्वमेव आकारः यस्य, तत् नित्यासङ्कुचितज्ञानैकाकारम्। तेन ब्रह्मणः कदाचित् क्वचित् प्रदेशे जडत्वव्यावृत्तिः। नित्यासङ्कुचितज्ञानत्वम् अद्वारकं सद्वारकं च परमात्मनः आकारो भवति। 'आत्मज्योतिः सम्राडिति होवाच' 'ब्रह्मणा विपश्चिता' 'विज्ञातारमरे केन विजानीयात्' इत्यादिभिः स्वरूपस्य धर्मस्य च ज्ञानत्वावगमात् ज्ञानशब्दासङ्कोचेन सद्वारकाद्वारकज्ञानाकारत्वसिद्धिः। अनन्तेति। 'इह इदम्, नाऽन्यत्र' इति परिच्छेत्तुमशक्यत्वं देशापरिच्छेदः। 'इदम् इदानीम्, नाऽन्यदा' इति परिच्छेदायोग्यत्वं कालापरिच्छेदः; न तु देशकालाभावौ। एवं वस्त्वपरिच्छेदोऽपि न वस्त्वन्तराभावः; किन्तु 'इदम् इदं न भवति' इति परिच्छेदानर्हत्व-

---

[1] वाक्येन—आ, इ, वा. [2] तत्संसृष्टचेतनः—न., तत्संसृष्टचेतनश्च—वा.

[3] रहितस्वरूपं—इ.

तेन पूर्वपदद्वयव्यावृत्तकोटिद्वयविलक्षणाः सातिशय[1]स्वरूपस्वगुणाः[1] नित्याः [2]व्यावृत्ताः[2]; विशेषणानां व्यावर्तकत्वात्। ततः,

'सत्यं ज्ञानमनन्तं ब्रह्म' (तै. उ. आन. 1-1)

इत्यनेन वाक्येन, जगज्जन्मादिना अवगत[3]स्वरूपं[3] ब्रह्म सकलेतरवस्तुविसजातीयमिति लक्ष्यत इति, न अन्योन्याश्रयणम्॥

[ अधिकरणार्थोपसंहारः ]

अतः सकलजगज्जन्मादिकारणं निरवद्यं सर्वज्ञं [4]सत्यसङ्कल्पं सर्वशक्ति[4] ब्रह्म, लक्षणतः प्रतिपत्तुं शक्यते इति सिद्धम्॥

---

मेव। सर्ववस्तुसामानाधिकरण्यार्हत्वं वस्त्वपरिच्छेदः इति यावत्। सातिशयस्वरूपस्वगुणा इति। स्वरूपम् अणुत्वात् सातिशयम्। ज्ञानव्यतिरिक्ताः ऐश्वर्यादिगुणाश्च जगद्व्यापारानर्हतया सातिशयाः। ज्ञानं च नित्यं सर्वगतमपि तथात्वस्य परमात्मनिच्छाधीनत्वात् सातिशयम्। ततः—एवं व्यावृत्तिसिद्धेः। अवगतस्वरूपम्—अवगतासाधारणाकारम्। जन्मादिकारणत्वं हि असाधारणाकारः। तत् लक्षणत्वेन अवगतम् इत्यर्थः। न अन्योन्याश्रयणम् इति। कारणतया लक्षितस्य ब्रह्मणः कारणत्वशङ्कितदोषव्यावर्तकत्वात् शोधकवाक्यानां लक्षणपूर्वकत्वमस्ति; न तु तस्य शोधकवाक्यपूर्वकत्वमिति न अन्योन्याश्रयणम् इत्यर्थः। सूत्रकारैः सत्यज्ञानादीनां लक्षणत्वेनानुक्तिनिदानं च अनेनैव दर्शितं भवति; विशेष्यांशस्य लक्षणं सत्यज्ञानादि, न तु विशिष्टस्य। विशिष्टस्यैव उपास्यत्वात् प्राप्यत्वाच्च जिज्ञास्यब्रह्मलक्षणं जन्माद्येव इति सूत्रकाराभिप्रायः॥

अतः – जन्मादीनां विशेषणतया, उपलक्षणतया च लक्षणत्वोपपत्तेः॥

---

[1] स्वगुणाः–ङ.
[2] व्यावृत्ताः स्युः–न.
[3] वस्तुविशेषस्वरूपं–आ.
[4] सर्वशक्तिसत्यसङ्कल्पं–पा, सर्वशक्ति–आ.

[ निर्विशेषस्य जिज्ञास्यत्वे सूत्रद्वयासाङ्गत्यम् ]

ये तु—निर्विशेषवस्तु जिज्ञास्यम्—इति वदन्ति,

तन्मते 'ब्रह्मजिज्ञासा' 'जन्माद्यस्य यतः' इति असङ्गतं स्यात् ; 'निरतिशय-बृहत्, बृंहणं च ब्रह्म' इति निर्वचनात्, 'तच्च ब्रह्म जगज्जन्मादिकारणम्' इति वचनाच्च ।

एवम् उत्तरेष्वपि सूत्रगणेषु, सूत्रोदाहृतश्रुतिगणेषु च ईक्षणाद्यन्वयदर्शनात्, सूत्राणि, सूत्रोदाहृत[1]श्रुतयश्च न तत्र प्रमाणम् ।

तर्कश्च साध्यधर्माव्यभिचारिसाधनधर्मान्वितवस्तुविषयत्वात्, न निर्विशेषवस्तुनि प्रमाणम् ।

जगज्जन्मादि[2]भ्रमो[2] यतः, तत् ब्रह्म—इति [3]स्वोत्प्रेक्षापक्षेऽपि[3] न निर्विशेष-

---

निरतिशयेति । अथर्वशिरसि विष्णुपुराणे चोक्तं निर्वचनम् । 'निर्विशेषं ब्रह्म' इति न निरुक्तम् इति भावः । तच्चेति । न हि 'जगतः अध्यासो यतः' इति लिलक्षयिषितमिति भावः ।

सूत्रगणेष्विति । न एकैकं सूत्रं वाक्यं वा विरुद्धम् ; अपि तु तत्तदधिकरणशरीरं विषयवाक्यजातं च विरुद्धमिति भावः ।

तर्कशब्दः अनुमानपरः, प्रमाणानुग्राहकतर्कपरो वा ।

स्वोत्प्रेक्षेति । अयमर्थः स्वयमार्जितः, न तु श्रुतिसिद्धः इत्यर्थः ।

---

[1] हृताः—वा. [2] भ्रमाः—वा.

[3] स्वोत्प्रेक्षापक्षे च—इ, द, स्वोत्प्रेक्षितपक्षेऽपि—ङ.

वस्तुसिद्धिः ; 'भ्रममूलम् अज्ञानम्, अज्ञानसाक्षि ब्रह्म' इत्यभ्युपगमात्। साक्षित्वं हि [1]प्रकाशैक[1]रस[2]तयैव[2] उच्यते। प्रकाशत्वं तु जडात् व्यावर्तकम्, स्वस्य [3]परस्य च[3] व्यवहारयोग्यतापादनस्वभावेन भवति। तथा सति सविशेषत्वम्। तदभावे प्रकाशतैव न स्यात्। तुच्छतैव स्यात् ॥ २ ॥

॥ इति जन्माद्यधिकरणम् ॥ २ ॥

---

प्रकाशत्वम्—प्रकाशशब्दवाच्यत्वम्। स्वस्येति। स्वपरव्यवहारयोग्यतापादनरूपस्वभाव एव प्रकाशत्वम् इत्यर्थः ॥

॥ इति जन्माद्यधिकरणम् ॥ २ ॥

---

[1] प्रकारैक-ङ.

[2] तया—आ, इ, झ, वा.

[3] च परस्य—इ, घ.

[ अपूर्वतारूपतात्पर्यलिङ्गसमर्थनपरम् ]

शास्त्रयोनित्वाधिकरणम् ॥ १–१–३ ॥

[ अधिकरणार्थः—ब्रह्मणः शास्त्रैकगम्यत्वम् ]

[ अवान्तरसङ्गतिः ]

जगज्जन्मादिकारणं ब्रह्म वेदान्तवेद्यम्—इत्युक्तम् ।

तदयुक्तम् ; तद्धि न वाक्यप्रतिपाद्यम् , अनुमानेन सिद्धेः, इत्याशङ्क्याह—

*शास्त्रयोनित्वात् ॥ १–१–३ ॥

[ सूत्रविवरणम् ]

शास्त्रं यस्य योनिः — कारणम्—प्रमाणम्, तत् शास्त्रयोनि । तस्य भावः शास्त्रयोनित्वम्, तस्मात् । ब्रह्मज्ञानकारणत्वात् शास्त्रस्य, तद्योनित्वं ब्रह्मणः ।

---

तद्धीति । सामान्येन शब्दप्रतिपाद्यत्वे सिद्धे हि शब्दविशेषरूपवेदान्तवेद्यत्वसिद्धिः इति भावः ॥

शास्त्रं यस्येति व्याख्यात्रन्तराभिमतषष्ठीतत्पुरुषयोजनाव्यावृत्त्यर्थम् । ब्रह्मज्ञानेति । उत्पादके इव ज्ञापकेऽपि हेतुशब्दः प्रयुज्यते, तद्वत् हेत्वभिप्रायेण योनिशब्दप्रयोगसम्भवः इति

---

सूत्रार्थः—शास्त्रयोनित्वात्—शास्त्रैकप्रमाणकत्वात् , [ब्रह्म—औपनिषद ब्रह्म उक्तस्वरूपम् , वेदान्तवाक्यम्—'यतो वा इमानि' इत्यादिवाक्यम्, प्रतिपादयत्येव—बोधयत्येव] ।

* शास्त्रेणैवावसेयत्वाज्जगद्योनेः परात्मनः ।
अनुमातुमशक्यत्वमिति शास्त्रमिहार्थवत् ॥ (अ. प. मा. ३)

अत्यन्तातीन्द्रियत्वेन प्रत्यक्षादिप्रमाणाविषयतया ब्रह्मणः शास्त्रैक[1]प्रमाणक[1]त्वात्, उक्त[2]स्वरूपं[2] ब्रह्म,

'यतो वा इमानि भूतानि जायन्ते' (तै. उ. भृ. 1-2)

इत्यादिवाक्यं बोधयत्येव इत्यर्थः ॥

[ वर्णिते सूत्रार्थे पूर्वपक्षिणः आक्षेपः ]

ननु—शास्त्रयोनित्वं ब्रह्मणः न सम्भवति ; प्रमाणान्तरवेद्यत्वात् ब्रह्मणः । अप्राप्ते तु शास्त्रम् अर्थवत् ॥

---

भावः । अत्यन्तातीन्द्रियत्वेनेति । ब्रह्मणः स्वरूपेण इन्द्रियसम्बन्धो नास्ति, न च तल्लिङ्गस्य, नाऽपि लिङ्गलिङ्गस्य च इत्यभिप्रायः । इन्द्रिय-प्रत्यक्षशब्दयोः करणतत्फलभूत-ज्ञानविवक्षया भिन्नार्थता । शास्त्रैकेति । 'अब्भक्षः' इतिवत् अवधारणगर्भः इति भावः । बोधयत्येवेति । पूर्वस्मिन् सूत्रे यत् साध्यं, तदेव अस्मिन् सूत्रे मुखभेदेन साध्यते इति एवकाराभिप्रायः ।

अत्राऽपि 'यतो वा इमानि' इत्यादिवाक्यद्वारा शास्त्रं विषयः । संशयोऽप्यर्थ-सिद्धः । साधारणविचारद्वयम् अनुसन्धेयम् । 'यतो वा इमानि' इत्यादिवाक्यं किं ब्रह्मणि प्रमाणम् उत न? इति संशयः । तदर्थं—किं ब्रह्म मानान्तरगोचरः, न वा? इति, तदर्थं—किं सामान्यतोदृष्टमनुमानं जीवविलक्षणमवगमयति, न?—इति ।

यदा अवगमयति, तदा मानान्तरगोचरत्वात् 'यतो वा इमानि' इत्यादिवाक्यं न ब्रह्म प्रतिपादयति इति वेदान्तानां ब्रह्मणि प्रामाण्याभावात् तद्विचारानारम्भः पूर्वपक्षे फलितः ।

राद्धान्ते तु—सामान्यतोदृष्टानुमानस्य जीवविलक्षणे प्रमाणत्वाभावेन ब्रह्मणो मानान्तरा-गोचरत्वात् 'यतो वा इमानि' इत्यादिवाक्यं ब्रह्मणि प्रमाणमिति सर्ववेदान्तवाक्यानां तत्र प्रामाण्यात् विचारस्य आरम्भणीयत्वं फलितम् ॥

शास्त्रयोनित्वम्—शास्त्रप्रमाणकत्वम् । अप्राप्ते इति । शास्त्रस्य तु बुभुत्सित-ग्राहित्वेन यत्नसाध्यत्वात् ज्ञाताप्रयोजनबोधकत्वं दूषणम् [इति भावः] (श्रु. प्र) ॥

---

[1] प्रमाण–इ, छ.　　[2] रूपं–इ.

[ सिद्धान्त्येकदेशिनः मीमांसकस्याक्षेपः ]

किं तर्हि तत्र प्रमाणम् ?

न तावत् प्रत्यक्षम् । [1]तद्धि[1] द्विविधम्—इन्द्रियसंभवम्, योगसम्भवं चेति । इन्द्रियसम्भवं च—बाह्यसम्भवम्, आन्तरसम्भवं चेति [2]द्विविधम्[2] । बाह्येन्द्रियाणि विद्यमानसंनिकर्षयोग्यस्वविषयबोध[3]जननानि[3] इति, न सर्वार्थसाक्षात्कारतन्निर्माणसमर्थ-पुरुषविशेषविषयबोध[3]जननानि[3] ।

नाऽपि आन्तरम्; [4]आन्तरसुख-दुःखादि[4]व्यतिरिक्तबहिर्विषयेषु तस्य बाह्येन्द्रि-यानपेक्षप्रवृत्त्यनुपपत्तेः ।

नाऽपि योगजन्यम्, भावनाप्रकर्षपर्यन्तजन्मनः तस्य विशदावभासत्वेऽपि, पूर्वानु-भूतविषयस्मृतिमात्रत्वात् न प्रामाण्यमिति, कुतः प्रत्यक्षता ? तदतिरिक्तविषयत्वे कारणा-भावात् । तथा सति तस्य भ्रमरूपता ।

---

संनिकर्षः—देशासक्तिः । विद्यमानशब्देन कालसंनिकर्षसिद्धिः । योग्यत्वम्—स्वभावसंनिकर्षः (श्रु. दी) ।

नाऽपि आन्तरमिति । मनश्च न तद्विषयबोधजनकम् इत्यर्थः । [आन्तरम्—मनःसम्भवम् ] आन्तरेत्यत्र आन्तरशब्दः आत्म-तद्धर्मपरः । तद्ग्राहित्वादेव हि मनसोऽपि आन्तरत्वम् । व्यतिरिक्तेति रूपादीनां बहिष्ट्वमेवोपपादितम् (श्रु. प्र) ।

पूर्वानुभूतेति । [अतः] प्रमाणावान्तरविशेषत्वं दूरोत्सारितम् इत्यर्थः । कारणा-भावादिति । कारणम् इन्द्रियसम्बन्धः । प्रमितिकारणाभावात् न प्रामाण्यम् इत्यर्थः । भ्रमरूपतेति । इन्द्रियसम्बन्धाभावेऽपि अनुभूताधिकविषयत्वे, तस्य दोषमूलकत्वेन भ्रान्तित्वैवे-त्यर्थः (श्रु. प्र) ।

---

[1] तत्—थ.
[2] द्विधा—वा.
[3] जनकानि—इ, झ, वा.
[4] आन्तरसुखादि—द., सुखादि—वा.

नाऽपि अनुमानं विशेषतोदृष्टं, सामान्यतोदृष्टम् वा ।

[1]अतीन्द्रिये वस्तुनि[1] सम्बन्धावधारणविरहात्, न विशेषतोदृष्टम् ।

समस्तवस्तुसाक्षात्कारतन्निर्माणसमर्थपुरुषविशेषनियतं सामान्यतोदृष्टमपि न लिङ्गमुपलभ्यते ॥

[ पूर्वपक्ष्येकदेशिनः आक्षेपः]

ननु च—जगतः कार्यत्वं, तदुपादानोपकरणसंप्रदानप्रयोजनाभिज्ञकर्तृकत्वव्याप्तम् । अचेतनारब्धत्वं [2]जगतश्च[2], एकचेतनाधीनत्वेन व्याप्तम् । सर्वं हि घटादिकार्यं, तदुपादानोपकरणसंप्रदानप्रयोजनाभिज्ञकर्तृकं दृष्टम् । अचेतनारब्धम् अरोगं स्वशरीरम्, एकचेतनाधीनं च । सावयवत्वेन जगतः [3]कार्यत्वम्[3] ॥

[ सिद्धान्त्येकदेशिनः दूषणम् ]

उच्यते—किमिदम् एकचेतनाधीनत्वम् ?

---

विशेषतोदृष्टम्—सिषाधयिषिताकारविशिष्टसाध्यनिरूपितव्याप्तिग्रहविषयीभूतं लिङ्गम् । सामान्यतोदृष्टम् — सिषाधयिषितविशेषाकारातिरिक्तसामान्यधर्मावच्छिन्नेन गृहीतव्याप्तिकं लिङ्गम् (सि. व्या) ।

नियतम्—व्याप्तम् ॥

संप्रदानम्—भोक्ता । प्रयोजनम्—विनियोगः । अरोग-स्वशब्दौ रुग्णपरशरीरव्यावृत्त्यर्थौ । सावयवत्वेनेत्येनेन अचेतनारब्धत्वहेतोश्च असिद्धिशङ्कापरिहारोऽपि फलितः ॥

---

[1] अतीन्द्रियवस्तुनि—थ, अतीन्द्रियवस्तु-द.

[2] च जगतः-ड.

[3] कार्यत्वमिति—पा.

न तावत् तदायत्तोत्पत्तिस्थितित्वम् ; दृष्टान्तो हि साध्यविकलः स्यात् । न हि अरोगं [1]स्वशरीरम्[1] एकचेतनायत्तोत्पत्तिस्थिति ; तच्छरीरस्य भोक्तॄणां भार्यादि-सर्वचेतनानामदृष्टजन्यत्वात् तदुत्पत्तिस्थित्योः ।

किञ्च शरीरावयविनः स्वावयवसमवेततारूपा स्थितिः, अवयव[2]संश्लेषविशेष[2]-व्यतिरेकेण न चेतनमपेक्षते । प्राणनलक्षणा तु स्थितिः, पक्षत्वाभिमते क्षिति[3]जलधि-महीधरादौ[3] न सम्भवतीति, पक्ष-सपक्षानुगताम् एकरूपां स्थितिं नोपलभामहे ।

तदायत्त[4]प्रवृत्तित्वम्[4]—तदधीनत्वम्—इति चेत् ,

अनेकचेतनसाध्येषु [5]गुरुतररथशिला[5]मही[6]रुहादिषु[6] व्यभिचारः । चेतन-मात्राधीनत्वे, सिद्धसाध्यता ॥

[ कार्यत्वहेतुकानुमाने सिद्धसाधनदोषः ]

किं च उभयवादिसिद्धानां जीवानामेव [7]लाघवेन[7] कर्तृत्वाभ्युपगमो युक्तः ।

---

स्वावयवसमवेततारूपस्थित्युक्तिः वैशेषिकादिमतानुसारेण (श्रु. प्र) । न चेतन-मपेक्षते—चेतनेच्छां नाऽपेक्षते । आविनाशकालात् अशिथिलत्वलक्षणा स्थितिरपि अनेन दत्तोत्तरा इत्यभिप्रायेण तदनुक्तिः । 'प्राणनलक्षणा—पञ्चवृत्तिप्राणसहितत्वलक्षणा नोपलभामहे इति । कालात्ययापदेशः इत्यभिप्रायः ।

अनेकचेतनसाध्येषु—अनेकचेतनप्रवर्त्येषु ॥

उभयेति—लाघवहेतुरुक्तः । 'क्लृप्तकल्प्यविरोधे तु युक्तः क्लृप्तपरिग्रहः' इति ह्याहुः ।

---

[1] शरीरम्—द.
[2] संश्लेष—ञ.
[3] जलमहीधरादिके—इ.
[4] चेष्टावत्त्वम्—झ.
[5] गुरुतरशिला—इ, क, ङ.
[6] पुरादिषु- इ, गृहादिषु—क, धरादिषु—वा.
[7] लाघवन्यायेन—इ, व.

न च जीवानाम् उपादानाद्यनभिज्ञतया कर्तृत्वासम्भवः ; सर्वेषामेव चेतनानां पृथिव्याद्युपादान-यागाद्युपकरणसाक्षात्कारसामर्थ्यात् । यथा इदानीं पृथिव्यादयः यागादयश्च प्रत्यक्षमीक्ष्यन्ते ।

उपकरणभूतयागादिशक्तिरूपापूर्वादिशब्दवाच्यादृष्टसाक्षात्काराभावेऽपि चेतनानां न कर्तृत्वानुपपत्तिः ; तत्साक्षात्कारानपेक्षणात् कार्यारम्भस्य । शक्तिमत्साक्षात्कार एव हि कार्यारम्भोपयोगी । शक्तेस्तु ज्ञानमात्रमेव उपयुज्यते, न साक्षात्कारः । न हि कुलालादयः कार्योपकरणभूतदण्डचक्रादिवत् तच्छक्तिमपि साक्षात्कृत्य घटमणिकादिकार्यम् आरभन्ते । इह तु चेतनानाम् आगमावगतयागादिशक्तिविशेषाणां कार्यारम्भः नाऽनुपपन्नः ॥

[ कार्यत्वहेतुकानुमानस्य सोपाधिकता ]

किञ्च यत् शक्यक्रियं शक्योपादानादिविज्ञानं च [1]तदेव तदभिज्ञ[1]कर्तृकं दृष्टम् । मही[2]महीधरमहार्णवादि[2] तु, अशक्यक्रियम् अशक्योपादानादिविज्ञानं च इति, न चेतनकर्तृकम् । अतः घटमणिकादिसजातीयशक्यक्रियशक्योपाद[3]नादिविज्ञान[3]वस्तुगतमेव कार्यत्वं बुद्धिमत्कर्तृपूर्वकत्वसाधने प्रभवति ॥

---

यागादिशक्तिरूपेति । यागादिजन्यस्वात्मातिशयरूपेत्यर्थः । शक्तिमच्छब्देन शक्तिसम्बन्धि उच्यते । जन्यजनकभावस्य च सम्बन्धविशेषरूपत्वात् शक्तिरूपादृष्टजनकयागादिषु शक्तिमच्छब्दप्रयोगः । शक्तेस्तु इति । शक्तेरपि अपेक्षितत्वसाम्यात् तत्साक्षात्कारः अपेक्षितः । अन्यथा अनवगतवस्तुशक्तयोऽपि पुरुषाः तैः तत्कार्यं कुर्युः इत्यत्र [उत्तरम्] तु-शब्दः शक्तिमत इव शक्तेरपि ज्ञातव्यत्वेऽपि विशेषद्योतनार्थः (श्रु. प्र) ॥

किञ्चेति । कार्यत्वहेतोः उपाधिद्वयेन सोपाधिकत्वमुच्यते । महीमहीधरेति साधनाव्यापकत्वम् । अत इति साध्यसमव्याप्तत्वम् । सोपाधिकत्वे सति साध्येन हेतोः व्याप्यत्वासिद्धिः स्यादिति उपाधेः दूषणत्वम् । बुद्धिमदिति अदृष्टवज्जीवकर्तृकत्वव्यावृत्यर्थम् ॥

---

[1] तदभिज्ञ—ट., तदेव हि तदभिज्ञ—ड, थ, न.

[2] महीधरार्णवादि—आ, महार्णवादि—थ, द, न.

[3] नविज्ञानादि—द.

[ कार्यत्वहेतोः अभिमतविशेषविरुद्धत्वम् ]

किं च घटादिकार्यम् , अनीश्वरेण अल्पज्ञानशक्तिना सशरीरेण परिग्रहवता अनाप्तकामेन [1]निर्मितं दृष्टम्[1] इति, तथाविधमेव चेतनं कर्तारं साधयन् अयं कार्यत्वहेतुः, सिषाधयिषितपुरुषसार्वज्ञ्य[2]सर्वैश्वर्यादि[2]विपरीतसाधनात् विरुद्धः स्यात् ।

न च एतावता सर्वानुमानोच्छेदप्रसङ्गः ; लिङ्गिनि प्रमाणान्तरगोचरे लिङ्गबलोपस्थापिताः [3]विपरीत[3]विशेषाः तत्प्रमाणप्रतिहतगतयो निवर्तन्ते ।

इह तु सकलेतरप्रमाणाविषये लिङ्गिनि निखिलनिर्माणचतुरे, अन्वयव्यतिरेकावगताविनाभावनियमाः धर्माः सर्वे एव अविशेषेण प्रसज्यन्ते ; निवर्तकप्रमाणाभावात् तथैवाऽवतिष्ठन्ते ।

अतः आगमादृते कथमीश्वरः [4]सेत्स्यति[4] ?

[ साक्षात्पूर्वपक्षिणं प्रस्तुतस्योक्तिः ]

अत्राहुः—सावयवत्वादेव जगतः कार्यत्वं न प्रत्याख्यातुं शक्यते । भवन्ति च प्रयोगाः –

---

किञ्चेत्यादिना कार्यत्वहेतोः विशेषविरुद्धत्वम् । अनीश्वरेण—कर्मवश्येन । परिग्रहवता —उपकरणवता ।

अत इत्यादिना सिद्धान्त्येकदेशिमतमुपसंहरति । अतः—सिद्धसाधनत्वसोपाधिकत्वविरुद्धत्वैः दूषितत्वात् । सिध्यति चेत् , न आगमात् ऋते मानम् इत्यर्थः ॥

सावयवत्वादिति कार्यत्वहेतोः स्वरूपासिद्धिमाशङ्क्य व्युदस्यति । सावयवत्वादेव—पूर्वं प्रस्तुतादेव । अनेन हेत्वन्तरसद्भावोऽपि सूचितः (श्रु. प्र) । [प्रत्याख्यातुम्—निराकर्तुम् ।] ॥

---

[1] दृष्टम्–ट. [2] सार्वैश्वर्यादि–ड.
[3] विपरीताः–आ, इ, च, झ, थ, द. [4] सिद्ध्यति–ड.

1. विवादाध्यासितं [1]भू-भूधरादि[1]—कार्यम्; सावयवत्वात्, [2]घटादिवत्[2]। तथा,

2. विवादाध्यासितम् अवनि-जलाधि-महीधरादि—कार्यम्; महत्त्वे सति, क्रियावत्वात्, [2]घटादिवत्[2]।

3. [3]तनु[3]भुवनादि—कार्यम्, महत्वे सति मूर्तत्वात्, [2]घटादिवत् इति[2]। सावयवेषु द्रव्येषु 'इदमेव क्रियते नेतरत्' इति, कार्यत्वस्य नियामकं सावयवत्वातिरेकि रूपान्तरं नोपलभामहे ॥

[ उपाधिशङ्कापरिहारौ ]

कार्यत्वप्रतिनियतं शक्यक्रियत्वम्, शक्योपादानादि[4]विज्ञानत्वं[4] च उपलभ्यते इति चेत्,

न; कार्यत्वेन [5]अनुमतेऽपि[5] विषये, ज्ञानशक्ती [6]कार्यानुमेये इति[6], अन्यत्राऽपि सावयवत्वादिना कार्यत्वं ज्ञातमिति, ते च प्रतिपन्ने एवेति, न कश्चिद्विशेषः। तथा हि—

---

विवादाध्यासितशब्दः पक्षीकृतेष्वेव संप्रतिपन्नांशव्यवच्छेदाय। सन्ति हि खातपूरणनिष्पाद्याः पृथिव्यंशाः। सगरसुतादिनिष्पाद्याः समुद्रांशाः। अस्मादिनिष्पाद्याः पर्वतादयश्च। महत्वपदेन परमाणुव्यावृत्तिः। क्रियावत्वमूर्तत्वशब्दाभ्यां गगनादिव्यावृत्तिः। अवनिमहीधरशब्दमध्ये जलधिनिवेशः तद्वत् तयोरपि कम्पसद्भावज्ञापनार्थः। प्रसिद्धो हि उत्पातादौ भू-भूधरकम्पः। रूपान्तरम्—आकारान्तरम् ॥

कार्यत्वेन अनुमते—सपक्षे। अन्यत्र—पक्षे। सपक्षेऽपि घटादौ कार्यत्वानुमेये

---

[1] भू-भूधरादिकं-थ.
[2] घटवत्—द.
[3] विवादाध्यासितं तनु—द.
[4] ज्ञानत्वम्—द.
[5] अनुमिते—थ.
[6] कार्यानुमेये— I

घटमणिकादिषु कृतेषु [1]कार्यदर्शनानुमित[1]कर्तृगततन्निर्माणशक्तिज्ञानः पुरुषः अदृष्टपूर्वं विचित्रसन्निवेशं नरेन्द्र[2]भवनम्[2] आलोक्य, अवयवसंनिवेशविशेषेण तस्य कार्यत्वं निश्चित्य, तदानीमेव कर्तुः तज्ज्ञानशक्तिवैचित्र्यम् अनुमिनोति ।

अतः तनुभुवनादेः कार्यत्वे सिद्धे: सर्वसाक्षात्कारतन्निर्माणादिनिपुणः कश्चित् पुरुषविशेषः सिद्ध्यत्येव ॥

[ सिद्धसाधनत्वनिरासः, अनुमानान्तरप्रदर्शनं च ]

किं च सर्वचेतनानां धर्माधर्मनिमित्तेऽपि सुखदुःखोपभोगे. चेतनानधिष्ठितयोः [3]तयोः अचेतनयोः[3] फलहेतुत्वानुपपत्तेः, सर्वकर्मानुगुणसर्वफलप्रदानचतुरः कश्चित् आस्थेयः । वर्धकिना अनधिष्ठितस्य वास्यादेः अचेतनस्य देशकालाद्यनेकपरिकर-संनिधानेऽपि यूपादिनिर्माणसाधनत्वादर्शनात् ।

---

ज्ञानशक्ती । तद्वत् पक्षेऽपि कार्यत्वस्य प्रतिपन्नत्वात् ज्ञानशक्ती अनुमीयेते इति न अशक्य-क्रियत्वम् अशक्यज्ञानत्वं च इत्यर्थः ।

अतः—सावयवत्वादिहेतोः निरुपाधिकत्वात् ॥

धर्माधर्मनिमित्तेऽपि इति सिद्धसाधनत्वशङ्कासूचनम् । अनधिष्ठितयोः . . . . अनुपपत्तेः इति अन्वयव्याप्तिस्थेम्ने व्यतिरेकव्याप्त्युक्तिः । धर्माधर्मौ स्वसाक्षात्कारिचेतनाधि-ष्ठितावेव कार्यकरौ : अचेतनत्वात् , वास्यादिवत् इत्यनुमानशरीरम् । जीवैः धर्माधर्मसाक्षात्कार-तत्पूर्वकतदधिष्ठानायोगात् जीवविलक्षणसिद्धिः । अनधिष्ठितस्य कार्यकरत्वायोगात् जीवैः साक्षात्कारतत्पूर्वकाधिष्ठानायोगाच्च सिद्धसाधनं च परिहृतम् (श्रु. प्र) । देश . . . . धानेऽपीति वास्यादेः यूपाद्यकरणत्वस्य चेतनव्यतिरिक्तसहकार्यन्तराभावप्रयुक्तत्वशङ्काव्या-वृत्त्यर्थम् ।

---

[1] कार्यत्वदर्शनानुमत—आ, इ, ङ, झ., कार्यत्वदर्शनानुमित—वा.

[2] भुवनम्—थ.

[3] अचेतनयोः तयोः—न.

बीजाङ्कुरादेः पक्षान्तर्भावेन, तैः व्यभिचारापादनं श्रोत्रियवेतालानाम्, अनभिज्ञता[1]विजृम्भितम् । तत एव सुखादिभिः व्यभिचार[2]वचन[2]मपि तथैव ।

न च लाघवेन उभयवादिसंप्रतिपन्नक्षेत्रज्ञानामेव ईदृशाधिष्ठातृत्वकल्पनं युक्तम्ः तेषां सूक्ष्मव्यवहितविप्रकृष्टदर्शनाशक्तिनिश्चयात् । दर्शनानुगुणैव हि सर्वत्र[3] कल्पना[3] । न च क्षेत्रज्ञवत् ईश्वरस्य अशक्तिनिश्चयोऽस्ति ।

अतः प्रमाणान्तरतः न तत्सिद्ध्यनुपपत्तिः । समर्थकर्तृपूर्वकत्वनियतकार्यत्व-हेतुना सिद्ध्यन् स्वाभाविकसर्वार्थसाक्षात्कारतन्नियमनशक्तिसंपन्न "एव[4]" सिद्ध्यति ॥

---

बीजाङ्कुरादेरिति अचेतनस्यापि अनधिष्ठितस्य बीजादेः अङ्कुरोत्पादकत्वदर्शनात् व्यभिचारः इति शङ्कां परिहरति । अङ्कुरशब्दोपादानेन कार्यत्वहेतोः अङ्कुरादौ व्यभिचारशङ्कापरिहारः फलितः ।

[उभयवादिनः—तार्किकाः वेदान्तिनश्च । संप्रतिपन्नाः—निर्विवादमभ्युपगताः] तेषामिति । एकेन्द्रियकल्पनस्य लाघवेऽपि एकेन्द्रियस्य शब्दादिसकलविषयग्रहणाशक्तेर्हि अनेकेन्द्रियकल्पनम् । तस्मात् लाघवार्थम् अशक्तस्य कार्यकरत्वकल्पनमयुक्तमिति भावः । दर्शनेति । उपपन्नमेव हि कल्पनीयम्ः न च जीवानां सूक्ष्मव्यवहितादिदर्शनशक्तिः दृष्टा इत्यर्थः ।

अत इति अवान्तरानुमानेन ईश्वरसिद्धिनिगमनम् । समर्थेति । व्याप्तिबलात् कार्यानुगुणज्ञानशक्तिमान कर्ता सिद्ध्यतु । तस्य कथं क्षेत्रज्ञवैलक्षण्यम् ? ज्ञानं हि देहेन्द्रियादिसापेक्षम् इति शङ्कायां पक्षधर्मताबलसिद्धमर्थमाह । स्वाभाविकेति, अस्वाभाविकत्वे कर्मानुगुणपरिमितज्ञानशक्तिमत्त्वं स्यादिति तद्व्युदासार्थः ॥

---

[1] ज्ञान—द.　[2] दर्शनवचन—वा.

[3] शक्तिकल्पना-झ, वा.　[4] एव हि—वा.

[ कार्यत्वहेतोः विरुद्धताव्युदासः ]

यत्तु—[1]अनैश्वर्याद्या[1]पादनेन धर्मविशेषविपरीतसाधनत्वम्—उन्नीतम्,

तत् अनुमानवृत्तानभिज्ञत्वनिबन्धनम् : सपक्षे सहदृष्टानां सर्वेषाम्, कार्यस्य अहेतुभूतानां च धर्माणां लिङ्गिनि अप्राप्तेः ।

[2]एतदुक्तं[2] भवति—केनचित् किञ्चित् क्रियमाणं स्वोत्पत्तये कर्तुः स्वनिर्माणसामर्थ्यम्, स्वोपादानोपकरणज्ञानं च अपेक्षते । न तु अन्यासामर्थ्यम् अन्याज्ञानं च : हेतुत्वाभावात् । [3]स्व[3]निर्माणसामर्थ्य-स्वोपादानोपकरणज्ञानाभ्यामेव स्वोत्पत्तौ उपपन्नायाम्, सम्बन्धितया दर्शनमात्रेण अकिञ्चित्करस्य '[4]अर्थान्तराज्ञानादेः[4]' हेतुत्वकल्पनायोगात्—इति ।

किञ्च क्रियमाणवस्तुव्यतिरिक्तार्थाज्ञानादिकं किं सर्वविषयं क्रियोपयोगि, उत कतिपयविषयम् ?

न तावत् सर्वविषयम् : [5]न हि[5] कुलालादिः क्रियमाणव्यतिरिक्तं किमपि न [6]जानाति[6] ।

नाऽपि कतिपयविषयम् : सर्वेषु कर्तृषु तत्तदज्ञानाशक्त्यानियमेन सर्वेषाम-

---

अहेतुभूतानामिति व्याप्त्यभावः अभिप्रेतः ।

केनचिदिति विशेषविरोधं परिहर्तुम् अपेक्षितानपेक्षितांशविवेकमाह । अकिञ्चित्करस्येति । अनन्यथासिद्धान्वयव्यतिरेकाभ्यां हि हेतुत्वनिश्चयः । न हि सति भावमात्रं हेतुत्वम् ; किन्तु सत्येव भावः इति भावः ।

सर्वेष्विति । न हि कुड्यादिनिर्माणानुगुणज्ञानसामर्थ्याभावः घटनिष्पत्तिहेतुः : तदनुगुणज्ञानसामर्थ्यवतोऽपि घटादिनिष्पादकत्वदर्शनात् इत्यर्थः ।

---

[1] अनैश्वर्या–इ, वा.
[2] एवमुक्तम्–थ.
[3] सर्व–न.
[4] अर्थान्तरादेः–ई.
[5] न–थ.
[6] विजानाति–आ, झ, वा.

ज्ञानादीनां व्यभिचारात् ।

अतः कार्यत्वस्य [1]असाधकानाम्[1] अनीश्वरत्वादीनां लिङ्गिनि [2]अप्राप्तिरिति[2], न विपरीतसाधनत्वम् ॥

[ शरीरस्य कार्योपयोगित्वशङ्कापरिहारौ ]

कुलालादीनां दण्डचक्रा[3]द्यधिष्ठानं[3] शरीरद्वारेणैव दृष्टमिति, जगदुपादानोपकरणाधिष्ठानम् ईश्वरस्य अशरीरस्य अनुपपन्नम्—इति चेत्,

न, सङ्कल्पमात्रेणैव परशरीरगतभूत[4]वेतालगरलाद्यपगम[4]विनाशदर्शनात् ।

कथम् [5]अशरीरस्य[5] परप्रवर्तनरूपः सङ्कल्पः ?—इति चेत्,

न शरीरापेक्षः सङ्कल्पः शरीरस्य सङ्कल्पहेतुत्वाभावात् । मन एव हि सङ्कल्पहेतुः । तदभ्युपगतम् ईश्वरेऽपि । कार्यत्वेनैव ज्ञानशक्तिवत् मनसोऽपि प्राप्तत्वात् ।

मानसः सङ्कल्पः सशरीरस्यैव, सशरीरस्यैव समनस्कत्वात्–इति [6]चेत्,

न[6] : मनसः नित्यत्वेन देहापगमेऽपि [3]मनः[4] सद्भावेन [7]अनैकान्त्यात्[7] ।

---

असाधकानामिति । साध्यानुपयोगित्वेन अन्यथासिद्धानां सहदृष्टानाम् अपि धर्माणां व्यतिरेकाभावेन व्याप्तिशून्यत्वात् अप्राप्तेः इति भावः ॥

कुलालादीनामिति । सहदृष्टेष्वपि कार्यानुपयोगिनां प्राप्तिः न स्यात् । शरीरं हि कार्योपयोगि इति शङ्का ।

ईश्वरेऽपीति । ईश्वरस्य मनःसम्बन्धोक्तिः न्यायैकदेशिमतेन ।

अनैकान्त्यात्—व्याप्त्यभावात् । अशरीरेऽपि मनःसम्बन्धस्य विद्यमानत्वाद्वा अनैकान्त्यम् । मनसः नित्यत्वेऽपि, चेतनस्य कार्यकरत्वे शरीरसम्बन्धसापेक्षत्वमस्ति । मनसि

---

[1] असाधनानां—थ. [2] अप्राप्तेरिति— झ, वा.

[3] द्यधिष्ठानत्वं—वा. [4] वेतलाद्यपगम—थ.

[5] अशरीरेश्वरस्य—वा. ईश्वरस्य—इ, झ. [6] चेत्—वा.

[7] अनैकान्तिकत्वात्—आ, इ, घ, झ.

अतः विचित्रावयवसंनिवेशविशेषतनुभुवनादिकार्यनिर्माणे पुण्यपाप[1]परवशः परिमित[1]शक्तिज्ञानः क्षेत्रज्ञः न प्रभवतीति, निखिलभुवननिर्माण[2]चतुरः[2] अचिन्त्यापरिमितज्ञानशक्त्यैश्वर्यः अशरीरः सङ्कल्पमात्रसाधनपरिनिष्पन्नानन्तविस्तारविचित्ररचनप्रपञ्चः पुरुषविशेषः ईश्वरः [3]अनुमानेनैव[3] सिद्ध्यति ॥

[ ब्रह्मणि शास्त्राप्रामाण्यनिगमनम् ]

अतः प्रमाणान्तरावसेयत्वात् ब्रह्मणः, न एतद्वाक्यम् ब्रह्म प्रतिपादयति ।

किञ्च अत्यन्तभिन्नयोरेव मृद्द्रव्य कुलालयोः निमित्तोपादानत्वदर्शनेन,

---

नित्ये सत्यपि मुक्तात्मनः कार्यकरत्वाभावात् । न हि मुक्तात्मनः बुद्धि-सुखादिकं मनो जनयतीति चोद्यमस्ति ।

अतः विचित्रेति मीमांसकं प्रति प्रतिबन्द्या परिहारं हृदि निधाय पक्षधर्मताबलं दर्शयन् ईश्वरसिद्धिं निगमयति । विभुद्रव्यसंयोगिनः परिस्पन्दवतो घटादेः स्पर्शवत्त्वनियमेऽपि [तादृशस्यैव] मनसः न स्पर्शवत्त्वमङ्गीक्रियते । . . . . महिमगुणशालिनः तैजसस्य रूपोपलम्भनियमे दृष्टेऽपि चक्षुषि रूपोपलम्भः नाऽङ्गीकृतः । कार्यारम्भकस्य सावयवत्वव्याप्तिः परमाणुषु भग्ना । तस्मात् अनेकविरोधपरिहाराय एकव्याप्तिभङ्गः न्याय्यः । अतः मनसः कार्यकरत्वे शरीरसम्बन्धसापेक्षत्वं भोगसाधनमनस्त्वप्रयुक्तमित्यङ्गीकार्यम् इति भावः (श्रु. प्र) ॥

अतः प्रमाणेति । साधकान्तरसिद्धत्वात् जगत्कारणवस्तुनि शास्त्रस्य अप्रामाण्यं निगमयति ।

किं चेति । निमित्तमात्रम् अनुवदतः शास्त्रस्य अनुमानसापेक्षत्वात्, तद्विरुद्धनिमित्तोपादानैक्यं न शास्त्रं प्रतिपादयति । पक्षीकृतेषु क्षित्यादिषु द्रव्येषु सावयवत्वस्यैव कार्यत्व-

---

[1] परवशपरिमित—द. [2] निपुणः—द.

[3] अनुमानेन—इ, झ, वा.

आकाशादेः निरवयव[1]द्रव्यस्य[1] कार्यत्वानुपपत्त्या च न एकमेव ब्रह्म कृत्स्नस्य जगतः निमित्तम्, उपादानं च प्रतिपादयितुं [2]शक्नोतीति[2] ॥

[ सिद्धान्तोपक्रमः, तत्र परमसाध्यप्रतिज्ञा ]

एवं प्राप्ते ब्रूमः—यथोक्तलक्षणं ब्रह्म [3]जन्मादि[3]वाक्यं बोधयत्येव ।

कुतः ?

शास्त्रैकप्रमाणकत्वात् ब्रह्मणः ॥

[ पूर्वपक्षानुभाषणपूर्वकं दूषणम् ]

यदुक्तम्—सावयवत्वादिना कार्यं सर्वं जगत्, कार्यं च तदुचितकर्तृविशेषपूर्वकं दृष्टमिति, निखिलजगन्निर्माणतदुपादानोपकरणवेदनचतुरः कश्चित् अनुमेयः—इति,

तदयुक्तम्, मही-महार्णवादीनां कार्यत्वेऽपि एकदैव [4]एकेनैव[4] निर्मिताः इत्यत्र

---

प्रयोजकतया निरवयवद्रव्यस्य अकार्यत्वं पूर्वमेव प्रतिपन्नमिति, पश्चात् शास्त्रम् निरवयवद्रव्योत्पत्तिं न प्रतिपादयति । श्रुतिलिङ्गादिष्वपि पौर्वापर्यं हि प्राबल्यदौर्बल्यहेतुः इति भावः ॥

शास्त्रैकप्रमाणकत्वात्—शास्त्रेतरप्रमाणागोचरत्वात् ॥

एकं कार्यत्वमिति । एकं कार्यत्वं घटादेरिव युगपदेककर्तृकत्वयोग्यम् इति शङ्काद्योतकम् 'एक'मिति पदम् । कार्यत्वस्य एकत्वं नाम एकसामग्रीपूर्वकत्वम् । तत्सिद्ध्यर्थम् 'एकस्य' इत्युक्तम् । न हि एका व्यक्तिः अनेकसामग्रीसाध्या ; एककार्यावच्छिन्नस्य सर्वस्य हेतोः एकसामग्रीत्वात् ।

---

[1] द्रव्यत्वात्–आ.
[2] शक्नोति–इ.
[3] जगज्जन्मादि–वा
[4] एकेन–पा.

प्रमाणाभावात् । न च एकस्यघटस्येव सर्वेषाम् एकं कार्यत्वम् , येन एकदैव [1]एकः[1] कर्ता स्यात् । पृथग्भूतेषु कार्येषु कालभेद-कर्तृभेददर्शनेन कर्तृ-कालैक्य-नियमादर्शनात् ।

न च क्षेत्रज्ञानां विचित्रजगन्निर्माणाशक्त्या, कार्यत्वबलेन तदतिरिक्तकल्पनायाम् अनेककल्पनानुपपत्तेश्च [2]एक एव कर्ता[2] भवितुमर्हतीति , क्षेत्रज्ञानामेव उपचितपुण्यविशेषाणां शक्तिवैचित्र्यदर्शनेन, तेषामेव अतिशयितादृष्टसंभावनया च तत्तद्विलक्षणकार्यहेतुत्वसंभवात् तदतिरिक्तात्यन्तादृष्टपुरुषकल्पना[3]नुपपत्तेः[3] ।

न च युगपत् [4]सर्वोत्पत्तिः सर्वोच्छित्तिश्च[4] प्रमाणपदवीम् अधिरोहतः ; अदर्श-

---

घटस्येवेति । एकत्वेऽपि अनेककर्तृकगोपुरादिव्यवच्छेदार्थम् । एकदैव एककर्त्रन्वययोग्यत्वं घटशब्देन विवक्षितम् । एकघटस्य एकं कार्यत्वं यादृशं दृश्यते, तादृशं परिमितैकावयवविनिष्ठं कार्यत्वमेव एकदैव एककर्तृकत्वसंभावनापादकम् । तच्च महीमहीधरादीनां न दृश्यत इत्यर्थः । स्यादिति संभावितत्वमात्रमुच्यते । न हि एकघटस्यापि एककर्तृकत्वनियमः ; अनेकैरपि एकघटनिष्पादनसंभवात् । पृथग्भूतेष्विति । अत्र विपुलत्वमपि गर्भितम् । बहुषु विपुलेषु च कार्येषु कर्तृकालैक्यनियमादर्शनात्, मह्यादयोऽपि एकदैव एकेनैव निर्मिता इत्यत्र प्रमाणाभावात् तदयुक्तम् इति अध्याहारेण (अनुषङ्गेण) ग्रन्थान्वयः (श्रु. प्र) ।

विचित्रशब्देन अस्मदाद्यशक्यत्वार्थम् अतिविपुलत्वम् अतिसूक्ष्मत्वं च विवक्षितम् । क्षेत्रज्ञानामेवेति । क्षेत्रज्ञातिरिक्ते कल्प्ये सति हि—अनेककल्पनात् एककल्पनस्य न्याय्यत्वम् । क्षेत्रज्ञानामेव कर्तृत्वोपपत्त्या तदतिरिक्तो न कल्पयितव्य इत्यर्थः । सम्भावनयेति 'सर्वेभ्यः कामेभ्यो ज्योतिष्टोमः' इत्यादिभिः क्षित्यादिस्रष्टृत्वानुगुणातिशयितादृष्टसंभावना । तदतिरिक्तेति । 'धर्मिकल्पनातः वरं धर्मकल्पना' इति न्यायात् ईश्वरकल्पनात् अदृष्टविशेषकल्पनमेव वरम् इति भावः ।

न च युगपदिति । क्षेत्रज्ञस्य सर्गे शरीरसापेक्षत्वात् , सर्वसंहारदशायां तस्य

---

[1] एक एव—इ, घ, ङ, झ.
[2] एकः कर्ता—द., एककर्ता—थ.
[3] असिद्धिः—वा, असिद्धिता—ध.
[4] सर्वोच्छित्तिः सर्वोत्पत्तिश्च—आ.

नात्, क्रमेणैव उत्पत्तिविनाशदर्शनाच्च। कार्यत्वेन सर्वोत्पत्ति-विनाशयोः कल्प्यमानयोः, दर्शनानुगुण्येन [1]कल्पनायां[1] विरोधाभावाच्च ॥

[ फलितदूषणप्रदर्शनम् ]

[2]अतः बुद्धि[2]मदेककर्तृकत्वे साध्ये-कार्यत्वस्य अनैकान्त्यम्, पक्षस्य अप्रसिद्धविशेषणत्वम्, साध्यविकलता च दृष्टान्तस्य, सर्वनिर्माणचतुरस्य एकस्य अप्रसिद्धेः। बुद्धिमत्कर्तृत्वमात्रे [3]साध्ये — सिद्धसाधनता[3] ॥

[ विकल्पनपूर्वकं मुखान्तरेण दूषणम् ]

सार्वज्ञ्य-सर्वशक्तियुक्तस्य कस्यचिदेकस्य साधकम् इदं कार्यत्वम् — [4]किं युगपदु[4]त्पद्यमानसर्ववस्तुगतम्? उत क्रमेणोत्पद्यमानसर्ववस्तुगतम्?

युगपदुत्पद्यमानसर्ववस्तुगतत्वे — कार्यत्वस्य [5]असिद्धता[5]। क्रमेणोत्पद्यमानसर्ववस्तुगतत्वे — अनेककर्तृत्वसाधनात् विरुद्धता।

अत्राऽपि एककर्तृकत्वसाधने — प्रत्यक्षानुमान[6]विरोधः[6], शास्त्रविरोधश्च, 'कुम्भकारो जायते', 'रथकारो [7]जायते'[7] इत्यादिश्रवणात् ॥

---

शरीराभावात् तदानीं शरीरानपेक्षः कर्ता जीवविलक्षणः स्यात् इत्यत्रोत्तरम्। कार्यत्वेन — कृतिसाध्यत्वेन। तृतीया च इत्थम्भावार्था। विरोधाभावात् — व्याप्तिविरोधाभावात् ॥

अतश्शब्दः 'तदयुक्तम्' इत्यरभ्य उक्तानामर्थानां हेतुत्वपरः। बुद्धिमच्छब्दः चलनादिषु तृणादेरिव क्रियाश्रयत्वमात्रलक्षणकर्तृत्वव्यावृत्त्यर्थः। अनैकान्त्यमिति। अनेककर्तृकरथगोपुरादिषु कार्यत्वस्य विद्यमानत्वात् इति भावः। पक्षस्येति — सर्वज्ञ-सर्वशक्तिककर्तृकत्वपक्षे दूषणम्। न हि अभिमतत्वमिव तादृशकर्तृकत्वात् अन्यत्र दृष्टम्। साध्यविकलतां : कार्येषु घटादिष्वदर्शनात् ॥

---

[1] कल्पनायामपि—इ, झ.　[2] बुद्धि—ड.
[3] सिद्ध साध्यता—वा., साध्ये सिद्धसाध्यता—थ.　[4] युगपदु—ई.
[5] असिद्धिता—ध., असिद्धिः—वा.　[6] विरोधश्च—इ, ज, झ, वा.
[7] जायते च—न.

[ कार्यत्वहेतोः प्रकाशान्तरेण विरुद्धत्वोपपादनम् ]

अपि च सर्वेषां कार्याणां शरीरादीनां (च) सत्त्वादिगुणकार्यरूपसुखाद्यन्वय-दर्शनेन, सत्त्वादिमूलत्वम् [1]अवश्या[1]श्रयणीयम्। कार्यवैचित्र्यहेतुभूताः कारण[2]गताः विशेषाः[2] सत्त्वादयः। तेषां कार्याणां तन्मूलत्वापादनं तद्युक्तपुरुषान्तःकरणविकार-द्वारेण। पुरुषस्य च तद्योगः कर्ममूलः इति, कार्यविशेषा[3]रम्भायैव[3] ज्ञानशक्तिवत् कर्तुः कर्मसम्बन्धः [4]कार्यहेतुत्वेनैव[4] अवश्याश्रयणीयः; ज्ञानशक्तिवैचित्र्यस्य च कर्ममूलत्वात्।

इच्छायाः कार्यारम्भहेतुत्वेऽपि, विषयविशेषविशेषितायाः तस्याः सत्त्वादि-[5]मूलत्वेन[5] कर्मसम्बन्धः [6]अवर्जनियः[6]।

अतः क्षेत्रज्ञा एव कर्तारः, न तद्विलक्षणः कश्चित् अनुमानात् सिद्ध्यति। भवन्ति [7]च[7] प्रयोगाः—

---

[सत्त्वादि—सत्त्वरजस्तमांसि।] सुखादि—सुखदुःखमोहाः। सुखाद्यन्वयः—सुखादिहेतुत्वावस्थान्वयः। सत्त्वादिमूलत्वम्—सत्त्वादिगुणकद्रव्योपादानत्वम्। कारणशब्दः निमित्तोपादानसाधारणः। तद्योगः—सत्त्वादिगुणान्वयः। अवश्याश्रयणीयः—अवर्ज-नीयः। सत्त्वादिगुणकं शरीराद्युपादानं द्रव्यं सत्त्वादिगुणान्वयविकृतान्तःकरणः पुरुषः अधिति-ष्ठति। गुणान्वयश्च कर्ममूलः इति कर्मवश्यत्वप्रसङ्गः इत्यर्थः।

इच्छाया इति। इच्छायाः सर्गस्थेमादिविषयत्वं, तत्राऽपि विचित्रसर्गादिविषयत्वं च सत्त्वादिमूलत्वेन कर्ममूलम् इत्यर्थः।

प्रयोगाः—प्रतितर्काः।

---

[1] अवश्यमा—वा.

[2] गतविशेषाः—थ.

[3] रम्भाय इव—थ.

[4] कार्यत्वहेतुत्वेनैव—ड.

[5] मूलकत्वेन—पा.

[6] अवश्याश्रयणीयः—आ.

[7] चात्र—आ.

1. [1]तनुभुवनादि[1]- क्षेत्रज्ञकर्तृकम् ; कार्यत्वात् , [2]घटवत्[2] ।

2. ईश्वरः—कर्ता न भवति ; प्रयोजनशून्यत्वात् , [3]मुक्तात्मवत्[3] ।

3. ईश्वरः—कर्ता न भवति ; अशरीरत्वात् , तद्वदेव ।

न च क्षेत्रज्ञानां स्वशरीराधिष्ठाने व्यभिचारः ; तत्राऽपि अनादेः सूक्ष्मशरीरस्य [4]सद्भावात्[4] ।

4. विमतिविषयः कालः—न लोकशून्यः ; कालत्वात् , वर्तमान-[5]कालवत् इति[5] ॥

[ कार्यत्वहेतुकानुमानस्य प्रकारान्तरेण दूषणम् ]

अपि च किं ईश्वरः सशरीरः, अशरीरो वा कार्यं करोति ?

न तावत् अशरीरः, [6]अशरीरस्य[6] कर्तृत्वानुपलब्धेः । मानसान्यपि कार्याणि सशरीरस्यैव सम्भवन्ति , मनसः नित्यत्वेऽपि अशरीरेषु मुक्तेषु तत्कार्यादर्शनात् ।

---

तनुभुवनादीति । इदं प्रत्यनुमानं, प्रतितर्को वा । अन्ये प्रतितर्का एव । कार्यत्वे क्षेत्रज्ञकर्तृकत्वप्रसङ्गः, कर्तृत्वेसापेक्षत्वप्रसङ्गः, कर्तृत्वे सशरीरत्वप्रसङ्गः इत्यर्थः ।

अनादेः—बीजाङ्कुरवत् प्रवाहानादेः ।

विमतीत्यादि । अत्र सूर्यपरिवृत्तिसंख्याविशेषावच्छेदात् पूर्वत्वेन परत्वेन च कालस्य पक्षीकृतत्वात् न आश्रयासिद्धिरिति ।

नित्यत्वेऽपि इति अपिशब्देन स्वमते नित्यत्वानभ्युपगमः सूचितः ।

---

[1] तनुभवनादि–च　　[2] घटादिवत्–आ, च, द, न.

[3] मुक्तवत्–इ, वा.　　[4] भावात्–आ, इ, थ, द.

[5] कालवत्–अ, इ, वा.　　[6] तस्य–वा.

नाऽपि सशरीरः ; विकल्पासहत्वात् । तच्छरीरं किं नित्यम्, [1]उत अनित्यम्[1] ?

न तावत् नित्यम् ; [2]सावयवस्य तस्य नित्यत्वे[2], जगतोऽपि नित्यत्वाविरोधात् ईश्वरासिद्धेः ।

नाऽपि अनित्यम्, तद्व्यतिरिक्तस्य तच्छरीरहेतोः तदानीमभावात् ।

स्वयमेव हेतुः — इति चेत्,

न ; अशरीरस्य तदयोगात् ।

अन्येन शरीरेण सशरीरः—इति चेत्,

न ; अनवस्थानात् ॥

[ पुनः प्रकारान्तरेण विकल्प्य दूषणम् ]

सः किं [3]सव्यापारः[3], निर्व्यापारो वा ?

अशरीरत्वादेव न सव्यापारः ।

---

जगतः—भू-भूधरादेः ।

तद्व्यतिरिक्तस्येति । तच्छरीरहेतोः शरीरान्तरस्य अभावात् इत्यर्थः ।

स्वयमेवेति । स्वयंशब्दः ईश्वरः ।

तदयोगात्—हेतुत्वायोगात् ।

अनवस्थानादिति । प्रामाणिकी परम्परा न दोषः इति चेत्, शरीरित्वकर्मवश्यत्वं स्यात् इति भावः । कर्मवश्यत्वप्रसङ्गस्य प्रागुक्तत्वात् इहाऽपि अनवस्थादूषणस्य कर्मवश्यत्व-प्रसङ्गपर्यन्तत्वमभिप्रेतमित्यवगम्यते ॥

---

[1] उत अनित्यं वा—इ, अनित्यं वा—वा

[2] सावयवस्य नित्यत्वे—थ, सावयवस्य नित्यत्वेन—वा. [3] सव्यापारो वा—आ.

नाऽपि निर्व्यापारः कार्यं करोति ; मुक्तात्मवत् ।

कार्यं जगत् इच्छामात्रव्यापारकर्तृकम्—इत्युच्यमाने, पक्षस्य अप्रसिद्धविशेषणत्वम्, [1]दृष्टान्तस्य च[1] साध्यहीनता ॥

[ अनुमानदूषणोपसंहारः ]

अतः दर्शनानुगुण्येन [2]ईश्वरानुमानं[2] दर्शनानुगुण्यपराहतम्—इति शास्त्रैकप्रमाणकः परब्रह्मभूतः [3]सर्वेश्वरः[3] पुरुषोत्तमः ॥

[ शास्त्रस्य अर्थप्रतिपादने दोषगन्धानवकाशः ]

शास्त्रं तु सकलेतरप्रमाणपरिदृष्टसमस्तवस्तु[4]विसजातीयं[4] सार्वज्ञ्य-सत्यसङ्कल्पत्वादि-

---

मुक्तात्मवदिति । अशरीरस्य निर्व्यापारत्वे, निर्व्यापारस्य कार्याकरणे च दृष्टान्तः मुक्तात्मा । व्यापारश्च प्रयत्नः विवक्षितः ।

कार्यं जगदिति । इच्छाविशेषस्य हेतुत्वे हि गुणवश्यताप्रसङ्गः पूर्वमुक्तः । इच्छामात्रमेव व्यापारः इत्यलोऽत्तरमिदम् । मात्रशब्देन सत्त्वादिगुणान्वयतन्मूलकर्मसम्बन्धव्यावृत्तिः ॥

परस्य ब्रह्मणः ईश्वरानतिरिक्तत्वज्ञापनार्थः । सर्वेश्वरशब्दः । अनेन 'तमीश्वराणां परमं महेश्वरम्' इति श्रुतिः स्मारिता भवति । देवताविशेषनिर्णयार्थं 'महान् प्रभुर्वै पुरुषः सत्यस्यैष प्रवर्तकः' इति श्रुतिस्मारणार्थः पुरुषोत्तमशब्दः ॥

सार्वज्ञ्येति सर्वविजातीयत्वं दर्शयति। सार्वज्ञ्येत्यादिशब्दः ब्रह्मविशेषणं गुणविशेषणं वा।

---

[1] दृष्टान्तस्य—आ, द.

[2] ईश्वरसाधनम्—अ. ईश्वरानुमानसाधनं—द.

[3] सर्वेश्वरेश्वरः—वा.

[4] विजातीयं—इ.

[1]मिश्रा[1]नवधिकातिशयापरिमितोदारगुणसागरं [2]निखिल[2]हेयप्रत्यनीकस्वरूपं प्रतिपादय-तीति, न प्रमाणान्तरावसितवस्तु[3]साधर्म्य[3]प्रयुक्तदोषगन्धप्रसङ्गः ॥

[ निमित्तोपादानयोरैक्यस्य अनुपलम्भपराहतत्वनिरासः ]

यत्तु—निमित्तोपा[4]दानयोः ऐक्यम्[4], आकाशादेः [5]निरवयवद्रव्यस्य[5] [6]कार्यत्वं च[6] अनुपलब्धम् अशक्यप्रतिपादनम्—इत्युक्तम्,

[7]तदपि[7] अविरुद्धमिति,

'प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्' (ब्र. सू. 1-4-23)

'न वियदश्रुतेः' (ब्र. सू. 2-3-1)

इत्यत्र प्रतिपादयिष्यते ॥

[ अधिकरणार्थोपसंहारः ]

अतः प्रमाणान्तरागोचरत्वेन शास्त्रैकविषयत्वात्,

'यतो वा इमानि भूतानि' (तै. उ. भृ. 1-2)

[8]इत्यादि[8]वाक्यम् उक्तलक्षणं ब्रह्म प्रतिपादतीति सिद्धम् ॥ २ ॥

॥ इति शास्त्रयोनित्वाधिकरणम् ॥ ३ ॥

---

तद्विततिरूपत्वात् अन्येषां गुणानाम् एकैकम् अनवधिकातिशयाः गुणाः अपरिमिताः—निस्संख्याताः इत्यर्थः ॥

[उक्तलक्षणं ब्रह्म—जगज्जन्मादिकारणत्वलक्षणं ब्रह्म ।]

॥ इति शास्त्रयोनित्वाधिकरणम् ॥

---

[1] मिश्रम—अ.
[2] अखिल—थ.
[3] सामर्थ्य—द.
[4] दानैक्यम्—पा.
[5] निरवयवस्य—आ, इ, ट.
[6] च कार्यत्वं—अ, ड.
[7] तत्—इ, द.
[8] इति—आ, इ, घ, ङ, झ, थ, द.

[ साफल्यरूपतात्पर्यलिङ्गसमर्थनपरम् ]

## समन्वयाधिकरणम् ॥ १-१-४ ॥

[ अधिकरणार्थः — ब्रह्मणः स्वतःपरमपुरुषार्थतया अन्वयः ]

[ अवान्तरसङ्गतिः ]

यद्यपि [1]प्रमाणान्तरागोचरं ब्रह्म[1]; तथाऽपि प्रवृत्तिनिवृत्तिपरत्वाभावेन [2]सिद्धरूपं ब्रह्म[2] न शास्त्रं [3]प्रतिपादयति[3], इत्याशङ्क्याह—

## *तत्तु समन्वयात् ॥ १-१-४ ॥

---

शब्दस्य परिनिष्पन्नब्रह्मप्रतिपादनशक्तत्वेऽपि, ब्रह्मणोऽपि शब्देन प्रतिपत्तुं शक्यत्वेऽपि, [प्रतिपत्तेः] यत्नसाध्यत्वात्, प्रमित्युत्पादने बुभुत्साख्यपरिकरापेक्षा विद्यते। सा च अज्ञातत्वपुरुषार्थत्वप्रयुक्ता। तत्राऽवान्तरपेटिकारूपेण प्रथमेन सूत्रद्वयेन शब्दद्वारकम् अर्थद्वारकं च शक्तिमत्वं प्रतिपादितम्। अत्र सूत्रययान्तरम् अवान्तरपेटिकान्तरं बुभुत्साहेतुनिरूपणपरम्। तत्र प्रथमेन तृतीय[शास्त्रयोनित्वात् ]सूत्रेण अज्ञातत्वरूपः बुभुत्साहेतुः उक्तः। अथ [समन्वयाधिकरणे] प्रयोजनत्वरूपः बुभुत्साहेतुरुच्यते चतुर्थेन। अर्थे प्रतिपन्ने हि प्रयोजनाप्रयोजनत्व-

---

सूत्रार्थः — तत्—शास्त्रप्रमाणकत्वम्, [ब्रह्मणः—जिज्ञास्यत्वाभिमतस्य परस्य ब्रह्मणः, संभवति] तु—सम्भवत्येव, न असम्भवि: (कुतः?); समन्वयात्: सम्यक्—परमपुरुषार्थतया, अन्वयात्—अभिधेयतया अन्वयात्।

* शास्त्रैककारणत्वं तु ब्रह्मणस्समुपपद्यते।
पुरुषार्थतया तस्मिन् बोधकत्वेन चान्वयात् ॥ (अ. प. मा. ४)

[1] प्रमाणान्तरागोचरं—थ.

[2] सिद्धरूपं—अ.

[3] बोधयति—इ.

[सूत्रव्याख्यानम्]

प्रसक्ताशङ्कानिवृत्त्यर्थः 'तु'शब्दः । तत्—शास्त्रप्रमाणकत्वं ब्रह्मणः सम्भवत्येव ।

कुतः ?

---

चिन्ता । प्रतिपत्तिश्च लक्षणतः इति, द्वितीयं जन्मादिसूत्रम् । जन्मादिकं लक्षणं चेत्, मानान्तरात् तत्सिद्धिः स्यात् इति शङ्कायाः सङ्गतत्वात्, तृतीयं 'शास्त्रयोनित्वात्' इति सूत्रम् । अज्ञातत्वेऽपि अप्रयोजने बुभुत्सानुदयात् प्रयोजनरूपत्वमत्र निरूप्यते इति अयमेव क्रमः । यद्यपीति । अज्ञातत्वं नाम बुभुत्साहेतुः यद्यपि अस्तीत्यर्थः । तथाऽपीत्यादि । प्रयोजनम्—सुखं, दुःखनिवृत्तिश्च । शास्त्रस्य तत्पर्यवसायित्वं तदुपायप्रवृत्तिनिवृत्तिबोधनद्वारा । तच्च न सिद्धपरत्वेऽस्ति ; तस्य प्रवृत्ति-निवृत्तिरूपत्वाभावात् । तस्मात् प्रयोजनपर्यवसायित्वाभावेन, बुभुत्साख्यपरिकराभावात् शास्त्रं सिद्धे प्रमितिं न जनयति इत्यर्थः (श्रु. प्र) ।

विषयस्तु—शास्त्रारम्भ एव प्रधानः । तत्र अवान्तरविषयः पुनः—अशेषमपि वेदान्तवाक्यजातम् । संशयकारणम्—वैदिकानाम् अवैदिकानां प्रामाण्याप्रामाण्यसाधारण्यम् । तदर्थविचारस्तु—वेदान्तशास्त्रम् आरम्भणीयम्, अनारम्भणीयं वा ? इति (अधि. चि) । ब्रह्मणः शास्त्रप्रमाणकत्वं सम्भवति, न ? इति द्वितीयविचारः । तदर्थं प्रवृत्तिनिवृत्तिरूपप्रयोजनशून्यानां वेदान्तवाक्यानां ब्रह्मपरतया अन्वयः सम्भवति, न ? इति। तदर्थं किं शब्दस्य प्रामाण्यं प्रवृत्तिनिवृत्तिपरतया ? उत पुरुषार्थपरतया ? इति । शब्दस्य प्रवृत्तिनिवृत्तिपरतयैव प्रामाण्ये, ब्रह्मणः सिद्धरूपस्य शास्त्रप्रमाणकत्वाभावात, तद्विचारानारम्भः । शब्दस्य पुरुषार्थपरतयैव प्रामाण्ये, पुरुषार्थभूतब्रह्मणः शास्त्रप्रमाणकत्वात्, तद्विचारस्य आरम्भणीयत्वं फलितम् (श्रु. प्र) ।

तुशब्द इति । सर्वेषां सूत्राणां तत्तच्छङ्कायामवतरणेऽपि अस्मिन् सूत्रे तुशब्दः प्रदर्शनार्थः । सम्भवत्येव इति तुशब्दफलितम्।

समन्वयात्— [1]परमपुरुषार्थतया[1] अन्वयः समन्वयः। परम[2]पुरुषार्थभूतस्यैव[2] ब्रह्मणः अभिधेयतया अन्वयात्।

[समन्वयोपपादनम्]

[3]एवमिव[3] समन्वितो हि औपनिषदः पदसमुदायः—

'यतो वा इमानि भूतानि जायन्ते' (तै. उ. भृ. 1-2)

'सदेव सोम्येदमग्र असीदेकमेवाद्वितीयम् (छां. उ. 6-2-1)

'तदैक्षत बहु स्यां प्रजायेयेति। तत्तेजोऽसृजत' (छां. उ. 6-2-3)

'ब्रह्म वा इदमेकमेवाग्र आसीत्' (बृ. उ. -4- )

'आत्मा वा इदमेक एवाऽग्र आसीत्' (ऐत. उ. 1-1)

---

अभिधेयतयेति। शास्त्रेण [इति शेषः]। शास्त्रस्य धीस्थत्वात् 'शास्त्रेण' इति कण्ठोक्त्यभावः॥

एवमिवेति। इवशब्दः एवार्थः। एवमेवेत्यर्थः। औपनिषदः पदसमुदायः परमपुरुषार्थभूते ब्रह्मणि प्रतिपादकत्वेन समन्वित एव हि इत्यर्थः। पदसमुदायः—वाक्यम्। औपनिषदवाक्यबहुत्वेऽपि तेषां वाक्यैकवाक्यभावेन एकार्थपरतया एकराशित्वव्यञ्जनाय एकवचनम् (श्रु. प्र)। यतो वेति, प्रतिपत्तिक्रमानुरोधेन प्रथमं लक्षणवाक्यम्।

सदेवेति, प्रापकं कारणवाक्यम्। ब्रह्म वेति, सच्छब्दस्य बृहदबृहत्साधारणत्वात् विशेषकवाक्यम्। लक्षणवाक्यस्य कारणानुवादित्वेन प्रापकवाक्योपजीवित्वात् उपजीव्येषु प्रापकवाक्येष्वेव विशेषनिर्धारणज्ञापनार्थं हि 'ब्रह्म वा' इति वाक्यमुपात्तम्। आत्मा वा इति, सद्ब्रह्मशब्दयोः ईक्षणान्वयलिङ्गात् अविद्यावृत्तवस्तुपरत्वेऽपि, तयोः शब्दयोः साधारणतया, शब्दसामर्थ्यात् अविद्यावृत्तिनिश्चयः तत्र नाऽस्तीति शब्दशक्त्यैव विशेषज्ञापनार्थम्।

---

[1] पुरुषार्थतया—अ, इ, वा. [2] पुरुषार्थस्यैव—आ, थ, द., पुरुषार्थभूतस्य—वा.

[3] एवमेव—आ.

'तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः' (तै. उ. आन. 1-2)

'एको ह वै नारायण आसीत्' (महा. उ. 1-1)

'सत्यं ज्ञानमनन्तं ब्रह्म' (तै. उ. आन. 1-1)

'आनन्दो ब्रह्म' (तै. उ. भृ. 6-1)

इत्येवमादिः ॥

[ प्रवृत्तिनिवृत्त्यन्वयस्य प्रामाण्यव्यापकत्वाभावोपपादनम् ]

न च — व्युत्पत्तिसिद्धपरिनिष्पन्नवस्तुप्रतिपादनसमर्थानां पदसमुदायानां

---

ब्रह्मशब्दस्य साधारणत्वं नाम बहुष्वर्थेषु प्रयुज्यमानत्वम्; न तु प्रवृत्तिनिमित्तसाधारण्यम्। तस्माद्वेति, सर्वशाखाप्रत्ययन्यायेन विनाऽपि प्रकरणादेव 'ब्रह्म'शब्दः आत्मपरः इति ज्ञापनार्थम्, एतदधिकरणापेक्षितानन्दरूपताप्रतिपादकप्रकरणस्थतया तज्ज्ञापनार्थं च। 'सत्यं ज्ञानमनन्तं ब्रह्म' इति हि तत्र प्रकृतम्। 'अन्योऽन्तर आत्मानन्दमयः' 'आनन्दं ब्रह्मणो विद्वान्' इति च तत्र वक्ष्यते।

एको ह वै इति। अत्र 'छागो वा मन्त्रवर्णात्' इति न्यायात् सामान्यशब्दानां देवताविशेषे पर्यवसानं दर्शयति। महोपनिषत्प्रतिपादिते नारायणे एव सद्ब्रह्मात्मादिशब्दाः पर्यवस्यन्तीति भावः। सत्यमिति, कारणतया निर्दिष्टस्य ब्रह्मणः शङ्कितदोषव्यावर्तकं शोधकवाक्यम्। आनन्दो ब्रह्मेति, उक्तगुणविभूत्यादिविशिष्टस्य ब्रह्मणः पुरुषार्थत्वज्ञापनाय। आनन्दत्वं हि अनुकूलत्वम्। तच्च स्वत इष्टत्वम्। इत्येवमादिरिति। औपनिषदः पदसमुदायः इति पूर्वेणाऽन्वयः ॥

न चेति। [अन्यपरत्वम् इत्यत्राऽन्वयः।] प्रवृत्तिनिवृत्त्यन्वयस्यः प्रामाण्यव्यापकत्वं नाऽस्तीति अनेनाह। व्युत्पत्तिसिद्धेति प्रथमसूत्रार्थानुवादः। सिद्धवस्तुनः अपुरुषार्थत्वात् शास्त्रं [सिद्धं वस्तु] प्रतिपादयितुं न शक्नोति। [सिद्धे वस्तुनि] प्रतिपन्नेऽपि [शास्त्रात्, शास्त्रस्य] न तत्र तात्पर्यम्; सिद्धे व्युत्पत्त्यभावात् इति न वाच्यम्; सिद्धे वस्तुनि व्युत्पत्त्युप-

अखिलजगदुत्पत्ति- [1]स्थिति - विना [1]हेतुभूताशेषदोषप्रत्यनीकापरिमितोदारगुणसागरानवधिकातिशयानन्दस्वरूपे ब्रह्मणि समन्वितानां प्रवृत्तिनिवृत्तिरूपप्रयोजनविरहात् अन्यपरत्वम् ; स्वविषयावबोधपर्यवसायित्वात् सर्वप्रमाणानाम् ।

न च प्रयोजनानुगुणा प्रमाणप्रवृत्तिः ; प्रयोजनं हि प्रमाणानुगुणम् ।

न च प्रवृत्ति-निवृत्त्यन्वयविरहिणः प्रयोजनशून्यत्वम् ; पुरुषार्थान्वयप्रतीतेः । तथा स्वरूपपरेष्वपि 'पुत्रस्ते जातः' 'नाऽयं सर्पः' इत्यादिषु हर्ष-भयनिवृत्तिरूपप्रयोजनवत्त्वं दृष्टम् ॥

---

पादनात् इति भावः । अखिलेति, प्रमाणान्तरगोचरत्वप्रयुक्तान्यपरत्वव्युदासाय उदाहृतकारणवाक्यप्रतिपन्नमर्थमाह । अशेषेति, शोधकवाक्यप्रतिपन्नं कारणवाक्यैश्च सिद्धमर्थमाह । साङ्ख्याभिमतप्रकृतिपुरुषपरत्वं दुर्वचम् इति भावः । आनन्दस्वरूपेति, पुरुषार्थपरत्वाभावात् अन्यपरत्वम् इत्येतद्व्युदासाय । अन्यपरत्वम्---तात्पर्याभावः, ब्रह्मणि प्रामाण्याभावः । स्वविषयेति । प्रमाणानि हि स्वस्वविषयावबोधे पर्यवस्यन्ति, न तु प्रवृत्तिनिवृत्त्योः इत्यर्थः ।

न च प्रयोजनेति । अत्र चशब्दः व्यापकद्वयनिषेधसमुच्चये । यथा प्रवृत्तिनिवृत्त्यन्वयस्य प्रामाण्यव्यापकत्वम् अयुक्तम् ; तथा प्रयोजनस्य प्रामाण्यव्यापकत्वम् अयुक्तम् इत्यर्थः ।

न च प्रवृत्तीति । 'वाक्यस्य' इति अध्याहारः । [ विरहिणः वाक्यस्य इत्यन्वयः ।] पुरुषार्थेति । प्रवृत्ति निवृत्तिरूपत्वाभावेऽपि पुरुषार्थभूतस्यैव ब्रह्मणः अभिधेयतया अन्वयप्रतीतेः इत्यर्थः । न चेत्यत्र चशब्दः व्याप्यत्वनिषेधद्वयसमुच्चये । यथा प्रामाण्यस्य प्रवृत्तिनिवृत्त्यन्वयव्याप्यत्वं नाऽस्ति, तथा प्रयोजनस्याऽपि प्रवृत्ति निवृत्त्यन्वयव्याप्यत्वं नाऽस्ति इत्यर्थः (श्रु. प्र) ॥

---

[1] विनाश—वा.

## [ विस्तरेण पूर्वपक्षावतरणम् ]

### [ तत्र भाट्टमीमांसकानां पूर्वपक्षविधा ]

अत्राऽऽह—न वेदान्तवाक्यानि ब्रह्म प्रतिपादयन्ति ; प्रवृत्तिनिवृत्त्यन्वयविरहिणः शास्त्रस्य आनर्थक्यात् ।

यद्यपि प्रत्यक्षादीनि वस्तुयाथात्म्यावबोधे पर्यवस्यन्ति ; तथाऽपि शास्त्रं प्रयोजनपर्यवसाय्येव । न हि लोकवेदयोः प्रयोजनरहितस्य कस्यचिदपि वाक्यस्य प्रयोगः उपलब्धचरः । [1]न च[1] किञ्चित्प्रयोजनमनुद्दिश्य वाक्य[2]प्रयोगः, श्रवणं[2] वा सम्भवति । तच्च प्रयोजनं प्रवृत्ति-निवृत्तिसाध्येष्टानिष्टप्राप्ति-परिहारात्मकम् उपलब्धम्—

'अर्थार्थी राजकुलं गच्छेत्'

'मन्दाग्निः नाऽम्बु पिबेत्'

---

अत्राऽऽहेति । एतावति अधिकरणार्थे उ लब्धस्वदूष्यप्रसङ्गः पूर्वपक्षी आहेत्यर्थः । [अयं पूर्वपक्षः न वेदान्ताः परिनिष्पन्नं ब्रह्म प्रतिपादयन्तीत्यन्तः ।] अन्वयविरहिण इति । तदन्वयाभावे प्रतिपादनमेव न पूर्येत इति भावः । तथा च वार्तिकम्—

'यावत् खलु प्रमातॄणां प्रवर्तन-निवर्तने ।
शब्दा न कुर्वते तावन्न निराकाङ्क्षबोधनम् ॥'

इति । शासनाद्धि शास्त्रम् । शास्त्रं च प्रवर्तननिवर्तनात्मकम् । तत्र वार्तिकम्—

'प्रवृत्तिर्वा निवृत्तिर्वा नित्येन कृतकेन वा ।
पुंसां येनोपदिश्येत तच्छास्त्रं तूपपद्यते ॥' इति ।

किञ्चिदिति । स्वसम्बन्धि परसम्बन्धि वा, अल्पं प्रभूतं वा ; वाक्यप्रयोगादेः यत्नसाध्यत्वात्, यत्नस्य च प्रयोजनेन विना अनुपपन्नत्वात् इत्यर्थः । वाक्यानां प्रयोजनपर्यवसायित्वादेव हि पुनरुक्तेः प्रयोजनाभावात् दूषणत्वम् । ['अर्थार्थी, मन्दाग्निः'] इति लोके,

---

[1] न—ट., न हि—इ. [2] प्रयोगश्रवणं—द.

'स्वर्गकामो यजेत' (तै. सं. 2-5-5)

'न कलञ्जं भक्षयेत्'

[1]इत्येवमादिषु[1] ॥

[ पूर्वपक्षे सिद्धमात्रव्युत्पत्तिदूषणम् ]

यत्पुनः—सिद्धवस्तुपरेष्वपि 'पुत्रस्ते जातः', 'नाऽयं सर्पः, रज्जुरेषा' इत्यादिषु [2]हर्ष-भयनिवृत्ति[2]रूपपुरुषार्थान्वयो दृष्टः—इत्युक्तम्,

तत्र किं पुत्रजन्माद्यर्थात् पुरुषार्थावाप्तिः, उत तज्ज्ञानात् ?—इति विवेचनीयम् ।

सतोऽपि [3]अज्ञातस्यार्थस्य[3] अपुरुषार्थत्वेन, तज्ज्ञानात्—इति चेत्,

तर्हि असत्यपि अर्थे ज्ञानादेव पुरुषार्थः सिध्यतीति, अर्थपरत्वाभावेन, प्रयोजनपर्यवसायिनोऽपि शास्त्रस्य न अर्थसद्भावे प्रामाण्यम् ।

तस्मात् सर्वत्र प्रवृत्ति-निवृत्तिपरत्वेन, ज्ञानपरत्वेन वा प्रयोजनपर्यवसानमिति, कस्याऽपि वाक्यस्य परिनिष्पन्ने वस्तुनि तात्पर्यासम्भवात्, न वेदान्ताः परिनिष्पन्नं ब्रह्म प्रतिपादयन्ति ॥

[ निष्प्रपञ्चीकरणनियोगवादः जरन्मायावादिनाम् ]

अत्र कश्चिदाह—वेदान्त[4]वाक्यान्यपि[4] कार्यपरतयैव ब्रह्मणि [5]प्रमाणभावम्[5] अनुभवन्ति ।

---

['स्वर्गकामः, न कलञ्जम्'] इति वेदे च प्रयोगः प्रवृत्तिनिवृत्तिपरत्वेन ॥

तस्मात् इति पूर्वपक्षस्य [अस्य] उपसंहारः ॥

अत्र कश्चिदाहेति । [कार्यत्वमविरुद्धमिति इत्येतदन्तोऽयमनुवादः ।] जरन्मायावादिपक्षौ द्वौ विद्येते । तयोरन्यतरः निष्प्रपञ्चीकरणनियोगवादोऽयम् ।

---

[1] इत्यादिषु—आ.
[2] हर्षभयादिनिवृत्ति—वा.
[3] अर्थस्य अज्ञातस्य—आ.
[4] वाक्यानि—ड.
[5] प्रमाणत्वम्—न.

कथम् ?

'निष्प्रपञ्चम् [1]अद्वितीयं ज्ञानैकरसं[1] ब्रह्म — अनाद्यविद्यया सप्रपञ्चतया प्रतीयमानं, निष्प्रपञ्चं कुर्यात्' इति ब्रह्मणः प्रपञ्च[2]प्रविलय[2]द्वारेण विधिविषयत्वम्— इति ।

कोऽसौ द्र -दृश्यरूपप्रपञ्च[2]प्रविलय[2]द्वारेण साध्यज्ञानैकरस[3]ब्रह्मविषयो[3] विधिः ?

'न दृष्टेर्द्रष्टारं पश्येः . . . न मतेर्मन्तारं मन्वीथाः' (बृ. उ. 5-4-2)

[4]इत्यादिः[4] । 'द्रष्टृ-दृश्यरूपभेदशून्यं दृशिमात्रं ब्रह्म कुर्यात्' इत्यर्थः । स्वतसिद्ध-स्याऽपि ब्रह्मणः निष्प्रपञ्चतारूपेण [5]कार्यत्वम्[5] अविरुद्धम् इति ॥

---

कथमिति । कार्यपरस्य वाक्यस्य सिद्धवस्तुनि प्रमाणभावः कथम् ? इत्यभिप्रायः ।

कुर्यात् इतीत्यत्र इतिशब्दः प्रकारपरः । ब्रह्मण इति । विषयत्वेनाऽन्वयः इत्यर्थः । विलयद्वारेणेति, सिद्धरूपस्य ब्रह्मणः विधिविषयत्वानुपपत्तिशङ्कापरिहारार्थम् । अत्र सिद्धस्य साध्यत्वम् आकारभेदात् अविरुद्धम् इति गर्भितम् । विषयत्वमिति । अत्र इतिशब्दः समाप्तौ । कथम् इत्यस्य उत्तरत्वेन 'इत्थम्' इति वा अर्थः ।

कोऽसाविति । कतिपयनाशेऽप्यशक्तस्य विश्वप्रपञ्चनाशविधिः अशक्यः इत्यभिप्रायः। विधिः—विधिवाक्यम् । न दृष्टेरिति । आविद्यकस्य प्रपञ्चस्य बुद्धिनिवृत्तिमात्ररूपः विलयः इत्यभिप्रायेण [इदं] वाक्यम् । दृष्टिव्यतिरिक्तत्वाविशेषात् ज्ञेयनिषेधोऽपि फलितः । आदिशब्दोपात्तैः श्रुत्यन्तरैः कण्ठोक्तश्च । आत्यन्तिकनिवृत्तेः असिद्धत्वात् विधेयत्वं च युक्तमिति भावः । शून्यशब्देन आत्यन्तिकनिवृत्तिर्विवक्षिता । दृशिमात्रमिति । मात्र-शब्देन द्रष्टृ-दृश्यकल्पकावि त्तिः । तत एव हि आत्यन्तिकत्वसिद्धिः ॥

---

[1] ज्ञानैकरसं—द.

[2] विलय—इ, ज.

[3] विषयो—ड.

[4] इत्येवमादिः—इ.

[5] का[र्य]साध्यत्वम्—इ, साध्यत्वम्—वा.

[ एतन्मतदूषणं प्रधानपूर्वपक्षिणा मीमांसकेन ]

तदयुक्तम् ; नियोगवाक्यार्थवादिना हि — नियोगः, नियोज्यविशेषणम्, विषयः, करणम्, इतिकर्तव्यता, प्रयोक्ता च [1]वक्तव्याः[1] । [2]तत्र हि[2] नियोज्य-

---

तदयुक्तमिति, अधिकरणपूर्वपक्षी मीमांसकः तं दूषयति । [विधिः न सम्भवति इत्यन्तमिदम् ] (श्रु. प्र) । नियोगः—कार्यम्–अपूर्वम्–लिङर्थः । स एव वाक्यमुख्यार्थः इति प्राभाकराः (भा. द) ।

'कार्यत्वेन नियोज्यं च स्वात्मनि प्रेरयन्नसौ ।
नियोग इति मीमांसानिष्णातैरभिधीयते ॥' (द. उ) ।

नियोज्यः—प्रेर्यः पुरुषः । तद्विशेषणं काम्यस्थले स्वर्गकामत्वादि । नित्यस्थले यावज्जीव-मित्युक्तजीवनादि (भा. द) ।

'नियोज्यः स च कार्यं यः स्वकीयत्वेन बुद्ध्यते ।
स्वर्गकामादयः सर्वे नियोज्यत्वेन सङ्गताः ॥
स्वर्गकामादिभिः शब्दैर्वक्तव्या इत्यवस्थितम् ।
कृतितत्साध्यमध्यस्थो यागादिर्विषयो मतः ॥' (द. उ) ॥

विषयः—यागादिः । विषिण्वन् विषयः इति व्युत्पत्त्या कृतिसाध्यापूर्वप्रतिपत्तिवेलायां कृत्य-वच्छेदकत्वेन सः यागादिः विषयः । करणम्—स एव यागादिः, कार्य(अपूर्व)निष्पत्तौ करणम् (श्रु. प्र) । विषयः करणं च धात्वर्थ एव यागादिः । क्वचित्तु 'दध्नेन्द्रियकामस्य जुहुयात्' इत्यादौ होमः विषयः, दधि करणम् इति भेदः स्यात् । इतिकर्तव्यता च अङ्गजातम् (भा. द) । 'कथं कर्तव्यम्' इत्यपेक्षायाम्, 'इत्थं कर्तव्यम्' इति करणस्य प्रकाराणाम् उपदेशात्, इतिकर्तव्यं करणम् । इतिकर्तव्यता—करणस्य प्रकारः । अङ्गम् इति यावत् । यथा दर्शपूर्णमासादौ प्रयाजादिः (द. उ) । प्रयोक्ता—कर्ता नियो-ज्याभिन्नः । वक्तव्या इति । न त्वया वक्तुं शक्यते इति भावः । तत्र—तेषु

---

[1] वक्तव्यः—द. [2] तत्र—द.

विशेषणम् अनुपादेयम् । तच्च निमित्तं, फ द्विधा ।

अत्र किं नियोज्यविशेषणम् ? तच्च किं निमित्तं [1]फलं वा[1] ?—इति विवेचनीयम् ।

ब्रह्मस्वरूपयाथात्म्यानु[2]भवश्चेत्[2], नियोज्यविशेषणम् ?

तर्हि, न तत् निमित्तम्; जीवनादिवत् [3]तस्य[3] असिद्धत्वात् ।

निमित्तत्वे च, तस्य नित्यत्वेन अपवर्गोत्तरकालमपि जीवननिमित्ताग्निहोत्रादिवत् [4]नित्यतद्विषया[4]नुष्ठानप्रसङ्गः ।

नाऽपि फलम्; नैयोगिकफलत्वेन स्वर्गादिवत् अनित्यत्वप्रसङ्गात् ।

कश्चाऽत्र नियोगविषयः ?

ब्रह्मैव—इति चेत्,

न; तस्य नित्यत्वेन [5]अभव्य[5]रूपत्वात्, अभावार्थत्वाच्च ।

---

वक्तव्येषु । अनुपादेयमिति । उपादेयं—विधेयम् । तद्व्यतिरिक्तमित्यर्थः ।

अत्र—निष्प्रपञ्चीकरणनियोगे ।

जीवनादिवदिति । 'यावज्जीवमग्निहोत्रं जुहोति' इत्यत्र जीवनस्य सिद्धत्वात् यथा निमित्तत्वम्, न तथा इत्यर्थः (श्रु. प्र) ।

निमित्तत्वे च . . . . प्रसङ्ग इति । निमित्तस्य नित्यत्वात्, नैमित्तिकस्य नित्य शक्यत्वाच्च नित्यं तदनुष्ठानप्रसङ्ग इति भावः ।

अभव्यरूपत्वात्—असाध्यत्वात् । अभावार्थत्वाच्च—क्रियारूपत्वाभावाच्च । साध्यत्वं फलस्याप्यस्तीति तद्व्यावर्तकं भावार्थत्वम् । तदुभयाभावात् इति यावत् ।

---

[1] फलं—थ. [2] भव इति चेत्—वा.

[3] अस्य-वा. [4] नित्यं तद्विषया—इ, झ., नित्यवद्विषया—अ.

[5] असाध्य—आ, थ.

निष्प्रपञ्चं [1]ब्रह्म[1] साध्यम्—इति चेत्,

[2]साध्यत्वेऽपि[2] फलत्वमेव। अभावार्थत्वात् न विधिविषयत्वम्।

[3]साध्यत्वञ्च[3] कस्य? किं ब्रह्मणः? उत प्रपञ्चनिवृत्तेः?

न तावत् ब्रह्मणः; सिद्धत्वात्, अनित्यत्वप्रसक्तेश्च।

अथ प्रपञ्चनिवृत्तेः; न तर्हि ब्रह्मणः साध्यत्वम्।

प्रपञ्चनिवृत्तिरेव विधिविषयः—इति चेत्,

न; तस्याः फलत्वेन विधिविषयत्वायोगात्। प्रपञ्चनिवृत्तिरेव हि मोक्षः। स च फलम्। अस्य च नियोगविषयत्वे—नियोगात् प्रपञ्चनिवृत्तिः, प्रपञ्चनिवृत्त्या नियोगः इति इतरेतराश्रयत्वम्॥

[प्रकारान्तरेण नियोगवादिमतदूषणम्]

अपि च किं निवर्तनीयः प्रपञ्चः—मिथ्यारूपः, सत्यो वा?

मिथ्यारूपत्वे, ज्ञाननिवर्त्यत्वादेव नियोगेन न किञ्चित्प्रयोजनम्।

---

फलत्वमेवेति। फलव्यतिरिक्तत्वाभावात् विषयत्वमयुक्तमिति तात्पर्यम्।

सिद्धत्वादित्यादि। सिद्धत्वात् न साध्यत्वम्। साध्यत्वाङ्गीकारे तु भावरूपत्वे सति साध्यत्वात् अनित्यत्वप्रसक्तिश्चेत्यर्थः।

न तर्हि ब्रह्मणः साध्यत्वमिति। प्रपञ्चनिवृत्तेः साध्यत्वे, ब्रह्मणः साध्यत्वाभावात् न विधिविषयत्वम् इत्यर्थः।

स चेति। फलभूतायाः न विधिविषयत्वमित्यर्थः। फलत्वविवक्षया अस्येत्युक्तिः। इतरेतराश्रयत्वमिति। फलत्वं विषयत्वं चेत्याकारद्वयाभ्युपगमे, प्रपञ्चनिवृत्तिः फलत्वान्नियोगसाध्या। विषयत्वात् प्रपञ्चनिवृत्त्या नियोगसिद्धिः इत्यन्योन्याश्रयः इत्यर्थः॥

---

[1] ब्रह्मैव—आ. [2] साध्यत्वे—थ.

[3] नियोगसाध्यत्वं—थ.

नियोगस्तु निवर्तकज्ञानमुत्पाद्य, तद्द्वारेण [1]प्रपञ्चस्य निवर्तकः[1] — इति चेत्,

तत् स्ववाक्यादेव जातमिति, नियोगेन न प्रयोजनम्। वाक्यार्थज्ञानादेव ब्रह्मव्यतिरिक्तस्य [2]कृत्स्नस्य मिथ्याभूतस्य[2] प्रपञ्चस्य बाधितत्वात्, सपरि[3]करस्य[3] नियोगस्याऽ[4]सिद्धिश्च[4]।

प्रपञ्चस्य निवर्त्यत्वे—प्रपञ्चनिवर्तकः नियोगः, किं ब्रह्मस्वरूपमेव, उत तद्व्यतिरिक्तः?

यदि ब्रह्मस्वरूपमेव—[5]निवर्तकस्य[5] नित्यतया निवर्त्यप्रपञ्चसद्भाव एव न सम्भवति। [6]नित्यत्वेन[6] नियोगस्य विषयानुष्ठानसाध्यत्वं च न घटते।

अथ ब्रह्मस्वरूपव्यतिरिक्तः—तस्य कृत्स्नप्रपञ्चनिवृत्तिरूपविषयानुष्ठानसाध्यत्वेन प्रयोक्ता च नष्ट इति, आश्रयाभावात् असिद्धिः। प्रपञ्चनिवृत्तिरुपविषयानुष्ठानेनैव ब्रह्मस्वरूपव्यतिरिक्तस्य कृत्स्नस्य निवृत्तत्वात्, न [7]नियोग[7]निष्पाद्यं मोक्षाख्यं फलम्।

किञ्च प्रपञ्चनिवृत्तेः नियोगकरणस्य इतिकर्तव्यताभावात्, अनुपकृतस्य च करणत्वायोगात्, न करणत्वम्।

---

स्ववाक्यात्—प्रपञ्चमिथ्यात्व-ब्रह्मनिर्विशेषत्वपरवाक्यात्। नियोगस्य निष्फलत्व-दूषणोक्त्या नियोज्यविशेषणं च दूषितं भवति। नियोगसाध्यफलस्यैव फलतया नियोज्य-विशेषणत्वात्, इह तदयोगाच्च। [वाक्यार्थज्ञानात्—तत्त्वमस्यादिमहावाक्यजन्यात् शाब्दा-परोक्षरूपात् ज्ञानात्।]

निवर्त्यत्वे—सत्यत्वेन नियोगनिवर्त्यत्वे।

तस्येत्यादिना नष्टः इत्यन्तेन प्रयोक्तृदूषणं च कृतं भवति। प्रपञ्चनिवृत्तीत्यादिना प्रपञ्चसत्यत्वेऽपि फलाभावोक्तिमुखेन नियोगो दूषितः।

किञ्चेति करणम्, इतिकर्तव्यतां च दूषयति।

---

[1] प्रपञ्चनिवर्तकः— .
[2] मिथ्याभूतस्य—इ.
[3] कर—द.
[4] सिद्धेश्च—थ.
[5] निवर्तकम्—आ, झ.
[6] नित्यत्वेन च—आ.
[7] नियोगेन—द.

कथम् इतिकर्तव्यताभावः? — इति चेत्,

इत्थम्, अस्य इतिकर्तव्यता भावरूपा, अभावरूपा वा?

भावरूपा च करणशरीरनिष्पत्ति[1]तदनुग्रहकार्यभेद[1]भिन्ना। उभयविधा च न सम्भवति।

न हि मुद्गरा[2]भिघाता[2]दिवत् [3]कृत्स्नस्य प्रपञ्चस्य निवर्तकः[3] कोऽपि दृश्यते इति दृष्टार्था न सम्भवति।

नाऽपि निष्पन्नस्य करणस्य कार्योत्पत्तौ अनुग्रहः सम्भवति; अनुग्राहकांश-[4]सद्भावेन[4] कृत्स्नप्रपञ्चनिवृत्तिरूपकरणस्वरूपासिद्धेः।

ब्रह्मणः अद्वितीयत्वज्ञानं प्रपञ्चनिवृत्तिरूपकरणशरीरं निष्पादयति—इति चेत्,

तेनैव प्रपञ्चनिवृत्ति[5]रूपो मोक्षः[5] सिद्ध इति, न करणादिनिष्पाद्यम् अवशिष्यते इति पूर्वमेवोक्तम्।

---

करणशरीरेति। करणशरीरनिष्पत्तिः अवघातवत् प्रोक्षणवच्च दृष्टादृष्टार्थतया द्विधा इति च अभिप्रेतम्। उभयविधा—निष्पादिका, अनुग्राहिका च। न सम्भवतीति। कृत्स्नप्रपञ्चनिवृत्तिरूपकरणशरीरनिष्पादिका भावरूपा दृष्टार्था न सम्भवतीत्यर्थः। अदृष्टार्था अस्ति चेत्, प्रपञ्चसत्यत्वप्रसङ्गः अप्रामाणिकत्वं चेति स्फुटमिति न कण्ठोक्तम्।

नाऽपि . . . स्वरूपासिद्धेरिति। अनुग्राहको हि करणान्तरभावी। कृत्स्न-प्रवृत्तिरूपकरणानन्तरम् अनुग्राहकः तिष्ठति चेत्, करणमेव न सिद्धं स्यात्। यदा करणसिद्धिः, न तदानीम् अनुग्राहको विद्यते इति अनुग्राहकासम्भवः इत्यर्थः।

ब्रह्मण इति, इतिकर्तव्यतासद्भावमुखेन करणसिद्धिं शङ्कते।

करणादिनिष्पाद्यमिति। करणनिष्पाद्यः नियोगः। आदिशब्दार्थः नियोगनिष्पाद्यं फलम्। करणं चेत्, स्वकार्यकरं स्यात्। तदभावात् करणत्वमयुक्तम् इत्यर्थः।

---

[1] तदनुग्राहकभेद—इ.
[2] घाता—थ.
[3] कृत्स्नप्रपञ्चनिवर्तकः—वा.
[4] सद्भावे—इ, ट.
[5] रूपमोक्षः—थ.

अभाव[1]रूपत्वे[1] च—[2]अभावादेव[2], न करणशरीरं निष्पादयति ; नाऽपि [3]अनुग्राहकः[3] । अतः निष्प्रपञ्चब्रह्मविषयः विधिः न सम्भवति ॥

[ ध्याननियोगवादिपक्षोपक्षेपः ]

अन्योऽप्याह—यद्यपि वेदान्तवाक्यानां न परिनिष्पन्नब्रह्मस्वरूपपरतया प्रामाण्यम् ; तथाऽपि ब्रह्मस्वरूपं सिध्यत्येव ।

कुतः ?

ध्यानविधिसामर्थ्यात् । एवमेव हि समामनन्ति—

'आत्मा वा अरे [4]द्रष्टव्यः श्रोतव्यो मन्तव्यो[4] निदिध्यासितव्यः,
(बृ. उ. 4-4-5, 6-5-6)

'य आत्माऽपहतपाप्मा . . . . सोऽन्वेष्टव्यः स विजिज्ञासितव्यः'
(छां. उ. 8-7-1)

---

अभावादेव—अभावरूपेतिकर्तव्यताया अप्रामाणिकत्वादेव । निवृत्तिरूपशमादीनां न अभावरूपेतिकर्तव्यतात्वम् , तेषां ज्ञाननिष्पादकत्वेन प्रपञ्चनिवृत्तिरूपकरणनिष्पादकत्वायोगात् इति भावः । एवकारेण पूर्वम् अदृष्टार्थभावरूपेतिकर्तव्यतायाः अप्रामाणिकत्वस्याभिप्रेतत्वं गम्यते । विधिः—नियोगः । अतः प्रवर्तकवाक्येनैव ब्रह्मस्वरूपसिद्धिः इति वक्तुं न शक्यमिति फलितम् ॥

[अन्योऽपीति आरभ्य, अनर्थकं स्यात् इत्यन्तः ध्याननियोगवादिपक्षः ]

एवमेवेति । यथा वाक्यानां ध्यानपरत्वेऽपि परिनिष्पन्नं सिध्यति तथैवेत्यर्थः । आत्मा वा इत्यादीनि ध्यानविधिवाक्यानि । निदिध्यासितव्यः इति उपासनम् , द्रष्टव्यः इति तस्य दर्शनरूपत्वं च उक्तम् । विजिज्ञासितव्यः इति सामान्यशब्दः । आत्मेत्येवेति

---

[1] स्वरूपत्वे–आ.
[2] अभावत्वादेव–अ, वा.
[3] अनुग्रहम्–वा, अनुग्राहकम्–थ, द.
[4] द्रष्टव्यः....–आ.

'आत्मेत्येवोपासीत' (बृ. उ. 3-4-7)

'आत्मानमेव लोकमुपासीत' (बृ. उ. 3-4-15)

इति । अत्र ध्यानविषयो हि नियोगः [1]'स्वविषयभूतं ध्यानं[1] ध्येयैकनिरूपणीय-मिति ध्येयम् आक्षिपति । स च ध्येयः स्ववाक्यनिर्दिष्टः आत्मा । सः किंरूपः ? इत्यपेक्षायां, तत्स्वरूपविशेषसमर्पणद्वारेण--

'सत्यं ज्ञानमनन्तं ब्रह्म' (तै. उ. आन. 1-1)

'सदेव सोम्येदमग्र [2]आसीत्[2]' (छां. उ. 6-2-1)

इत्येवमादीनां वाक्यानां ध्यानविधिशेषतया प्रामाण्यमिति, विधिविषयभूतध्यान-शरीरानुप्रविष्टब्रह्मस्वरूपेऽपि तात्पर्यमस्त्येव । अतः—

'एकमेवाद्वितीयम्' (छां. उ. 6-2-1)

'तत्सत्यं स [3]आत्मा तत्त्वमसि श्वेतकेतो[3]' (छां. उ. 6-८-7)

---

ऐक्योपासनमुक्तम् । आत्मानमेवेति स्वस्य जगत्तादात्म्योपासनम् । स्ववाक्यनिर्दिष्ट इति । आकाङ्क्षायां संनिहितमेव योग्यं चेत्, तत् परित्यक्तुं न युक्तम्; 'गामानय' इत्यादिषु तथा दृष्टमिति भावः । सः किंरूप इति । स्वरूपमात्रप्रतिपादकानां कारणशोधकवाक्यानामपि विध्यपेक्षितसमर्पकत्वेनैव प्रामाण्यमित्यर्थः । शोधितस्वरूपस्य ध्येयत्वात् सत्यादिवाक्यं प्रथममुपात्तम् । तदनुगुणार्थतया सदेवेति कारणवाक्यं पश्चादुदाहृतम् । ध्यानशरीरेति । 'अर्थेनैव विशेषो हि निराकारतया धियाम्' इति भावः । तात्पर्यमस्त्येवेति । स्ववाक्यप्रतिपन्नस्वर्गादिफलविषयस्य 'यस्मिन्नोष्णम्' इत्यादिवाक्यस्येव विधिशेषतया प्रामाण्य-मिति भावः । अतः—विधिशेषभूतस्य सिद्धार्थे तात्पर्यसद्भावात् । अद्वितीयं ब्रह्म ध्येयम् । भेदनिषेधश्रुतयश्च ब्रह्मणः अद्वितीयत्वपराः । ब्रह्मणः अद्वितीयत्वमेव भेदमिथ्यात्वम्' इति ध्यानशरीरानुप्रविष्टे भेदनिषेधे तात्पर्यमस्तीति भावः (श्रु. प्र) ।

---

[1] विषयभूतध्यानं—अ, इ, झ, ञ, ड, स्वविषयभूतध्यानं—न.

[2] आसीदेकमेवाद्वितीयम्—इ, झ. [3] आत्मा—वा.

'नेह नानाऽस्ति किञ्चन' (बृ. उ. 6-4-19)

[1]इत्यादिभिः[1] 'ब्रह्म[2]स्वरूपम्[2] एकमेव सत्यम्, [3]तद्व्यतिरिक्तं[3] सर्वं मिथ्या' इत्यवगम्यते ।

प्रत्यक्षादिभिः भेदावलम्बिना च कर्मशास्त्रेण भेदः प्रतीयते । भेदाभेदयोः परस्परविरोधे सति अनाद्यविद्यामूलत्वेनाऽपि भेदप्रतीत्युपपत्तेः, 'अभेद एव परमार्थः' इति निश्चीयते । तत्र ब्रह्मध्याननियोगेन तत्साक्षात्कारफलेन निरस्तसमस्ताविद्याकृत-विविधभेदाद्वितीयज्ञानैकरसब्रह्म[4]भावरूप[4]मोक्षः प्राप्यते ।

न च वाक्यात् वाक्यार्थज्ञानमात्रेण ब्रह्मभावसिद्धिः ; अनुपलब्धेः, विविधभेद-दर्शनानु[5]वृत्तेश्च[5] । [6]तथा च[6] सति श्रवणादिविधानम् [7]अनर्थकं[7] स्यात् ॥

---

प्रत्यक्षादिभिरिति भेदग्राहिप्रमाणविरोधात् न शास्त्रम् अद्वितीयं ब्रह्म प्रतिपादयति ; 'आदित्यो यूपः' इत्यादिवत्—इति शङ्कां परिहर्तुं, प्रत्यक्षादिभिः विरुद्धप्रतीतिम् अभ्यु-पगच्छति । भेदाभेदयोरिति । भेदप्रतीतेः अन्यथासिद्धत्वात् अनन्यथासिद्धशास्त्रावगत-मैक्यं तात्त्विकम् इत्यर्थः । ध्याननियोगेनेति ध्यानस्य विषयत्वमुक्तम् । तत्साक्षात्कार-फलेनेति । नियोगस्योपायत्वं ज्ञानद्वारकमित्यर्थः । निरस्तेत्यादिना अविद्यानिवृत्तिः फल-मित्युक्तम् । तदेव फलतया नियोज्यविशेषणम् । उपासकः प्रयोक्ता । शमादिः इति-कर्तव्यता इत्यादि अस्माकं सिद्धमिति भावः ॥

---

[1] इत्येवमादिभिः–इ, झ, वा.
[2] भावम्–पा.
[3] तदतिरिक्तं–थ.
[4] भाव–अ, इ.
[5] पपत्तेश्च–ट.
[6] तथा–अ, इ, झ, ञ, वा.
[7] अनर्थकं च–पा.

[ मायावादिकृतः ध्याननियोगवादिपक्षप्रतिक्षेपः ]

अथोच्येत—'रज्जुरेषा न सर्पः' इत्युपदेशेन सर्पभयनिवृत्तिदर्शनात् रज्जुसर्पवत् [1]वन्धस्य च[1] मिथ्यारूपत्वेन ज्ञानबाध्यतया, तस्य वाक्यजन्यज्ञानेनैव निवृत्तिः युक्ता ; न नियोगेन । नियोगसाध्यत्वे मोक्षस्य अनित्यत्वं स्यात्, स्वर्गादिवत् । मोक्षस्य नित्यत्वं हि सर्ववादिसम्प्रतिपन्नम् ॥

[ नियोगस्य विपरीतफलप्रदत्वम् ]

किं च धर्माधर्मयोः फलहेतुत्वं स्वफलानुभवानुगुणशरीरोत्पादनद्वारेणेति, ब्रह्मादिस्थावरान्तचतुर्विधशरीरसम्बन्धरूपसंसारफलत्वम् अवर्जनीयम् । तस्मात् न धर्मसाध्यो मोक्षः । तथा च श्रुतिः—

'न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति । अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः' (छां उ. 8-12-1)

इति । अशरीरत्वरूपे मोक्षे धर्माधर्मसाध्यप्रियाप्रियविरहश्रवणात्, न धर्मसाध्यम् अशरीरत्वम् इति [2]विज्ञायते[2] । न च नियोगविशेषसाध्यफलविशेषवत् ध्यान-

---

[ अथोच्येतेत्यारभ्य, पदसमुदायेन सिध्यतीति इत्यन्तः भागः साक्षान्मायावादिकृतः ध्याननियोगपक्षप्रतिक्षेपः ।] मिथ्यारूपत्वेनेति । निवर्त्यमिथ्यात्वं हि उभयसंमतम् ॥

शरीरोत्पादनद्वारेणेत्यन्तेन प्रसञ्जनीय-प्रसञ्जकयोः व्याप्तिर्दर्शिता । अवर्जनीयमित्यन्तेन प्रसङ्गः । तस्मात्—संसारफलत्वप्रसङ्गात् । व्यापकस्य संसारफलत्वस्य निवृत्त्या, व्याप्यं धर्मसाध्यत्वं च निवृत्तमित्यर्थः (श्रु. प्र) । अशरीरत्वरूपे मोक्ष इति । मोक्षस्य धर्मसाध्यत्वाभावः फलितः इत्याशयः । एवं नियोगसाध्यत्वे मोक्षस्य, धर्माधर्मफलसम्बन्धराहित्यश्रवणानुपपत्तिरिति श्रुत्यर्थापत्तिरुक्ता भवति , न च नियोगेति । यथा नियोग-

---

[1] बन्धस्यापि—इ, ङ. [2] ज्ञायते-अ, थ, द.

नियोगसाध्यम्, अशरीरत्वम्; '[1]अशरीरत्वस्य[1] स्वरूपत्वेन, असाध्यत्वात्। यथाऽहुः श्रुतयः—

'अशरीरं शरीरेष्वनवस्थेष्ववस्थितम्।
महान्तं विभुमात्मानं मत्वा धीरो न शोचति॥' (कठ. उ. 2-22)

'अप्राणो ह्यमनाः शुभ्रः' (मुण्ड. उ. 2-1-2)

'असङ्गो ह्ययं पुरुषः' (बृ. उ. 6-3-15)

इत्याद्याः। अतः अशरीरत्वरूपो [2]मोक्षः[2] नित्य इति न [3]धर्म[3]साध्यः। तथा च श्रुतिः—

'अन्यत्र धर्मादन्यत्राधर्मादन्यत्राऽस्मात् कृताकृतात्।
अन्यत्र भूताद्भव्याच्च यत्तत् पश्यसि तद्वद॥' (कठ. उ. 2-14)

इति॥

---

विशेषस्य पापनिवृत्तिः फलमुच्यते, तद्वत् नियोगविशेषस्य बन्धनिवृत्तिफलत्वं सम्भवतीत्यत्रोत्तरम्। नियोगविशेषफलविशेषशब्दाभ्यां प्रायश्चित्त-पापक्षपणे विवक्षिते। अशरीरमिति अशरीरत्वस्य स्वरूपत्वे श्रुतिः। अप्राण इति। प्राण-मनस्सम्बन्धाभावात् अशरीरत्वं सिद्धम्। सशरीरस्य हि प्राणमनःसम्बन्धः इति भावः। अतः—अशरीरत्वस्य आत्मस्वरूपत्वावगमात्। तथा च श्रुतिरिति। नियोगसाध्यत्वाभावः [श्रुत्या] कण्ठोक्तः इत्याशयः। अन्यत्र धर्मात्—धर्मादन्यत्र—धर्मेण विना। अनेन धर्मसम्बन्धराहित्यमुक्तम्। सम्बन्धश्च साध्यसाधनभावः इति भावः। अत्र कृताकृतशब्देन क्रियमाणमुच्यते। भूत-भव्यशब्दाभ्यां भूत-भविष्यती॥

---

[1] अशरीरस्य—इ.

[2] मोक्षोऽपि—द.

[3] धर्माधर्म—वा.

[ मुखान्तरेण मोक्षस्य नियोगसाध्यत्वदूषणम् ]

अपि च उत्पत्ति-प्राप्ति-विकृति-संस्कृतिरूपेण चतुर्विधं हि साध्यत्वं मोक्षस्य न सम्भवति ।

न तावत् उत्पाद्यः ; मोक्षस्य ब्रह्मस्वरूपत्वेन नित्यत्वात् ।

नाऽपि प्राप्यः आत्मस्वरूपत्वेन ; ब्रह्मणः नित्यप्राप्तत्वात् ।

नाऽपि विकार्यः ; दध्यादिवत् अनित्यत्व[1]प्रसङ्गादेव[1] ।

नाऽपि संस्कार्यः ; संस्कारो हि दोषाप[2]नयनेन वा[2] गुणाधानेन वा [3]साधयति[3] ।

न तावत् दोषापनयनेन ; नित्यशुद्धत्वाद्ब्रह्मणः ।

नाऽपि अतिशयाधानेन ; अनाधेयातिशयस्वरूपत्वात् ।

नित्यनिर्विकारत्वेन स्वाश्रयायाः पराश्रयायाश्च क्रियायाः अविषयतया, न

---

न तावदित्यादि । 'मोक्ष'शब्देन किं निवृत्ताविद्यं स्वरूपं विवक्षितम्? उत अविद्यानिवृत्तिः? इति विकल्पे, स्वरूपस्य विवक्षितत्वे चतुर्विधसाध्यत्वानुपपत्तिमाहानेन । निवृत्तेः उत्पाद्यत्वेऽपि अविनाशित्वं प्रध्वंसाभावरूपत्वात् (श्रु. प्र) ।

अत्र नित्यशुद्धपदेन परमार्थदोषानन्वयोऽभिप्रेतः ।

निर्विकारत्वेनेति । निर्विकारत्वेन क्रियाविषयत्वाभावः कथम्? इत्थम्—यद्यत् क्रियाविषयभूतं तद्धि सविकारं दृष्टम् इति । स्वाश्रयाया इत्यादि । यदा दर्पणः हस्ततले निर्घृष्यते, तदा दर्पणाश्रया क्रिया । यदा दर्पणे पाणिः निर्घृष्यते, तदा पाण्याश्रया क्रिया

---

[1] प्रसङ्गात्–इ, वा. [2] नयनेन–आ.

[3] साध्यते–वा.

निर्घर्षणेन आदर्शादिवदपि [1]संस्कार्यत्वम्[1] । न च देहस्थया स्नानादिक्रियया आत्मा संस्क्रियते ; किन्तु अविद्यागृहीतः तत्सङ्गतः अहङ्कर्ता । तत्फलानुभवोऽपि तस्यैव । [2]न च[2] अहङ्कर्तैवाऽऽत्मा ; तत्साक्षित्वात् । तथा च मन्त्रवर्णः—

'तयोरन्यः पिप्पलं स्वाद्वत्ति, अनश्नन्नन्यो अभिचाकशीति' (मुण्ड. उ. 3-1-1)

इति,

'आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः' (कण्ठ. उ. 3-4)

'एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा ।
कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च ॥' (श्वे. उ. 6-11)

'स पर्यगाच्छुक्रमकायमव्रण[3]मस्नाविरं[3] शुद्धमपापविद्धम्' (ईश. उ. 8)

इति च । अविद्यागृहीतात् अहङ्कर्तुः, [4]आत्म[4]स्वरूपम् अनाधेयातिशयं नित्यशुद्धं निर्विकारं निष्कृष्यते । तस्मात् आत्मस्वरूपत्वेन ; न साध्यो मोक्षः ॥

इति स्वाश्रयपराश्रयक्रिययोः दर्पणोदाहरणम् । अविद्यागृहीतः—अविद्याकल्पितः । तेन अतिशयाधानानुगुणविकारित्वं सूचितम् । तत्सङ्गतः—देहसङ्गतः । तत्साक्षित्वात् इति । यः यस्य साक्षी, स हि न तद्भवतीति भावः । तयोरन्य इत्यादेः अयमर्थः— अहङ्कारज्ञस्यात्मनोः एकः फलभोक्ता, अन्यः अनश्नन् इति । आत्मेन्द्रियेति अहङ्कर्तैव भोक्ता इति स्पष्टं दर्शयति । आत्मा—देहः । देहादिसम्बद्धस्य भोक्तृत्वात्, आत्मनः अशरीरत्वाप्राणत्वामनस्कत्वादिश्रवणात्, 'अनश्नन्' इति अभोक्तृत्वश्रवणाच्च भोक्तुर्विलक्षणः आत्मा इत्यभिप्रायः । एको देव इत्यत्र केवलशब्देन फलान्वयराहित्यं विवक्षितमिति तस्य अत्रोपयोगः । निर्गुणः—अगुणवश्यत्वात् अभोक्ता । साक्षी इति । अहङ्कारे व्याप्रियमाणे स्वयं साक्षिमात्रतया अवस्थानात् न भोक्तेति भावः । शुक्रम्—अविद्यारहितम्, वासनारहितं वा । शुद्धम् अपापविद्धम्—कर्मफलरहितम्, कर्मरहितं च । पर्यगात्— अमन्यत । गत्यर्थाः बुद्ध्यर्थाः । अहङ्कर्तुः आत्मस्वरूपं निष्कृष्यते इत्यन्वयः ॥

---

[1] संस्कार्यम्—इ.
[2] न हि—ड
[3] मस्नाविरं—पा
[4] आत्मनः—वा.

[ ज्ञानवैयर्थ्यशङ्कापरिहारौ ]

यद्येवम्, किं वाक्यार्थज्ञानेन क्रियते ?—इति चेत्,

मोक्षप्रतिबन्धनिवृत्तिमात्रम् इति ब्रूमः। तथा च श्रुतयः—

'त्वं हि नः पिता योऽस्माकमविद्यायाः परं पारं तारयसीति' (प्रश्न. उ. 6-8)

'श्रुतं ह्येव मे भगवद्दृशेभ्यः, तरति शोकमात्मविदिति। सोऽहं भगवः शोचामि। तं मा भगवान् शोकस्य पारं [1]तारयतु' (छां. उ. 7-1-3)

'तस्मै मृदितकषायाय तमसः पारं दर्शयति भगवान् सनत्कुमारः' (छां. उ. 7-26-2)

इत्याद्याः। तस्मात् नित्यस्यैव मोक्षस्य प्रतिबन्धनिवृत्तिः वाक्यार्थज्ञानेन क्रियते। [2]निवृत्तिस्तु साध्याऽपि प्रध्वंसाभावरूपा न विनश्यति।

'ब्रह्म वेद ब्रह्मैव भवति' (मुण्ड. उ. 3-2-9)

'तमेव विदित्वाऽतिमृत्युमेति' (श्वे. उ. 3-8, 6-15)

इत्यादिवचनं मोक्षस्य वेदनानन्तरभावितां प्रतिपादयत् नियोगव्यवधानं प्रतिरुणद्धि।

न च—विदिक्रिया[3]कर्मत्वेन वा ध्यानक्रियाकर्मत्वेन वा कार्यानुप्रवेशः,

---

तथा चेति—प्रतिबन्धनिवृत्तेरेव साध्यत्वं श्रुतिसिद्धमाह (श्रु. प्र)। न विनश्यतीति, अयं परिहारः नियोगसाध्यत्वपक्षेऽपि तुल्यः इति चेत्, न; नियोगसाध्यत्वे प्रपञ्चसत्यत्वं स्यात्, इत्यभिप्रेतमित्युक्तत्वात्। प्रतिरुणद्धीति। श्रुतिस्वारस्यम् एवं विलम्बं न सहते इति भावः।

कार्यानुप्रवेशः—नियोगशेषत्वम्। वेदनम्—ज्ञानम्। उपासनम्—ज्ञानविशेषः।

---

[1] तारयसि—आ, इ, झ, ट.
[2] तन्निवृत्तिस्तु—ङ, झ, वा.
[3] कर्मत्वेन—आ.

[1]उभयविध[1]कर्मत्वप्रतिषेधात्—

'अन्यदेव तद्विदितादथो अविदिता[2]दधि[2]' (केन. उ. 1-4)

'येनेदं सर्वं विजानाति [3]तं केन[3] विजानीयात् ?' (बृ. उ. 4-4-14)

इति,

'तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते' (केन. उ. 1-5)

इति च।

न च—एतावता शास्त्रस्य निर्विषयत्वम्; अविद्या[4]कल्पित[4]भेदनिवृत्तिपरत्वात् शास्त्रस्य। न हि इदन्तया ब्रह्म विषयीकरोति शास्त्रम्। अपि तु अविषयं प्रत्यगात्म-स्वरूपं [5]प्रतिपादयत्[5] अविद्याकल्पितज्ञान-ज्ञातृ-ज्ञेय[6]विभागं[6] निवर्तयति। तथा च शास्त्रम्—

'न दृष्टेर्द्रष्टारं [7]पश्येः[7]' (बृ. उ. 5-4-2)

इत्येवमादि ॥

---

अत्र वेदनशब्दः निष्प्रपञ्चीकरणज्ञानविशेषे विश्राम्यति, विवक्षावशात्। अतः निष्प्रपञ्ची-करणनियोगवादस्याऽपि दूषणं फलितम्। विदितात्—ज्ञेयात्। अविदितात्—ज्ञातुः। अन्यदेवेति विदिकर्मत्वनिषेधः। तदेवेति ध्यानकर्मत्वनिषेधः।

न चेति विदिकर्मत्वाभावे शास्त्रवेद्यत्वासिद्ध्या शास्त्रस्य निर्विषयत्वमाशङ्क्य परि-हरति। इदन्तया—प्रमेयतया। अपित्विति। प्रत्यगात्मस्वरूपं निर्विशेषम् अविषयतया प्रतिपादयतीत्यर्थः। तथा चेति शास्त्रस्य भेदनिवृत्तिपरत्वं दर्शयति ॥

---

1 उभय—आ.

2 दपि—आ, इ, क, छ, झ.

3 तत्केन—झ, ञ.

4 परिकल्पित—इ, वा.

5 प्रतिपाद्य—इ.

6 भेदं—आ.

7 पश्येः........न मते—वा. पश्येः........न मतेर्मन्तारं—न.

[ ज्ञानादेव बन्धनिवृत्त्यभ्युपगमे शास्त्रप्रत्यक्षविरोधशङ्का-परिहारौ ]

न च—ज्ञानादेव बन्धनिवृत्तिः—इति श्रवणादि[1]विध्यानर्थक्यम्[1], स्वभाव-प्रवृत्तसकलेतरविकल्पविमुखीकरणद्वारेण वाक्यार्थावगतिहेतुत्वात् तेषाम् ।

न च—ज्ञानमात्रात् बन्धनिवृत्तिः न दृष्टा—इति वाच्यम्, बन्धस्य मिथ्या-रूपत्वेन ज्ञानोत्तरकालं स्थित्यनुपपत्तेः । अत एव न—शरीरपातादूर्ध्वमेव बन्ध-निवृत्तिः—इति वक्तुं युक्तम् । न हि मिथ्यारूपसर्पभयनिवृत्तिः रज्जुयाथात्म्य-ज्ञानातिरेकेण सर्पविनाशमपेक्षते । [2]यदि[2] शरीरसम्बन्धः पारमार्थिकः, [3]तदा हि[3] तद्विनाशापेक्षा । स तु ब्रह्मव्यतिरिक्ततया न पारमार्थिकः ।

यस्य तु बन्धः न निवृत्तः, तस्य ज्ञानमेव न [4]जातम्[4] इत्यवगम्यते; ज्ञान-कार्यादर्शनात् । तस्मात् शरीरस्थितिः [5]भवतु वा[5] मा वा, वाक्यार्थज्ञानसमनन्तरं मुक्त एवाऽसौ ।

---

न च ज्ञानादिति । ज्ञानादेव बन्धनिवृत्तिश्चेत् शास्त्रप्रत्यक्षविरोधः स्यात् इत्याशङ्क्य शास्त्रविरोधं परिहरति अनेन । न . . . आनर्थक्यम् इति । श्रवण-मननयोरपि विधेयत्वं पूर्वपक्षिणोक्तमिति न विरोधः । स्वभावप्रवृत्तशब्देन अनादिप्रवृत्तत्वं विवक्षितम् (श्रु. प्र.) ।

न चेत्यादिना प्रत्यक्षविरोधं परिहरति । स त्विति । विप्रतिपन्नम् अपारमार्थिकम्; ब्रह्मव्यतिरिक्तत्वात्, शुक्तिरूप्यवत् इति भावः ।

यस्य तु बन्धः इत्यादिना बन्धो ह्यनुवर्तत इति कथं [ज्ञानोत्तरकालं बन्धस्य] स्थित्यनु-पपत्तिः ? इति शङ्कां परिहरति । यस्य तु अनिवृत्तः—अनिवृत्तः इति प्रतीतिः [इत्यर्थः] । कार्याभावस्य कारणाभावमात्रव्याप्यत्वाभावेऽपि सामग्र्यभावव्याप्यत्वात् भ्रमनिवृत्तिं प्रति तत्त्व-ज्ञानस्य सामग्रीत्वात्, तदभावेन ज्ञानाभावः कल्प्यत इति न प्रत्यक्षविरोधः इत्यर्थः । तस्मात् . . . मुक्त एवाऽसौ इति । दग्धपटे पटप्रतिभासवत् शरीरप्रतिभासः अनुवर्तेत वा निवर्तेत वा; बन्धस्य छिन्नमूलतया दग्धपटवत् अकार्यकरः इति भावः ।

---

[1] लिङ्गानर्थक्यम्—आ.
[2] यदि च—आ.
[3] तर्हि—ज्ञ, वा.
[4] ज्ञातम्—आ.
[5] भवतु—न.

अतः—न [1]ध्याननियोग[1]साध्यो मोक्षः— इति, न ध्यानविधिशेषतया ब्रह्मणः-सिद्धिः ; अपि तु—

'सत्यं ज्ञानमनन्तं ब्रह्म' (तै. उ. आन. 1-1)

'तत् त्वमसि' (छां. उ. 6-8-7)

'अयमात्मा ब्रह्म' (बृ. उ. 6-4-5)

इति तत्परेणैव पदसमुदायेन सिद्ध्यति—इति,

[ उक्तार्थस्य ध्याननियोगवादिकृतं दूषणम् ]

तदयुक्तम् ; वाक्यार्थज्ञानमात्रात् बन्धनिवृत्त्यनुपपत्तेः ।

यद्यपि मिथ्यारूपो बन्धः ज्ञानबाध्यः ; तथाऽपि बन्धस्य अपरोक्षत्वात्, न परोक्षरूपेण वाक्यार्थज्ञानेन [2]सः बाध्यते[2] । रज्ज्वादौ अपरोक्षसर्पप्रतीतौ [3]वर्तमानायाम्[3], 'नाऽयं सर्पः, रज्जुरेषा' इति, आप्तोपदेशजनितपरोक्षसर्पविपरीतज्ञानमात्रेण [4]भयानिवृत्ति[4]दर्शनात् । आप्तोपदेशस्य तु भयानिवृत्तिहेतुत्वम्, वस्तुयाथात्म्यापरोक्ष्यनिमित्तप्रवृत्तिहेतुत्वेन ॥

---

अतः—वाक्यार्थज्ञानमात्रसाध्यत्वात् । तत्परेणैवेति । भेदनिषेधपरैः वाक्यैः निर्विशेषतया सिध्यतीत्यर्थः । यद्वा तत्परेणैव—सिद्धरूपार्थपरेणैव । सिध्यतीति । 'ब्रह्म' इति अर्थलब्धम् ॥

[तदयुक्तम् इत्यारभ्य, प्रपञ्चरूपबन्धस्य निवृत्तिः इत्येतदन्तः भाग मायावादिनं प्रति ध्याननियोगवादिकृतदूषणरूपः ।]

रज्ज्वादौ इति आदिशब्देन भूदलनादि गृह्यते । सर्पविपरीतज्ञानम्— रज्जुज्ञानम् । प्रवृत्तिहेतुत्वेन—प्रवृत्तिद्वारकम् (श्रु. प्र) ॥

---

[1] नियोग—वा,

[2] बाध्यते—इ.

[3] विद्यमानायां—इ, झ.

[4] भयतदनिवृत्ति—आ.

[ तत्र शब्दस्य अपरोक्षज्ञानहेतुतादूषणम् ]

तथा हि—रज्जुसर्पदर्शनभयात् परावृत्तः पुरुषः 'नाऽयं सर्पः, रज्जुरेषा' इति [1]आप्तोपदेशेने[1] [2]तद्वस्तु[2]याथात्म्यदर्शने प्रवृत्तः, तदेव प्रत्यक्षेण दृष्ट्वा, भयात् निवर्तते। न च शब्द एव प्रत्यक्षज्ञानं जनयतीति वक्तुं युक्तम्, तस्य अनिन्द्रियत्वात्। ज्ञानसामग्रीषु इन्द्रियाण्येव हि अपरोक्षसाधनानि।

न च, अस्य अनभिसंहितफलकर्मानुष्ठानमृदितकषायस्य श्रवण-मनन-निदिध्यासन-विमुखीकृतबाह्यविषयस्य पुरुषस्य वाक्यमेव अपरोक्षज्ञानं [3]जनयति[3]; निवृत्तप्रतिबन्धे तत्परेऽपि पुरुषे ज्ञानसामग्रीविशेषाणाम् इन्द्रियादीनां [4]स्वविषय[4]नियमातिक्रमादर्शनेन तदयोगात्॥

---

अनिन्द्रियत्वादिति। न च आलोकादेः अनिन्द्रियत्वेऽपि अपरोक्षज्ञानजनकत्वं दृष्टमिति हेतोः व्यभिचारः, इन्द्रियप्रधानकज्ञानसामग्र्यननुप्रविष्टत्वस्य विवक्षितत्वात्। एतच्च ज्ञानसामग्रीषु' इत्यनेन सूचितम्। ज्ञानसामग्रीषु—सपरिकरासु इन्द्रिय-लिङ्ग-शब्द-सदृशानुपपत्त्यनुपलब्धिषु। इन्द्रियाण्येवेति। आलोकादिसहकृतानि इति शेषः।

निवृत्तप्रतिबन्धे, तत्परेऽपि इति विशेषणद्वयम् अनभिसंहितेत्यादिपदद्वयं हृदि निधाय। स्वविषयनियमातिक्रमादर्शनेन—स्वसाध्यज्ञानानतिक्रमदर्शनेन। शब्दसाध्यं ज्ञानं परोक्षमेव। शब्दस्तु स्वसाध्यं परोक्षज्ञानं नातिक्रामति इति यावत्। मनसः परोक्षापरोक्षज्ञानसाधारणहेतुत्वात्, शब्दस्य तु लिङ्गस्येव परोक्षज्ञानमात्रहेतुत्वात् न योगिमनःसाम्यम् इति भावः। तदयोगादिति। विमतं प्रत्यक्षज्ञानम्—न वाक्यजन्यम्, प्रत्यक्षज्ञानत्वात्, अनुपदिष्टवाक्यस्य 'दशमोऽहम्' इति वाक्यवत्। विमतं वाक्यम्—न प्रत्यक्षज्ञानजनकम्, वाक्यत्वात्, संप्रतिपन्नवत् इति॥

---

[1] आप्तोपदेशात्—इ, वा.  [2] वस्तु—इ, वा.
[3] जनयतीति—ङ.  [4] स्वस्व विषय—आ.

[ ध्यानस्य वाक्यार्थज्ञानोपायत्वदूषणम् ]

न च ध्यानस्य वाक्यार्थज्ञानोपायता, इतरेतराश्रयत्वात्, वाक्यार्थज्ञाने जाते तद्विषयध्यानम्; ध्याने निर्वृत्ते वाक्यार्थज्ञानम् इति।

न च ध्यान-वाक्यार्थज्ञानयोः भिन्नविषयत्वम्, तथा सति ध्यानस्य वाक्यार्थज्ञा-नोपायता न स्यात्। न हि अन्यध्यानम् [1]अन्यौ[1]न्मुख्यम् उत्पादयति। ज्ञातार्थस्मृति-सन्ततिरूपस्य ध्यानस्य वाक्यार्थज्ञानपूर्वकत्वम् अवर्जनीयम्, ध्येयब्रह्मविषयज्ञानस्या हेत्वन्तरासम्भवात्।

न च—ध्यानमूलं ज्ञानं वाक्यान्तरजन्यम्, [2]निवर्तकं ज्ञानं[2] तत्त्वमस्यादि-वाक्यजन्यम्—इति युक्तम्, ध्यानमूलमिदं वाक्यान्तरजन्यं ज्ञानम्, तत्त्वमस्यादि-[3]वाक्य[3]जन्यज्ञानेन एकविषयम्, भिन्नविषयं वा?

एकविषयत्वे—तदेव इतरेतराश्रयत्वम्।

भिन्नविषयत्वे—ध्यानेन तदौन्मुख्यापादनासम्भवः।

किं च—ध्यानस्य ध्येय-ध्यात्राद्यनेकप्रपञ्चापेक्षत्वात्, निष्प्रपञ्चब्रह्मात्मैकत्वविषय-वाक्यार्थज्ञानोत्पत्तौ दृष्टद्वारेण नोपयोगः इति, वाक्यार्थज्ञानमात्रात् अविद्यानिवृत्तिं वदतः श्रवण-मनन-निदिध्यासनविधीनाम् आनर्थक्यमेव॥

---

हेत्वन्तरासम्भवादिति। ब्रह्मणः प्रत्यक्षाद्यगोचरत्वादिति भावः।

तदेवेति। वाक्यान्तरेण ज्ञानोत्पत्तौ, तस्य 'तत्त्वमसि'वाक्यजन्यज्ञानतुल्यविषय-त्वात्, तस्याऽपि ज्ञानस्य निदिध्यासनापेक्षा स्यात्, ध्यानस्य च वाक्यार्थज्ञानापेक्षा स्यात् इति अन्योन्याश्रयणमित्यर्थः (श्रु. प्र)॥

---

1 अन्यज्ञानौं—वा.
2 निवर्तकज्ञानं—वा.
3 वाक्यान्तर—थ, न.

[अनेन जीवन्मुक्तिनिरासस्सिद्ध्युपपादनम्]

यतः वाक्यात् आपरोक्ष्यज्ञानासंभवात् वाक्यार्थज्ञानेन [1]अविद्या न[1] निवर्तते; तत एव जीवन्मुक्तिरपि दूरोत्सरिता।

का च इयं जीवन्मुक्तिः?

सशरीरस्यैव मोक्षः—इति चेत्,

'माता मे वन्ध्या' इतिवत् असङ्गतार्थं [2]वचः[2], यतः 'सशरीरत्वं बन्धः, अशरीरत्वमेव मोक्षः' इति त्वयैव श्रुतिभिः उपपादितम्।

अथ—सशरीरत्वप्रतिभासे वर्तमाने, यस्य 'अयं प्रतिभासः मिथ्या' इति प्रत्ययः, तस्य सशरीरत्वनिवृत्तिः—इति,

न, 'मिथ्या' इति प्रत्ययेन सशरीरत्वं निवृत्तं चेत्, कथं सशरीरस्य मुक्तिः? [3]अजीवतो[3]ऽपि मुक्तिः, सशरीरत्वमिथ्याप्रतिभासनिवृत्तिरेवेति, कोऽयं 'जीवन्मुक्ति-रिति[4] विशेषः?

अथ—सशरीरत्वप्रतिभासः बाधितोऽपि यस्य द्विचन्द्रज्ञानवत् अनुवर्तते, सः जीवन्मुक्तः—इति चेत्,

---

दूरो सारितेति। वाक्यात् अपरोक्षज्ञानसम्भवेऽपि व्याघातादिना जीवन्मुक्तिः उत्सारिता। वाक्यादापरोक्ष्यासंभवात् दूरोत्सारितेति भावः।

सशरीरत्वम्—सशरीरत्वप्रतिभासः, अनन्तरग्रन्थे प्रतिभासनिर्देशात्।

कथं सशरीरस्य मुक्तिरिति; न सशरीरस्य मुक्तिरुक्ता स्यात् इत्यर्थः। मिथ्या-प्रतिभासशब्देन भ्रान्तिज्ञानं विवक्षितम्।

---

[1] अविद्या—द.　　[2] वचनम्—न.

[3] अतोऽजीवतो—द.　　[4] जीवन्मुक्तः इति—व.

न ; ब्रह्मव्यतिरिक्तसकल[1]वस्तुविषय[1]त्वात् बाधकज्ञानस्य, कारणभूताविद्या-कर्मादिदोषः सशरीरत्वप्रतिभासेन सह तेनैव बाधितः इति, बाधितानुवृत्तिः न शक्यते वक्तुम् । [2]द्विचन्द्रादौ[2] तु तत्प्रतिभासहेतुभूतदोषस्य बाधक[3]ज्ञान[3]भूतचन्द्रैकत्वज्ञाना-विषयत्वेन अबाधितत्वात् द्विचन्द्रप्रतिभासानुवृत्तिः युक्ता ॥

[ जीवन्मुक्तेः श्रुतिविरुद्धत्वोपपादनम् ]

किं च—

'तस्य तावदेव चिरं यावन्न विमोक्ष्ये, अथ सम्पत्स्ये' (छां. उ. 6-14-2) इति 'सद्विद्यानिष्ठस्य शरीरपातमात्रमपेक्षते मोक्षः' इति वदन्ती इयं श्रुतिः जीवन्मुक्तिं वारयति ॥

[ जीवन्मुक्तेः स्मृतिविरुद्धता ]

सैषा जीवन्मुक्तिः आपस्तम्बेनाऽपि निरस्ता —

"[4]वेदान्[4] इमं लोकममुं च परित्यज्य आत्मानमन्विच्छेत्'

(आप. ध. सू. 2-9-21-13)

'बुद्धे क्षेमप्रापणम्' (आप. ध. सू. 2-9-21-14)

---

अविद्याकर्मादि इति आदिशब्देन वासना गृह्यते । तेनैव — बाधकज्ञानेनैव । द्विचन्द्रादौ त्विति । न हि रज्जुयाथात्म्यज्ञानेन शुक्तौ रजतभ्रमः निवर्तते इति भावः । प्रथमसूत्रे बाधितानुवृत्तिनिराकरणे दोषस्य पारमार्थिकत्वेन ज्ञानबाध्यत्वाभावात् भ्रमानुवृत्तिरुक्ता । अत्र तु चन्द्रैकत्वज्ञानाविषयत्वेन दोषस्य अबाधितत्वात् द्वित्वज्ञानानुवृत्तिरुक्ता इति भिदा । जरन्मायावादिनोऽपि कृत्स्नमिथ्यात्वस्य अभ्युपगतत्वात् एवं वैषम्यमुक्तम् (श्रु. प्र) ॥

वेदान्—त्रिवर्गसाधनकर्माणि । इमं लोकममुं चेति, तत्फलमुच्यते ।

बुद्धे—वाक्यार्थज्ञाने जाते सति । क्षेमप्रापणम् — मोक्षः ।

---

[1] विदय—इ, न, वस्तुविषयक—त्रा. [2] द्विचन्द्रज्ञानादौ—आ, द, न.
[3] ज्ञानविषयी—वा. [4] विद्वान् – थ.

'तच्छास्त्रैर्विप्रतिषिद्धम्' (आप. ध. सू. 2-9-21-15)

'बुद्धे चेत् क्षेमप्रापणम्! इहैव न दुःखमुपलभेत' (आप. ध. सू. 2-9-21-16)

'एतेन परं व्याख्यातम्' (आप. ध. सू. 2-9-21-17)

इति। अनेन [1]ज्ञान[1]मात्रान्मोक्षश्च निरस्तः। अतः सकलभेदनिवृत्तिरूपा मुक्तिः जीवतः न सम्भवति॥

[ध्याननियोगस्यैव इष्टार्थसाधकत्वम्]

तस्मात् ध्याननियोगेन ब्रह्मापरोक्षज्ञानफलेनैव बन्धनिवृत्तिः। न च नियोग-[2]साध्यत्वे[2] मोक्षस्य अनित्यत्वप्रसक्तिः; प्रतिबन्धनिवृत्तिमात्रस्यैव साध्यत्वात्।

किं च—न नियोगेन साक्षात् बन्धनिवृत्तिः क्रियते, किन्तु निष्प्रपञ्चज्ञानैकरसब्रह्मापरोक्ष्यज्ञानेन। नियोगस्तु [3]तदापरोक्ष्य[3]ज्ञानं जनयति।

कथं नियोगस्य ज्ञानोत्पत्तिहेतुत्वम्?—इति चेत्,

कथं वा भवतः अनभिसंहितफलानां कर्मणां वेदनोत्पत्तिहेतुत्वम्?

---

शास्त्रैर्विप्रतिषिद्धम् — वाक्यार्थज्ञानोत्तरभाव्युपासनविधिपरैः, 'यावदायुषम्' इति आप्रयाणादनुवृत्तिपरैः मोक्षस्य शरीरपातमात्रसापेक्षत्वपरैः, 'तयोर्ध्वमायन्' इति नाडीविशेष-निष्क्रमणपरैः, अर्चिरादिमार्गेण देशविशेषप्राप्तिपरैश्च अनेकैः शास्त्रैर्विरोधः। विप्रति-षिद्धम्—विशेषेण प्रतिषिद्धम्, न तुल्यबलैः प्रतिरुद्धम्। अपि तु प्रबलैः पराहतम्। प्राबल्यं च 'भूयसां स्यात्' (पू, मी. 12-2-7) इति न्यायात् इति भावः।

एतेन परं व्याख्यातम्—शास्त्र-प्रत्यक्षविरोधेन औडुलोमिमतानुसारेणोक्तम्, अन्यदपि सर्वमपास्तम्। [व्याख्यातम्—विशेषेण प्रत्याख्यातं इति वा॥]

किं चेति। नियोगस्य निवर्तकत्वम् ज्ञानद्वारकमिति न निवर्त्यसत्यत्वम् इत्यर्थः।

वेदनोत्पत्तिहेतुत्वमिति। इच्छाद्वारा वेदनोत्पत्तिहेतुत्वमभिप्रेतम्। 'विविदिषन्ती'ति हि उदाहरिष्यते (श्रु. प्र)।

---

[1] वाक्यार्थज्ञान—. [2] साध्यत्वेन—इ, वा.

[3] तदपरोक्षं—वा. तदपरोक्ष—थ, द.

मनोनैर्मल्यद्वारेण—इति चेत्,

ममाऽपि तथैव।

मम तु निर्मले मनसि शास्त्रेण ज्ञान[1]मुत्पद्यते[1]। [2]तव तु[2] नियोगेन मनसि निर्मले ज्ञानसामाग्री वक्तव्या—इति चेत्,

[3]ध्यान[3]नियोगनिर्मलं मन एव साधनम्—इति ब्रूमः।

केनाऽवगम्यते?—इति चेत्,

भवतो वा—कर्मभिः मनः निर्मलं भवति, निर्मले मनसि श्रवण-मनन-निदिध्यासनैः सकलेतरविषयविमुखस्यैव शास्त्रं निवर्तकज्ञानमुत्पादयति—इति केन अवगम्यते?

'विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन' (बृ. उ. 6-4-22)

'श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' (बृ. उ. 6-5-6)

'ब्रह्म वेद ब्रह्मैव भवति' (मुण्ड. उ. 3-2-9)

इत्यादिभिः शास्त्रैः—इति चेत्,

ममाऽपि—

'श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' (बृ. उ. 6-5-6)

---

मम तु . . . . चेदिति। मनो हि साधारणकारणम्। तस्मिन् सत्यपि असाधारणकारणम् अपेक्षितम्। तन् ममाऽस्ति। त्वया तु वक्तव्यम् इति चेत् इत्यर्थः।

ध्यानेति। मनोमात्रस्य साधारणकारणत्वेऽपि वैशेषिकाद्यभिमतमानसप्रत्यक्षे इव योगिप्रत्यक्षे इव च निर्मलतरस्य मनोविशेषस्य असाधारणकारणत्वं युक्तमिति भावः।

ब्रह्म वेदेति। [अत्र] वेदनशब्देन वाक्यार्थज्ञानं विवक्षितमिति पराभिप्रायः।

ममाऽपि इत्यादिना मनसः ज्ञानसाधनत्वे प्रमाणं दर्शयति।

---

1 मुत्पाद्यते—वा. 2 तव—थ.

3 ज्ञान—द.

'ब्रह्मविदाप्नोति परम्' (तै. उ. आन. 1-1)

'न चक्षुषा गृह्यते नाऽपि वाचा' (मुण्ड. उ. 3-1-8)

'मनसा तु विशुद्धेन' (व्या. स्मृ)

'हृदा मनीषा मनसाऽभिक्लृप्तः' (कठ. उ. 6-9)

[1]इत्यादिभिः शास्त्रैः[1]—ध्याननियोगेन मनः निर्मलं भवति, निर्मलं च मनः ब्रह्मा-परोक्षज्ञानं जनयति—इत्यवगम्यते [2]इति निरवद्यम्[2] ॥

[ ब्रह्मणः उपास्यत्वनिषेधशङ्कापरिहारौ ]

'नेदं यदिदमुपासते' (केन. उ. 1-5)

इति उपास्यत्वं प्रतिषिद्धम्—इति चेत्,

[3]नैवम्[3]; नाऽत्र [4]ब्रह्मणः[4] उपास्यत्वं प्रतिषिध्यते, अपि तु ब्रह्मणः जगद्वैरूप्यं प्रतिपाद्यते। 'यदिदं जगत् उपासते प्राणिनः, न इदं ब्रह्म; तदेव ब्रह्म त्वं विद्धि !

---

न चक्षुषा इत्यादिवाक्यं मनस एव साधनत्वे स्वरसम्। ब्रह्मवेदेत्यत्र वेदशब्दस्य वाक्यार्थज्ञानपरत्वं तु न स्वरसतः प्रतीयते। न च श्रुत्यन्तरैकार्थ्येन तत्परत्वावगमः; वाक्यार्थज्ञानस्य उपायत्वकण्ठोक्तिमच्छ्रुत्यन्तराभावात् इत्यभिप्रेतम्।

मिथ्यात्वनिबन्धनाः सर्वे चोद्यपरिहाराः समानाः। परोक्षज्ञानस्याऽपि अपरोक्षभ्रम-निवर्तकत्वम्, शास्त्र-प्रत्यक्षविरोधौ, श्रुतिस्वारस्यहानिश्च भवतां पक्षे अधिकं दूषणम्—इति ज्ञापनाय, कथम् इत्यादिना प्रतिबन्दीमुखेन तत्तच्छङ्कापरिहारः कृतः।

इतिशब्दः न अनन्तरवाक्यशेषः, अपि तु प्रकरणशेषः ॥

नैवमिति। तस्य वाक्यस्य एवं निर्वाहः न युक्तः इत्यर्थः। न इदमिति। 'यदिदमुपासते' इत्यत्र इदमंशे निषेधस्य तात्पर्यमिति भावः। 'मनो ब्रह्मेत्युपासीत' इत्यादिना

---

[1] इत्यादिशास्त्रैः—आ. [2] इति—पा.
[3] नैवम्—वा. [4] ब्रह्मणि—वा.

'यत् वाचा अनभ्युदितम् , येन वाक् अभ्युद्यते' इति वाक्यार्थः । अन्यथा,

'तदेव ब्रह्म त्वं विद्धि' (केन. उ. -5)

इति [1]विरुध्यते[1], ध्यानविधिवैयर्थ्यं च [2]स्यात्[2] । अतः ब्रह्मसाक्षात्कारफलेन ध्याननियोगेनैव अपरमार्थभूतस्य कृत्स्नस्य द्रष्टृ-दृश्यादिप्रपञ्चरूपबन्धस्य निवृत्तिः ॥

[ ध्याननियोगवादिकृतः भास्कराभिमतभेदाभेदानुवादपूर्वकः तन्निरासः ]

यदपि कैश्चिदुक्तम्—भेदाभेदयोः [3]विरोधो न[3] विद्यते—इति,

तदयुक्तम्; न हि शीतोष्ण-तमःप्रकाशादिवत् भेदाभेदौ एकस्मिन् वस्तुनि सङ्गच्छेते ।

अथोच्येत—सर्वं हि वस्तुजातं प्रतीतिव्यवस्थाप्यम् । सर्वं च भिन्नाभिन्नं प्रतीयते, कारणात्मना जात्यात्मना च अभिन्नम्, कार्यात्मना व्यक्त्यात्मना च भिन्नम् । छायातपादिषु विरोधः—सहानवस्थान[4]लक्षणः[4], भिन्नाधारत्वरूपश्च । कार्यकारणयोः जाति-व्यक्त्योश्च तदुभयमपि नोपलभ्यते । प्रत्युत एकमेव वस्तु द्विरूपं

---

विहितप्रतीकोपासनोपास्यानि हि परिच्छिन्नानि । नेदं ब्रह्म, किन्तु अपरिच्छिन्नं [यत्] तदेव परं ब्रह्मेत्यर्थः । अनेन 'अन्यदेव तद्विदितात्' इत्यादिकमपि जगद्वैरूप्यपरमिति व्याख्यातं भवति । यत् वाचा अनभ्युदितम्—वक्तुमशक्यम्—अपरिच्छिन्नम् । अन्यथा इति, स्ववाक्यविरोधः । ध्यानविधिवैयर्थ्यम् इति वाक्यान्तरविरोधः ॥

न हि . . . सङ्गच्छेते इति । नियमेन भिन्नाधारत्वलक्षणः, सहानवस्थानलक्षणश्चेति विरोधो द्विधा । आदिशब्देन तृणदहनादेरिव नाश्य-नाशकभावो विवक्षितः । तद्वत् भेदाभेदयोरपि विरोधः अस्तीत्याशयः ।

अथोच्येतेत्यादिना भेदाभेदमतं विस्तरेण प्रस्तौति । प्रतीतीति । शीतोष्णादिष्वपि विरोधः प्रतीत्यधीनः इति भावः । छायातपेति पूर्वोक्तद्विविधविरोधोपलम्भस्थलवैरूप्यं वक्तुम् । [तदेवोच्यते] कार्येति ।

---

[1] विरुद्ध्येत—न.
[2] आत्मनः स्यात्—इ.
[3] न विरोधः—द.
[4] नियमलक्षणः—वा.

प्रतीयते, यथा, 'मृदयं घटः', [1]'खण्डो गौः, मुण्डो गौः'[1] इति ।

न च एकरूपं [2]किञ्चिदपि[2] वस्तु [3]लोके[3] दृष्टचरम् । न च— तृणादेः ज्वलनादिवत् अभेदः भेदोपमर्दी दृश्यते—इति, न वस्तुविरोधः, मृत्-सुवर्ण-गवाश्वाद्यात्मना अवस्थितस्यैव, घट-मुकुट-खण्ड वडवाद्यात्मना च अवस्थानात् । न च—अभिन्नस्य भिन्नस्य च वस्तुनः अभेदः भेदश्च एक एवाऽऽकारः इति ईश्वराज्ञा ।

प्रतीतत्वात् ऐकरूप्यं चेत्, प्रतीतत्वादेव भिन्नाभिन्न[4]त्वमिति[4] [5]द्वैरूप्यमपि[5] अभ्युपगम्यताम् । न हि [6]विस्फारिताक्षः[6] पुरुषः घट-शराव-खण्ड-मुण्डादिषु वस्तुषु उपलभ्यमानेषु, 'इयं मृत्, अयं च घटः' 'इदम् गोत्वम्, [7]'इयं च'[7] व्यक्तिः, इति विवेक्तुं शक्नोति । अपि तु 'मृदयं घटः' 'खण्डो गौः' इत्येव प्रत्येति ।

अनुवृत्तिबुद्धिबोध्यम्— कारणम् आकृतिश्च, व्यावृत्तिबुद्धिबोध्यम्— कार्यं व्यक्तिश्च इति विविनक्ति—इति चेत्,

नैवम्; विविक्ताकारानुपलब्धेः । न हि [8]सुसूक्ष्ममपि[8] निरीक्षमाणैः 'इदम्

---

वस्तुविरोधशब्देन नाश्य-नाशकत्वलक्षणविरोधो विवक्षितः । अभिन्नस्य—जातेः । भिन्नस्य—व्यक्तेः । ईश्वराज्ञेति । [न च ईश्वराज्ञेति पूर्वेणाऽन्वयः ।] जातेः अभेद एवाकारः, व्यक्तेः भेद एवाकारः इति किमीश्वराज्ञया स्वीक्रियते ? न हि प्रमाणतर्कानादरेण कश्चिदर्थः हठात् स्वीकार्यः इति भावः ।

द्वैरूप्यमपि इति अपिशब्दस्य अनिष्टमपीति भावः । न हि . . . शक्नोतीति । 'इयं जातिः' 'इयं व्यक्तिः' इति विविक्ते हि अत्राभेदः, अत्र भेदः इति वक्तुं युक्तम्, न तथा विविच्यते इति भावः । अपि त्विति । एकमेव वस्तु व्यक्त्यात्मना जात्यात्मना च भिन्नमभिन्नं च प्रतीयते इति भावः । मृदयं घटः इत्यनेन मत्वर्थीयप्रत्ययनिरपेक्षसामानाधिकरण्यप्रत्ययः भेदाभेदसाधकयुक्तिरुक्ता भवति ।

---

1 षण्डो गौः — वा, षण्डो गौः, मुण्डो गौः — थ, द, न.
2 किञ्चित् — थ. 3 लौकिकैः — आ 4 मिति — आ, इ.
5 द्वैरूप्यं — वा, 6 विस्फुरिताक्षः — इ. 7 इयं — आ, इ, झ.
8 सूक्ष्ममपि — वा.

इति आथर्वणिकानां संहितोपनिषदि ब्रह्मसूक्ते अभेदश्रवणाच्च ।

'नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्' (श्वे. उ. 5-13)

'ज्ञाज्ञौ द्वावजावीशनीशौ' (श्वे. उ. 1-9)

'क्रियागुणैरात्मगुणैश्च तेषां संयोगहेतुरपरोऽपि दृष्टः' (श्वे. उ. 5-12)

'प्रधानक्षेत्रज्ञपतिर्गुणेशस्संसारमोक्षस्थितिबन्धहेतुः' (श्वे. उ. 6-16)

'स कारणं करणाधिपाधिपः (श्वे. उ. 6-9)

'तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति' (मुण्ड. उ. 3-1-1)

'य आत्मनि तिष्ठन्' (बृ. उ. मा. पा. 5-7-26)

'प्राज्ञेनाऽऽत्मना संपरिष्वक्तो न बाह्यं किञ्चन वेद' (बृ. उ. 6-3-21)

'प्राज्ञेनाऽऽत्मनाऽन्वारूढः उत्सर्जन्याति' (बृ. उ. 6-3-35)

'तमेव विदित्वाऽतिमृत्युमेति' (श्वे. उ. 3-8)

इत्यादिभिः भेदश्रवणाच्च, जीवपरयोः भेदाभेदौ अवश्याश्रय[1]णीयौ । तत्र —

'ब्रह्म वेद ब्रह्मैव भवति' (मुण्ड. उ. 3-2-9)

[2]इत्यादिभिः[2] मोक्षदशायां जीवस्य ब्रह्मस्वरूपापत्तिव्यपदेशात्,

'यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्' (बृ. उ. 4-4-14)

इति तदानीं भेदेन ईश्वरदर्शननिषेधाच्च अभेदः स्वाभाविकः इत्यवगम्यते ॥

[मुक्तौ भेददर्शनस्य श्रौतत्वशङ्कापरिहारौ]

ननु च—

---

वाक्यम् तत्त्वमसीति । ब्रह्मेमे इति 'दाशकितवे'त्याद्यंशविषयवाक्यम् । नित्यो नित्यानामिति 'नाना व्यपदेशात्' इत्यंशस्य विषयवाक्यम् । क्रियागुणाः—संसारहेतुगुणाः । आत्मगुणाः—मोक्षहेतुगुणाः । तैः संयोगहेतुरित्यर्थः । तत्र 'ब्रह्मवेदे'ति भेदस्य औपाधिकत्वं कथमवगम्यते ? इत्यत्रोत्तरम् । तत्स्वरूपापत्तिव्यपदेशः भेदनिषेधश्च अभेदस्य अनौपाधिकत्वज्ञापकौ इत्यर्थः । मुक्तौ भेदनिषेधादेव भेदस्यौपाधिकत्वमपि अर्थसिद्धम् ।

---

1 णीयौ - थ.  2 इत्येवमादिभिः - अ, द.

'सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता' (तै. उ. आन. 1-2)

इति सहश्रुत्या तदानीमपि भेदः [1]प्रतीयते[1]। वक्ष्यति च—

'जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च' (ब्र. सू. 4-4-17)

'भोगमात्रसाम्यलिङ्गाच्च' (ब्र. सू. 4-4-21)

इति।

नैतदेवम्;

'नान्योऽतोऽस्ति द्रष्टा' (बृ. उ. 5-7-27)

इत्यादिश्रुतिशतैः आत्मभेदप्रतिषेधात्।

'सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता' (तै. उ. आन. 1-2)

इति सर्वैः कामैः सह ब्रह्म अश्नुते — [2]सर्व[2]गुणान्वितं ब्रह्म अश्नुते इत्युक्तं भवति। अन्यथा ब्रह्मणा सह इति [3]अप्राधान्यं[3] ब्रह्मणः प्रसज्येत।

'जगद्व्यापारवर्जम्' (ब्र. सू. 4-4-17)

इत्यत्र मुक्तस्य भेदेन अवस्थाने सति, ऐश्वर्यस्य न्यूनताप्रसङ्गो [4]वक्ष्यते[4]। अन्यथा—

---

सह ब्रह्मणा इति सहशब्दः भोक्तृसाहित्यपरः इति [ननु चेत्यादिना] चोदयितुरभिप्रायः।

नैतदेवमिति भोग्यसाहित्यबुद्ध्या परिहरति। नाऽन्य इति भेदप्रतीतिं परिहरिष्यन् मुक्तौ भेदस्य श्रुतिविरुद्धतां दर्शयति (श्रु. प्र)। इत्युक्तं भवति —'सोऽश्नुते' इति वाक्येनोक्तं भवति, इत्यन्वयार्थः। अन्यथा . . . प्रसज्येतेति। ब्रह्मणा सह गुणान् अश्नुते- गुणांश्च ब्रह्म च अनुभवतीति। किं ब्रह्म पृथग्भूतः अश्नुते ? उत अपृथग्भूतः ? इत्यपेक्षायाम् तत् वाक्यान्तरगम्यम्। अतः नाऽत्र भेदप्रतीतिरिति यावत्। अप्राधान्यं भोक्त्रन्तरापेक्षया दोषः, न तु भोग्यभूतस्वगुणापेक्षया इति भावः। जगदिति। ब्रह्मणः मुक्तस्य च भेदे सति, जगद्व्यापारवर्जत्वप्रसङ्गात् न भेदः इति सूत्रार्थः इत्यर्थः।

---

[1] प्रतीयते इति– पा

[2] स सर्व– द,

[3] अप्राधान्यं च – थ, द.

[4] वक्ष्यति – थ.

अनुवर्तमानम्, इदं च व्यावर्तमानम्' इति पुरोऽवस्थिते वस्तुनि आकारभेदः उपलभ्यते। यथा संप्रतिपन्नैक्ये [1]कार्ये विशेषे[1] च एकत्वबुद्धिः उपजायते, तथैव सकारणे ससामान्ये च एकत्वबुद्धिः [2]अविशिष्टा[2] उपजायते। एवमेव देशतः कालतश्च आकारतश्च अत्यन्तविलक्षणेष्वपि वस्तुषु 'तदेवेदम्' इति प्रत्यभि[3]ज्ञा जायते[3]। अतः द्व्यात्मकमेव वस्तु प्रतीयते इति, कार्य-कारणयोः जाति-व्यक्त्योश्च अत्यन्तभेदोपपादनं प्रतीतिपराहतम्॥

[ शङ्कापूर्वकं भेदाभेदपक्षस्थिरीकरणम् ]

अथोच्येत—'मृदयं घटः' 'खण्डो गौः' इतिवत्, 'देवोऽहम्' 'मनुष्योऽहम्' इति सामानाधिकरण्येन ऐक्यप्रतीतेः, आत्मशरीरयोरपि भिन्नाभिन्नत्वं स्यात्। अतः इदं भेदाभेदोपपादनं निजसदननिहितहुतवहज्वालायते—इति,

---

तदिदम् अनाकलितभेदाभेदसाधनसामानाधिकरण्यतदर्थयाथात्म्यावबोधविल-

आकारभेदः—अंशभेदः। उपलभ्यते इत्यस्य न हि इति पूर्वेणान्वयः। विविक्ताकारोपलम्भे सति हि अस्मिन्नंशे अनुवृत्तिबुद्धिबोध्यत्वं, अस्मिन्नंशे व्यावृत्तिबुद्धिबोध्यत्वम् इति ज्ञातुं शक्यम् इत्यर्थः। विशेषः – व्यक्तिः। एकत्वबुद्धिः—एकशब्दानुविद्धप्रत्ययः। यथा कार्यैकत्वं, व्यक्त्येकत्वं च संप्रतिपन्नम्, तथा कार्यकारणयोश्च, जातिव्यक्त्योश्च एकत्वबुद्धिर्जायते इत्यर्थः। सहोपलम्भनियमः, प्रथमपिण्डग्रहणे अभेदेन ग्रहणं च अर्थात् उक्तं भवति, न विवेक्तुं शक्नोति इत्युक्तेः। एवमेवेति पिण्डानां परस्परं भेदः उच्यते। देश-कालवैलक्षण्यं स्पष्टम्। नीलत्व-खण्डत्वादिः आकारवैलक्षण्यम्। अत्यन्तभेदः—अभेदासहो भेदः॥ आत्मशरीरयोरपीति। देहात्मनोः सद्द्रव्यात्मना एकत्वेऽभिमतेऽपि देहरूपेण आत्मरूपेण वा तयोः ऐक्यस्य अप्रामाणिकत्वात् तयोः भिन्नाभिन्नत्वम् अदृष्टमिति भावः।

अनाकलितेति। अबाधितं सामानाधिकरण्यं भेदाभेदसाधकमिति अबाधितश्च भेदाभेदः तत्त्वम् इत्यजानता उक्तमित्यर्थः (श्रु. प्र)॥

---

[1] कार्यविशेषे – इ, झ, वा, [2] अविशेषा– घ
[3] ज्ञायते– थ.

सितम् । तथा हि—अबाधित एव प्रत्ययः सर्वत्र अर्थं व्यवस्थापयति । [1]देवाद्यात्मा[1]-मिमानस्तु आत्मयाथात्म्यगोचरैः सर्वैः प्रमाणैः बाध्यमानः रज्जुसर्पादि[2]बुद्धिवत्[2] न आत्म-शरीरयोः अभेदं साधयति । 'खण्डो गौः' [3]मुण्डो गौः इति[3] सामानाधिकरण्यस्य न केनचित् क्वचित् बाधः दृश्यते । तस्मात् न अतिप्रसङ्गः ॥

[ जीव-ब्रह्मणोः भेदाभेदप्रतिपादनम् ]

अत एव जीवोऽपि ब्रह्मणः न अत्यन्तभिन्नः, अपि तु ब्रह्मांशत्वेन भिन्नाभिन्नः । तत्र अभेद एव स्वाभाविकः, भेदस्तु औपाधिकः ।

[4]कथ[4]मवगम्यते ?—इति चेत्,

'तत् त्वमसि' (छां. उ. 6-8-7)

'नान्योऽतोऽस्ति द्रष्टा' (बृ. उ. 5-7-27)

'अयमात्मा ब्रह्म' (बृ. उ. 6-4-5)

इत्यादिभिः श्रुतिभिः,

'ब्रह्मेमे द्यावापृथिवी' (अथ. सं. उ)

इति प्रकृत्य,

'ब्रह्म दाशा ब्रह्म दासा ब्रह्मेमे कितवा उत ।
स्त्रीपुंसौ ब्रह्मणो जातौ स्त्रियो ब्रह्मोत वा पुमान् ॥' (अथ. सं. उ)

---

अत एवेति, उक्त लौकिकार्थानां भेदाभेदमुपजीव्य वैदिकेष्वप्यर्थेषु जीव-ब्रह्मणोर्भेदाभेदमाह । अतः—भेदाभेदयोः अविरुद्धत्वात् । ब्रह्मांशत्वेनेत्यत्र 'अंशो नानाव्यपदेशात्' इति सूत्रं स्मारितम् । तत्रेति चिद्ब्रह्मणोस्तु भेदाभेदौ स्वाभाविकौ—इति याद्वमतव्यावृत्त्यर्थम् ।

कथमिति । भेदाभेदसद्भावे, तत्र अभेदस्यैव स्वाभाविकत्वे च किं प्रमाणमित्यर्थः । अभेदस्य स्वाभाविकत्वेन प्राधान्यात् प्रथमम् 'अन्यथा चे' (ब्र. सू. 2-3-42) ति सूत्रांशविषद-

---

[1] देहात्मा- ड. [2] बोधवत् – इ, वत् – द,
[3] इति – क्ष, इ, मुण्डो गौः इत्यादि– आ. [4] कथमिद– वा

'संपद्याविर्भावस्स्वेनशब्दात्' (ब्र. सू. 4-4-1)
इत्यादिभिः 'विरोधात्'[1]।

[अभेदस्य स्वाभाविकत्वनिगमनम्]

तस्मात् अभेद एव स्वाभाविकः। भेदस्तु जीवानां परस्मात् ब्रह्मणः, परस्परं च बुद्धीन्द्रियदेहोपाधिकृतः।

यद्यपि ब्रह्म निरवयवं सर्वगतं च; तथाऽपि आकाश इव घटादिना बुद्ध्याद्युपाधिना ब्रह्मण्यपि भेदः संभवत्येव।

न च — भिन्ने ब्रह्मणि बुद्ध्याद्युपाधिसंयोगः, बुद्ध्याद्युपाधिसंयोगात् ब्रह्मणि भेद इति इतरेतराश्रयत्वम्; उपाधेः तत्संयोगस्य च कर्मकृतत्वात्, तत्प्रवाह च अनादित्वात्।

एतदुक्तं भवति — पूर्वकर्मसम्बद्धात् जीवात् स्वसंबद्ध एवोपधिः उत्पद्यते। तद्युक्तात् कर्म। एवं बीजाङ्कुरन्यायेन [2]कर्मोपाधि[2]संबन्धस्य अनादित्वात् [3]न दोषः[3] —इति।

अतः जीवानां परस्परं ब्रह्मणा च अभेद एव स्वाभाविकः। भेदस्तु औपाधिकः। उपाधीनां [4]पुनः परस्परं[4] ब्रह्मणा च [5]अभेदवत् भेदोऽपि[5] स्वाभाविकः,

---

अभेद एवेत्येवकाराभिप्रेतम्, मुक्तौ भेदनिषेधात् अर्थसिद्धं भेदस्यौपाधिकत्वं। तुशब्दः वैषम्यपरः।

भिन्ने ब्रह्मणीति। ईश्वरांशे कर्मकृतबुद्ध्याद्युपाधिसम्बन्धाभावात् उपाधिसंयोगस्य भेदपूर्वकत्वम्।

एवम् . . . अनादित्वात् इति। कर्मवश्यत्वं हि जीवत्वम्। उपाधिना जीवत्वम् जीवभावात् उपाध्यन्तरम् इत्यनादिरित्यर्थः।

[उपाधीनां पुनः—उपाधीनां तु।]

---

[1] विरोधः – इ, थ. [2] कर्म – ध, [3] अदोषः – वा,
[4] परस्परम् – द, [5] अभेदोपि – द.

उपाधीनाम् उपाध्यन्तराभावात् तदभ्युपगमे 'अनवस्थानाच्च'[1]। अतः जीवकर्मानु[2]रूपं ब्रह्मणः भिन्नाभिन्नस्वभावा एव उपाधयः उत्पद्यन्ते—इति ॥

[ध्याननियोगवादिकृतं भेदाभेददूषणम् ]

अत्रोच्यते — अद्वितीयसच्चिदानन्दब्रह्मध्यानविषयविधिपरं वेदान्तवाक्यजातमिति, वेदान्तवाक्यैः अभेदः प्रतीयते। भेदावलम्बिभिः कर्मशास्त्रैः प्रत्यक्षादिभिश्च भेदः प्रतीयते। भेदाभेदयोः परस्परविरोधात्, अनाद्यविद्यामूलतयाऽपि भेदप्रतीत्युपपत्तेः, अभेद एव परमार्थः इत्युक्तम्।

तत्र यदुक्तम् — भेदाभे[3]दयोः उभयोरपि[3] प्रतीतिसिद्धत्वात् न विरोधः—इति,

तदयुक्तम्; कस्माच्चित् कस्यचित् विलक्षणत्वं हि! तस्मात् तस्य भेदः। तद्विपरीतत्वं च अभेदः। तयोः तथाभावातथाभावरूपयोः एकत्र सम्भवम् अनुन्मत्तः को ब्रवीति?

कारणात्मना जात्यात्मना च अभेदः, कार्यात्मना व्यक्त्यात्मना च भेदः इति, आकारभेदात् अविरोधः—इति चेत्,

न; विकल्पासहत्वात्। आकारभेदात् 'अविरोधं'[4] वदतः, किम् एकस्मिन् आकारे भेदः, आकारान्तरे च अभेदः इत्यभिप्रायः? उत आकारद्वययोगिवस्तुगतौ उभावपि इति?

---

विलक्षणत्वम्—अन्यत्वम्। 'इदम् इदं न भवति' 'इदम् इदं भवति' इति हि भेदाभेदविषयप्रतीतिः। तयोरिति। भेदाभेदः इति न कस्यचिद्धर्मस्य संज्ञा। लोकप्रसिद्ध्यनुगुणः अर्थः भेदाभेदशब्दस्य स्वीकृतश्चेत्, भावाभावयोर्विरोधः अवर्जनीयः इत्यर्थः। किञ्च अनेन क्वचिदपि विरोधो नास्तीति न वक्तुं शक्यम्; भिन्नाधारत्वसहानवस्थाननाश्यनाशकभावलक्षणत्रिविधविरोधोपलब्धेः। यदि भावाभावयोः न विरोधः, तर्हि 'भिन्नाभिन्नत्वं भवति, न भवति' इति स्वपरवचसोरपि विरोधाभावः स्यात्।

कारणात्मनेति, परोक्तं पिण्डद्वयभेदाभेदस्य आकारभेदात् अविरोधमनुवदति। एकस्मिन् आकारे इति आकारशब्दः पदार्थपरः।

---

[1] चानवस्थानात् – ङ,　[2] गुण – द,
[3] दयोरपि – इ　[4] अविरोध इति – या

पूर्वस्मिन् कल्पे—व्यक्तिगतः भेदः, जातिगतश्च अभेदः इति, न एकस्य द्व्यात्मकता ।

जातिः व्यक्तिः इति च एकमेव वस्तु — इति चेत्, तर्हि आकारभेदादविरोधः परित्यक्तः स्यात् ।

एकस्मिंश्च विलक्षणत्व-तद्विपर्ययौ विरुद्धौ — इत्युक्तम् ।

द्वितीये तु कल्पे—अन्योन्यविलक्षणम् आकारद्वयम्[1], अप्रतिपन्नं[2] च तदाश्रयं वस्तु इति, तृतीयाभ्युपगमेऽपि[3] त्रयाणाम् अन्योन्यवैलक्षण्यमेव[4] उपपादितं स्यात्, न पुनः अभेदः ।

आकारद्वयनिरूप्यमाणाविरोधं तदाश्रयभूते वस्तुनि भिन्नाभिन्नत्वम्—इति चेत्, स्वस्माद्विलक्षणं स्वाश्रयम् आकारद्वयं स्वस्मिन् विरुद्धधर्मद्वयसमावेशनिर्वाहकं कथं

---

पूर्वस्मिन् कल्प इति । तत्र जातिव्यक्त्योः किं परस्परं भेदः? उत अभेदः? उत भेदाभेदः? इति विकल्पत्रयम् । व्यक्तिगतः इति, विकल्पितेषु प्रथमं शिरो दूषयति ।

एकस्मिंश्च इति, तृतीयं दूषयति । 'जातिः व्यक्तिर्भवति, न भवति' इति भावाभावविरोधः स्थित एवेत्यर्थः ।

अप्रतिपन्नं चेति । अत्र तृतीयस्य जातिव्यक्तिव्यतिरिक्तस्य [तद्द्वयाधारभूतस्य] वस्तुनः अप्रतिपन्नत्वं नाम एकं दूषणमधिकम् । तदिदम् अप्रतिपन्नं चेत्यनेनाऽभिप्रेतम् । न पुनरिति । अन्यथा त्रित्वाभावात् इत्यर्थः ।

आकारद्वयेति । अत्र तृतीये वस्तुनि आकारद्वयेन भेदाभेदयोः निर्वाह्यत्वेन अविरोधित्वं शङ्कते । [अत्र] इदमाकारद्वयम्—किं स्वाश्रयेण भिन्नम्? उत अभिन्नम्? उत भिन्नाभिन्नम्? इति विकल्पत्रयम् ।

स्वस्मात् इति, प्रथमं शिरो दूषयति । स्वशब्दत्रयमपि आश्रयपरम् । भेदाभेदयोः एकाश्रयत्वेन हि विरोधः । अविरोधनिर्वाहकाकारद्वयं हि न भेदाभेदयोः आश्रयभूतम् । अतो न तत् अविरोधनिर्वाहकम् । अग्निगतं पैङ्गल्यम्, औज्ज्वल्यं चाकारद्वयम् अग्नौ शीतोष्णत्व-

---

[1] णाकार — थ.
[2] प्रति — द.
[3] त्रि.या ।
[4] ण्यम् — द.

भवेत् ? अविलक्षणं तु कथन्तराम् ?

आकारद्वयतद्वतोश्च द्व्यात्मकत्वाभ्युपगमे, निर्वाहकान्तरापेक्षया [1]अनवस्था स्यात्[1]। न च संप्रतिपन्नैक्यव्यक्तिप्रतीतिवत् [2]ससामान्येऽपि[2] वस्तुनि एक[3]रूपा प्रतीतिः[3] उपजायते; यतः 'इदम् इत्थम्' इति सर्वत्र प्रकार-प्रकारितयैव सर्वा प्रतीतिः। तत्र प्रकारांशः जातिः, प्रकार्यंशः व्यक्तिः इति, न एका[4]कारा[4] प्रतीतिः॥

[लौकिके वस्तुनीव वैदिकेऽपि भेदाभेदयोः विरुद्धता]

अत एव जीवस्याऽपि ब्रह्मणो भिन्नाभिन्नत्वं न संभवति। तस्मात् [5]अभेदस्य[5] अनन्यथासिद्धशास्त्रमूलत्वात्, अनाद्यविद्यामूल एव भेदप्रत्ययः।

नन्वेवम्, ब्रह्मण एव [6]अज्ञत्वम्[6], [7]तन्मूलाश्च[7] [8]जन्मजरा[8]मरणादयः दोषाः प्रादुःष्युः। ततश्च—

'यः सर्वज्ञः स सर्ववित्' (मुण्ड. उ. 1-1-10)
'एष आत्माऽपहतपाप्मा' (छां. उ. 8-1-5)

इत्यादीनि शास्त्राणि बाध्येरन्।

नैवम्; [9]अज्ञानादि[9]दोषाणाम् अपरमार्थत्वात्। भवतस्तु उपाधिब्रह्मव्यतिरिक्त

---

रूपविरुद्धधर्मद्वयसमावेशनिर्वाहकं न भवतीत्यर्थः। अविलक्षणं त्विति, द्वितीयं शिरो दूषयति। पूर्वम् आकारद्वये संभवति तस्य विरुद्धधर्मद्वयनिर्वाहकत्वायोग उक्तः। अत्र तु आकारद्वयमेव नास्तीति नितरां विरुद्धधर्मद्वयसमावेशायोगः इत्यभिप्रायेण कथन्तराम् इत्युक्तम्।

आकारद्वयेति, तृतीयं शिरो दूषयति। अनवस्थेति। आकारद्वयस्य, तदाश्रयस्य च भिन्नाभिन्नत्वनिर्वाहकम् आकारद्वयान्तरम् अपेक्षितम्। तस्याऽपि स्वाश्रयेण भिन्नाभिन्नत्वमस्ति चेत्, तदविरोधनिर्वाहकाकारान्तरद्वयमपेक्षितमित्यनवस्था स्यादित्यर्थः॥

अत एव—भेदाभेदयोर्विरोधेन एकस्मिन् वस्तुनि तयोः अनुपपन्नत्वादेव।

---

1 अनवस्थानात् – वा, 2 सामान्येऽपि – आ, थ, 3 रूपप्रतीतिः – द,
4 कारता – वा, 5 अस्य – न, 6 अज्ञत्वात् – वा,
7 तन्मूलाः – आ, थ, द, 8 जरा – द, जन्म—न, 9 अज्ञत्वात् — द.

वस्त्वन्तरम् अनभ्युपगच्छतः ब्रह्मण्येव उपाधिसंसर्गः, तत्कृताश्च जीवत्वा[1]ज्ञत्वादयो[1] दोषाः परमा[2]र्थत[2] एव भवेयुः । न हि ब्रह्मणि निरवयवे अच्छेद्ये सम्बध्यमानाः उपाधयः तत् छित्वा भित्वा वा सम्बध्यन्ते; अपि तु ब्रह्मस्वरूपे संयुज्य, तस्मिन्नेव स्वकार्याणि कुर्वन्ति ॥

[ब्रह्मणः उपहितानुपहितांशभेदेन सदोषत्वनिर्दोषत्वोपपादनम् ]

यदि [3]मन्वीत[3]—उपाध्युपहितं ब्रह्म जीवः । स च अणुपरिमाणः । अणुत्वं च अवच्छेदकस्य मनसः अणुत्वात् । स च अवच्छे[4]दः[4] अनादिः । एवम् उपाध्युपहिते [5]अंशे[5] संबध्यमानाः दोषाः अनुपहिते परे ब्रह्मणि न सम्बध्यन्ते—इति,

[6]अयं[6] प्रष्टव्यः—किम् उपाधिना [7]छिन्नः[7] ब्रह्मखण्डः अणुरूपो जीवः ? उत [8]अच्छिन्न[8] एव अणुरूपोपाधिसंयुक्तः ब्रह्मप्रदेशविशेषः ? उत उपाधिसंयुक्तं ब्रह्मस्वरूपम् ? [9]अथ[9] उपाधिसंयुक्तं चेतनान्तरम् ? अथ उपाधिरेव ? — इति ।

अच्छेद्यत्वात् ब्रह्मणः, प्रथमः कल्पः न कल्पते । आदिमत्वं च जीवस्य स्यात् । एकस्य सतः द्वैधीकरणं हि छेदनम् ।

---

निरवयव इति । अङ्गुल्यादेरिव छेदो न सम्भवतीति अच्छेद्यत्वं ब्रह्मणः, तस्य हेतुः निरवयवत्वम् । भित्त्वेति । अच्छिन्नत्वेऽपि पाणिपादादिवत् प्रतिनियतप्रदेशभेदेनेत्यर्थः । प्रदेशभेदेन छेदनेन वा ब्रह्मणि सम्बन्धम् उपाधयो नार्हन्ति; निरवयवत्वात्, अच्छेद्यत्वाच्च-इत्यर्थः (श्रु. प्र) ॥

यदि मन्वीतेति, गगनवत् उपहितानुपहितांशभेदेन सदोषत्वनिर्दोषत्वोपपत्तिशङ्का । अनादिरिति उपाध्यवच्छेदात् जीवभावः, जीवभावात् उपाध्यवच्छेदः; कर्मणा जीवभावः, तस्मात् कर्म इति च अन्योन्याश्रयपरिहारायोक्तम् ।

अयं प्रष्टव्य इति । श्रुतौ अणुशब्दस्य सूक्ष्मपरत्वाभिप्रायसंभवात् तृतीयकल्पोदयः । चतुर्थपञ्चमौ कल्पौ आभ्यां विना गतिर्नाऽस्ति, इत्यभिप्रायेण कृतौ; न पराभ्युपगत्या । ब्रह्मशब्दस्य जीवेऽप्युपचारवृत्तेः चतुर्थः कल्पः । उपाधिब्रह्मणोः भिन्नाभिन्नत्वाभ्युपगमात् पञ्चमः ।

---

[1] स्वादृष्टो — आ. [2] र्थतया —थ [3] मन्वीथाः —आ.
[4] दक' —इ, वा, [5] देशे — वा [6] इहाऽ — इ, वा.
[7] भिन्न, —इ. [8] अनवच्छिन्न,— न [9] उत — न.

[1]द्वितीये तु[1] कल्पे—ब्रह्मण एव प्रदेशविशेषे उपाधिसम्बन्धात्, औपाधिकाः सर्वे दोषाः तस्यैव स्युः। उपाधौ गच्छति, उपाधिना स्वसंयुक्तब्रह्मप्रदेशाकर्षणा-योगात्, अनुक्षणम् [2]उपाधि[2]संयुक्तब्रह्मप्रदेश[3]भेदात्[3], क्षणे क्षणे बन्ध-[4]मोक्षौ च[4] स्याताम्। आकर्षणे च, [5]अच्छिन्न[5]त्वात्, कृत्स्नस्य ब्रह्मणः आकर्षणं स्यात्।

निरंशस्य व्यापिनः आकर्षणं न सम्भवति—इति चेत्,

तर्हि उपाधिरेव गच्छतीति, पूर्वोक्त एव दोषः स्यात्। अच्छिन्नब्रह्मप्रदेशेषु [6]सर्वो[6]पाधिसंसर्गे — [7]सर्वेषां च[7] जीवानां [8]ब्रह्मण एव[8] प्रदेशत्वेन, [9]एकत्वेन प्रति[9]-सन्धानं स्यात्। प्रदेशभेदात् अप्रतिसन्धाने च, एकस्याऽपि स्वोपाधौ [10]गच्छति[10] प्रतिसन्धानं न स्यात्।

तृतीये तु कल्पे—ब्रह्मस्वरूपस्यैव उपाधिसम्बन्धेन जीवत्वापातात्, तदतिरि-क्तानुपहितब्रह्मासिद्धिः स्यात्। सर्वेषु च देहेषु एक एव जीवः स्यात्।

तुरीये तु कल्पे—ब्रह्मणः अन्य एव जीव इति, जीवभेदस्य औपाधिकत्वं परित्यक्तं स्यात्।

चरमे—चार्वाकपक्ष एव परिगृहीतः स्यात्॥

[भेदाभेददूषणोपसंहारः]

तस्मात्—अभेदशास्त्रबलेन कृत्स्नस्य भेदस्य अविद्यामूलत्वमेव अभ्युपगन्तव्यम्।

---

आकर्षणे चेति। आकर्षणेन विना तत्परिहारासम्भवात् तदाशङ्कयोक्तम्।

अनुपहितब्रह्मासिद्धिः स्यात् इति। निर्दोषत्वमङ्गलगुणकत्वश्रुतीनाम् अनुपहितब्रह्म-विषयत्वं हि पराभ्युपेतम्। [अतः] जीवेश्वरभेदाभावप्रसङ्गः, जीवानां परस्परभेदाभावप्रसङ्ग-श्चेत्यर्थः (श्रु. प्र)।

चरमे इति। अचिद्द्रव्यस्यैव चेतनत्ववचनात्, तस्य चेतनब्रह्मतादात्म्यानुपपत्तिश्चेत्य-भिप्रायः॥

---

1 द्वितीये — वा, 2 उपाधिविशेष — इ. 3 विशेषभेदात् — वा,
4 मोक्षौ — वा. 5 अच्छिन्न — द, 6 सर्वेषु — थ
7 सर्वेषां — इ, छ 8 ब्रह्मण — इ. छ. 9 एकत्वप्रति — आ, वा,
10 गच्छति सति — आ.

अतः प्रवृत्ति-[1]निवृत्ति[1]प्रयोजनपरतयैव शास्त्रस्य प्रामाण्येऽपि ध्यानविधि[2]शेषतया[2] वेदान्तवाक्यानां ब्रह्मस्वरूपे प्रामाण्यम् [3]उपपन्नम्[3]—इति ॥

[मीमांसककृतं ध्याननियोगवादिपक्षदूषणम्]

तदप्ययुक्तम्; ध्यानविधिशेषत्वेऽपि वेदान्तवाक्यानाम्, अर्थसत्यत्वे [4]प्रामाण्या[4]-योगात् ।

एतदुक्तं भवति—ब्रह्मस्वरूपगोचराणि वाक्यानि, किं ध्यानविधिना एकवाक्यतामापन्नानि ब्रह्मस्वरूपे प्रामाण्यं प्रतिपद्यन्ते ? उत स्वतन्त्राण्येव ?

एकवाक्यत्वे, [5]ध्यानविधि[5]परत्वेन ब्रह्मस्वरूपे तात्पर्यं न सम्भवति ।

भिन्नवाक्यत्वे, प्रवृत्ति[6]निवृत्ति[6]प्रयोजनविरहात् अनवबोधकत्वमेव ।

न च वाच्यम्—ध्यानं नाम स्मृतिसन्ततिरूपम् । तच्च स्मर्तव्यैकनिरूपणीयमिति, ध्यानविधेः स्मर्तव्यविशेषाकांक्षायाम्—

'इदं स[9] यदयमात्मा' (बृ. उ. 4-4-6)

'[7]ब्रह्म[7] सर्वानु[8]भूः[8]' (बृ. उ. 4-5-19)

'सत्यं ज्ञानमनन्तं ब्रह्म' (तै. उ. आन. 1-1)

---

तदप्ययुक्तमिति । न केवलं निष्प्रपञ्चीकरणविधिवाद एवाऽनुपपन्नः, इदमपि मतम् अनुपपन्नम् इति अपिशब्दस्य भावः ।

एतदुक्तमिति । ध्यानविधिशेषत्वे कथम् अर्थसत्यत्वे तात्पर्यायोगः, विधिशेषत्वं हित्वा स्वातन्त्र्येण वा ब्रह्मणि प्रामाण्यं स्यात् ? इत्यत्रोत्तरम् ।

एकवाक्यत्वम्—महावाक्यैकवाक्यत्वम् ।

अनवबोधकत्वम् ; दुःखसाध्यश्रवणादौ प्रवृत्त्ययोगात् ।

न च वाच्यमिति, एकवाक्यत्वपक्षे विधिशेषतया ब्रह्मणः सिद्धिमाशङ्क्य ।

ध्यानविधेरिति । 'नाम ब्रह्मेत्युपासीत' इत्यादिषु दृष्टिविधिषु विशेष्यसत्यत्वेऽपि विशेषणासत्यत्वेन विशिष्टासत्यत्वमवर्जनीयम् । इह च तथैव इत्यर्थः (श्रु. प्र) ।

---

1 निवृत्तिरूप — इ, ङ, वा, 2 विशेषतया — थ. 3 उपपन्नतरम् — आ,
4 तात्पर्या — थ, 5 ध्यान — न, 6 निवृत्तिरूप — वा,
9 अयमात्मा ब्रह्म — वा. 8 भूतिः — थ.

इत्यादीनि ब्रह्मस्वरूपतद्विशेषादीनि समर्पयन्ति । तेनैकवाक्यतामापन्नानि अर्थसद्भावे प्रमाणम्—इति;

ध्यानविधेः स्मर्तव्यविशेषापेक्षत्वेऽपि,

'नाम [1]ब्रह्म[1]' (छां. उ. 7-1-5)

इत्यादिदृष्टिविधिवत् असत्येनाऽपि अर्थविशेषेण ध्याननिर्वृत्त्युपपत्तेः, ध्येयसत्यत्वानपेक्षणात् ॥

[उक्तार्थसङ्ग्रहपूर्वकं पूर्वपक्षोपसंहारः]

अतः—वेदान्तवाक्यानां प्रवृत्ति-निवृत्तिप्रयोजनविधुरत्वात्, ध्यानविधि[2]शेष[2]त्वेऽपि, ध्येय[3]विशेषस्वरूप[3]समर्पणमात्रपर्यवसानात्, स्वातन्त्र्ये[4]ऽपि[4] बालातुराद्युपच्छन्दनवाक्यवत् ज्ञान[5]मात्रेणैव[5] पुरुषार्थपर्यन्तत्वासिद्धेश्च [7]परि[6]निष्पन्नवस्तुसत्यतागोचरत्वाभावात्, ब्रह्मणः शास्त्रप्रमाणकत्वं न संभवति—इति प्राप्तम् ॥

[विशिष्टाद्वैतिनां सिद्धान्तारम्भः, तत्र सूत्रार्थः]

तत्र प्रतिपद्यते — तत्तु समन्वयात् — इति । समन्वयः — सम्यगन्वयः, पुरुषार्थतया अन्वयः इत्यर्थः । परमपुरुषार्थभूतस्य अनवधिकातिशयानन्दस्वरूपस्य ब्रह्मणः अभिधेयतया अन्वयात्, तत्—शास्त्रप्रमाणकत्वम्, सिध्यत्येव इत्यर्थः ॥

[अप्रामाण्यशङ्कापरिहारः]

निरस्तनिखिल[7]दोषनिर[7]तिशयानन्दस्वरूपतया परमप्राप्यं ब्रह्म बोधयन् वेदान्त-

---

प्रतिपद्यते—सिद्धान्तः प्राप्नोति इति, सिद्धान्तो ज्ञायते इति वा अर्थः । परमेति, अन्वयः कस्य? केन? इत्यपेक्षां पूरयन् वाक्यार्थं योजयति । अनवधिकेतिपदम् परमपुरुषार्थत्वोपपादकम् । पुरुषेण अर्थ्यमानत्वं हि पुरुषार्थत्वम् । आनन्दरूपतया पुरुषार्थत्वम्, तस्य अनवधिकातिशयत्वात् परमपुरुषार्थत्वम् इति भावः । अनवधिकेत्यादिपदेन स्वयम् अननुकूलस्य सुखसाधनस्याऽपि पुरुषार्थत्वमस्तीति तद्व्यावृत्तिश्च सिद्धा । तुशब्दलब्धमर्थमाह सिध्यत्येव इति ॥

---

[1] ब्रह्मेत्युपासीत—झ, [2] विशेष—थ, [3] विषयस्वरूप —वा.
[4] णापि — वा. [5] मात्रेण — द. [6] अपरि - द,
[7] दोषगन्धनिर - वा. दोषानवधिका – द,

वाक्यगणः प्रवृत्ति-निवृत्तिपरताविरहात् न प्रयोजनपर्यवसायी — इति ब्रुवाणः राजकुलवासिनः [1]पुरुषस्य[1] कौलेयककुलानुप्रवेशेन प्रयोजनशून्यतां ब्रूते ।

एतदुक्तं भवति—अनादिकर्मरूपाविद्यावेष्टनतिरोहितपरावरतत्त्वयाथात्म्यस्वस्वरूपावबोधानां देवासुरगन्धर्वसिद्धविद्याधरकिंनरकिंपुरुषयक्ष[2]राक्षस[2]पिशाचमनुजपशुशकुनिसरीसृपवृक्षगुल्मलतादूर्वादीनां स्त्रीपुंनपुंसकभेदभिन्नानां क्षेत्रज्ञानां [3]व्यवस्थितधारकपोषक[3]भोग्यविशेषाणां मुक्तानां स्वस्य च अविशेषेण अनुभवसम्भवे [4]स्वरूपरूप[4]गुणविभवचेष्टितैः अनवधिकातिशयानन्द[5]जननं[5] [6]परं ब्रह्म[6] अस्ति—इति [7]बोधयदेव[7] वाक्यं प्रयोजनपर्यवसायि । प्रवृत्तिनिवृत्तिनिष्ठं तु यावत्पुरुषार्थान्वय[8]बोधं[8] न प्रयोजनपर्यवसायि ॥

[ध्यानविध्यानर्थक्यपरिहारः]

एवम्भूतं परं ब्रह्म कथं प्राप्यते ? इत्यपेक्षायाम् —

---

राजकुलवासी — राजकुलप्रसूतः , राजकुलान्तरङ्गो वा । कौलेयकाः—श्वानः, श्वोपजीविनः, म्लेच्छा वा लक्ष्यन्ते । प्रयोजनशून्यतां ब्रूत इति । स्वतो निरवधिकपुरुषार्थपरवाक्यस्य प्रयोजनशून्यत्वकथनम् अनुपपन्नमित्यर्थः ।

अनादिकर्मेति । कर्मभिः अनुभवप्रतिबन्धात् क्षेत्रज्ञानां तस्य पुरुषार्थत्वज्ञानाभावः, न तु तद्वैकल्यात् इत्यभिप्रायः । देवासुरादिपरिगणनं तेषां व्यवस्थितभोग्यत्वप्रदर्शनार्थम् । अनुभवसम्भव इति योग्यानुपलब्धिशङ्काव्युदासायोक्तम् । तद्विषयज्ञानानुकूलत्वं हि तदनुकूलत्वेन विना न संभवति । अतः अनवधिकातिशयानन्दजननत्वोक्त्या ब्रह्मणः अनवधिकातिशयानुकूलत्वं सिध्यति । स्वरूपरूपेत्यादिना सर्वप्रकारभोग्यत्वम् , तेन पुरुषार्थत्वाधिक्यं [च] सिद्धम् (श्रु. प्र) । प्रवृत्तीत्यादिना प्रवृत्ति-निवृत्त्योः पुरुषार्थत्ववैकल्यमुक्तम्; इष्टसुखलवसाधनतया उपादेयत्वात्, दुःखात्मकतया स्वतो भोग्यत्वाभावाच्च ॥

एवंभूतमिति । परोक्षज्ञानस्याऽपि सुखरूपत्वात् , स्वरूपपराणि वाक्यानि पुरुषार्थपर्यवसायीन्येव । तदापरोक्ष्याकाङ्क्षिणः तत्साधनज्ञापकत्वात् ध्यानविधायीनि वाक्यान्यपि न निष्फलानीत्यर्थः । यथेत्यादि । एवं परोक्षज्ञानजनकस्यैव वाक्यस्य पुरुषार्थपर्यवसायित्वेऽपि

---

1 उपासनफलकब्रह्मविचारप्रवृत्तस्य पुरुषस्य—ग. 2 रक्षः— इ. 3 व्यवसितधारक—थ, 4 स्वरूप —पा. 5 जनकं —घ, ङ, ट, वा 6 परब्रह्म – न 7 बोधोपदेश— इ 8 बोधनात् – द

'ब्रह्मविदाप्नोति परम्' (तै. उ. आन. -1)
'आत्मानमेव लोकमुपासीत' (बृ. उ. 3-4-15)

इति वेदनादिशब्दैः उपासनं ब्रह्मप्राप्त्युपायतया विधीयते। यथा "[1]स्व[1]वेश्मनि निधिरस्ति' इति वाक्येन निधिसद्भावं ज्ञात्वा तृप्तः सन्, पश्चात् तदुपादाने च प्रयतते, यथा च कश्चिद्राजकुमारः बालक्रीडासक्तः नरेन्द्रभवनात् निष्क्रान्तः मार्गात् भ्रष्टः, 'नष्टः' इति राज्ञा [2]विज्ञातः[2], स्वयं च अज्ञातपितृकः केनचित् द्विजवर्येण वर्धितः, अधिगतवेदशास्त्रः षोडशवर्षः सर्वकल्याणगुणाकरस्तिष्ठन्, पिता ते सर्वलोकाधिपतिः गाम्भीर्यौदार्यवात्सल्यसौशील्यशौर्यवीर्यपराक्रमादि[3]गुण[3]सम्पन्नः त्वामेव नष्टं पुत्रं दिदृक्षुः

---

फलविशेषापेक्षया ध्यानप्रवृत्तिर्युक्ता। यथा 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' 'ज्योतिष्टोमेन स्वर्गकामो यजेत' 'अग्निहोत्रं जुहुयात् स्वर्गकामः' इत्यादिषु दर्शपूर्णमासादीनामेकैकस्य स्वर्गसाधनत्वेऽपि फलविशेषापेक्षया कर्मान्तरारम्भः, एकस्यैव कर्मणः आवृत्तिश्च उपपद्यते; यथा पुत्रजन्मश्रवणसंजातहर्षस्याऽपि पश्चात् तन्मुखापरोक्ष्यसुखाशया प्रवृत्तिः उपपद्यते, तथाऽत्राऽपि इत्यभिप्रायः। अत्र **निधि-राजकुमारदृष्टान्तद्वयम्**, चिदचिद्विभागात्, उभयगतं भोग्यत्वं ब्रह्मण्यस्ति इति ज्ञापनायोक्तम्। 'तद्यथा हिरण्यनिधिम्' (छा. उ. 8-3-2) इति श्रुतिः। **राजकुमारः** इति, भगवति राजत्वं, चेतनेषु पुत्रत्वं च। अत्र कुश-लव-समाधिः। **क्रीडासक्त** इति, चेतनानां बाह्यविषयप्रावण्यम्। **निष्क्रान्त** इति, भगवत्स-काशबहिष्ठत्वं, परमव्योमालाभश्च। **मार्गाद्भ्रष्ट** इति, कर्मज्ञानाद्युपायाननन्वयः। **द्विजवर्येण वर्धित** इति, भगवज्ज्ञाननिष्पत्तियोग्यतासिद्धिहेतुभूताध्ययनादिनिष्पादकाचार्यसम्बन्धः। **षोड-शवर्षः**— भोक्तृत्वावस्थः भोग्यत्वावस्थश्च। **गुणाकर** इति, भगवदभिमतैर्गुणैः पूर्णता। **पिता ते** इत्यादिना भगवद्गुणगणाः। गाम्भीर्यादय इति उपासकं प्रति सौलभ्योपयुक्ताः गुणाः। **शौर्यादयः** परत्वान्तर्गताः। **गाम्भीर्यम्**—संप्रदानलाघवदीयमानगौरवानपेक्षत्वम्। **औदार्यम्**-दातृप्रतिगृहीतृविभागबुद्धिविरहेण 'प्राप्तं कृतम्' इति प्रतिपत्तिमत्वम्, आत्मात्मीयं दत्वाऽपि ऋणं प्रवृद्धमिव मे' इति स्थितिर्वा। **वात्सल्यम्**—दोषेष्वपि गुणत्वबुद्धिः; यथा मातुः वत्से। **सुशीलं हि नाम** महतः मन्दैः सह नीरन्ध्रेण संश्लेषस्वभावत्वम्; तद्वत्ता सौशील्यम्। **शौर्यम्**—स्वगृहे इव शत्रुमध्ये प्रवेशसामर्थ्यम्। भीरुत्वप्रतियोगि हि शौर्यम्। **वीर्यम्**—अश्रान्तिः। **पराक्रमः**—विक्रमणम्। अत्राऽनुक्तमपि, **धैर्यम्**— शत्रुभिर्धर्षणे तृणवन्मन्य-

---

[1] तव — श्रा        [2] ज्ञातः—घ        [3] गुणगण —त्रा

पुरवरेतिष्ठति' इति केनचित् अभियुक्ततमेनं प्रयुक्तं वाक्यं शृणोति चेत्, तदानीमेव अहं तावत् जीवतः पुत्रः मत्पिता च सर्वसम्पत्समृद्धः' इति निरतिशयहर्षसमन्वितो भवति। राजा च स्वपुत्रं जीवन्तम् अरोगम् अतिमनोहरदर्शनं विदितसकलवेद्यं श्रुत्वा, अवाप्तसमस्तपुरुषार्थो [1]भवति, पश्चात् तदुपादाने च प्रयतते,[1] पश्चात् तावुभौ संगच्छेते च—इति ॥

[अनुभाषणपूर्वकं पूर्वपक्षयुक्तार्थदूषणम्]

यत्पुनः—परिनिष्पन्नवस्तुगोचरस्य वाक्यस्य तज्ज्ञानमात्रेणाऽपि पुरुषार्थपर्यवसानात् बालातुराद्युपच्छन्दनवाक्यवत् [2]अर्थसद्भावे प्रामा[2]ण्यम्—इति,

तदसत्; अर्थसद्भावाभावे निश्चिते, ज्ञातोऽप्यर्थः पुरुषार्थाय न भवति। [3]बाला-तुरा[3]दीनामपि अर्थसद्भाव[4]भ्रान्त्या[4] हर्षाद्युत्पत्तिः। तेषामेव तस्मि[5]न्नेव[5] ज्ञाने विद्यमाने, यदि अर्थाभावनिश्चयो जायेत, ततः तदानीमेव हर्षादयः निवर्तेरन्। औपनिषदेष्वपि वाक्येषु ब्रह्मास्तित्वतात्पर्याभावनिश्चये, ब्रह्मज्ञाने सत्यपि पुरुषार्थपर्यवसानं न स्यात् ॥

[अधिकरणार्थोपसंहारः]

अतः

'यतो वा इमानि भूतानि जायन्ते' (तै. उ. भृ. 1-2)

इत्यादिवाक्यम्—निखिलजगदेककारणं निरस्तनिखिलदोषगन्धं सार्वज्ञ्यसत्यसङ्कल्पत्वाद्य-

---

मानत्वम् अनुसन्धेयम्। दिदृक्षुरिति, 'स महात्मा सुदुर्लभः' इति भगवदभिप्रायः। पुरवरे इति, ब्रह्मपुराख्यशरीरान्तःस्थितिः। अभियुक्ततमशब्देन भगवज्ज्ञानप्रदो गुरुः। [एवमादयोऽर्थाः प्रतिपदं यथायोग्यमनुसन्धेयाः।] अवाप्त . . . . भवति इत्यनेन वाक्यस्य प्रयोजनपर्यवसायित्वम्। अतः प्रवर्तकार्थपरतयैव प्रयोजनपर्यवसानमिति नियमो भग्न इति ॥

अर्थसद्भावाभाव इति। इदं वाक्यं पक्षविषयम्, पक्षदृष्टान्तसाधारणं वा। हेतुत्वं गर्भितम्। अर्थसद्भावाभावनिश्चये सति पुरुषार्थपर्यवसानाभावात् इत्यर्थः।

निखिलेति, कारणवाक्यानामर्थमाह। निखिलशब्दः परैः नित्यतया अभिमतानाम् आकाशादीनामपि कार्यत्वज्ञापनार्थः। एककारणम् इति एकशब्दः निमित्तोपादानैक्यद्योतकः।

---

[1] भवति – आ, वा [2] अर्थसद्भावप्रामा – थ [3] बाला—आ

[4] भ्रान्त्यैव – इ, झ, वा [5] अपि—वा

न्तकल्याणगुणाकरम् अनवधिकातिशयानन्दं ब्रह्म अस्ति— इति बोधयतीति सिद्धम् ॥

[इति श्रीभगवद्रामानुजविरचिते शारीरकमीमांसाभाष्ये
प्रथमाध्यायस्य चतुस्सूत्री समाप्ता ॥]

[शास्त्रोपोद्घातरूपा चतुरधिकरणी]

श्रीधराय नमः। श्रियै नमः। श्रीमते रामानुजाय नमः।

॥श्रीः॥

---

निरस्तेति, 'यतो वा इमानी'त्यादिवाक्ये शोधकवाक्यार्थश्च गर्भितः इत्यभिप्रायेण। अत्र निखिलशब्देन चिदचिद्गताः क्लेशकर्मादयः जन्मादयश्च विवक्षिताः। गन्धशब्देन, कदाचित् दोषसम्बन्धार्हत्वव्यावर्तकेन सदा तत्प्रत्यनीकत्वमुक्तम्। सार्वज्ञ्येति, कारणत्वौपयिकान् गुणानाह। अनवधिकेति, एतदधिकरणसिद्धमर्थमाह। बोधयतीति। अध्यापनाद्युपपत्तये पुरुषार्थपर्यवसानस्य अपेक्षितत्वात्, प्रेक्षावदधिकार्यस्य शास्त्रस्य अर्थसद्भावाभावनिश्चये सति पुरुषार्थपर्यवसानानुपपत्तेः, तदुपपत्त्यर्थं प्रवर्तकवाक्यानामिव अर्थसद्भावे प्रामाण्यम् अङ्गीकार्यमिति, यथोक्तलक्षणं ब्रह्म 'यतो वा इमानी'त्यादिवाक्यं प्रतिपादयतीत्यर्थः (श्रु. प्र) ॥

[1]व्युत्पत्त्यभावः [2]प्रतिपत्तिदौःस्थ्यम् [3]अन्येन सिद्धत्वम् [4]अथाफलत्वम्।
एतानि वै सूत्रचतुष्टयेनाऽनारम्भमूलानि निराकृतानि ॥ (वे. न्या. सु)

अत्रा[1]ऽधिकारी [2]विषयः सम्बन्धश्च [4]प्रयोजनम्।
चतुःसूत्र्या सूचितं स्यात् प्रवृत्त्यङ्गचतुष्टयम् ॥ (दर्शनोदयः)

---

प्राज्ञैः पूर्वैर्ग्रथित व्याख्या बह्वीः समालोक्य।
लघ्वी टिप्पण्यत्र प्रकाशिताऽध्येतृबोधार्थम् ॥

॥ नमः परमऋषिभ्यः ॥

॥ इति समन्वयाधिकरणम् ॥ ४ ॥

[चतुस्सूत्री समाप्ता]

## शान्तिपाठाः



### १ ऋग्वेदीयः

वाङ्मे मनसि प्रतिष्ठिता, मनो मे वाचि प्रतिष्ठितम्, आविरावीर्म एधि। वेदस्य म आणी स्थः, श्रुतं मे मा प्रहासीः, अनेनाधीतेनाहोरात्रान् सन्दधामि। ऋतं वदिष्यामि, सत्यं वदिष्यामि, तन्मामवतु, तद्वक्तारमवतु अवतु माम्, अवतु वक्तारमवतु वक्तारम्। ओं शान्तिः शान्तिः शान्तिः ॥

### २ यजुर्वेदीयौ

शं नो मित्रः शं वरुणः। शं नो भवत्वर्यमा। शं न इन्द्रो बृहस्पतिः। शं नो विष्णुरुरुक्रमः। नमो ब्रह्मणे। नमस्ते वायो। त्वमेव प्रत्यक्षं ब्रह्मासि। त्वामेव प्रत्यक्षं ब्रह्मावादिषम्। ऋतमवादिषम्। सत्यमवादिषम्। तन्मामावीत्। तद्वक्तारमावीत्। आवीन्माम्। आवीद्वक्तारम्। ओं शान्तिः शान्तिः शान्तिः ॥

सहनाववतु। सह नौ भुनक्तु। सह वीर्यं करवावहै। तेजस्विनावधीतमस्तु मा विद्विषावहै। ओं शान्तिः शान्तिः शान्तिः।

### ३ सामवेदीयः

आप्यायन्तु ममाङ्गानि वाक् प्राणश्चक्षुः श्रोत्रमथो बलमिन्द्रियाणि च सर्वाणि सर्वं ब्रह्मौपनिषदं, माहं ब्रह्म निराकुर्याम्, मा मा ब्रह्म निराकरोत्। अनिराकरणमस्तु अनिराकरणं मेऽस्तु तदात्मनिरते य उपनिषत्सु धर्माः ते मयि सन्तु ते मयि सन्तु। ओं शान्तिः शान्तिः शान्तिः।

### ४ अथर्ववेदीयः

भद्रं कर्णेभिः शृणुयाम देवाः। भद्रं पश्येमाक्षभिर्यजत्राः। स्थिरैरङ्गैस्तुष्टुवांसस्तनूभिः। व्यशेम देवहितं यदायुः। स्वस्ति न इन्द्रो वृद्धश्रवाः। स्वस्ति नः पूषा विश्ववेदाः। स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः। स्वस्ति नो बृहस्पतिर्दधातु। ओं शान्तिः शान्तिः शान्तिः ॥



इति श्रीभगवद्रामानुजविरचिते

शारीरकमीमांसाभाष्ये

चतुस्सूत्री

॥ श्रीः ॥

# अनुबन्धः—१

१ शारीरकन्यायकलापसङ्ग्रहः

२ तत्त्वसारः

३ अधिकरणसारावलिः

४ अधिकरणार्थसङ्ग्रहः

५ नयसङ्गतिमालिका

॥ श्रीः ॥

श्रीमते रामानुजाय नमः । श्रियै नमः । श्रीधराय नमः ।

# शारीरकन्यायकलापसङ्ग्रहः

[श्रीसेनेश्वरार्यैः विरचितः]

[[1]जगद्वारः[1] सुविन्यस्तः सेनेशो यत्र विष्णुना ।
तस्यावतारमपरं [2]सेनानाथ[2]गुरुं भजे ॥]

॥ प्रथमोऽध्यायः—प्रथमः पादः ॥

—शास्त्रावतारः—

[प्रतिज्ञा]

प्रणम्य रामानुजसंयमीश्वरं प्रबोधहेतुं हृदयाम्बुजन्मनः ।
करोमि तद्दर्शनमार्गगोचरं शारीरकन्यायकलापसङ्ग्रहम् ॥ १ ॥

**हृदयाम्बुजन्मनः**—हृदयारविन्दस्य, **प्रबोधहेतुम्**—विकासकारणीभूतम्, **रामानुजसंयमीश्वरम्**—भगवद्रामानुजनामानं यतिवरेण्यम्, **प्रणम्य**—नमस्कृत्य, **तद्दर्शनमार्गगोचरम्**—तत्संमतदर्शनपथपरिचायकम्, **शारीरकन्यायकलापसङ्ग्रहम्**—बादरायणकृतशारीरकाधिकरणार्थसंग्राहकं ग्रन्थम्, **करोमि**—रचयामि ॥ १ ॥

[अध्यायचतुष्टयार्थः]

प्रमाणता तत्प्रतियोगिभङ्गः संराधनं तस्य फलोपभोगः ।
एतानि सम्यक् परिचिन्तितानि शास्त्रेत्विहाध्यायचतुष्टयेन ॥ २ ॥

**इह तु शास्त्रे**—अस्मिंस्तु शारीरकशास्त्रे, **अध्यायचतुष्टयेन**—समन्वय-अविरोध-साधन-फलशब्दघटितनामकेन लक्षणचतुष्केण, (यथाक्रमम्) **प्रमाणता**—वेदान्तवाक्यानां

1 रक्षाभरः–क     2 सेनानाथं–ख.

परब्रह्मविषयकप्रमितिजनकत्वम्, **तत्प्रतियोगिभङ्गः**—प्रामाण्यविरोध्यप्रामाण्यनिरसनम्, **संराधनम्**—विद्यारूपं भगवदुपासनम्, **तस्य**—उपासनस्य, **फलोपभोगः**—फलभूत-ब्रह्मानुभवसम्पत्तिः, **एतानि**—तत्त्व-हित-पुरुषार्थात्मकानि चत्वारि प्रमेयाणि, **सम्यक्**—निपुणम्, **परिचिन्तितानि**—विचार्य निर्णीतानि ॥ २ ॥

[प्रथमाध्यायीयपादचतुष्टयार्थाः]

अस्पष्टतरमस्पष्टं स्पष्टं छायानुसारि च ।
जीव-प्रधानयोरादौ वाक्यजातं [1]विचिन्तितम्[1] ॥ ३ ॥

**आदौ** - प्रथमे अध्याये, (यथाक्रमम्) **जीव-प्रधानयोः**—चिदचित्तत्त्वयोः विषये **अस्पष्टतरम्**—तयोरेव अस्पष्टतया प्रतिपादकम्, **स्पष्टम्**—तयोरेवार्थयोः स्फुटतया प्रतिपादकम्, **छायानुसारि च**—तयोरर्थयोरेव स्फुटतरतया प्रतिपत्तिजनकम्, **वाक्यजातम्**—वेदान्त-वाक्यकदम्बकम्, **विचिन्तितम्**—विचार्य निर्णीतम् ॥ ३ ॥

[द्वितीयाध्यायीयपादचतुष्टयार्थाः]

स्मृति-न्यायाविरोधश्च परपक्षपराहतिः ।
कार्यता वियदादीनाम् अक्षादेश्च द्वितीयतः ॥ ४ ॥

**द्वितीयतः**—शारीरकद्वितीयाध्यायात्, (यथाक्रमम्) **स्मृतिन्यायाविरोधः**—परमात्मप्रतिपादकत्वेन अभिमतानां वेदान्तवाक्यानां मुनिप्रणीततया संमतैः स्मृतिवाक्यैः तर्कैश्च व्याघाताभावः । **परपक्षपराहतिः**—परकीयाभिमतानाम् अर्थानाम् अतात्त्विकत्व-निरूपणम्, **वियदादीनाम्**—आकाशाद्यर्थानाम्, **कार्यता**—उत्पत्तिमत्त्वम्, **अक्षादेश्च**—प्राणेन्द्रियादेरपि, **कार्यता**—जन्यता (एतेऽर्थाः), **विचिन्तिताः**—विचार्य निर्णीताः ॥ ४ ॥

[तृतीयाध्यायीयपादचतुष्टयार्थाः]

सदोषत्वम् अदोषत्वं जीवस्य च परस्य च ।
तृतीयेन परोपास्तिः इतिकर्तव्यताऽपि च ॥ ५ ॥

---

1 विचारितम्—ख.

**तृतीयेन**—तृतीयाध्यायेन, (यथाक्रमम्) **जीवस्य**—देहिनः, **सदोषत्वम्**—अपुरुषार्थभाक्त्वम्, **परस्य**—परमात्मनः, **अदोषत्वम्**—अपुरुषार्थसम्बन्धाभावः, **परोपास्तिः**—परमपुरुषोपासनं विद्यारूपम्, **इतिकर्तव्यताऽपि च**—विद्याङ्गभूतानि वर्णाश्रमधर्माद्यात्मकान्यनुष्ठेयानि च, **विचिन्तितानि**—विचार्य निर्णीतानि ॥ ५ ॥

[चतुर्थाध्यायीयपादचतुष्टयार्थाः]

उपास्त्यनुष्ठानविधा गत्युपक्रम एव च ।
गतिमार्गप्रकारश्च फलं चाऽपि चतुर्थतः ॥ ६ ॥

**चतुर्थतः**—तुरीयादध्यायात्, (यथाक्रमम्) **उपास्त्यनुष्ठानविधा**—उपासनानुष्ठानप्रकारः, **गत्युपक्रम एव च**—उपासकस्य देहादुत्क्रान्तिः, **गतिमार्गप्रकारश्च**—भगवत्प्राप्तौ अर्चिरादिमार्गविधा, **फलं च**—परिपूर्णब्रह्मानुभवरूपं परमफलं च, (एतेऽर्थाः) **विचिन्तिताः**—विचार्य निर्णीताः ॥ ६ ॥

---

# तत्त्वसारः (शारीरकीयः)

॥ श्री वात्स्यवरदाचार्यैः विरचितः ॥

[वन्देऽहं वरदार्यं तं वत्साभिजनभूषणम् ।
भाष्यामृतप्रधानाद्यः संजीवयति मामपि ॥]

१ — १

[उपोद्घातः (श्लो १-४) ]

[ स्वाचार्यमहिमानुसन्दानम् ]

श्री विष्णुचित्तपदपङ्कजसङ्गमाय
चेतो मम स्पृहयते किमतः परेण ।
नो चेन्ममाऽपि यतिशेखरभारतीनां
भावः कथं भवितुमर्हति वाग्विधेयः ॥ १ ॥

**श्री विष्णुचित्तपदपङ्कजसङ्गमाय**—'एङ्गळाळ्वान्' इति प्रख्यातस्य स्वगुरोः चरणकमलयोः एकीभूय अनवरतम् अवस्थातुम्, **मम चेतः**—मदीयं स्वान्तम्, **स्पृहयते**—अभिलषति । **अतः परेण**—अस्मादन्यत्, **किम्?**—न किमपि प्राप्यमस्ति । **नो चेत्**—अन्यथा, **ममाऽपि**—नानाशास्त्रपाण्डित्यहीनस्यापि मम, **यतिशेखरभारतीनाम्**—भगवद्रामानुजीयाणां गिराम्, **भावः**—आशयः, **वाग्विधेयः भवितुम्**—वाचा स्पष्टं ज्ञाप्यतया स्थातुम्, **कथमर्हति**—केन प्रकारेण साध्यो भवति? ॥ १ ॥

[ स्वविनयनिवेदनं स्वाहङ्कारखण्डनम्, रामानुजार्यमहिमा च ]

क्व पथि विदुषामेषा प्रौढी? श्रियः प्रभुणा शपे
मशकशकनं मन्ये माद्दक्प्रभावनिदर्शनम् ।
यतिवरवचस्तेजः प्रत्यर्थिवर्गनिरर्गल-
क्षपणनिपुणं नित्यं जागर्ति कीर्तिकरं मयि ॥ २ ॥

**एषा प्रौढी**—भगवद्रामानुजीया अप्रतिहता ईदृशी प्रगल्भता, **विदुषां**—प्राप्तविद्यानामितरेषां विपश्चिताम्, **पथि**—ग्रन्थसरणौ, **क्व**—कुत्र दृश्यते? न कुत्राऽपि;

**श्रियः प्रभुणा**—महालक्ष्मीवल्लभेन, **शपे**—शपथं कुर्वे। **मादृक्प्रभावनिदर्शनम्**—अस्मादृशां शक्तेः लोके प्रकटीकरणम्, **मशकशकनं मन्ये**—मशकानां शक्तेः सदृशमिति दृढं जाने। **प्रत्यर्थिवर्गनिरर्गलक्षपणनिपुणम्**—तात्त्विकार्थविरुद्धाभिधायिजनस्तोमस्य अप्रतिबन्धेन निरसने अत्यन्तं समर्थम्, **यतिवरवचस्तेजः**—संयमीन्द्रस्य रामानुजस्य वाचां तेजः, **मयि**—अत्यन्तमसमर्थेऽपि मयि, **कीर्तिकरम्**—विजयप्रथाधायकं सत्, **नित्यं जागर्ति**—अविरतम् अप्रमादं व्यापृतं वर्तते ॥ २ ॥

न खलु कवितामानः का नः क्षतिः पथि गौतमे ?
न च परिचयः काणादे वा कुमारिलदर्शने ।
अपि गुरुमते शास्त्रेष्वन्येष्वपीह तथाऽपि नः
फलति विजयं सर्वत्र श्रीयतीश्वरगीश्श्रमः ॥ ३ ॥

**इह**—अस्मिन् जगति, **नः**—अस्माकम्, **कवितामानः**—कवित्वाभिमानः, **न खलु**—नैवाऽस्ति, **का क्षतिः**—का हानिः ?, **गौतमे पथि**—गोतमप्रवर्तिते न्यायमार्गे, **काणादे वा पथि**—काणादप्रवर्तिते वैशेषिकदर्शनप्रस्थाने वा, **कुमारिलदर्शने वा**—कुमारिलप्रवर्तिते जैमिनीये दर्शने वा, **अपि गुरुमते**—गुर्वपरपर्यायेण प्रभाकरेण विवृते जैमिनीयमतभेदे वा, (तथा) **अन्येष्वपि शास्त्रेषु**—व्याकरण-सांख्य-योगादिशास्त्रेष्वपि, **न च परिचयः**—नैवाऽस्ति गाढा गूढा वा व्युत्पत्तिः। **तथाऽपि**—उक्तेऽर्थे वास्तवे सत्यपि, **यतीश्वरगीश्श्रमः**—श्रीरामानुजग्रन्थेषु परिश्रमः, **नः**—अस्माकम्, **सर्वत्र**—सर्वेषु शास्त्रेषु **विजयम्**—यथावस्थितशास्त्रार्थप्रतिपादनजन्यं यशः, **फलति**—फलतया ददाति ॥ ३ ॥

यश्चकार यतिराजभारतीचित्तवृत्तिषु परं परिश्रमम् ।
तस्य वैदिकसदश्शिखामणेः अग्रतः क्व परवादिसम्भवः ? ॥ ४ ॥

**यः**—यः कश्चन दार्शनिकः, **यतिराजभारतीचित्तवृत्तिषु**—रामानुजसूक्तीनां गूढाशयेषु, **परं परिश्रमम्**—पौनःपुन्येन चिन्तनरूपं परिश्रमम्, **चकार**—कृतवान्, **वैदिकसदःशिखामणेः**—वेदतत्त्वार्थवित्परिषदग्रेसरस्य, **तस्य**—दार्शनिकस्य, **पुरतः**—अग्रतः, **परवादिसम्भवः क्व ?**—अतत्त्वार्थवादिनामुत्पत्तिः, स्थितिरपि वा कुत्र वा शक्या ? न कुत्राऽपि ॥ ४ ॥



# अधिकरणसारावलिः

॥ श्रीमन्निगमान्तमहादेशिकविरचिता ॥

श्रीमान् वेङ्कटनाथार्यः कवितार्किककेसरी ।
वेदान्ताचार्यवर्यो मे संनिधत्तां सदा हृदि ॥

---

## १—१

[शास्त्रावतारभागः (श्लो. १—२६)]

[ग्रन्थप्रवृत्तिहेतुः]

स्वस्ति श्रीरङ्गभर्तुः किमपि दधदहं शासनं तत्प्रसत्त्यै
सत्यैकालम्बि भाष्यं यतिपतिकथितं शश्वदध्याप्य युक्तान् ।
विश्वस्मिन् नामरूपाण्यनुविहितवता तेन देवेन दत्तां
वेदान्ताचार्यसंज्ञामवहितबहुवित्सार्थमन्वर्थयामि ॥ १ ॥

**स्वस्ति**—क्षेमप्राप्त्यादिः सर्वविधाप्याशीः अस्तु । **अहम्**—वेङ्कटनाथः अहम्, **श्रीरङ्गभर्तुः**—श्रीरङ्गनाथस्य, **किमपि**—दिव्यम्, **शासनम्**—आदेशम्, **दधत्**—अनुसन्दधानः, **तत्प्रसत्त्यै**—श्रीरङ्गनाथस्य प्रसन्नतायै, **यतिपतिकथितम्**—भगवद्रामानुजैः भाषितम्, **सत्यैकालम्बि**—परमार्थभूतचिदचिदीश्वरात्मकतत्त्वत्रयावलम्बि ; मिथ्यार्थानवलम्बि च, **भाष्यम्**—श्रीभाष्याख्यं प्रबन्धम्, **युक्तान्**—अवहितान् मुमुक्षूनुद्दिश्य, **शश्वत्**—अनेकवारम्, **अध्याप्य**—सम्यक् बोधयित्वा, **विश्वस्मिन्**—अखिले जगति, **नामरूपाणि**—नामानि, रूपाणि च योग्यानि, **अनुविहितवता**—अनुप्रविश्य व्याकृतवता, **तेन देवेन**—जगन्मूलकन्देन मुकुन्देनैव, **दत्ताम्**—अनुगृहीताम्, **वेदान्ताचार्यसंज्ञाम्**—'वेदान्ताचार्यः' इतीमाम् आख्याम्, **अवहितबहुवित्सार्थम्**—बहुज्ञानां परिषदः अवधानसंपादनपूर्वकम्, **अन्वर्थयामि**—अर्थानुगुणां करोमि ॥ १ ॥

[ आचार्यानुग्रहः, शान्तेः परमफलता च ]

श्रीमद्भ्यां स्यादसावित्यनुपधि वरदाचार्यरामानुजाभ्यां
सम्यग्दृष्टेन सर्वंसहनिशितधिया वेङ्कटेशेन क्लृप्तः ।
सेव्योऽसौ [1]शान्तचित्तैः[1] श्रवणरसनया शान्तिलाभार्थिभिर्वा
सिद्धः शारीरकार्थे सहजबहुगुणः स्रग्धरादुग्धराशिः ॥ २ ॥

श्रीमद्भ्याम्—वेदान्तार्थज्ञानसम्पद्युक्ताभ्याम्, वरदाचार्यरामानुजाभ्याम्—'नडादूर् अम्माळ्नाम्ना वात्स्यवरदार्येण, किडाम्बि अप्पुळ्ळार्'नाम्ना आत्रेयरामानुजार्येण च, अनुपधि—किमपि बाह्यं निमित्तमनवलम्ब्य, असौ स्यात् इति—'अयं शिशुः आत्मवान् भूयात्' इति, सम्यक्—कृपापूर्णम्, दृष्टेन—कटाक्षितेन, सर्वंसहनिशितधिया—परवादिक्षोभसहसूक्ष्मग्राहिमेधासम्पन्नेन, वेङ्कटेशेन—एतन्नामधेयेन मया, क्लृप्तः—सङ्ग्रथितः, शारीरकार्थे—शारीरकशास्त्रार्थे, सिद्धः—अप्रतिपत्ति-विप्रतिपत्त्यन्यथाप्रतिपत्तिराहित्येन पूर्णप्रतिपत्तिजनकः, असौ—करिष्यमाणतया बुद्धिस्थः, सहजबहुगुणः—स्वाभाविकसर्वगुणपूर्तिमान्, स्रग्धरादुग्धराशिः—दुग्ध[क्षीर]सागरसदृशः आप्यायकांशपूर्णः स्रग्धराच्छन्दस्कः अयं ग्रन्थः, शान्तचित्तैः—इतः पूर्वमेव चित्तशान्तिमद्भिः, शान्तिलाभार्थिभिर्वा—एतदध्ययनेन शान्तिलाभमपेक्षमाणैर्वा मुमुक्षुभिः, श्रवणरसनया—रसास्वादोपयोगिना श्रोत्रेण, सेव्यः—पुनःपुनः श्रोतव्यः ॥ २ ॥

[ श्रोतृप्रवर्तनम् ]

त्रय्यन्तस्वान्तवादिन्यधिकरणगणे पौनरुक्त्योक्तबाधौ
मन्दत्वासङ्गतत्वे विशयमफलतां मानबाधं च मन्तॄन् ।
दिङ्मोहक्षोभदीनान् दिनकरकिरणश्रेणिकेवोज्जिहाना
हृद्या पद्यावलीयं हृदयमधिगता सावधानान् धिनोतु ॥ ३ ॥

त्रय्यन्तस्वान्तवादिनि—उपनिषदाशयप्रतिपादके, अधिकरणगणे—अधिकरणस्तोमात्मके

---

1 शान्तपित्तैः—अ. चि.

अस्मिन् शारीरकशास्त्रे, **पौनरुक्त्योक्तबाधौ**—उक्तार्थस्य निष्फलं पुनरभिधानम्, न्यायनिर्णीतार्थविरुद्धाभिधानं च, **मन्दत्वासङ्गतत्वे**—अल्पप्रयोजनत्व-युक्तिदौर्बल्ये, तथा पूर्वापरसङ्गतिराहित्यं च, **विशयम्**—प्राप्तसंशयापरिहारम्, **अफलताम्**—अप्रयोजनत्वानपेक्षितप्रयोजनत्वे, **मानबाधं च**—इतरप्रमाणव्याहतिं च, **मन्तॄन्**—आशङ्कमानान्, **दिङ्मोहक्षोभदीनान्**—निर्धारणीयप्रधानार्थ-तदुपष्टम्भकार्थाविवेककृतया वैयाकुल्या म्लानचित्तान् जिज्ञासून्, दिग्भ्रान्तान् जनान्, **उज्जिहाना**—उषसि ऊर्ध्वं प्रसरन्ती, **दिनकरकिरणश्रेणिकेव**—रविमरीचीनाम् आवलिरिव स्थिता, **हृदयमधिगता**—हृदयस्पर्शिनी, न तु कर्णमात्रं प्राप्ता, **इयम्**—करिष्यमाणत्वेन बुद्धिस्था, **हृद्या**—रमणीया, **पद्यावली**—पद्यानां माला, **सावधानान्**—प्रमादरहितान् कृत्वा, **धिनोतु**—तुष्टान् करोतु ॥ ३ ॥

[ अलभ्यलाभः ]

गम्भीरे ब्रह्मभागे गणयितुमखिलं कः प्रवीणः प्रमेयम्
दिङ्मात्रं दर्शयन्नप्यहमिह निपुणैः प्राध्वमध्यक्षणीयः ।
माभून्निःशेषसिद्धिस्तदपि गुणविदः स्फीतनिस्सीमरत्ने
मध्येहारं निधेयं महति जहति किं मौक्तिकं लब्धमब्धौ ॥ ४ ॥

**गम्भीरे**—अत्यन्तं दुर्ज्ञेये, **ब्रह्मभागे**—उपनिषदात्मके वेदान्तभागे, **प्रमेयम्**—अधिगन्तव्यम् अर्थजातम्, **अखिलम्**—अनवशेषेण, **गणयितुम्**—एतावदिति परिच्छेत्तुम्, **कः प्रवीणः**—को वा समर्थः? न कोऽपि, (अथवा) **कः प्रवीणः**—ब्रह्मैव समर्थः, नाऽन्यः। **इह**—शारीरकार्थविषये, **दिङ्मात्रम्**—किञ्चिन्मात्रम् अधिगन्तव्यसरणिम्, **दर्शयन्नपि**—सुबोधमापादयन्नपि, **अहम्**—भगवदाज्ञानिर्वहणे प्रवृत्तः अहम्, **निपुणैः**—कुशलमतिभिः तत्त्वार्थज्ञैः **प्राध्वम्**—अनुकूलया दृष्ट्या, **अध्यक्षणीयः**—कटाक्षणीयः । **स्फीतनिस्सीमरत्ने**—अनर्घासङ्ख्यातरत्नभरिते, **महति अब्धौ**—महाजलधौ, **निश्शेषसिद्धिः**—निरवशेषतः सर्वरत्नलाभः, **माभूत्**—मा भवतु नाम, **तदपि**—तथाऽपि, **गुणविदः**—गुणज्ञाः, **लब्धम्**—स्वैः लब्धम्, **मध्येहारम्**—हारस्य मध्यभागे, **निधेयम्**—नायकमणित्वेन निवेश्यम्, **मौक्तिकम्**—मुक्ताफलरूपं यत्किञ्चिद्रत्नम्, **जहति किम्**—परित्यजन्ति किम्? नैव, परं स्वीकुर्वन्ति ॥ ४ ॥

[ जैमिनीय-सङ्कर्षप्रतिपाद्यम् ]

वेदार्थे न्यायचिन्त्ये प्रथममधिगतः कर्मवर्गः प्रमाणैः
भेदैरङ्गैः प्रयुक्त्या क्रमविरचनयाऽथाऽधिकृत्याऽतिदिष्ट्या ।
तत्राऽशेषैर्विशेषैस्तदनु तदनुवर्त्यूहतः प्राप्तबाधैः
तन्त्रेणाथ प्रसक्त्या तत उपरि चतुर्लक्षणी देवतार्था ।। ५ ।।

न्यायचिन्त्ये—न्यायव्युत्पादनपूर्वकं निर्णेये, वेदार्थे—वेदप्रतिपाद्ये, कर्म-देवता-ब्रह्मात्मकेऽर्थत्रये, प्रथमम्—आदौ, कर्मवर्गः—यागाद्यात्मकः क्रियाकलापः, प्रमाणैः—धर्मप्रमापकैः विध्यादिभिः, भेदैः—कर्मस्वरूपभेदज्ञापकशब्दान्तरादिभिः, अङ्गैः—विनियोजकैः श्रुतिलिङ्गादिभिः, प्रयुक्त्या—कर्मानुष्ठानप्रयोजिकया प्रयोज्य-प्रयोजकभाव-रूपयुक्त्या, क्रमविरचनया—कर्मपौर्वापर्यनिर्णायिकया श्रुत्यादिरूपया, अथ अधिकृत्या—अधिकारपदवाच्यया फलकामनादिरूपया, अतिदिष्ट्या—एकत्र विधिप्राप्तस्य अन्यत्राऽपि प्रापिकया अतिदेशसंज्ञया युक्त्या, तत्र—अतिदेशेऽपि, अशेषैर्विशेषैः—सर्वैरवान्तरविभागैः, तदनु—ततः परं नवमे, तदनुवर्त्यूहतः—अतिदेशलब्धस्वरूपेण ऊहनाम्ना, प्राप्तबाधैः—अतिदेशप्राप्तार्थनिवर्तकैः अर्थलोपादिभिः, तन्त्रेण—उपकारद्वयोपयोग्येकानुष्ठानरूपेण, अथ प्रसक्त्या—आवश्यकानुष्ठानात् आनुषङ्गिकतया इतरसिद्धिरूपेण प्रसङ्गेन, अधिगतः—निर्णीतस्वरूपः कृतः । तत उपरि—तदनन्तरभाविनी, चतुर्लक्षणी—चतुरध्यायात्मिका मीमांसा, देवतार्था—कर्माराध्य-देवतास्वरूप-तद्भेद-तदुपासन-तत्फलविषयकनिर्णयोपयोगिनी भवति ।।

इमे श्लोकाः अत्रानुसन्धेयाः—

'धर्मे प्रमीयमाणे तु वेदेन करणात्मना ।
इतिकर्तव्यताभागं मीमांसा पूरयिष्यति ।। १ ।।

धर्मधीर्मानभेदाङ्गप्रयुक्तिक्रमकर्तृभिः ।
सातिदेशविशेषोहबाधतन्त्रप्रसक्तिभिः ।। २ ।।

स्वरूपमादौ तद्भेदस्तदुपासनपूर्वकम् ।
फलं च देवताकाण्डे देवतानां तु कथ्यते ।। ३ ।।' इति ।। ५ ।।

[क्रमप्राप्तो ब्रह्मविचारः]

प्राग्धर्मेऽल्पास्थिरार्थे प्रशमितविशये तादृशाराध्ययुक्तेऽ-

थातः शारीरकांशे बहुविधमहिम ब्रह्म मीमांसितव्यम् ।

कृत्स्नस्वाध्यायसाङ्गाध्ययनसमुदितापातबुद्ध्यैव कर्म

त्यक्त्वादौ ब्रह्मचिन्तां किमिति न कुरुतां ? तन्न [1]तुल्योक्त्य[1]बाधात् ॥ ६ ॥

अल्पास्थिरार्थे—कालतः प्रमाणतश्च परिमितफले, (तथा) तादृशाराध्ययुक्ते—अल्पास्थिरमहिमदेवताके, धर्मे—यागाद्यात्मके कर्मणि, प्राक्—शारीरक-प्राक्तनाभ्यां जैमिनीयसङ्कर्षाभ्याम्, प्रशमितविशये—निरस्तविप्रतिपत्त्यन्यथाप्रतिपत्तिके कृते, अथ—पश्चात्, अतः—तन्निर्णयस्य वृत्तत्वादेव, शारीरकांशे—ब्रह्मभागे, बहुविधमहिम—स्वरूपरूपगुणविभूत्यादिभिः अपरिच्छिन्नम्, ब्रह्म—परमात्मस्वरूपम्, मीमांसितव्यम्—विचार्य निर्णेयम् । कृत्स्नस्वाध्यायसाङ्गाध्ययनसमुदितापातबुद्ध्यैव—साङ्गसशिरस्क-वेदाध्ययनजनितया कर्मदेवताविषयिण्या आपातप्रतीत्यैव, कर्म—ऐहिकामुष्मिकफलं यागादिकर्म, त्यक्त्वा—विरागेण त्यक्त्वा, आदौ—कर्मदेवताविचारात्पूर्वमेव, ब्रह्मचिन्ताम्—शारीरकमीमांसाध्ययनमेव, किमिति—कुतः, न कुरुताम्—न कुर्यात् ? कुर्यादेव ; इति चेत्, तत्—पूर्वोक्तमाशङ्कनम्, न—नोचितम्, तुल्योक्त्यबाधात्—ब्रह्मापात-बुद्धेरेव पर्याप्तत्वे किमर्थं ब्रह्मविचारः ? इत्युक्तेरपि दुर्वारताप्रसङ्गात् अयमत्र श्लोकोऽनु-सन्धेयः—

ज्ञायमाने तु वेदान्तैः करणैः परमात्मनि ।

इमामुत्तरमीमांसामितिकर्तव्यतां विदुः ॥ इति ॥ ॥ ६ ॥

[शारीरकात् पूर्वं कर्मविचारहेतवः]

प्रावण्यं प्राक् त्रिवर्गे सफलयतनतोपासनाङ्गत्वतोऽपि

व्याख्यारूपेऽत्र शास्त्रे क्रमनियतिरसौ स्याच्च मुख्यक्रमेण ।

मानत्वादिर्विचार्यः पुरत इह तथा वाक्यवेद्यात्पदार्थो

दृष्टान्तश्चोपमेयाद्यदि मधु सविधे यातु चाद्रिं किमर्थम् ॥ ७ ॥

---

1 तुल्योक्ति—सा. प्र.

त्रिवर्गे—धर्मार्थकामयुक्ते गणे, प्रावण्यम्—आसक्तिः, प्राक्—प्रथमतः, उपासनाङ्गत्वतोऽपि—(कर्मणां वर्णाश्रमसम्बन्धिनां) ब्रह्मोपासननिष्पादकत्वादपि, सफलयतनता—अधिकारिणां तत्र प्रथमप्रवृत्तेः साफल्यमस्ति, व्याख्यारूपे—समग्रवेदार्थ-विवरणरूपे, अत्र शास्त्रे—अस्मिन् मीमांसाशास्त्रे, असौ क्रमनियतिः—इयं पौर्वापर्यव्यवस्था, मुख्यक्रमेण च—प्रधानभूतव्याख्येयवेदगतक्रममनुसृत्यैव, स्यात्—भवेत् । इह—मीमांसा-शास्त्रे, पुरतः—प्रथमतः, मानत्वादिः—प्रामाण्यादिरूपो विषयः, विचार्यः—न्यायेन निर्णेयः, तथा—तद्वदेव, वाक्यवेद्यात्पुरतः—'तमेतं····विविदिषन्ति' इत्यादिवाक्य-प्रतिपाद्यात् उपासनरूपादर्थात्पूर्वमेव, पदार्थः—तादृशवाक्यघटकेन 'यज्ञेन दानेन' इत्यादि-पदप्रतिपाद्यः यज्ञादिकर्मरूपोऽर्थः, विचार्यः, उपमेयात्—दार्ष्टान्तिकतया तत्र तत्र शारीरकसूत्रोक्तात् अर्थात्पूर्वम्, दृष्टान्तश्च—उपमानतया निर्दिष्टः पूर्वमीमांसोक्तः अर्थश्च, विचार्यः, मधु—मधुरूपम् आवश्यकं वस्तु, सविधे—समीपस्थे गृहारामे, अर्के वा, यदि—लभ्येत यदि, अद्रिम्—गृहदूरवर्तिनं पर्वतं प्रति, किमर्थं यातु—कस्मै प्रयोजनाय गच्छेत्? ॥ ७ ॥

[कर्मनिर्णयस्यैव शारीरकपूर्ववृत्तत्वम्]

व्याचख्युः केऽपि तापत्रयहतिमितरे साधनानां चतुष्कम्
काण्डेऽस्मिन् पूर्ववृत्तं कथयति निगमः कर्मचिन्ताफलं तत् ।
साङ्गाधीतिर्हि सूते विषयमवसरः क्वाऽत्र तन्त्रान्तरादेः
औचित्यस्थापितोऽयं क्रम इह न पुनश्चोदनासंप्रयुक्तः ॥ ८ ॥

केऽपि—यादवप्रकाशीयाः, तापत्रयहतिम्—सांख्योक्तं दुःखत्रयाऽभिघातम्, अस्मिन् काण्डे—शारीरककाण्डे आरम्भणीये, पूर्ववृत्तम्—आदौ सम्पन्नम् अथशब्दार्थानन्तर्य-प्रतियोगिनमर्थम्, व्याचख्युः—विशेषतः प्रतिपादितवन्तः, इतरे—अद्वैतिनः साधनानां चतुष्कम्—नित्यानित्यवस्तुविवेकः, शमदमादिसाधनसम्पत्, इहामुत्रफलभोगविरागः, मुमुक्षु-त्वम् इत्येवंरूपं साधनचतुष्टयम्, [पूर्ववृत्तं व्याचख्युः], निगमः—श्रुतिस्तु, तत्—पूर्वोक्त द्वयमपि, कर्मचिन्ताफलम्—कर्मविचाराधीनमिति, कथयति—'परीक्ष्य लोकान्' इत्यादिवाक्यैः बोधयति, हि—यतः, साङ्गाधीतिः—शिक्षाद्यङ्गसहकृतम् अध्ययनम्, विषयम्—आपातज्ञानम्, सूते—जनयति, तन्त्रान्तरादेः—सांख्यादिरूपान्यान्यतन्त्राध्ययनस्य, अवसरः—अवकाशः, क्व—कुत्र?, अयं क्रमः—कर्म-ब्रह्ममीमांसयोः पूर्वापरीभावः, औचित्यस्थापितः—योग्यता-मात्रचिन्तनेन परिकल्पितः, न पुनः चोदनासंप्रयुक्तः—नैव वैधः ॥ ८ ॥

[ अद्वैतिसंमतपूर्ववृत्तसाधुत्वशङ्कापरिहारौ ]

नित्यप्राप्तस्य कण्ठस्थितकनकनयान्निर्विशेषस्य लब्धिः
मिथ्याभूतं निवर्त्यं श्रुतिशकलभुवः प्रेक्षणाच्चन्निवृत्तिः ।
कर्मैवं क्वोपयुक्तं प्रतिभटमपि तद्वृत्ततोक्तिर्मदुक्ते
प्राप्ताऽत्रेति प्रलापे प्रतिवचनगतिर्भाषिता विस्तरेण ।। ९ ।।

**नित्यप्राप्तस्य**—स्वाभिन्नतया सदा उपलब्धस्यैव सतः, **निर्विशेषस्य**—अशेषविशेष-प्रत्यनीकचिन्मात्रब्रह्मणः, **लब्धिः**—अवगमरूपो लाभः, **कण्ठस्थितकनकनयात्**—कण्ठचामीकर-न्यायात्,(कण्ठे एव स्थितस्य सुवर्णाभरणस्य पूर्वमज्ञातस्य ज्ञानेन लाभवत् ; न नूतनो लाभः) । **निवर्त्यम्**—अवगमरूपेण तादृशलाभेन बाध्यम् , **मिथ्याभूतम्**—अपारमार्थिकं सविशेषं जगत् , **तन्निवृत्तिः**—बाध्यस्य जगतो बाधश्च, **श्रुतिशकलभुवः**—तत्त्वमस्यादिमहावाक्यात्मक-श्रुतिखण्डजन्यात् , **प्रेक्षणात्**—अपरोक्षज्ञानात् भवति । **एवम्**—एवंरूपे वास्तवार्थे विद्यमाने, **कर्म**—यागादिरूपं कर्म, तद्विचारो वा, **क्व उपयुक्तम्**—निवर्त्यनिवृत्तौ, निवर्तकज्ञानोत्पत्तौ वा कस्मिन्नंशे प्रयोजकं भवेत् ? **प्रतिभटमपि**—प्रत्युत विरोधि च भवति ; निवृत्तेः आरम्भस्य च विरोधात् , **तत्**—उक्तात् हेतोः, **वृत्ततोक्तिः**—पूर्ववृत्तत्ववाचोयुक्तिः, **मदुक्ते**—अद्वैतिभिः अस्माभिरुक्ते साधनचतुष्टये एव, **प्राप्ता**—असन्देहेन लब्धा, **इति प्रलापे**—एवंप्रकारे अनन्वितार्थके वचने, **प्रतिवचनगतिः**—प्रत्युत्तरसरणिः, **विस्तरेण**—आवश्यकेन उपबृंहणादिना, **भाषिता**—श्रीभाष्ये विवृता ।। ९ ।।

[विवेकिभिः पूर्वोत्तरमीमांसे उभे अप्यवश्यमध्येये]

मीमांसायाः कबन्धं कतिचन जगृहू राहुकल्पं शिरोऽन्ये
किं तैरन्तर्विरोधप्रमुषितमतिभिर्बाह्यकल्पैर्भ्रमद्भिः ।
स्वाध्यायाध्यायकार्त्स्न्ये स्वविधिपरविधिप्रेरणा तावदास्ताम्
कृत्स्नापातप्रतीतौ किमिति कृतधियः कृत्स्नचिन्तां न कुर्युः ।। १० ।।

**कतिचन**—जैमिनीयमीमांसाव्याख्यातारः केचन, **मीमांसायाः**—वेदवाक्यार्थ-निर्णयफलकन्यायसमुदायात्मकस्य कर्म-ब्रह्ममीमांसाशास्त्रस्य, **कबन्धम्**—पूर्वकायमात्रम् ,

जगृहुः—मीमांसां मेनिरे । अन्ये—निर्विशेषब्रह्माद्वैतवादिनः, राहुकल्पम्—राहुशब्दवाच्यग्रहसदृशम्, शिरः—त्रयीशिरोभागविचारात्मकं शारीरकमेव, मीमांसां मेनिरे । अन्तर्विरोधप्रमुपितमतिभिः—शास्त्रयोर्मध्ये स्वकपोलकल्पितेन विरोधेन नष्टप्रज्ञैः, भ्रमद्भिः—(अत एव) अन्यथाप्रतिपत्तिमद्भिः, बाह्यकल्पैः—किञ्चिदूनं वेदबाह्मीभूतैः द्विविधैरपि मीमांसकम्मन्यैस्सह, किम्—चर्चया किं प्रयोजनम्? स्वाध्यायाध्यायकात्स्न्र्ये—समग्रस्य वेदस्य अध्येयत्वे अविप्रतिपन्ने स्थिते सति, स्वविधिपरविधिप्रेरणा आस्तां तावत्—अध्ययनस्य अध्ययनविधिप्रयुक्तत्वं वा, अध्यापनविधिप्रयुक्तत्वं वा यत्किमपि भवतु । कृत्स्नापातप्रतीतौ—समग्रवेदार्थस्य आपातज्ञाने च सिद्धे, कृतधियः—विवेचकाः, कृत्स्नचिन्ताम्—समग्रवेदार्थविचारम्, किमिति न कुर्युः—कुतो वा न कुर्युः? कुर्युरेव ।। १० ।।

[पूर्वोत्तरमीमांसयोः निर्बाधमैकशास्त्र्यम्]

प्राधीतस्यैकरूपप्रयतननियतादेकरूपोपकारा-
द्विद्यास्थानैक्य[1]सिद्धौ[1] क्रमनियतियुताकाङ्क्षयैकप्रबन्ध्यम् ।
अध्यायादिष्विवावान्तरविपयफलाद्यन्यताऽत्राप्यभेत्त्री
तत्तुल्यः कर्तृभेदः कलिबलकलुपैः कल्पितोऽर्थे विरोधः ।। ११ ।।

प्राधीतस्य—अध्ययनगृहीतस्य कृत्स्नवेदस्य विपये, एकरूपप्रयतननियतात्—समानप्रयत्नाधीनात्, एकरूपोपकारात्—सन्दिग्धार्थनिर्णायकन्यायव्युत्पादनरूपात् अभिन्नादुपकारात्, विद्यास्थानैक्यसिद्धौ—मीमांसाद्वयस्याऽपि मीमांसात्वरूपसमानविद्यास्थानत्वे लब्धे सति, क्रमनियतियुताकाङ्क्षया—पौर्वापर्यनियमवत्या विशिष्टैकार्थधीजनकतया, ऐकप्रबन्ध्यम्—अभिन्नशास्त्रत्वम् अपि अबाधितमेव । अध्यायादिष्विव—तत्तच्छास्त्रेषु प्रत्यध्यायं प्रतिपादमिव च, अवान्तरविपयफलाद्यन्यता—कर्मब्रह्मात्मकावान्तरविषययोः भोग-मोक्षात्मकावान्तरफलयोश्च भेदः, अत्राऽपि—कर्म-शारीरककाण्डयोरपि विद्यमानः, अभेत्त्री—भेदापादको न भवति । कर्तृभेदः—जैमिनि-बादरायणरूपनिबन्धृभेदोऽपि, तत्तुल्यः—अध्यायाद्यर्थभेदसदृशः सन् शास्त्रभेदानापादक एव । अर्थे—प्रतिपाद्ये कर्मरूपे, ब्रह्मरूपे चाऽर्थे, विरोधः—अनैक्यापादकत्वेन चिन्तितः निवर्त्यनिवर्तकभावः, कलिबलकलुपैः—कल्यधीनमतिविपर्यासवद्भिर्जनैः, कल्पितः—आरोपितः ।। ११ ।।

---

1 सिद्धेः—सा. प्र.

[देवतानिराकरणं मीमांसकानां भ्रान्तिमूलम् ]

तत्तद्वैशिष्ट्यभेदाद्यदगणि भिदुरा देवता पूर्वभागे
संज्ञावैषम्यमात्रादपि कथमियताऽधीतयष्टव्यभङ्गः ।
उद्देश्याकारभेदो [1]ह्ययं[1]मिह हविषामुक्तिभिन्ने प्रयोगे
दौर्बल्यं त्वक्षवेद्यान्मितिचरमतया द्रव्यतो देवतायाः ॥ १२ ॥

**पूर्वभागे**—कर्ममीमांसायाम्, **देवता**—यागोद्देश्यभूता इन्द्रादिरूपा, **तत्तद्वैशिष्ट्यभेदात्**—वज्रित्वाधिराजत्वरूपतत्तद्विशेषणानां भेदात्, (तथा) **संज्ञावैषम्यमात्रादपि**—इन्द्र-महेन्द्रादि-नामधेयवैलक्षण्यमात्रादपि च, **भिदुरा**—परस्परं भिन्नेति, **अगणि यत्**—निर्णीतं यदस्ति, **इयता**—एतावता, **अधीतयष्टव्यभङ्गः**—श्रुतिप्रतिपन्नदेवतानिराकरणम्, **कथम्**—कया विधया सिध्यति ? **अयम्**—उक्तः संज्ञाभेदः, **इह**—श्रुतौ, **उक्तिभिन्ने**—मन्त्रभेदाधीनभेदवति, **हविषां प्रयोगे**—हविःप्रदानरूपे कार्ये, **उद्देश्याकारभेदो हि**—त्यागोद्देश्यतावच्छेदकः देवतागतः रूपभेद एव ; न स्वरूपतो भेदः । **देवतायाः**—त्यागसंप्रदानभूतायाः इन्द्रादेः, **द्रव्यतः**—त्यज्यमानात् चरुपुरोडाशादेः हविषोऽपेक्षया, **दौर्बल्यं तु**—' द्रव्यदेवतासाम्ये द्रव्यं बलीयः ' (पू. मी. ८-१-१७) इति न्यायतः सिद्धं दुर्बलत्वं तु, **अक्षवेद्यात्**—इन्द्रियगोचरात्, **द्रव्यतः**—हवीरूपाद्द्रव्यात्, **मितिचरमतया**—प्रत्यक्षपश्चाद्भाविप्रमा-गोचरतया, शब्दगम्यतयैव, न तु अवास्तवतया ॥ १२ ॥

[ जैमिनि-बादरायणयोरभिप्रायविरोधकृतशास्त्रभेदशङ्कापरिहारौ ]

जैमिन्युक्तं विरुद्धं यदिह बहुविधं दर्शितं सूत्रकारैः
तस्मादत्रैकशास्त्र्यं हठकृतमिति, न; ब्रह्मसंवाददार्ढ्यात् ।
[2]तत्तत्तात्पर्य[2]भेदैर्विहतिपरिहृतिः काण्डवत् काण्डयोः स्यात्
बाह्याक्षेपार्थगूढाशयवचनभवद्भ्रान्तिशान्त्यादि[3]सिद्धेः[3] ॥ १३ ॥

**सूत्रकारैः**—बादरायणैः, **इह**—शारीरकसूत्रे एव, **विरुद्धम्**—स्वाभिप्रायविपरीतम्, **जैमिन्युक्तम्**—जैमिन्यभिप्रायावेदकं वचः, ' धर्मं जैमिनिरत एव ' (ब्र.सू. 3-2-39)

---

1 स्त्वयमिह—सा. प्र. 2 तत्रस्तात्पर्य—सा.प्र. 3 सिद्धौ—सा.प्र.

इत्यादि, **वहुविधम्**—वहुप्रकारम्, **यत्**—यतः, **दर्शितम्**—स्पष्टीकृतम्, **तस्मात्**—तत एव हेतोः, **अत्र**--कर्म-ब्रह्ममीमांसयोः, **ऐकशास्त्र्यम्**—एकविद्यास्थानत्वकृतंम् एकप्रवन्धत्वम्, **हठकृतमिति**—आग्रहकल्पितमेव न स्वारसिकम् इत्ययमाशयः, **न**—न युक्तः, (कुतः ?) **ब्रह्मसंवाददार्ढ्यात्**-ब्रह्मास्तित्वविषये अभिप्रायैक्यस्य 'परं जैमिनिः' (ब्र.सू. 4-3-11) इत्यादौ दृढत्वात् । **विहतिपरिहृतिः**—आपातप्रतीतविरोधपरिहारः, **काण्डवत्**—कर्मकाण्डान्तर्गतषट्काध्यायादिष्विव, **काण्डयोः**—कर्म-ब्रह्मकाण्डयोरपि, **स्यात्**—सिध्यत्येव । **बाह्यक्षेपार्थगूढाशयवचनभवभ्रान्तिशान्त्यादिसिद्धेः**—वेदबाह्यनिरसनोपयोगिगूढाभिप्रायकवचनजन्यभ्रमपरिहारस्य, यथार्थज्ञानस्य च लाभात् ऐकशास्त्र्यं निर्बाधमिति ॥ १३ ॥

[ ऐकशास्त्र्यशङ्कितदोषपरिहारः ]

आक्षिप्य स्थापनीयाः कतिचिदिह नयाः पूर्वकाण्डप्रणीताः
केचिद्व्युत्पादनीयाः क्वचिदपवदनं ख्याप्यमौत्सर्गिकस्य ।
इत्थं सर्वत्र चिन्ताक्रम इति समतां वीक्ष्य मध्यस्थदृष्ट्या
शास्त्रैक्ये पौनरुक्त्यप्रभृतिपरिहृतिः सावधानैर्विभाव्या ॥ १४ ॥

**पूर्वकाण्डप्रणीताः**—पूर्वमीमांसायां लब्धस्वरूपाः, **कतिचित् नयाः**—'श्रुतिस्मृत्योर्विरोधे स्मृतिरुपेक्ष्या' (पू.मी-सू-१-३-३) इत्येवमादयो न्यायाः केचन, **इह**—ब्रह्ममीमांसायाम्, **आक्षिप्य**—अनौचित्यप्रसञ्जनपूर्वकम्, **स्थापनीयाः**—निर्बाधतां नेयाः, **केचित्**—तत्क्रतुन्यायादयः केचन न्यायाः, **व्युत्पादनीयाः**—इहैव नूतनतया निष्पादनीयाः, **क्वचित्**—अधिकरणविशेषे, **औत्सर्गिकस्य**—सामान्यन्यायस्य, 'अर्थवादानां विधिशेषतया प्रामाण्यम्' (पू. मी. १-२-७) इत्येवमादेः, **अपवदनम्**—अप्रवृत्त्या सङ्कोचनम्, **ख्याप्यम्**—स्फुटीकरणीयम्, **इत्थम्**—अनया रीत्या, **सर्वत्र**—शास्त्रसामान्ये, **चिन्ताक्रम इति**—विचारसरणिरिति, **समताम्**—साधारणीं स्थितिम्, **मध्यस्थदृष्ट्या**—निष्पक्षपातया दृष्ट्या, **वीक्ष्य**—आलोच्य, **शास्त्रैक्ये**—मीमांसाद्वयैकशास्त्र्ये अभ्युपगम्यमाने, **सावधानैः**—स्तिमितमनोवृत्तिभिः, **पौनरुक्त्यप्रभृतिपरिहृतिः**—पौनरुक्त्यादिदोषपरिहारक्रमः, **विभाव्या**—सम्यगालोचनीयः ॥ १४ ॥

[ मीमांसाकृद्विषयकविप्रतिपत्ति-परिहारौ ]

वृत्तिग्रन्थे [1]हि[1] जैमिन्युपरचिततया षोडशाध्याय्युपात्ता
सङ्कर्षः काशकृत्स्नप्रभव इति कथं तत्त्वरत्नाकरोक्तिः ।
अत्र ब्रूमः सदुक्तौ न वयमिह मुधा बाधितुं किञ्चिदर्हाः
निर्वाहस्तूपचारात् क्वचि[2]दिति[2] घटते ह्येकतात्पर्य[3]योगः[3] ॥ १७ ॥

**वृत्तिग्रन्थे तु**—बोधायनीयमीमांसाद्वयवृत्तौ तु, **षोडशाध्यायी**—कर्म-देवता-विचाररूपः षोडशाध्यायघटितो भागः, **जैमिन्युपरचिततया**—जैमिनिमुनिप्रणीतत्वेन, **उपात्ता**—उल्लिखितः, (एवं स्थिते) **सङ्कर्षः**—चतुरध्यायरूपो देवताविचारभागः, **काशकृत्स्नप्रभव इति**—काशकृत्स्नेन मुनिना रचित इत्येवंरूपम्, **तत्त्वरत्नाकरोक्तिः**—भट्टपराशरपादकृततत्त्वरत्नाकरवचनम्, **कथम्**—कया रीत्या साधु भवेत्? **अत्र**—इत्याक्षेपे प्राप्ते, **ब्रूमः**—वचनयोरविरोधं वदामः, **सदुक्तौ इह**—अभियुक्तवाक्ययोरनयोर्मध्ये, **किञ्चित्**—अन्यतरत्, **मुधा**—निर्णायकप्रबलप्रमाणं विना, **बाधितुम्**—अप्रमाणमिति निर्णेतुम्, **वयं न अर्हाः**—तत्तद्ग्रन्थकृतोरसमकालाः, अस्मादृशाः न समर्थाः। **निर्वाहस्तु**—द्वयोरपि वचनयोः प्रामाण्यस्थापनं तु, **क्वचित्**—अन्यतरस्मिन् वाक्ये, **उपचारात् इति**—गौणार्थकत्वचिन्तनात् इति, **एकतात्पर्ययोगः**—अविरुद्धाभिप्रायकत्वम्, **घटते हि**—युज्यते खलु ॥ १५ ॥

[ शारीरकगताधिकरणसूत्रादिसंख्येयत्ता ]

सौत्री संख्या शुभाशीरधिकृतिगणना चिन्मयी ब्रह्मकाण्डे
तादर्थ्येऽनन्तरत्वेऽप्यधिकरणभिदा नाल्पसारैः प्रकल्प्या ।
अक्षोर्म्याशाहिकाष्ठाद्विरदमुनिवसूर्म्यद्रितत्वातिशक-
र्यक्षैरक्षैः प्रयाजैरिह भवति रसैः पादनीतिप्रबन्धः ॥ १६ ॥

**इह ब्रह्मकाण्डे**—बादरायणीये शारीरकशास्त्रे, **सौत्री संख्या**—सूत्रसम्बन्धिनी संख्या, [4]**शुभाशीः**—पञ्चचत्वारिंशदुत्तरपञ्चशतपरिमिता (५४५), **अधिकृतिगणना**—अधिकरणसंख्या, [5]**चिन्मयी**—षट्पञ्चाशदुत्तरशतपरिमिता, (१५६),

---

1 तु—सा. प्र. 2. दिह—सा. प्र. 3. योगात्—सा. प्र.

4+5 शुभाशीः—कादिनव, टादिनव पादिपञ्च, याद्यष्टौ इति रीत्या शु-५, भा-४, शीः-५—५४५, भवति । एवं चिन्मयी इत्यत्राऽपि चि-६, न्म-५. यी-१—संकलनया १५६. अङ्कानां वामतो गतिः इति क्रमम् अनुसृत्य,

तादर्थ्ये—पूर्वाधिकरणार्थोपयोगित्वे सति, अनन्तरत्वेऽपि—अव्यवहितोत्तरत्वे सति च, अल्पसारैः—अत्यल्पैः प्रयोजनैः निमित्तभूतैः, अधिकरणभिदा—अधिकरणानेकता, न प्रकल्प्या—न कल्पनीयेति तान्त्रिकाणाममिप्रायः, [1]अक्षैः—इन्द्रियगतया एकादश-संख्यया, [2]ऊर्मिभिः—अशनायादिगतया षट्संख्यया, [3]आशाभिः—दिग्गतया दशसंख्यया, [4]अहिभिः—सर्पगतया अष्टसंख्यया, [5]काष्ठाभिः—दिङ्निष्ठया दशसंख्यया, [6]द्विरदैः—दिग्गजगतया अष्टसंख्यया, [7]मुनिभिः—सप्तर्षिपरिदृष्टया सप्तसंख्यया, [8]वसुभिः—अष्टवसुगतया अष्टसंख्यया, [9]ऊर्मिभिः—षडूर्मिगतया षट्संख्यया, [10]अद्रिभिः—हिमवदादि-कुलपर्वतगतया अष्टसंख्यया, [11]तत्त्वैः—तत्त्वगतया षड्विंशतिसंख्यया, [12]अतिशक्वर्या—अतिशक्वरीनामकछन्दःस्थानगतया पञ्चदशसंख्यया, [13]अक्षैः—एकादशेन्द्रियगतया एकादश-संख्यया, [14]अक्षैः—एकादशसंख्यया, [15]प्रयाजैः—पञ्चप्रयाजगतया पञ्चसंख्यया, (तथा) [16]रसैः—षड्रसगतया षट्संख्यया च, पादनीतिप्रबन्धः—यथाक्रमम् षोडशपादगतानां अधिकरणानां रचना, भवति—योजिताऽस्ति ॥ १६ ॥

---

1. इन्द्रियाणि एकादश—श्रोत्रम्, त्वक्, चक्षुः, रसना, घ्राणम्, वाक्, पाणी, पादौ, पायुः, उपस्थम्, मनः ।

2 ऊर्मयः षट्—अशनाया-पिपासे, शोक-मोहौ, जरा-मृत्यू ।

3 दिशः दश—प्राची, प्रतीची, उदीची, अवाची, आग्नेयी, नैरऋती, वायवीया, ऐशानी, ऊर्ध्वा अधरा ।

4 नागाः अष्टौ—तक्षकः, गुलिकः, अनन्तः, वासुकिः, कार्कोटकः, पद्मः, महापद्मः, शङ्खः ।

5 दश दिशः—उक्तम्,

6 दिग्गजाः अष्टौ—ऐरावतः, पुण्डरीकः, वामनः, कुमुदः, अञ्जनः, पुष्पदन्तः, सार्वभौमः, सुप्रतीकः ।

7 सप्तर्षयः—मरीचिः, अङ्गिराः, अत्रिः, पुलस्त्यः, पुलहः, क्रतुः वसिष्ठः ।

8 अष्टौ वसवः—धरः, ध्रुवः, सोमः, अहः, अनिलः, अनलः प्रत्यूषः, प्रभासः ।

9 षडूर्मयः—अशनायादयः ।

10 कुलपर्वताः अष्टौ—मेरुः, मन्दरः, कैलासः, हिमाचलः, निषदः, गन्धमादनः, रमणः, मैनाकः ।

11 तत्त्वानि षड्विंशतिः—मूलप्रकृतिः, महान्, अहङ्कारः, शब्दतन्मात्रम्, स्पर्शतन्मात्रम्, रूपतन्मात्रम्, रसतन्मात्रम्, गन्धतन्मात्रम्, ज्ञानेन्द्रियाणि-५, कर्मेन्द्रियाणि-५, मनः, पृथिवी, आपः, तेजः, वायुः, आकाशः, पुरुषः, ईश्वरः ।

12 अतिशक्वरी—उक्ता, अत्युक्ता इति षड्विंशतिवृत्तेषु मध्ये पञ्चदशीयः ।

13+14 अक्षाः—एकादशेन्द्रियाणि,

15 पञ्च प्रयाजाः—समित्, तनूनपात्, इट्, बर्हिः, स्वाहाकारः ।

16 रसाः षट्—मधुरः, आम्लः, लवणः, कटुः, कषायः, तिक्तः ।

[ शास्त्रावान्तरविभागः तदर्थश्च ]

शास्त्रं [1] त्वेतत् [1] समन्वित्यविहतिकरणप्राप्तिचिन्ताप्रधानै-
रध्यायैः षोडशाङ्घ्रि द्विकयुगमिदुरं षट्कभेदादिनीत्या ।
तत्राद्यं वक्ति सिद्धं विषयमपि परं तत्प्रतिद्वन्द्वि युग्मं
स्वप्राप्तेः साधनं च स्वयमिति हि परं ब्रह्म तत्राऽपि चिन्त्यम् ।। १७ ।।

**एतत् शास्त्रं तु**—इदं शारीरकमीमांसाशास्त्रं तु, **समन्वित्यविहतिकरणप्राप्तिचिन्ताप्रधानैः अध्यायैः**—समन्वयचिन्ताप्रधानेन, अविरोधचिन्ताप्रधानेन, साधनचिन्ताप्रधानेन, भगवत्प्राप्तिचिन्ताप्रधानेनेति चतुर्भिः तत्तन्नामभिः अध्यायैः, **षोडशाङ्घ्रि**—षोडशपादवत्,(तथा) **षट्कभेदादिनीत्या**—कर्मकाण्डगतेन उपदेशातिदेशषट्कादिभेदन्यायेन, **द्विकयुगभिदुरम्**—द्विकद्वयेन भिन्नम् अस्ति । तत्र—द्विकद्वये, **आद्यम्**—प्रथमं द्विकम्, **सिद्धं विषयम्**—सिद्धरूपं विषयात्मकं च ब्रह्मरूपं वस्तु, **वक्ति**—विचारतः प्रतिपादयति । **परम्**—पश्चात्तनं द्वितीयं द्विकम्, **तत्प्रतिद्वन्द्वियुग्मम्**—सिद्धप्रतियोगि साध्यम्, विषयप्रतियोगिभूतं विषयि च विद्याफलात्मकं द्वयम्, **वक्ति**—विचारतः प्रतिपादयति । **तत्राऽपि**—द्वितीयद्विकेऽपि, **परं ब्रह्म च**—परं ब्रह्मैव, **स्वप्राप्तेः**—स्वोपसम्पत्तिं प्रति, **साधनम्**—उपायः, **स्वयमिति हि**—स्वयमेवेति खलु, **चिन्त्यम्**—विचार्यम्, अतः समग्रं शास्त्रं ब्रह्मजिज्ञासैवेति ।। १७ ।।

[ प्रतिपादम् अर्थवर्णनेन समग्रशास्त्रार्थवर्णनम् ]

तत्राऽद्येऽत्यन्तगूढाविशदविशदसुस्पष्टजीवादिवाचः
पश्चात् स्मृत्यादिकैरक्षतिरहितहतिः कार्यताऽक्षेन्द्रियादेः ।
दोषादोषौ तृतीये भवभृदितरयोर्भक्तिरङ्गानि चाऽथो-
पासारोहप्रभावोत्क्रमसरणिफलान्यन्तिमे चिन्तितानि ।। १८ ।।

तत्र **आद्ये**—समन्वयप्रधाने प्रथमे अध्याये, [1]**अत्यन्तगूढ**-[2]**अविशद**-[3]**विशद-सुस्पष्ट जीवादिवाचः**—(यथाक्रमं पादेषु चतुर्षु) अस्पष्टतर-अस्पष्ट-स्पष्ट-स्पष्टतरचेतनाचेतनज्ञापकधर्मप्रतिपादकानि वाक्यानि, **पश्चात्**—अविरोधप्रधाने द्वितीयेऽध्याये, [1]**स्मृत्यादिकैः**—स्मृतीतिहासपुराणादिभिः सह, **अक्षतिः**—अविरोध्यर्थकत्वम्, [2]**अहितहतिः**—परपक्ष-

---

1 चैतत्—सा. प्र.

प्रतिक्षेपः, [3-4]अभ्रेन्द्रियादेः कार्यता—तृतीय-चतुर्थपादयोः यथाक्रमम् आकाश-प्राणादेः सृज्यत्वम्, तृतीये—साधनप्रधाने तृतीयाध्याये, [1-2]भवभृदितरयोः दोषादोषौ—(प्रथम-द्वितीययोःपादयोः) बद्धस्य चेतनस्य सदोषत्वम्, नित्यमुक्तस्य परमात्मनः दोषसम्बन्धाभावः, [3]भक्तिः—(तृतीये पादे) मुक्तिसाधनीभूतं उपासनम्, [4]अङ्गानि च—(तुर्ये पादे) उपासनाङ्गभूतवर्णाश्रमधर्मादीनि, अथ अन्तिमे—पश्चात्तने फलप्रधाने तुरीयाध्याये, [1]उपासारोहप्रभाव-[2]उत्क्रम-[3]सरणि-[4]फलानि—(यथाक्रमं पादेषु) विद्यासिद्धेः प्रभावः, देहादुत्क्रान्तिः, अर्चिरादिका गतिः, परिपूर्णब्रह्मानुभवरूपं फलम् एतानि प्रमेयानि, चिन्तितानि—विचार्य निर्णीतानि ॥

[षोडशभिरपि पादैः जिज्ञास्यः परमात्मैव]

स्रष्टा देही स्वनिष्ठो निरवधिमहिमाऽपास्तबाधः श्रितास्तः
खात्मादेरिन्द्रियादेरुचितजननकृत् संसृतौ तन्त्रवाही ।
निर्दोषत्वादिरम्यो बहुभजनपदं स्वार्हकर्मप्रसाद्यः
पापच्छिद् ब्रह्मनाडीगतिकृदतिवहन् साम्यदश्चात्र वेद्यः ॥ १९ ॥

अत्र—शारीरकीये पादषोडशके, (यथाक्रमम्) स्रष्टा—प्राधान्येन जगत्स्रष्टृत्ववान्, देही—उपादानत्वौपयिकसर्वात्मत्ववान्, स्वनिष्ठः—अनन्याधारः, निरवधिमहिमा—निरतिशयमहत्त्ववान्, अपास्तबाधः—निर्बाधतया वेदान्तवेद्यः, श्रितास्तः—आश्रितानां हिततमः, खात्मादेः उचितजननकृत्—आकाशजीवादेः स्वरूपस्वभावविकाराद्यात्मकोत्पत्तिहेतुः, इन्द्रियादेः उचितजननकृत्—जीवोपकरणप्राणादेः यथायथं सद्वारकाद्वारकोत्पत्तिहेतुः, संसृतौ—जीवस्य संसरणदशायां जाग्रदाद्यवस्थारूपायाम्, तन्त्रवाही—निर्वाहकः, कर्मानुगुणसुखदुःखादिभोगव्यवस्थाकृत्, निर्दोषत्वादिरम्यः—हेयप्रत्यनीकत्व-कल्याणगुणाकरत्वाभ्यां मुक्तमुमुक्ष्वादिभोग्यः, बहुभजनपदम्—न्यासोपासनाद्यशेषविद्योपास्यः, स्वार्हकर्मप्रसाद्यः—तत्तदुपासकीयवर्णाश्रमादियोग्यैः कर्मभिः प्रसन्नतामापादनीयः, पापच्छित्—विद्यामहिमाधीनपूर्वोत्तराघविनाशश्लेषकारी, ब्रह्मनाडीगतिकृत्—निष्पन्नविद्यानां सुषुम्नाप्रवेशकृत्, अतिवहन्—मुच्यमानानां स्वप्रापणाय आतिवाहिकद्वारा अर्चिरादिपथनेता, साम्यदश्च—मुक्तानां चेतनानां आत्मना साकं परमसाम्यप्रदश्च परमात्मा समग्रे शरीरके जिज्ञास्यः ॥ १९ ॥

[अयस्वे केषांचित् केवलशारीरकाध्ययने हेतुः]

विध्युक्त्याऽधीत्य वेदान् विधिबलविरतावन्यजादेव रागात्
कृत्स्नं मीमांसमानाः [1]क्रमत[1] इति परब्रह्मचिन्तां तरन्ति ।
प्राप्ते तुर्ये युगेऽस्मिन् परिमितबलधीप्राणतद्विघ्नदृष्ट्या
कालक्षेपाक्षमत्वात् कतिचन कृतिनः शीघ्रमन्ते रमन्ते ॥ २० ॥

**विध्युक्त्या**—('स्वाध्यायोऽध्येतव्यः' इति) अध्ययनविधिवाक्यानुसारेण, **वेदान्**—स्वीयान् वेदशाखाविशेषान्, **अधीत्य**-गुरूच्चारणपूर्वकानूच्चारणक्रियया सम्पाद्य, **विधिबलविरतौ**—विधिव्यापारविरामेऽपि, **अन्यजात्**—विधीतरापातप्रतीतिजात्, **रागादेव**—निर्णयाभिलाषादेव, **कृत्स्नम्**—कर्म, देवताः, ब्रह्म च आपातप्रतीतिविषयीभूतम्, **मीमांसमानाः**—विचारयन्तः विद्याधिकारिणः, **इति**—पूर्वोक्तरीत्या, **क्रमतः**—अधीतवेदगतपौर्वापर्यानुसारेणैव,. **परब्रह्मचिन्ताम्**—परब्रह्मविचारमपि, **तरन्ति**—समापयन्त्येवेति युक्तमेवैतत् । **तुर्ये अस्मिन् युगे**—चतुर्थे कलौ युगे, **प्राप्ते**—प्रवृत्ते सति, **परिमितबलधीप्राणतद्विघ्नदृष्ट्या**—बल-बुद्ध्यायुषाम् अल्पत्वतः ब्रह्मविचारान्तरायमालोच्य, **कालक्षेपाक्षमत्वात्**—सर्वस्याप्यल्पस्यायुषः ब्रह्मविचारमकृत्वैव यापने क्षमाराहित्यात्, **कतिचन कृतिनः**—केचन ब्रह्मैकपराः, **शीघ्रम्**—कर्मविचारमकृत्वा, तत्करणकाले एव, **अन्ते**—त्रय्यन्तविचारे, **रमन्ते**—आसक्ता भवन्तीति अद्यतनी स्थितिः ॥ २० ॥

[वेदान्ताध्ययनं गुरोः सकाशे एवेति नियमः]

रागान्मीमांसते चेत् स्वयमिह यततां किं गुरूक्त्येति चेन्न
ब्रह्मज्ञानाप्तये गुर्वभिगमनविधेस्तेन तत्त्वोपदेशात् ।
सद्विद्याऽऽचार्यवत्त्वे प्रथयति च परब्रह्मविच्चि तथाऽन्याऽ-
प्याचार्यादि[2]त्यधीते[2] नियमविधिरसौ निश्चितो नीतिविद्भिः ॥ २१ ॥

**रागात्**—वेदार्थनिर्णयविषयकात् अभिलाषादेव, (न विधितः) **मीमांसते चेत्**—वेदार्थविचारे प्रवर्तते यदि, **इह**—ब्रह्मविचारेऽपि, **स्वयम्**—गुरूपसत्तिं विनैव, **यतताम्**—प्रवर्ततां नाम, **गुरूक्त्या किम्**—गुरूपदेशेन किं संपाद्यम्?, **इति चेत् न**—एवमाशङ्कनमनु-

---

1 क्रमश—सा. प्र.  2 त्यधीतेः—सा. प्र.

चितम्, ब्रह्मज्ञानाप्तये—ब्रह्मज्ञानलाभाय, गुर्वभिगमनविधेः—'स गुरुमेवाऽभिगच्छेत्' इति गुरूपसत्तेः विहितत्वात्, (तथा) तेन तत्त्वोपदेशात्—गुरुणैव तत्त्वोपदेशनस्य श्रुतिषु दर्शनात्, (तथा) सद्विद्या च—सद्विद्यान्तःपातिनी 'आचार्यवान् पुरुषो वेद' इति श्रुतिरपि, परब्रह्मवित्तिम्—परमात्मविषयकज्ञानलाभम्, आचार्यवत्त्वे—सदाचार्यसम्बन्धे सत्येव, प्रथयति—स्पष्टीकरोति। तथा—तेनैव प्रकारेण, अन्याऽपि—अपराऽपि श्रुतिः, आचार्यादिति—'आचार्याद्धैव विद्या विदिता' इत्येवम्, अधीते—श्रूयते। (अतः) असौ—'स गुरुमेवाऽभिगच्छेत्' इतीयं श्रुतिः, नीतिविद्भिः—न्यायचिन्तकैः, नियमविधिः—अज्ञातस्य नियमांशस्य ज्ञापिकेति, निश्चितः—निर्णीतः (अतः रागप्राप्तत्वं वैधत्वं चाऽविरुद्धमिति) ॥ २१ ॥

[ चतुःसूत्र्याः शास्त्रारम्भार्थत्वस्फुटीकरणम् ]

सिद्धे व्युत्पत्तिराद्या न भवति न च धीर्लक्षणाद्युज्यतेऽस्मिन्<br>
किं शास्त्रेणाऽन्यसिद्धे न च निशमयितुः सिद्धबोधे फलं स्यात्।<br>
ब्रह्मण्येवं न मानान्युपनिषद इति स्तम्भिते तद्विचारे<br>
शास्त्रारम्भं चतुःसूत्र्यघटयदुचितैर्न्यायभेदैश्चतुर्भिः ॥ २२ ॥

आद्या व्युत्पत्तिः—प्राथमिकी शब्दार्थसङ्गतिधीः, सिद्धे—साध्येतरार्थविषयिणी, न भवति—नोत्पत्तुमर्हति। अस्मिन् धीः—परब्रह्मविषयिणी बुद्धिः, लक्षणात्—विशेषणोपलक्षणान्यतरात्मकात् असाधारणधर्मात्, न च युज्यते—नैव सम्भवति। अन्यसिद्धे—शास्त्रेतर(अनुमान)प्रमाणाधीनसिद्धिके ब्रह्मणि, शास्त्रेण किं—शास्त्रेण किं साध्यम्? येन तत् विचार्यं स्यात्, निशमयितुः—शास्त्रश्रवणे प्रवृत्तस्य पुरुषस्य, सिद्धबोधे—परिनिष्पन्नार्थविषयके ज्ञाने जातेऽपि, न च फलम्—नैव प्रयोजनमस्ति; प्रवृत्तिनिवृत्त्योः तद्विषयकयोः अभावात्, एवम्—उक्तैः चतुर्भिः पूर्वपक्षयुक्तिभिः, उपनिषदः—वेदान्तवाक्यानि, ब्रह्मणि न मानानि—ब्रह्मविषयकप्रमाजनकानि न भवन्ति, इति—अनेन हेतुना, (प्रमाणाधीनत्वात् प्रमेयसिद्धेः; प्रमाणाभावेन) तद्विचारे—ब्रह्मविचारे, स्तम्भिते—प्रतिरुद्धे सति, चतुःसूत्री—आद्यं सूत्रचतुष्टयम्, उचितैः—आशङ्कितदोषनिवारकैः, चतुर्भिः न्यायभेदैः—चतुस्सङ्ख्याकैः अधिकरणविशेषैः, शास्त्रारम्भम्—शारीरकशास्त्ररचनम्, अघटयत्—उपपन्नं बोधयामास ॥ २२ ॥

[ चतुरधिकरणीपूर्वपक्षस्य अभ्युपगम्यवादेन निरासक्रमः तदसंमतिश्च ]

सिद्धे व्युत्पत्त्य[1]भावे[1] स्वरिव फलतया, लक्ष्मभङ्गे च लभ्यं

ब्रह्माऽन्योक्त्याऽनुमानप्रमितमपि भवत्वंशतः शास्त्रवेद्यम् ।

विध्यर्थत्वेऽप्यबाधात् परविषयवचः स्वार्थमानं भवेदि-

त्यन्वारुह्योक्तिदैन्यं न हि सहत ऋजुः सूत्रकृद्वावदूकः ॥ २३ ॥

**सिद्धे**—परिनिष्पन्ने वस्तुनि, **व्युत्पत्त्यभावे**—आद्यव्युत्पत्तेः अलाभेऽपि **ब्रह्म**—परं ब्रह्म. **फलतया स्वरिव**—यागादिक्रियाफलत्वेन स्वर्गपदार्थ इव, **फलतया**—उपासनफलत्वेन, **लभ्यम्**—ज्ञातुमर्हम् । **लक्ष्मभङ्गे च**—ब्रह्मलक्षणस्याऽलाभेऽपि, **अन्योक्त्या**—पुराविदां पुराणादिवचसा लभ्यम्, **अनुमानप्रमितमपि**—शास्त्रेतरेणानुमानेन सिद्धमपि, **अंशतः**—निरतिशयानन्दरूपत्वाद्यंशे, **शास्त्रवेद्यं भवतु**—शास्त्रैकप्रमितं भवतु नाम, **परविषयवचः**—परब्रह्मप्रतिपादकं वेदान्तवाक्यजातम्, **विध्यर्थत्वेऽपि**—अर्थवादरूपत्वेन विधिवाक्यशेषतया प्रामाण्यस्वाभाव्येऽपि, **अबाधात्**—योग्यार्थत्वात्, **स्वार्थमानम्**—शब्दलभ्ये स्वार्थे प्रमाजनकम्, **भवेत्**-भवत्येव, **इत्यन्वारुह्योक्तिदैन्यम्**—एवंरूपं पराभ्युपगतस्याऽर्थस्याऽपि संमतिरूपं दीनकृत्यम्, **वावदूकः**—तत्त्वार्थबोधनप्रवृत्तः, **ऋजुः**—करणत्रयसारूप्यवान्, **सूत्रकृत्**—शारीरकसूत्रकारो बादरायणः, **न सहते**—स्वस्मिन् नैव क्षमते खलु ॥ २३ ॥

[ उपोद्घातपेटिकायां सप्रयोजनं पेटिकाद्वयविभागः ]

द्वाभ्यामादौ प्रतीतिप्रजननमुदितं सिद्धरूपे परस्मिन्

द्वाभ्यां वैफल्यशङ्का तदनु परिहृता शास्त्रतज्जन्यबुद्ध्योः ।

औचित्यानेकभाष्यस्वरसगतिमती प्राक्तनी वर्तनीयं

शास्त्रारम्भार्थमेकं त्रितयमिह परं शास्त्रमित्याहुरेके ॥ २४ ॥

**द्वाभ्याम्**—द्वाभ्यां सूत्राभ्यां लब्धारिमकायाम्, **आदौ**—आद्यपेटिकायाम्, **सिद्धरूपे परस्मिन्**—परिनिष्पन्ने परे ब्रह्मणि विषये, **प्रतीतिप्रजननम्**—शब्दव्युत्पत्त्या, लक्षणेन प्रतिपत्तिसंपादनम्, **उदितम्**—समर्थितम्, निर्व्यूढम् । **द्वाभ्यां तदनु**—सूत्रद्वयात्मिकया तदनन्तरपेटिकया, **शास्त्र-तज्जन्यबुद्ध्योः**—(यथाक्रमम्) शारीरकस्य, तदधीनज्ञानस्य च,

---

1 लाभे—सा. प्र.

**वैफल्यशङ्का**—निष्फलत्वभ्रान्तिः, **परिहृता**—दूरीकृता, ( अपूर्वत्वेन, परमपुरुषार्थत्वेन च ) **इयम्**—चतुःसूत्र्या अपि उपोद्घातत्ववर्णनसरणिः, **औचित्यानेकभाष्यस्वरसगतिमती**—उपोद्घातलक्षणास्तित्वरूपेण औचित्येन, भाष्यघटकानेकभागस्वारस्यचिन्तया च युक्तत्ववती, (तथा) **प्राक्तनी च**—प्राचीनव्याख्यानपरम्परया लब्धस्वरूपा च वर्तते । **एके**—मेघनादारि-सूरिनामानः व्याख्यातारस्तु, **एकम्**—आद्यमेकमेव सूत्रम्, **शास्त्रारम्भार्थम्**—शारीरक-शास्त्रारम्भोपयोगीति, (तथा) **परम्**—अनन्तरसूत्रत्रयम्, **शास्त्रमिति**—शारीरकशास्त्रमेवेति च, **आहुः**—प्रतिपादयामासुः ॥ २४ ॥

[ चतुःसूत्र्या उपोद्घातत्वे प्राचीनसंमतिः ]

यत्तत् सेनेश्वरार्यैरगणि वकुलभृत्किङ्करैरङ्ग्यकारि
व्यासार्यैर्न्यासि [1]च[1] द्विः श्रुतमिति विशदं विष्णुचित्तैर्विवव्रे ।
अश्रौषं शेषकल्पादहमपि [2]विदुषो[2] वादिहंसाम्बुवाहात्
अद्धा निर्धार्यतेऽतश्चतुरधिकरणी ब्रह्मचिन्तो[3]द्यमार्था[3] ॥ २५ ॥

**यत्**—यस्मात्, **तत्**—चतुःसूत्र्या उपोद्घातत्वम्, **सेनेश्वरार्यैः**—तन्नामधेयैः न्यायकलापसङ्ग्रहकर्तृभिः, **अगणि**—'द्युतत्स्यभावात्' इत्याद्येकादशे श्लोके स्वीकृतम्, **वकुलभृत्किङ्करैः**—एतत्पर्यायनामधेयैः वरदनारायणभट्टारकैः न्यायसुदर्शनकृद्भिः, **अङ्ग्यकारि**—अभ्युपगतम्, **व्यासार्यैः**—एतदपरनामधेयैः सुदर्शनसूरिभिः, **श्रुतमिति**—गुरुभ्यः श्रुतमिति, **द्विः**—द्विवारम्, **न्यासि च**—श्रुतप्रकाशिका-श्रुतप्रदीपिकयोः उपन्यस्तमपि, **विष्णुचित्तैः**—एङ्गळाळ्वानिति प्रसिद्धैः श्रीविष्णुचित्तार्यैः, **विशदं विवव्रे**—विवरणाख्ये ग्रन्थे स्फुटं विवृतम्, **अहमपि**—वेङ्कटनाथनामा अहमेव साक्षात्, **शेषकल्पात्**—शेषावतारभूतरामानुजार्यसदृशात्, **विदुषः**—वेदान्तार्थवेत्तुः, **वादिहंसाम्बुवाहात्**—एतद्बिरुदभाजः न्यायकुलिशादिग्रन्थकर्तुः आत्रेयरामानुजार्यात्, (किडाम्बि अप्पुळ्ळार् नाम्नः) स्वाचार्यात्, **अश्रौषम्**—श्रुतवानस्मि । **अतः**—एवं बहुजनसंवादरूपात् ज्ञापकात्, **चतुरधिकरणी**—आद्यमधिकरणचतुष्टयम्, **ब्रह्मचिन्तोद्यमार्था**—शारीरकशास्त्रारम्भोपयोगिनीति, **अद्धा**—दृढम्, **निर्धार्यते**—निर्णीयते ॥ २५ ॥

---

1 तद्—सा. प्र. 2 यदिदं—मा. प्र. 3 प्रयुक्ता—सा. प्र.

[ उपोद्घातत्ववादिनामेव केषांचित् विपरीतार्थवर्णनम् , तन्निरासश्च ]

व्युत्क्रम्याऽत्राऽऽद्यतुर्यावभिदधति नयौ केचिदप्राप्तमेतत्
बोधासिद्धौ कथं तत्फलमिह विमृशेत् सिद्धवत्कारमान्द्यात् ।
मध्यौ द्वौ रूपनामप्रजननविषयौ यद्विदुस्तच्च मन्दम्
सत्युक्तेऽपेक्षितेऽर्थे विफलविभजनं नोचितं नीतिसूत्रे ॥ २६ ॥

**केचित्**—यादवप्रकाशीयाः, **अत्र**—चतुःसूत्र्याम् , **आद्य-तुर्यौ नयौ**—प्रथमचतुर्थाधिकरणे, **व्युत्क्रम्य**—उक्तार्थविपरीतप्रयोजनकतया, आद्ये प्रतीतिसाफल्यं, तुर्ये प्रतीत्युत्पत्तिरिति, **अभिदधति**—प्रतिपादयन्ति, **एतत्**—इदं प्रतिपादनम्, **अप्राप्तम्**—असिद्धम् , **बोधासिद्धौ**—ब्रह्मप्रतीतेरेवाऽजनने, **तत्फलम्**—प्रतीतिफलम् , **इह**—आद्येऽधिकरणे, **कथं विमृशेत्**—कया विधया विचारयेत् ? धर्मचिन्तायाः धर्मिज्ञानाधीनत्वात् , **सिद्धवत्कारमान्द्यात्**—अनागतावेक्षणन्यायेन असिद्धमपि सिद्धवत्कृत्य तथा वर्णनस्य तु मन्दगतित्वात् । **मध्यौ द्वौ**—जन्माद्यधिकरण-शास्त्रयोनित्वाधिकरणोक्तौ न्यायौ, **रूपनामप्रजननविषयौ**—रूप-नामव्याकरणसम्बन्धिनौ इति, **यत् विदुः**—जानन्ति इति यत् , **तच्च मन्दम्**—तदपि न विचारसहम्, **अपेक्षितेऽर्थे**—लक्षणज्ञानार्थमाकाङ्क्षिते नामरूपप्रपञ्चनरूपे विषये, **उक्त सति**—'यतो वा इमानी'ति श्रुत्या स्पष्टमुक्ते सति, **विफलविभजनम्**—निष्प्रयोजनं पृथक्करणम् , **नीतिसूत्रे नोचितम्**—न्यायव्युत्पादके सूत्रे न योग्यम् । अतः पूर्वोक्तक्रम एव साधुः ॥ २६ ॥



# अधिकरणार्थसङ्ग्रहः

( शारीरकीयः )

।। दोड्डयाचार्यापरनामधेयैः श्रीश्रीनिवासाचार्यैः विरचितः ।।

वाधूलश्रीनिवासार्यतनयं विनयाधिकम् ।
प्रज्ञानिधिं प्रपद्येऽहं श्रीनिवासमहागुरुम् ॥



## ।। १—१ पादः ।।

( शास्त्रावतारभागः )

श्रियःपतिः परमकारुणिकः भगवान् सर्वेषां पुरुषाणाम् उपादित्सितजिहासितेष्टानिष्टतत्साधनानां त्याज्योपादेयविभागार्थम्—

'हर्तुं तमः सदसती च विवेक्तुमीशो मानं प्रदीपमिव
कारुणिको ददाति' ( श्री. रं. स्त. उ. १ )

इत्युक्तरीत्या वेदान्ताख्यप्रमाणं प्रदाय, अवतारादिमुखेन तद्विषयज्ञानं च उदपादयत् । तच्च—

'नारायणात्समुत्पन्नं ज्ञानं कृतयुगे स्थितम्' (स्कां. पु) इति कृतयुगे' तथैव अवर्तत । अनन्तरं तस्मिन्—

'किञ्चित्तदन्यथाभूतं त्रेतायां द्वापरे खिलम्' इन्युक्तरीत्या खिले सति—

'सङ्कीर्णबुद्धयो देवाः ब्रह्मरुद्रपुरस्सराः ।
शरण्यं शरणं जग्मुः नारायणमनामयम् ।। ।। १ ।।

तैर्विज्ञापितकार्यस्तु भगवान् पुरुषोत्तमः ।
अवतीर्णो महायोगी सत्यवत्यां पराशरात् ।। २ ।।

उत्सन्नान् भगवान् वेदान् उज्जहार हरिः स्वयम् ।
चतुर्धा व्यभजत्तांश्च चतुर्विंशतिधा पुनः ।। ।। ३ ।।

शतधा चैकधा चैव तथैव च सहस्रधा ।
कृष्णो द्वादशधा चैव पुनस्तस्यार्थवित्तये ।। ४ ।।

चकार ब्रह्मसूत्राणि येषां सूत्रत्वमञ्जसा ।। '

इत्युक्तरीत्या नष्टज्ञानैः ब्रह्मरुद्रादिभिः अर्थितः भगवान् व्यासरूपेण अवतीर्य, वेदानुद्धृत्य, तान् विभज्य, तदर्थज्ञानाय सूत्राणि प्रणेष्यन् , पूर्वभागवैशद्यार्थं स्वशिष्येण जैमिनिना सूत्राणां प्रणीतत्वात् , तदङ्गीकृत्य, उत्तरभागवैशद्यार्थं ब्रह्मसूत्राणि स्वयमेव चकार । एवं च—

'अथाऽतो धर्मजिज्ञासा' (पू.मी.सू. १-१-१)

इत्यारभ्य,

'अनावृत्तिश्शब्दादनावृत्तिश्शब्दात्' (ब्र. सू. ४-४-२२) इत्यन्तं भागद्वयात्मक-वेदाख्यैकप्रबन्धव्याख्यानतया एकं शास्त्रम् । उक्तं च वृत्तिकृता बोधायनेन—

'संहितमेतत् शारीरकं जैमिनीमेन षोडशलक्षणेन इति शास्त्रैकत्वसिद्धिः' (बो. वृ.) इति ।

तत्र जैमिनीयेन पशु-पुत्र-वृष्टि-अन्न-स्वर्गाद्यैहिकामुष्मिकफलसाधनं धर्मः निरूप्यते ।

तत्र प्रथमे अध्याये—वेदस्य विधि-अर्थवाद-मन्त्र-नामधेयात्मकस्य प्रवर्तन-निवर्तन-प्राशस्त्यज्ञापन-अनुष्ठेयार्थप्रकाशनधात्वर्थावच्छेदमुखेन प्रामाण्यं निरूपितम् ।

द्वितीये—शब्दान्तर-अभ्यास-संख्या-गुण-प्रक्रिया-नामधेयभेदात् कर्मभेदः निरूपितः ।

तृतीये—श्रुतिलिङ्गादिभिः अङ्गं विचारितम् ।

चतुर्थे—क्रत्वर्थ-पुरुषार्थनिरूपणपूर्वकम् प्रयुक्तिः निरूपिता ।

पञ्चमे—श्रुत्यादिभिः क्रमः निरूपितः ।

षष्ठे तु—अधिकारी ।

सप्तमे—सामान्यातिदेशः ।

अष्टमे—विशेषातिदेशः ।

नवमे—ऊहः ।

दशमे—बाधः ।

एकादशे—तन्त्रम् ।

द्वादशे—प्रसङ्गः ।

ततः परम् अध्यायचतुष्टयेन सङ्कर्षसंज्ञकेन देवतास्वरूपम् निरूपितम् । एवं जैमिनीयेन पूर्वभागप्रतिपाद्यं कर्म निरूपितम् ।

ततः शारीरकेण अध्यायचतुष्टयेन उत्तरभागप्रतिपाद्यं ब्रह्म निरूप्यते ।

तत्र पूर्वद्विकेन चेतनाचेतनविलक्षणं निखिलजगदेककारणं ब्रह्मस्वरूपं निरूप्यते ।

उतरद्विकेन सोपासनं फलं निरूप्यते ।

तत्र समन्वयाख्ये प्रथमेऽध्याये वाक्यतात्पर्यपर्यालोचनया ब्रह्मणः कारणत्वं निरूप्यते ।

तत्र अयोगव्यवच्छेदाख्ये प्रथमपादे 'ब्रह्म कारणमेव' इति समर्थ्यते ।

तत्र प्रथमं चतुःसूत्र्या शास्त्रस्य अनारम्भणीयत्वशङ्का निराक्रियते ।



# ॥ नयसङ्गतिमालिका (शारीरकीया) ॥

॥ लक्ष्मीपुरं श्रीनिवासाचार्यैः विरचिता ॥

१—१

कारणं सर्वजगतां शरणं संश्रितात्मनाम् ।
अनन्तं सत्यमानन्दं विज्ञानममलं श्रये ॥

अभिवन्द्य महोदारामसद्गुरुपम्पराम् ।
कुर्वे श्रीभाष्यसिद्धान्ते नयसङ्गतिमालिकाम् ॥

—o—

[सङ्गतिः]

अनन्तराभिधाने या जिज्ञासा स्यात्प्रयोजिका ।
तद्धेतुज्ञानविषयसम्बन्धः सङ्गतिर्मता ॥ २ ॥

[सङ्गतयः]

उपोद्घातश्चापवादः प्रत्युदाहृतिरेव च ।
दृष्टान्ताक्षेपातिदेशप्रसङ्गा इति सप्तधा ॥ २ ॥

[उपोद्घातः]

उपोद्घातः प्रस्तुतार्थस्योपपादकता ततः ।
चिन्तां प्रकृतसिद्ध्यर्थामुपोद्घातं विदुर्बुधाः ॥ ३ ॥

[अपवादः]

पूर्वाधिकृतिसिद्धान्तन्यायं यत्राऽवलम्बते ।
उत्तराधिक्रियापूर्वपक्षः, तत्राऽपवादिकी ॥ ४ ॥

[प्रत्युदाहृतिः]

पूर्वाधिकृतिसिद्धान्तन्यायस्याऽविषयीक्रियाम् ।
आलम्ब्य पूर्वपक्षस्योत्थाने स्यात् प्रत्युदाहृतिः ॥ ५ ॥

[दृष्टान्तः]—४.

पूर्वाधिकृतिसिद्धान्तन्यायसाधर्म्यसंश्रयात् ।
उत्तराधिक्रियोत्थाने भवेत् दृष्टान्तसङ्गतिः ॥ ६ ॥

[आक्षेपः]—५.

पूर्वाधिकृतिसिद्धान्तन्यायस्याऽनुपपन्नताम् ।
शङ्कित्वा पूर्वपक्षस्योत्थाने त्वाक्षेपसङ्गतिः ॥ ७ ॥

[अतिदेशः]—६.

कृत्वा यत्राऽधिकां शङ्कां पूर्वमेवातिदिश्यते ।
सङ्गतिः कथिता सद्भिः काचित् तत्राऽतिदेशिकी ॥ ८ ॥

[प्रसङ्गः]—७.

स्मृतस्योक्तार्थसम्बन्धात् उपेक्षाया अनर्हता ।
प्रसङ्ग इति यत् प्राहुः यस्मात् सैव हि सङ्गतिः ॥ ९ ॥

[प्रसङ्गलक्षणम्]—

तस्मादुपोद्घातमुखसङ्गतिभ्यः पृथक्कृता ।
या सङ्गतिः सा प्रसङ्ग इति निष्कृष्टलक्षणम् ॥ १० ॥

[सूचनाविशेषः]

प्रायेण हि प्रबन्धेऽस्मिन्नपवादादिशब्दतः ।
सङ्गतिः सूच्यत इति समुद्गृह्णन्तु सूरयः ॥ ११ ॥

[काण्डत्रयप्रधानार्थाः]

धर्मधीः मानभेदाङ्गप्रयुक्तिक्रमकर्तृभिः ।
सातिदेशविशेषोहबाधतन्त्रप्रसक्तिभिः ॥ १२ ॥

स्वरूपमादौ तद्भेदः तदुपासनपूर्वकम् ।
फलं च देवताकाण्डे देवतानां तु कथ्यते ॥ २३ ॥

समन्वयोऽविरोधश्च साधनं च प्रयोजनं ।
काण्डत्रये प्रधानार्था एते विंशतिलक्षणे ॥ २४ ॥

[शरीरकावान्तरविभागः]

तार्तीयिकं काण्डमिदं द्विकद्वितयगर्भितम् ।
सिद्धं साध्यमिति द्वेधा विषयो विपर्यीत्यपि ॥ १५ ॥

[शरीरके चिन्तनीयाः सङ्गतयः]—८

शास्त्रकाण्डद्विकाध्यायपेटिकाधिक्रियांत्रिभिः ।
सूत्रभेदाच्चाष्टविधा वक्तव्या सङ्गतिस्त्विह ॥ १६ ॥

अन्तर्भावात्मिका शास्त्रादिषु षट्स्विह सङ्गतिः ।
आनन्तर्यात्मिका ज्ञेयाऽधिक्रियासूत्रयोः पुनः ॥ १७ ॥

वेदार्थन्यायरूपत्वात् मीमांसाशास्त्रसङ्गतिः ।
वेदान्तार्थविचारत्वात् काण्डसङ्गतिरुच्यते ॥ १८ ॥

सिद्धवस्तुविचारत्वात् प्रथमद्विकसङ्गतिः ।
समन्वयप्रधानत्वात् प्रथमाध्यायसङ्गतिः ॥ १९ ॥

[प्रथमपादीयपेटिकाविभागः]

अत्राऽयोगव्यवच्छेदपादे स्यात् पेटिकात्रयम् ।
चतुर्भिश्च त्रिभिश्चैव चतुर्भिश्च नयैः क्रमात् ॥ २० ॥

[आद्यपेटिकाप्रयोजनम्]

तत्राऽद्यपेटिका शास्त्रस्याऽनारम्भप्रशान्तिकृत् ।
न्यायैश्चतुर्भिः प्रथमे पुनरेषाऽवधार्यताम् ॥ २१ ॥

—उपोद्घातभागः—



॥ श्रीः ॥

# ॥ जिज्ञासाधिकरणम् ॥ १-१-१ ॥

॥ न्यायकलापसङ्ग्रहः (जि. अधि. १) ॥

[ जिज्ञासाधिकरणार्थः ]

कार्ये हि वृद्धव्यवहारसिद्धो
व्युत्पत्तिभावो वचसां न सिद्धे ।
इत्येतदुत्सारितवान् प्रसिद्धेः
सिद्धेऽपि बालप्रतिबोधनेषु ॥ ७ ॥

वृद्धव्यवहारसिद्धः—व्युत्पन्न-प्रयोज्य-प्रयोजकानां वाचिककायिकरूपात् व्यवहारात् जातः, वचसां—शब्दानाम्, व्युत्पत्तिभावः—शब्द-तदर्थसङ्गतिलाभः, कार्ये हि—गवानयनादि-रूपे साध्ये एवाऽर्थे खलु । न सिद्धे—निष्पन्ने अर्थे नैव भवति, इत्येतत्—एवमाशङ्कनम्, बालप्रतिबोधनेषु—शिशुशिक्षणेषु, सिद्धेऽपि—निष्पन्नेऽप्यर्थे, प्रसिद्धेः—व्युत्पत्तिदर्शनात् ज्ञापकात्, उत्सारितवान्—निराकृतवान् सूत्रकारः ॥ ७ ॥



[ सिद्धे व्युत्पत्तेराक्षेपः ]

—प्रथमाधिकरणे—

अन्यत्र व्यवहारतो न भवति व्युत्पत्तिरन्यत्र वा

कश्चित् कार्यधियः कथं व्यवहरेदित्थं च निश्चीयते ।

शब्दाः कार्यपरा इति ; श्रुतिरतस्तत्रैव मानं पुनः

प्रामाण्यं कथमश्नुवीत परिनिष्पन्ने परे ब्रह्मणि ॥ ५ ॥

**व्यवहारतः अन्यत्र**—प्रयोज्य प्रयोजक व्युत्पन्नानाम् उक्ति-प्रवृत्तिरूपं व्यवहारं विना, **व्युत्पत्तिः**—शब्द-तदर्थयोः मिथः सम्बन्धग्रहणम्, **न भवति**—नैव सिद्ध्यति । **कश्चित् वा**—यः कश्चिदपि प्रयोज्यः प्रयोजको वा पुरुषः, **कार्यधियोऽन्यत्र**—कार्यबुद्धेरविषये अर्थे, **कथं व्यवहरेत्**—उक्ति-प्रवृत्ती कथं कुर्यात् ? **इत्थं च**—एवं सति, **शब्दाः**—लौकिकाः वैदिकाश्च सर्वे शब्दाः, **कार्यपरा इति**—साध्यार्थतात्पर्यका एव, न सिद्धार्थका इति, **निश्चीयते**—निर्णीयते । **अतः**—सार्वत्रिकतया एवं निर्णयात्, **श्रुतिः तत्रैव मानम्**—वेदान्तवाक्यमपि साध्येऽर्थे एव प्रमाणं भवेत्, **परिनिष्पन्ने**—कार्यानात्मके सिद्धरूपे, **परे ब्रह्मणि पुनः**—चेतना-चेतनविलक्षणे परमात्मनि तु विषये, **प्रामाण्यं कथमश्नुवीत**—प्रमाजनकतां कथं प्राप्नुयात् ? ॥ ५ ॥

[ व्युत्पत्तेः अभ्यासप्रकारः, तत्र यादृच्छिकी व्युत्पत्तिः ]

अत्रोत्तरम्—

यः प्राबोधि परेहयाऽपवरके दण्डः स्थितो बोध्यतां

चैत्रायेति, स तस्य बोधनसमुद्युक्तो यदूचे वचः ।

एतच्चेष्टितमेदविच्चदितरो मूको यथाऽऽकर्णयन्

बालः खल्विदमस्य बोधकमिति व्युत्पत्तिमभ्यस्यति ॥ ६ ॥

परेहया—पुरुषान्तरस्य हस्तादिचेष्टया, अपवरके स्थितः—अन्तर्गृहे विद्यमानः, दण्डः—दण्डरूपोऽर्थः, चैत्राय बोध्यतामिति— चैत्रनाम्ने पुरुषाय ज्ञाप्यतामिति, यः—यादृशो नरः, प्राबोधि—प्रबोधितः अभूत्, सः—स नर एव, तस्य बोधनसमुद्यतः—चैत्रं प्रति तादृशंदण्डबोधने प्रवृत्तः सन्, यत् वचःऊचे—यत् वाक्यमुवाच, तत्—तद्वचः, एतच्चेष्टितभेदवित्—एतादृशचेष्टाविशेषज्ञः, इतरः बालः—बोध्य-बोधकप्रेरयितृभिन्नः कश्चित् व्युत्पित्सुः, मूक इव—वागिन्द्रियरहित इव, आकर्णयन्—शृण्वन्, इदम् अस्य बोधकम् इति—इदं प्रयुक्तं वाक्यं गृहान्तःस्थदण्डस्य बोधजननस्वभावमिति, व्युत्पत्तिम्—पद-पदार्थ-सम्बन्धम्, अभ्यस्यति खलु—परिचिनोतीति प्रसिद्धम्। (इयं यादृच्छिकी व्युत्पत्तिः सिद्धेऽर्थे) ॥ ६ ॥

[ बुद्धिपूर्विका व्युत्पत्तिः ]

अङ्गुल्या निर्दिशद्भिर्घटमुखमखिलं वस्तु तत्तद्ब्रुवद्भिः
तच्छब्दांस्तद्विभक्तीरपि च तदुचिते गोचरे पूर्ववृद्धैः ।
पित्राद्यैः शिक्ष्यमाणाः शिशव इव मुहुः स्वात्मनां तत्तदर्थे
ज्ञानं तच्छब्दमात्रश्रवणत उदितं प्रेक्ष्य जानन्ति शक्तिम् ॥ ७ ॥

इह—जगति, घटमुखम्—घटपटादिरूपम् असम्बन्धिकम्, अम्बा-तात-मातुलादिरूपं ससम्बन्धिकं च, अखिलं वस्तु—अर्थजातम्, अङ्गुल्या—तर्जन्यादिना कररुहेण, निर्दिशद्भिः—स्फुटं प्रदर्शयद्भिः, तच्छब्दान्—घटादिकान् अम्बादिकांश्च शब्दान्, तद्विभक्तीरपि च—तत्सम्बन्धयोग्यक्रियाकारकविशेषबोधिकाः द्वितीयादिविभक्तीश्च, तदुचिते गोचरे—तत्तच्छब्दशक्ये तत्तदर्थे, ब्रुवद्भिः—उच्चारयद्भिः, पूर्ववृद्धैः—मातापित्राद्यैः, शिक्ष्यमाणाः—व्युत्पाद्यमानाः, शिशवः—व्युत्पित्सवः, तच्छब्दमात्रश्रवणतः—तादृश-कृत्स्नशब्दश्रवणतः, मुहुः—पुनः पुनः नियमेन, उदितम्—जातम्, तत्तदर्थे ज्ञानम्—तत्तदर्थस्मरणम्, प्रेक्ष्य—अनुभूय, शक्तिम्—बोधकत्वम्, जानन्ति—निश्चिन्वन्ति ॥ (इयं बुद्धिपूर्विका व्युत्पत्तिः) ॥ ७ ॥



[सिद्धे व्युत्पत्तिविषये पूर्वपक्ष-सिद्धान्तौ]

कार्ये व्युत्पत्तिराद्या नियतमिति गिरस्तत्परा एव सर्वाः
नाऽन्या वेदेऽपि नीतिस्तत उपनिषदामूषरप्रायतैव ।
नाऽतस्तद्वेद्यमीमांसनमुचितमिति प्रत्यवस्थीयमाने
सिद्धे व्युत्पत्तिमाद्यां बहुमुखमवयन् ब्रह्म जिज्ञास्यमाह ।। २७ ।।

आद्या व्युत्पत्तिः—प्राथमिकः शब्दशक्तिग्रहः, कार्ये इति—साध्ये एवाऽर्थे इत्येतत्, नियतम्—अव्यभिचरितम्, (अतः) सर्वाः गिरः—लौकिक्यः वैदिक्यश्च वाचः, तत्परा एव—कार्यतात्पर्यका एव, (अतः) वेदेऽपि नीतिः—वेदवाक्ष्वपि अर्थबोधनसरणिः, न अन्या—विलक्षणा न भवति, ततः—अविलक्षणत्वात, उपनिषदाम्—वेदान्तवाचाम्, ऊषरप्रायतैव—सप्रयोजनार्थबोधकत्वाभाव एव । अतः—तस्मात्, तद्वेद्यमीमांसनम्—उपनिषत्प्रतिपाद्यस्य ब्रह्मणः विचारणम्, नोचितमिति—अनुपयोगीति, प्रत्यवस्थीयमाने—शास्त्रारम्भे प्राभाकरेण प्रतिक्षिप्यमाणे, (सूत्रकारः—बादरायणः) आद्यां व्युत्पत्तिम्—प्राथमिकशब्दशक्तिग्रहमपि, सिद्धे—परिनिष्पन्नार्थविषयकं भवितुमर्हतीति, बहुमुखम्—बह्वीभिर्विधाभिः, अवयन्—मनसि निश्चिन्वन्, ब्रह्म जिज्ञास्यमाह—उपनिषद्वेद्यं ब्रह्म आरम्भणीयविचारविषयमाह ।। २७ ।।

[बुद्धिपूर्वकव्युत्पत्तेः सिद्धार्थविषयकत्वम्]

अङ्गुल्या निर्दिशन्तः किमपि किमपि तद्वाचकांशै प्रयुक्तैः
बालान् व्युत्पादयन्ति क्रमभवमिलितज्ञापकत्वं विदन्तः ।
सञ्जातास्ते पदानां विदधति च धियं काऽपि सिद्धे विशिष्टे
कर्तव्ये काऽपि चेति क्वचिदिह नियतिः शब्दशक्तेर्न कल्प्या ।। २८ ।।

पदानाम्—प्रकृति प्रत्ययात्मकानां भागानाम्, क्रमभवमिलितज्ञापकत्वम्—चिरकालानुभव-क्रमेण सम्पद्यमानम् अन्वितार्थाभिधायित्वम्, विदन्तः—स्वयं निश्चिन्वन्तः व्युत्पन्नाः, किमपि

किमपि—ससम्बन्धिकम् अम्बादि, असम्बन्धिकं शशिपश्वादि च, अङ्गुल्यानिर्दिशन्तः—तर्जन्यादिना कररुहेण बालानां चक्षुः वस्त्वभिमुखं नयन्तः, प्रयुक्तैः—उच्चारितैः, तद्वाचकाशैः—तत्तद्वस्तुबोधकैः शब्दविशेषैः, बालान्—व्युत्पित्सून्, व्युत्पादयन्ति—गृहीतशक्तिकान् कुर्वन्ति। ते पदानां संघाताः—प्रयुक्ताः पदराशयः, क्वाऽपि—'पुत्रस्ते जातः' इत्यादिप्रयोगविशेषे, सिद्धे विशिष्टे—निष्पन्ने जातिगुणादिसहिते अर्थे, धियं विदधति—बुद्धिं जनयन्ति। क्वाऽपि—'घटमानय' इत्यादिप्रयोगविशेषे, कर्तव्ये इति—निष्पाद्ये आनयनाद्यर्थे, धियं जनयन्ति इति, क्वचिदिह—सिद्धे साध्ये वा अन्यतरस्मिन्नेवार्थे, शब्दशक्तेः नियतिः—शब्दव्युत्पत्तिनिर्णयनियमः, न कल्प्यः—युक्त्या साधयितुं नाऽर्हः ॥ २८ ॥

[ शिक्षकव्यवहारस्य व्युत्पत्तिनिर्णायकत्वम् ]

संसारेऽनादिसिद्धे मुहुरनुभवतः सञ्चिताः संस्क्रियाः स्युः

संस्कारोद्बोधकाश्च स्वयमुपनिपतन्त्यप्रकम्प्यात् प्रवाहात्।

तत्तज्जातीयभेदग्रहणसमुचिता वृत्तयस्तन्निदानाः

तद्वत् स्यात् शिक्षकादिव्यवहृतिषु शिशोरैदमर्थ्यादिबोधः ॥ २९ ॥

अनादिसिद्धे—प्रवाहानादौ, संसारे—जनन-मरणचक्रे, मुहुः....बहुवारं जातात्, अनुभवतः—तत्तद्विषयानुभवात्, संस्क्रियाः सञ्चिताः स्युः—बहवः संस्काराः आर्जिता भवन्त्येव। संस्कारोद्बोधकाः—तत्तद्विषयभावनानाम् उद्बोधकारिणश्च अदृष्टादयः, अप्रकम्प्यात्—अनुच्छेद्यात्, प्रवाहात्—अनुस्यूतपूर्वपूर्वकारणसन्तानात्, स्वयमुपनिपतन्ति—अनिच्छतोऽपि सम्पद्यन्त एव। तन्निदानाः—उद्बुद्धसंस्कारप्रयोज्याः, वृत्तयः—स्मृतिरूपा बुद्धिविशेषाः, तत्तज्जातीयभेदग्रहणसमुचिताः—एकैकजातीयेष्वप्यर्थेषु विलक्षणधर्मग्रहणोपयोगिन्यः, भवन्ति—जायन्त एव, तद्वत्—प्रदर्शितलोकव्यवहारपरिज्ञानसिद्धिवत्, शिक्षकादिव्यवहृतिषु—व्युत्पादयितृपुरुषाणां चेष्टादिव्यवहारेष्वपि, शिशोः—व्युत्पित्सोः, ऐदमर्थ्यादिबोधः—'अयं व्यवहारः एतदर्थः' इत्येतादृशं ज्ञानम्, स्यात्—भवत्येव ॥ २९ ॥

दक्षैराधोरणाद्यैरनुमितविविधस्वप्रयासोपयोगैः

शिक्षाभेदा विचित्रा गजविहगमुखान् ग्राहयद्भिः [1]प्रयुक्ता[1]ः।

---

1 प्रवृत्ताः—सा. प्र.

तस्मात् सार्थो मनुष्यप्रभृतिषु च तथाभूतशिक्षाविशेषः

कल्पो भाष्योदितोऽयं न यदि कथमसौ कल्पतेऽन्योऽपि मार्गः ॥ ३० ॥

**अनुमितविविधस्वप्रयासोपयोगैः**—मिथो वैविध्यवतः स्वीयप्रयोगविशेषस्य सफलताम् अनुमानेन निश्चिन्वद्भिः, **गजविहगमुखान् ग्राहयद्भिः**—विहङ्गमातङ्गादीन् दम्यादम्यान् जन्तून् आशयग्रहणपटून् कुर्वद्भिः, **दक्षैः**—शिक्षाकुशलैः, **आधोरणाद्यैः** हस्तिपक-शकुन्तपालादिभिः पुरुषैः, **प्रयुक्ताः**—प्रयोगदशां गमिताः, **विचित्राः शिक्षाभेदाः**—मिथो विलक्षणाः व्युत्पादनोपायविशेषाः दृश्यन्त एव । **तस्मात्**—तिर्यक्ष्वपि दृष्टात् शिक्षासाफल्यात्, **तथाभूतशिक्षाविशेषः**—व्युत्पादकः उपायभेदः, **मनुष्यप्रभृतिषु च सार्थः**—मनुष्यादिषु व्युत्पाद्येष्वपि सफल एव । **भाष्योदितः अयं कल्पः**—श्रीभाष्ये स्पष्टीकृतः उक्तः प्रकारः, **न कल्पते यदि**—न युज्यते चेत्, **अन्यः असौ मार्गः**—अतिरिक्तः केषामपि अबुद्धिस्थः कोऽपि उपायः, **कथमपि न कल्पते**—कयाऽपि रीत्या नैव युज्यते ॥ ३० ॥

[ यादृच्छिकव्युत्पत्तेः सिद्धार्थविषयकत्वम् [

कस्मैचित् सिद्धमर्थं कमपि कथयितुं चेष्टया चोद्यमानः

तस्मै तं वक्ति तद्धीसमविषयतया शिक्षते तद्वचोऽन्यः ।

आदिष्टो बोधनार्थं यदिह वितनुते तत् तदर्थं हि युक्तं

तद्वाक्यात् सिद्धवेदी प्रयतत इति चेदस्त्वनादेशिकं तत् ॥ ३१ ॥

**कस्मैचित्**—देवदत्तादिपुरुषाय, **कमपि सिद्धम् अर्थम्**—यं कञ्चन निष्पन्नं पुत्रजन्मादिकं विषयम्, **कथयितुम्**—शब्दतो बोधयितुम्, **चेष्टया**—हस्ताङ्गुलिविन्यासादिक्रियया, **चोद्यमानः**—प्रेर्यमाणः सन्, **तस्मै**—देवदत्तादये, **तं वक्ति**—पुत्रजननादिकं अर्थं 'पुत्रस्ते जातः' इत्यादिशब्देन बोधयति । **अन्यः**—प्रेरितुः प्रेरिताच्च पुरुषात् भिन्नः बालः, **तद्वचः**—उक्तं वाक्यम्, **तद्धीसमविषयतया शिक्षते**—प्रेरकप्रेरितपुरुषीयज्ञानविषयसमानार्थकमिति व्युत्पद्यते । **हि**—यतः, **बोधनार्थमादिष्टः**—अन्यं बोधयितुं प्रेरितः पुरुषः, **इह**—बोध्यसमीपे, **यत् वितनुते**—हस्तचेष्टादिरूपं शब्दप्रयोगादिरूपं वा यत् कर्म करोति, **तत् तदर्थं युक्तम्**—तादृशं कर्म तादृशार्थबोधकमित्येव साधु । **तद्वाक्यात्**—प्रेरितपुरुषोच्चारितात् वाक्यात्, **सिद्धवेदी**—पुत्रजन्मादिनिष्पन्नार्थज्ञः पुरुषः,

प्रयतते इति चेत्—स्नान-जातकर्मादिक्रियानिर्वहणे यत्नं कुरुते इति कार्येऽर्थे शाब्दधीः प्राप्ता—इत्याशङ्कने ; अस्तु—कार्ये प्रवर्ततां नाम, तत् अनादेशिकम्—(अथाऽपि) कार्यनिर्वहणं वाक्याभिप्रेयं न भवति, (इति कार्ये एव व्युत्पत्तिरिति नास्ति) ॥ ३१ ॥

[प्रकारान्तरेण सिद्धे व्युत्पत्तिनिरूपणम्]

पुत्रस्तेऽभून्न सर्पोऽयमिति वचनतः प्रीत्यभीत्यादिलिङ्गैः

[1]तद्योग्यार्थं तदूह्यं[1] विषयनियतिरासत्तिपूर्वैः क्वचित् स्यात् ।

आवापोद्वापभेदात् प्रतिपदनियता शक्तिरप्यत्र सिध्येत्

भूयोदृष्ट्यादिसाहायकमिह वचसः पूर्वपक्षाविशिष्टम् ॥ ३२ ॥

ते पुत्रः अभूत् इति—'तव पुत्रो जातः' इति यं कंचित् प्रति प्रयुक्तात्, (तथा) अयं न सर्प इति—'परिदृश्यमानोऽर्थः न सर्पः' इति यं कञ्चित् प्रति प्रयुक्तात्, वचनतः—श्रुतात् वाक्यविशेषात्, प्रीत्यभीत्यादिलिङ्गैः—प्रीति-भयनिवृत्त्यादिज्ञापकीभूतमुखविकास-पलायननिवृत्त्यादिरूपैः लक्षणैः, तत्—प्रयुक्तं वाक्यद्वयम्, तद्योग्यार्थम्—प्रीतिभयनिवृत्त्यादिप्रयोजकार्थविशेषावबोधकमिति, ऊह्यम्—अनुमेयम् । विषयनियतिः—पुत्रजन्मादिव्यवस्थितविषयविशेषबोधकत्वनिर्णयः, क्वचित्—तत्र तत्र स्थलविशेषे, आसत्तिपूर्वैः—क्रियाविशेषसांनिध्यादिभिः, स्यात् - सिध्येदेव । आवापोद्वापभेदात्—पदान्तरप्रक्षेप-स्थितपदोत्क्षेपरूपात् विशेषात्, प्रतिपदनियता शक्तिरपि—तत्तत्पदानां व्यवस्थिता वाचकत्वशक्तिरपि, अत्र सिध्येत्—सिद्धार्थव्युत्पादनप्रकरणेऽपि लभ्येतैव । इह—सिद्धार्थव्युत्पत्तिपक्षे, भूयोदृष्ट्यादिसाहायकम्—भूयोदर्शनादिरूपसहकारापेक्षणम्, कार्यपक्षाविशिष्टम्—कार्ये व्युत्पत्तिवादिपक्षात् नाऽधिकम् ; किन्तु समानमेव ॥ ३२ ॥

[ आद्यव्युत्पत्तेः कार्यपरत्वाभ्युपगमेऽपि सिद्धे व्युत्पत्तिसमर्थनप्रकारः ]

कार्ये व्युत्पत्तिराद्या भवतु तदपि किं शक्तितात्पर्यसिद्धेः

प्राग् व्युत्पत्तिः क्रियायां नृवचसि निगमेत्वन्यथेत्यभ्युपेपि ।

स्थाप्याऽतोऽनन्यथासिद्ध्यनुगमनियतैः सत्प्रयोगैर्हि शक्तिः

कोऽसौ पाञ्चाल इत्याद्युचितविरतिकं सिद्धमात्रेऽपि वाक्यम् ॥ ३३ ॥

---

1 तद्योग्यार्थे प्रतीते—सा. प्र.

**आद्या व्युत्पत्तिः**—प्राथमिकः पदशक्तिग्रहः, **कार्ये भवतु**—साध्येऽर्थे भवतु नाम, **तदपि**—तथाऽपि, **शक्तितात्पर्यसिद्धेः**—पदगतबोधकत्वशक्तेः कार्यमात्रविषयतासिद्धिं प्रति, **किम्**—किं वा कारणं निष्कृष्योपपादितं भवेत्? **प्राग्व्युत्पत्तिः**—प्राथमिकशक्तिग्रहः, **नृवचसि**—मानुषे वाक्ये, **क्रियायाम्**—क्रियारूपे आनयनादिकार्ये, (भवति)। **निगमे तु**—वैदिके तु प्रयोगे, **अन्यथेति**—क्रियाकार्यभिन्ने अपूर्वरूपकार्ये इति, **अभ्युपैषि**—(प्राभाकरस्त्वं) अङ्गीकृतवानसि खलु। **अतः**—नियामकसापेक्षत्वात् शक्तिनिर्णयस्य, **अनन्यथासिध्यनुगमनियतैः**—वृत्त्यन्तरसंभावनाराहित्यरूपया अनन्यथासिध्या, सर्वप्रयोगसंग्रहरूपेण अनुगमेन च नियतसहकारवद्भिः, **सत्प्रयोगैः**—अभियुक्तानां शब्दप्रयोगैः खलु, **शक्तिः स्थाप्या**—शब्दशक्तिः व्यवस्थाप्या भवति। **असौ कः**—अयं पुरुषः कः? इति प्रश्ने, **पाञ्चालः इत्यादिवाक्यम्**—पाञ्चालदेशीय इति प्रतिवचनात्मकं वाक्यम्, **सिद्धमात्रेऽपि**—क्रियारहिते सिद्धार्थबोधकपदेऽपि, **उचितविरतिकम्**—विश्रान्तिमत्तया निर्देशार्हं दृष्टम् ॥ ३३ ॥

[ परवाद्यभ्युपगतार्थान्वारुह्यवादेन सिद्धपरवाक्यैः ब्रह्मप्रतिपत्तिः ]

दुःखासंभिन्नदेशप्रभृति फलतया चोदनास्वेव सिद्धम्  
श्रौतत्वादार्थवादिक्यपि भवति फलं रात्रिसत्रे प्रतिष्ठा।  
अङ्गीकुर्मो निषेधानुगुणमिति तथानर्थकृत्त्वं निषेध्ये  
विध्यर्थैरप्यतः स्यादवितथविषया ब्रह्मधीरर्थवादैः ॥ ३४ ॥

**चोदनास्वेव**—'यजेत स्वर्गकामः' इत्यादिविधिवाक्येष्वेव, **दुःखासंभिन्नदेशप्रभृति**—दुःखासंसृष्टदेशात्मकं स्वर्गादि, **फलतया**—यागादेः फलत्वेन, **सिद्धम्**—ज्ञातं, स्वीकृतं वा, (तथा) **रात्रिसत्रे**·रात्रिनामके सत्रयागे, **प्रतिष्ठा**—सम्पत्स्थैर्यम्, **आर्थवादिक्यपि**—अर्थवादवाक्ये एव ज्ञातमपि, **श्रौतत्वात्**—'प्रतितिष्ठन्ति ह वा य एता रात्रीरुपयन्ति' इति श्रुतिप्रतिपन्नत्वात्, **फलं भवति**—फलतया अङ्गीकृतमस्ति। **तथा**—उक्तयैव रीत्या, **निषेध्ये**—'ब्राह्मणाय नाऽपगुरेत' इति निषेधगोचरे अपगोरणे, **अनर्थकृत्त्वम्**—शतयातनादिरूपनारकहिंसाजनकत्वम्, **निषेधानुगुणमिति**—निन्दार्थनिन्दानिर्वाहकमिति, **अङ्गीकुर्मः**—उभयेऽप्यभ्युपगच्छाम एव। **अतः**—उक्तेन दृष्टान्तेन, **विध्यर्थैरपि**—विधिवाक्यशेषतास्वभावैरपि, **अर्थवादैः**—'सत्यं ज्ञान'मित्यादिभिः वाक्यैः, **ब्रह्मधीः**—सिद्धब्रह्मविषयिणी बुद्धिः, **अवितथविषया**—योग्यार्थविषया जायत एवेति, **स्यात्**—शारीरकशास्त्रारम्भः निरर्गल एव सिध्यति ॥ ३४ ॥

## आधिकरणार्थसङ्ग्रहः (जि· आधि १)

तत्र जिज्ञासाधिकरणे प्रथमे—

वृद्धव्यवहारादन्यत्र आद्यव्युत्पत्तेरसंभवात्, व्यवहारे च कार्यपरतयैव व्युत्पत्तेः, सर्वशब्दानां कार्यार्थबोधकतया सिद्धवस्तुबोधनासम्भवात्, सिद्धरूपे ब्रह्मणि वेदान्तानां प्रामाण्यं नाऽस्तीति, अप्रामाणिकमिदं ब्रह्मविचाररूपं शास्त्रम् अनारम्भणीयम्—इत्याशङ्क्य,

अम्बादिशब्दानाम् अङ्गुलिनिर्देशपूर्वकबहुप्रयोगेन सिद्धे व्युत्पत्तिः सम्भवतीति, वृद्धव्यवहारादन्यत्राऽपि शब्दानाम् आद्यव्युत्पत्तिसम्भवात्, 'पिता ते सुखमास्ते' इत्यादि-वृद्धव्यवहारे च सिद्धव्युत्पत्तिसम्भवात्, शब्दानां सिद्धवस्तुबोधनसामर्थ्यात्, वेदान्तवाक्यानां सिद्धरूपे ब्रह्मणि सामर्थ्यमस्तीति, तद्विचाररूपं शास्त्रम् आरम्भणीयम्—इत्युक्तम् ॥

—o—

## ॥ नसङ्गतिमालिका [जि· आधि १] [श्लो. २४–२५] ॥

[सङ्कर्षकाण्डान्त्य-शारीकाद्यसूत्रयोः सङ्गतिः]

देवताकाण्डचरमाधिक्रियायां हि सूत्रितम् ।<br>
अन्ते हरौ दर्शनात्स विष्णुराहेत्यतः परम् ॥ २३ ॥<br>
तं ब्रह्मेत्यादिनिर्देशात् ब्रह्मशब्दार्थगोचरात् ।<br>
अप्रसिद्धिं निराचष्टे तस्मादाक्षेपसङ्गतिः ॥ २५ ॥

॥ इति जिज्ञासाधिकरणम् ॥ १ ॥



## ॥ अथ जन्माद्यधिकरणम् ॥ १–१–२ ॥

॥ न्यायकलापसङ्ग्रहः ॥ (ज. अधि. २)

भेदप्रसक्तेरनुभूत्यभावात् विशेषणं वाऽप्युपलक्षणं वा ।

जन्माद्यशक्यप्रतिपादनं यत् [1]स्यात्तन्निरसो[1]ऽप्युभयत्र शक्तेः ॥ ८ ॥

**जन्मादि**—जगज्जन्मस्थितिलयरूपं कार्यजातम्, **भेदप्रसक्तेः**—विशेषणभेदकृत-विशेष्यभेदप्रसङ्गात्, **विशेषणं वाऽपि**—विशेषणीभूतं सत् लक्षणम् इत्यपि, **अशक्य-प्रतिपादनम्**—प्रतिपादयितुर्हं न भवति, (तथा) **अनुभूत्यभावात्**—उपलक्षणस्थलीया-कारान्तरप्रतीत्यभावात्, **उपलक्षणम्**—उपलक्षणीभूतं सत् लक्षणमित्यपि, **अशक्यप्रति-पादनम्**—प्रतिपादयितुमनर्हम् । **यत्**—एवं यदुच्यते, **तन्निरासोऽपि**—उभयविधानुप-पत्तिपरिहरणमपि, **उभयत्र शक्तेः**—जन्मादीनाम् उपलक्षणत्वे, विशेषणत्वे चेत्युभयपक्षेऽपि अन्वययोग्यत्वात् युज्यते ॥ ८ ॥



## ॥ तत्वसारः (ज. अधि. २) (श्लो. ८-९) ॥

अथ जन्माद्यधिकरणम्—

[लक्षणपरश्रुति-सूत्रयोः अद्वैत्यभिमतार्थविरोधिताप्रतिपादनम्]

भूतानीति पदेन वस्त्ववगतौ सत्यामिमानीति यत्

गायन्त्यामखिलेश्वरोऽगणि जगज्जन्मादिभिर्लक्षणैः ।

तेनादर्शि विचित्रतैव जगतः सृज्यस्य तेनाऽपि त-

त्स्रष्टुर्ब्रह्मण उज्ज्वला गुणगणा जिज्ञास्यताहेतवः ॥ ८ ॥

**भूतानीति पदेन**—'यतो वा इमानी'ति वाक्यगतेन 'भूतानि' इति पदेन, **वस्त्ववगतौ सत्याम्**—कार्यवर्गप्रतिपत्तौ सिद्धायाम्, **इमानि इति गायन्त्याम्**—

---

1 तत्सन्निरासो—ग.

'इमानि' इति इदंपदप्रयोगवत्यां भृगुवल्ल्याम्, **जगज्जन्मादिभिर्लक्षणैः**—जगज्जन्मस्थितिलयात्मकैः अनितरसाधारणैः धर्मैः, **अखिलेश्वरः**—सर्वनियन्ता पुरुषोत्तमः, **अगणि इति यत् तेन**—स्वासाधारणरूपेण ज्ञापितः इत्यनेनाऽर्थेन, **सृज्यस्य जगतः**—भगवता स्रष्टव्यस्य प्रपञ्चस्य, **विचित्रतैव**—अचिन्त्यात्यन्तविलक्षणाद्भुताकारतैव, **अदर्शि**—स्पष्टीकृता। **तेनाऽपि**—उक्तेन जगद्वैचित्र्येणापि, **तत्स्रष्टुः ब्रह्मणः**—जगन्निर्मातुः परमात्मनः, **जिज्ञास्यताहेतवः**—विचारणीयत्वोपपादकाः, **उज्ज्वलाः**—अविरुद्धाबाधिततया श्रुतिगम्याः, **गुणगणाः**—स्वाभाविकाः सृष्ट्यौपयिकाः सर्वज्ञत्व-सर्वशक्तित्वादयो गुणाः, **अदर्शिषत**—स्पष्टीकृता एव ॥ ८ ॥

[ श्रौतस्य इमानीति पदस्य वैचित्र्यबोधकतायाः भाष्यतः सिद्धिः ]

अस्येत्युद्दिश्य सौत्रं पदमथ तदचिन्त्यादिभाष्यं विवव्रे
तत्तन्मानप्रसिद्धं जगदभिदधती तद्विचित्रत्वमाह ।
श्रौती सौत्रीदमुक्तिस्त्विति हृदि निदधत्तत्र चाचेतनांशे
वैचित्रीमाह पूर्वं पदमथ नियतेत्यादिकं चेतनांशे ॥ ९ ॥

**तत्तन्मानप्रसिद्धम्**—लोकविदितैः प्रत्यक्षादिभिः तैस्तैः प्रमाणैः ग्राह्यम्, **जगत्**—'भूतानीति श्रुत्युक्तं कार्यजातम्, **अभिदधती**—प्रतिपादयन्ती, **श्रौती सौत्री इदमुक्तिस्तु**—श्रुतिस्था 'इमानीति, सूत्रस्था 'अस्येति' च 'इदं' पदरूपा उक्तिश्च, **तद्विचित्रत्वमाह**—जगद्वैचित्र्यं वदति, **इति हृदि निदधत्**—एवमभिप्रयत्, **तत् अचिन्त्यादि भाष्यम्**—'अचिन्त्यविविधविचित्ररचनस्य' इत्यादिरूपं तद्भाष्यम्, **सौत्रम् अस्येति पदम्**—'जन्माद्यस्य यतः' इति सूत्रस्थं षष्ठ्यन्तमिदं पदम्, **उद्दिश्य**—व्याख्येयतया मनसिकृत्य, **विवव्रे**—व्याचख्यौ, **तत्र च पूर्वं पदम्**—अचिन्त्येत्यादिभाष्ये 'अचिन्त्यविविधविचित्ररचनस्येत्येतत्, **अचेतनांशे वैचित्रीम्**—अचिद्रूपकार्यैकदेशगतविलक्षणात्यद्भुताकारताम्; **आह**—विवृणोति। **अथ**—पश्चात्, **नियतेत्यादिकम्**—नियतेत्यादिमिश्रस्येत्यन्तम्, **चेतनांशे वैचित्रीम् आह**—चिद्रूपे कार्यैकदेशे अद्भुताकारतां वदति ॥ ९ ॥

[ लक्षणासम्भवतः ब्रह्मणः प्रतिपत्तिदौःस्थ्यशङ्कापरिहारौ ]

(लक्षणत्वं धर्मस्य विशेषणत्वोपलक्षणत्वाभ्यां न सम्भवतीत्याक्षिप्य उपलक्षणत्वसाधनम्)

जन्माद्यैश्चेद्विशेष्यं 'भवति' बहुलताऽथोपलक्ष्यं ब्रवीषि
ज्ञाताज्ञातादिदौःस्थ्यं व्यतिषजति न चाऽलक्षिते स्यात्परीक्षा ।
उद्दिष्टब्रह्मचिन्ता तत इह कथमित्यत्र हेतुत्वलक्ष्यः
पुंसूक्तादिप्रसिद्धो गुणनिधिरघजिद् ब्रह्मशब्दार्थ उक्तः ॥ ३५ ॥

ब्रह्म—शारीरकशास्त्रजिज्ञास्यं परं ब्रह्म, जन्माद्यैः—सृष्टि-स्थिति-लयैः (विशेषणीभूतैः) विशेष्यं भवति चेत्—इतरव्यावृत्ततया बोध्यं यदि भवति, बहुलता—विशेषणबहुत्वायत्तं विशेष्यबहुत्वम्, व्यतिषजति—प्रसज्यते । अथ—अथवा, उपलक्ष्यं ब्रवीषि—जन्माद्यैः उपलक्षणीभूतैः व्यावृत्ततया ज्ञाप्यं यदि वदसि, ज्ञाताज्ञातादिदौःस्थ्यं व्यतिषजति—ब्रह्मणि पूर्वप्रतिपन्नाकारस्य, अप्रतिपन्नोपलक्ष्याकारस्य, उपलक्षकाकारस्येति आकारत्रयस्यानिरूपणं प्रसज्यते । अलक्षिते—धर्मिभूते ब्रह्मणि लक्षणतः अज्ञाते सति, परीक्षा न च स्यात्—विचारः नैव युज्येत, ततः—ब्रह्मणो लक्षणालाभात्, इह—शारीरके, उद्दिष्टब्रह्मचिन्ता, कथम्—जिज्ञास्यतया प्रतिज्ञातस्य ब्रह्मणः विचारणं कया रीत्या संपद्यते? इत्यत्र—एवं विचिकित्सायाम्, पुंसूक्तादिप्रसिद्धः—पुरुषसूक्तादिषु मुख्यतमेषु वेदभागेषु पुरुषत्वेन प्रतिपन्नः, गुणनिधिः—कल्याणगुणाकरत्वात्मकस्वरूपबृहत्वाश्रयः, अघजित्—अखिलहेयप्रत्यनीकत्वात्मकस्वरूपकृतबृंहणत्वाश्रयश्च, ब्रह्मशब्दार्थः—शक्त्या ब्रह्मपदप्रतिपाद्यः अर्थ एव, हेतुत्वलक्ष्यः—जन्मादिकारणत्वेन उपलक्षकाकारेण उपलक्ष्यः इति, उक्तः—प्रतिपादितः ॥ ३५ ॥

[ विशेषणतया लक्षणत्वस्य समर्थनम् ]

नाना चेल्लक्षणानि स्वरसभिदुरता ब्रह्मणि स्याद्विशेष्ये
खण्डो मुण्डश्च गौरित्यभिलपनसमा धर्मिशब्दैकताऽत्र ।

---

1 विहति—सा. प्र.

तेष्वेकं चेद्वृथान्यत् समुदितमफलं स्याद्व्यवच्छेद्यहानेः

खण्डत्वादिक्रमाच्चेत्यसदविहतितः खण्डतादेर्विशेषात् ॥ ३६ ॥

**लक्षणानि** — ब्रह्मलक्षणत्वेनाऽभिमतानि जगज्जन्मादीनि, **नाना चेत्**—पृथक् पृथगेवस्वविशेष्यगामीनि चेत्, **विशेष्ये ब्रह्मणि**—लक्षणेन व्यावर्तनीये परस्मिन् ब्रह्मणि, **स्वरसभिदुरता स्यात्**—स्वभावतो भेदवत्त्वं प्रसज्येत । **अत्र**—'यतो वा इमानी'त्यादिरूपे लक्षणवाक्ये, **धर्मिशब्दैकता**—धर्मिबोधकस्य ब्रह्मशब्दस्यैकता, **गौः गण्डः, मुण्डश्च इत्यभिलपनसमा**—धर्मिबोधकगोशब्दैक्येऽपि खण्डत्व-मुण्डत्वात्मकभिन्नधर्मव्यावृत्तनानागोव्यक्तिबोधकेउक्तवाक्ये इव विशेष्यभेदाविरोधिन्येव, **तेषु**—जन्मस्थितिलयेषु मध्ये, **एकं चेत्**—अन्यतममेव लक्षणं चेत्, **अन्यत् वृथा**—अवशिष्टं द्वयम् अव्यावर्तकमेव, **समुदितं चेत्**—त्रयमपि मिलितमेव यदि लक्षणत्वेन विवक्षितम् तदा, **खण्डत्वादिक्रमाच्च**—एकस्या गोव्यक्तेः लक्ष्यतायां खण्डत्व-मुण्डत्वादिनानाधर्माणामिव च, **व्यवच्छेद्यहानेः**—व्यावर्त्यभेदाभावेन हेतुना, **अफलं स्यात्**—निष्प्रयोजनं स्यात्, **इत्यसत्**—एवमाक्षेपणं नैव सम्यक्, **अविहतितः**—(कार्यतया ब्रह्मणि सम्बध्यमानानां जन्म-स्थिति-लयानाम्) असामानाधिकरण्यात्मकविरोधाभावात्, **खण्डतादेर्विशेषात्**—गोविशेषणत्वाभिमतमिथोविरुद्धखण्डत्वाद्यपेक्षया विलक्षणत्वात् ॥ ३६ ॥

[ स्वेतरधर्मबाधकाबाधकविशेषणव्युत्पादनम् ]

तत्तत्स्वप्रत्यनीकव्युदसननियतं भेदकं नाऽन्यबाधि

व्याघातः कालभेदान्न भवति जनन-स्थापन-ध्वंसनानाम् ।

प्रत्येकं लक्षणत्वं सुवचमिह बहूदाहृतिर्धीमहिम्ने

संभूयाऽप्याहुरेके फलमपि च तदाशङ्कितार्थव्युदासः ॥ ३७ ॥

**तत्तत्स्वप्रत्यनीकव्युदसननियतम्**—स्वविरोधितत्तद्धर्मव्यावर्तनमात्रस्वभावम्, **भेदकम्**—('नीलमुत्पलम्' इत्यादौ) विशेषणत्वाभिमतं नीलत्वोत्पलत्वादि, **अन्यबाधि न**—स्वसमानाधिकरणस्वेतरव्यावर्तकं न भवति (यथा नीलत्वम् उत्पलत्वस्य ; उत्पलत्वं नीलत्वस्य)। **जनन-स्थापन-ध्वंसनानाम्**—ब्रह्मणि कार्यतया सम्बन्धवतां जगत्सृष्टि-स्थिति-लयानाम्, **व्याघातः**—मिथो व्यार्तकत्वम्, **कालभेदात्**—सृष्टिकालस्य, स्थितिकालस्य, लयकालस्य च भिन्नत्वात्, **न भवति**—स्वभावतो नैवाऽस्ति । **इह**—जन्म-स्थेम-भङ्गेषु, **प्रत्येकं लक्षणत्वम्**—एकैकपर्याप्तं लक्षणत्वम्, **सुवचम्**—वक्तुं सुशकमेव । **बहूदाहृतिः**—

त्रयाणामपि लक्षणे मेलनम्, **धीमहिम्ने**—शिष्यबुद्धिवैशद्यायैव; (एकैकस्याऽपि अन्यगामित्वाभावात्)। **एके**—केचन वेदान्तार्थव्युत्पादने प्रवृत्ताः, **सम्भूयाऽपि**—मिलित्वैव लक्षणत्वम्, **आहुः**—वर्णयन्ति। **फलमपि**—समुदितस्य लक्षणतायाः फलं तु, **तदाशङ्कितार्थव्युदासः**—तैः आशङ्कितस्य ईश्वरत्रयापत्तिरूपस्य दोषस्य परिहार एव। (सृष्ट्यादित्रयकर्तृत्वमेव परब्रह्मत्वनियामकमिति) ॥ ३७ ॥

[श्रियःपतित्वस्य उपलक्ष्याकारान्तरत्वोपपादनम्]

ज्ञातं चेन्नोपलक्ष्यं न च यदि नतरां लक्ष्म[1]योगाप्रतीतेः[1]

ज्ञाताज्ञातांशभेदस्त्विह दुरभिलपो [2]लक्षणैरेव[2] वेद्ये।

ब्रह्मत्वं ब्रह्मशब्दान्वितिरपि [3]विदिते ह्यत्र[3]नो चेन्न शङ्का

मैवम्; नानागमोद्यद्द्विशयशमनतः श्रीमति ब्रह्मतोक्तेः ॥ ३८ ॥

**ज्ञातं चेत्**—यत्किमपि वा वस्तु पूर्वं धर्मितया प्रतीतं चेत्, **उपलक्ष्यं न**—उपलक्षणत्वाभिमतेन धर्मेण ज्ञाप्यं न भवितुमर्हति, (पूर्वमेव ज्ञातत्वात्)। **यदि न च**—पूर्वमज्ञातं चेत्, **नतराम्**—सर्वथा उपलक्ष्यत्वायोगः; (कुतः?) **लक्ष्मयोगाप्रतीतेः**—लक्षणसम्बन्धाज्ञानात् (धर्मिणोऽप्रतीतेः)। **लक्षणैरेव वेद्ये**-अतीन्द्रियत्वात् लक्षणं विना दुर्ज्ञेये, **इह तु**—ब्रह्मणि विषये तु, **ज्ञाताज्ञातांशभेदः**—किञ्चिदंशे ज्ञातत्वम्, किञ्चिदंशे अज्ञातत्वम् इत्येवं विभागः, **दुरभिलपः**—दुर्वचः। **हि**—यतः, **ब्रह्मत्वम्**—निरतिशयबृहत्त्वसहितं बृंहणत्वम्, **ब्रह्मशब्दान्वितिरपि**—वाचकतया ब्रह्मशब्दसम्बन्धश्च, **अत्र विदिते**—ब्रह्मणि ज्ञाते एव। **नो चेत्**—ब्रह्मणि तयोः सर्वथैवाविदितत्वे, **न शङ्का**—किं तद्ब्रह्म? इति शङ्काऽपि नैवोदियात्। (इत्याक्षेपे), **मैवम्**—एवमाशङ्कनं न साधु, **नानागमोद्यद्द्विशयशमनतः**—शैव-शाक्तादिनानाविधागमश्रवणजन्यस्य संशयस्य शमनपूर्वकम्, **श्रीमति**—श्रियःपत्यौ नारायणे, **ब्रह्मतोक्तेः**—ब्रह्मशब्दवाच्यतयाः वर्णितत्वात्, (श्रियःपतित्वम् उपलक्ष्याकारः इत्यर्थः) ॥ ३८ ॥

[जगज्जन्मादीनां विशेषणत्वोपलक्षणत्वोभयसाङ्कर्यम्]

यावल्लक्ष्यावबोधं यदवगतिरतो लक्षणात्तद्विशेष्यं

यस्याऽबोधेऽपि पश्चाद्यदवगतिरिदं स्यात्तु तेनोपलक्ष्यम्।

---

1 योगोऽप्रतीतेः—सा. प्र.  2 लक्षणैनैव—सा. प्र.  3 विदितेऽन्यत्र—सा. प्र.

तस्माद्द्वेधाऽपि भाष्येऽनुमतिरनुचितेत्याशयाज्ञस्य चोद्यं
मोक्षार्थोपास्यभेदे ह्युभयमपि समन्वेति विद्याविकल्पात् ॥ ३९ ॥

यदवगतिः—यादृशधर्मविषयिणी बुद्धिः, यावल्लक्ष्यावबोधम्—नियमेन लक्ष्यज्ञान-व्यापिनी, (स्वविषयितानियतलक्ष्यविषयिताका), अतः लक्षणात्—एतादृशात् असाधारण धर्मात्, तत्—व्यावर्त्यं धर्मि, विशेष्यम्—विशेष्यमित्युच्यते । यस्य—यादृशधर्मस्य, अबोधेऽपि—अनवगतिवेलायामपि, पश्चाद्यदवगतिः—ज्ञापकत्वाभिमतधर्मज्ञानानन्तरभावितया यादृशधर्मिज्ञानं भवति, इदम्—ईदृशं ज्ञाप्यं धर्मि तु, तेन—पूर्वं ज्ञातेन ज्ञापकीभूतेन धर्मेण, उपलक्ष्यम्—उपलक्ष्यमित्युच्यते । तस्मात्—विशेषणत्वोपलक्षणत्वयोः विशेष्यत्वोप-लक्ष्यत्वयोश्च मिथोऽविरोधात्, भाष्ये—श्रीभाष्यग्रन्थे, द्वेधाऽप्यनुमतिः—जगत्कारणत्वादेः विशेषणत्वोपलक्षणत्वोभयप्रकारानुमतिः, अनुचितेति—न युक्तेति, चोद्यम्—आक्षेपणम्, आशयाज्ञस्य—भाष्याभिप्रायमजानत एव । हि—यतः, मोक्षार्थोपास्यभेदे—मोक्षप्रयोजन-कस्य उपास्याकारस्य भिन्नत्वे सति, विद्याविकल्पात्—तत्र तत्र चोदितानां उपासनस्वरूपाणाम् अनुष्ठात्रानुगुण्येन वैकल्पिकत्वात्, उभयमपि—विशेषणत्वम्, उपलक्षणत्वं चेति द्वयमपि, समन्वेति—(ब्रह्मणि) अविरुद्धं सङ्गतं भवति ॥ ३९ ॥

[ जन्मादिकारणत्वस्य तटस्थलक्षणत्वनिरासः ]

चन्द्रे शाखेव शान्ते महसि तटगतं लक्षणं कारणत्वं
सत्यज्ञानादिवाक्यैरपमृदितगुणं तद्विभातीति डिम्भाः ।
एकत्राऽर्थो विशेष्ये प्रतिपदनियतावर्ज्यतत्तन्निमित्त-
द्वारा वृत्तिं पदानामिह विदुररुणाद्युक्तिवन्न्यायवृद्धाः ॥ ४० ॥

चन्द्रे—विपुलगगनमण्डलविराजमाने शशिनि ज्ञाप्यतया अभिमते, शाखेव—(‘शाखाग्रे चन्द्रः’ इत्यादौ) चन्द्रज्ञापकत्वाभिमता चन्द्राद्दूरवर्तिनी शाखेव, शान्ते महसि—निर्विशेषचिन्मात्रे परे ब्रह्मणि, कारणत्वम्—जगत्कारणत्वम्, तटगतं लक्षणं—ज्ञाप्यासम्बन्धि सत् ब्रह्मणो ज्ञापकम् । तत्—ब्रह्म, सत्यज्ञानादि-वाक्यैः—‘सत्यं ज्ञानमनन्तं ब्रह्म’ इत्येवमादिभिः स्वरूपलक्षणपरैः श्रुतिवाक्यैः, अपमृदितगुणम्—निरस्तसमस्तविशेषं सत्, विभातीति—प्रकाशते, प्रतिपाद्यत इति, डिम्भाः—श्रुत्यर्थतत्त्व-

चिन्तने अकुशलाः (अद्वैतिनः वदन्ति)। न्यायवृद्धाः--पदवाक्यप्रमाणज्ञास्तु, इह—'सत्यं ज्ञानमनन्तं ब्रह्म' इति वाक्ये, पदानाम्—सत्य-ज्ञान-अनन्त-ब्रह्मपदानाम्, प्रतिपदनयतावच्छेर्यतत्तन्निमित्तद्वारा—एकैकस्मिन्नपि पदे व्यवस्थिततया अवश्यंवक्तव्यानि यानि सत्यत्व-ज्ञानत्व-अनन्तत्व-ब्रह्मत्वाख्यानि प्रवृत्तिनिमित्तानि(शक्यतावच्छेदकानि) तानि द्वारीकृत्य, विशेष्ये एकत्राऽर्थे—विशेष्यभूते ब्रह्मरूपे एकस्मिन् धर्मिणि, वृत्तिम्—बोधकतारूपं सन्बन्धम्, अरुणाद्युक्तिवत्—(अरुणया एकहायन्या गवा सोमं क्रीणाति' इत्यादि वाक्येष्विव (तत्र हि आरुण्य-एकहायनीत्व- गोत्वानाम् एकस्यामेव गवि खलु अन्वयः) विदुः—निश्चिन्वन्ति ॥ ४० ॥

## ॥ अधिकरणार्थसङ्ग्रहः (ज० अधि.) ॥

द्वितीये जन्माद्यधिकरणे—

यद्यपि पदानां परिनिष्पन्नबोधनशक्तिरस्ति; तथाऽपि लक्षणतः प्रतिपन्नस्यैव शब्दबोध्यत्वात्, विशेषणानां विशेष्यभेदकत्वेन, जगज्जन्मादीनां विशेषणतया ब्रह्मलक्षणत्वासम्भवात्, पूर्वप्रतिपन्नाकारान्तरासम्भवेन तेषामुपलक्षणतया वा तदसम्भवाच्च, ब्रह्म न वेदान्तवेद्यम्—इत्याशङ्क्य,

अविरुद्धविशेषणानां विशेष्याभेदकत्वेन, सार्वज्ञ्यादेः पूर्वप्रतिपन्नाकारान्तरस्य सम्भवेन च, जगज्जन्मादीनां विशेषणतया, उपलक्षणतया च ब्रह्मलक्षणत्वसम्भवात्, ब्रह्म वेदान्तवेद्यम्—इत्युक्तम् ॥

---

## ॥ नयसङ्ग्रातीमालिका (ज. आधि.) ॥

प्रमाण-लक्षणाभ्यां च वस्तुसिद्धिरिति स्थिते ।
स्यात्प्रमेयपरीक्षाऽथ प्रमाणाक्षेपमूलिका ॥ २६ ॥

॥ इति जन्माद्यधिकरणम् ॥ २ ॥

## शास्त्रयोनित्वाधिकरणम् ॥ १-१-३ ॥

॥ न्यायकलापसङ्ग्रहः ( शा. अधि) ॥

कार्यत्वतः सावयवत्वसिद्धात् कर्ता च संसिध्यति कारणं च ।
इत्येतदुत्सारितवान् प्रदूष्य शास्त्रैकगम्यत्वसमर्थनेन ॥ ९ ॥

सावयवत्वसिद्धात्—जगद्वर्तिना सावयवत्वरूपधर्मेण ज्ञापितात्, कार्यत्वतः—उत्पत्तिमत्वात् कृतिसाध्यत्वाद्वा, कर्ताच—जगदुपादानादिगोचरापरोक्षज्ञानादिमान्, (तथा) कारणं च—परमाण्वादिरूपमुपादानकारणं च अतीन्द्रियम्, संसिध्यति—निरवग्रहमनुमीयते । (अतः ईश्वरोऽनुमेयः) इत्येतत्—इदं प्रमेयम्, शास्त्रैकगम्यत्वसमर्थनेन—ईश्वरस्य शास्त्रेतरप्रमाणागोचरत्वसाधनेन, प्रदूष्य—अनुचितमिति प्रतिपाद्य, उत्सारितवान्—निराकृतवान् बादरायणः 'शास्त्रयोनित्वात्' इति ॥ ९ ॥

---

## ॥ तत्त्वसारः (शा. अधि श्लो. १०-१४] ॥

अथ शास्त्रयोनित्वाधिकरणम्—

[ कार्यत्वहेतुकेश्वरानुमानस्य व्यभिचारित्व-विरुद्धत्वकथनम् ]

कार्यत्वात् घटवत् [1]सकर्तृविमतं[1] क्षित्यादि कार्यञ्च तत्
सर्वं सावयवत्वतः स भगवानाधारसिद्धान्ततः ।
इत्येतन्न घटेत विश्वजनने यत् कर्तृ-कालैक्ययोः
[2]कार्यत्व[2]व्यभिचारिभेद[3]गणना[3] हेतोर्विरोधोऽथवा ॥ १० ॥

विमतम्—विरुद्धमतिविषयीभूतम्, (विप्रतिपत्तिधर्मि) क्षित्यादि—मही-महीधरादिकम्, सकर्तृ—अभिज्ञासमर्थकर्तृकम्, कार्यत्वात्—कृतिसाध्यत्वात्, घटवत्—घट इव, तत् सर्वम्—

---

1 सकर्तृकमिदं-पा. 2 कार्यत्वं-पा. 3 गणनात्—पा.

क्षित्यादिकं सर्वम्, सावयवत्वतः—अवयवारब्धत्वात् हेतोः, कार्यं च—कृतिजन्यत्वरूप-हेतुमदपि, सः—कर्तृत्वेन सिध्यंश्च चेतनः, आधारसिद्धान्ततः—अधिकरणसिद्धान्तरूपात् बलात्, (कस्यचित्साधने अन्यस्य अनुषङ्गात् सिद्धिः—अधिकरणसिद्धान्तः) भगवान्—ईश्वराख्यश्चेतनः ; इत्येतत्—एवंरूपम् अनुमानादीश्वरसिद्धिचिन्तनम्, न घटेत—नैव युज्येत, यत्—यस्मात्, विश्वजनने—कार्यभूतजगत्सृष्टौ, कर्तृकालैक्ययोः—एकेनैव युगपदेव निर्मितत्वे साध्ये, कार्यत्वव्यभिचारिभेदगणना—कार्यत्वे हेतौ अनैकान्तिकविशेषस्य साधारणत्वासाधारणत्वान्यतरस्य दोषस्य चिन्तनम्, हेतोः विरोधोऽथवा—विपुलकार्येषु कालदैर्घ्यकर्तृबहुत्वदर्शनात् कार्यत्वहेतोः स्वसाध्याविरुद्धसाधकत्वमेव वा भवति- इति ॥ १० ॥

[ कल्पनालाघवस्य प्रकृते इष्टार्थविघटकत्वम् ]

यत्कल्पनालघिमलालसमानसानां
कर्त्रैक्यसिद्धिरिति नादरणीयमेतत् ।
तद्व्याप्तिमेव हि रुणद्धि सकर्तृकत्वं
किं कल्प्यते लघिमसम्पद[1]मीप्समानैः[1] ॥ ११ ॥

कल्पनालघिमलालसमानसानाम्—कल्पनालाघवमात्रे आसक्तमनसां नैयायिकानाम्, कर्त्रैक्यसिद्धिः इति यत्—अनुमानतः ईश्वरसिद्धिवेलायाम्, सिध्यतः कर्तुरेकत्वे लाघवमिति लाघवज्ञानसहकारात् एक एवेश्वरः सिध्यतीत्येतत्, न आदरणीयम्—अङ्गीकार्यं न भवितु-मर्हति ; हि—यतः, तत्—अपेक्षितं लाघवम्, व्याप्तिमेव—कार्यत्वसकर्तृत्वयोः अव्यभि-चारमेव, रुणद्धि—प्रतिबध्नाति । (क्षित्यङ्कुरादिषु कर्तृरदर्शनात् अकर्तृकत्वे लाघवमिति ।) (एवं स्थिते) लघिमसम्पदम्—लाघवरूपमैश्वर्यम्, ईप्समानैः—अपेक्षमाणैः, सकर्तृ-कत्वम्—जगतः समर्थकर्तृपूर्वकत्वम्, किं कल्प्यते—किमर्थम् अनुमीयते? (अदर्शनात् कर्तुः अभाव एवेति स्वीकारे सर्वातिशायिलाघवसिद्धेः) इति ॥ ११ ॥

[अनुमानतः अपेक्षितविशेषासिद्धिः]

क्ष्मादावंशिनि कारणान्तरगणे यत्नेप्यदृष्टे तन्नौ
पक्षे दृष्टविरूपताऽस्त्वपरधा कल्प्या न कर्तर्यपि ।

---

1. मीप्सुभिस्तैः—पा, वा. व.

सेयं न्यायपथ[1]प्रहीण[1]युगपत्सर्गक्षयौ नेक्षितौ

सर्वस्येह न कल्पनापरिकरस्तन्नाऽनुमेयः परः ॥ १२ ॥

**अंशिनि**—सावयवे, **क्ष्मादौ**—मही-महीधरादौ वस्तुनि, **कारणान्तरगणे**—अन्यान्यस्मिन् कारणकलापे, **यत्ने**—पुरुषप्रयत्ने, **अदृष्टे**—धर्माधर्मात्मके आत्मसमवेते गुणे, **तनावपि**—शरीरे च, **पक्षे**—अनुमानं प्रति पक्षीकृते, (यथाक्रमं नित्यत्व-कर्त्रनधीनस्वकार्योत्पत्तिकत्व-ज्ञानचिकीर्षानपेक्षकार्यकरत्व-दूरेविद्यमानकर्मकत्वप्रदृष्टत्वादृश्यत्वरूपेषु साध्यीभूतेषु सत्सु) **दृष्टविरूपता**—लोकदृष्टविलक्षणता, **अस्तु**—भवतु नाम। **अपरथा**—लोकपरिदृष्टवैलक्षण्यानभ्युपगमे, **कर्तर्यपि**—जगत्कर्तृतया सिषाधयिषितेऽपि, **सेयम्**—सर्वज्ञत्वसर्वशक्तित्वाद्यात्मिका दृष्टविलक्षणता, **न कल्प्या**—नैव कल्पनीया भवति। **सर्वस्य**—कार्यभूतस्य जगतः, **न्यायपथप्रहीणयुगपत्सर्गक्षयौ**—आनुमानिकपदव्यगोचरौ आगमैकगम्यौ युगपत्सर्वसर्गसर्वप्रलयौ, **न ईक्षितौ**—न लोकदृष्टौ खलु, **इह**—ईश्वरविषये, **कल्पनापरिकरः**—अनुमितिसामग्र्यपि, **न**—नाऽस्ति, **तत्**-तस्मात्, **परः**—परमात्मा, **नाऽनुमेयः**—अनुमानप्रमाणगम्यो न भवितुमर्हति ॥ १२ ॥

[ अनुमेयार्थविपरीतप्रसञ्जनम् ]

नित्यं क्षित्यादि सांशं भवदपि घटतां कारणानां परेषां

व्यापारः कर्त्रपेक्षाविधुर "इह" भवत्वस्य कर्तुः प्रयत्ने।

नाऽपेक्ष्ये धीचिकीर्षे तनुभृत इह चाऽदृष्टमीष्टे विधातुं

कार्यं देही दवीयानपि सृजतु जगद्धर्म्म दृश्येतरद्वा ॥ १३ ॥

**क्षित्यादि**—मही-महीधरादिकम्, **सांशं भवदपि**—सावयवं सदपि, **नित्यं घटताम्**—नित्यं भवेन्नाम, **परेषां कारणानाम्**—घटादिजनकेतरेषां क्षित्यादिकारणानाम्, **व्यापारः**—कार्यजननानुगुण्यम्, **इह**—क्षित्यादौ जननीये, **कर्त्रपेक्षाविधुरः**—अधिष्ठातृसहकारानपेक्षम्[2], **भवतु**—अस्तु।[2] **अस्य कर्तुः**—अनुमेयस्य जगत्कर्तुः, **प्रयत्ने**—कारणत्वाभिमतं प्रयत्नं प्रति, **धीचिकीर्षे**—ज्ञानेच्छे, **नाऽपेक्ष्ये**—सहकारितया नैव आकांक्षिते। **इह**—जगति, **तनुभृतः अदृष्टम्**—क्षेत्रज्ञस्य धर्माधर्मोभयम्, **कार्यं विधातुम्**—जगत्

1 च्युतौ च—पा वा. व. 2 इति—पा.

निर्मातुम्, ईष्टे—समर्थं भवति । देही दवीयानपि—जीवःकार्यात् दूरवर्त्यपि सन्, जगत् सृजतु—भुवनाख्यं कार्यं जनयतु, वा—अथवा, वर्ष्म—जगन्निर्मातुः शरीरं सम्भवदपि, दृश्येतरत्—अतीन्द्रियमेवाऽस्तु इति ॥ १३ ॥

[ ईश्वरानुमानस्य दृष्टानुगुण्याभावः ]

दृष्टानुगुण्यविरहादिह कल्पनाना-

मासामसिद्धिरिति चेदपि कर्तरि स्यात् ।

जन्म क्रमेण ददृशे [1]जगतः[1] क्षयो वा

क्लृप्तिश्च दर्शनवशादनयोस्तथा स्यात् ॥ १४ ॥

इह—मही-महीधरादिनित्यत्वादिविषये, दृष्टानुगुण्यविरहात्—लोकदृष्टानुरोधाभावात्, आसां कल्पनानाम्—पूर्वश्लोकप्रदर्शितानां विपरीतकल्पनानाम्, असिद्धिः—व्यस्याद्य-सिद्धिनिबन्धना स्वरूपानिष्पत्तिः, इति चेत्—इत्येवं प्रदर्शितदोषोद्धारप्रवृत्तौ सत्याम्, कर्तर्यपि—जगत्कर्तृत्वेन सिषाधयिषितेऽपि चेतने, असिद्धिः स्यात्—उक्तविधानुमाना-सिद्धिर्भवेत् । जगतः जन्म क्षयो वा—प्रपञ्चसृष्टिः तत्प्रलयो वा, क्रमेण ददृशे—कालभेदेनैव दृष्टः खलु, न युगपत्; तस्मात्, अनयोः क्लृप्तिश्च—सृष्टि-प्रलययोः कल्पनाऽपि, दर्शनवशात्—दृष्टानुरोधात्, तथा स्यात्—क्रमेणैव भवेन्नाम ॥ १४ ॥

॥ इति शास्त्रयोनित्वाधिकरणम् ॥ ३ ॥



## आधिकरणसारावलिः (शा. अधि) (श्लो. ४१–४५) ॥

(अनुमानतः ईश्वरसिद्धिशङ्कापरिहारौ)

वीतावीतप्रयोगक्रमनियतिमती कार्यता विश्वमेतत्

सर्वज्ञेन प्रक्लृप्तं गमयति विफलस्त्वत्र शास्त्रैर्विचारः ।

---

1 जगति—पा, वा. व.

इत्युन्नीतौ लघुत्वादनुमितिवशतः कर्मजैश्वर्य[1]युक्ते[1]

विश्वामित्रादिनीत्या "स्फुरति[2] विभुमिहाऽदर्शयच्छास्त्रवेद्यम् ॥ ४१ ॥

**वीतावीतप्रयोगक्रमनियतिमती**—साध्येन साकं अन्वयव्याप्तिशालिनी, व्यतिरेकव्याप्तिशालिनी च, **कार्यता**—सकर्तृकत्वज्ञापकतया अभिमता उत्पत्तिमत्ता, कृतिसाध्यता वा, **एतत् विश्वम्**—विवादविषयीभूतं मही-महीधरादिकं जगत्, **सर्वज्ञेन प्रक्लृप्तम्**—उपादानापकरणाद्यखिलाभिज्ञेन पुरुषविशेषेण निर्मितमिति, **गमयति**--अनुमापयति। **अत्र**—अनुमानसिद्धेश्वरविषये, **शास्त्रैर्विचारः**--उपनिषच्छारीरकादिभिः चिन्तनम्, **विफलस्तु**-पिष्टपेपणवत् फलशून्यमेव। **इत्युन्नीतौ**—एवं नैयायिकैः प्रत्यवस्थाने प्राप्ते, **अनुमितिवशतः**—अनुमित्यधीनतः, **विश्वामित्रादिनीत्या**--विशिष्टप्रभावात् 'अन्यमिन्द्रम्' इत्यादिदृष्टस्रष्टृत्वयुक्त-ऋष्यात्मकचेतनविशेषन्यायेन, **कर्मजैश्वर्ययुक्ते**—तपोविशेषाधीनवैशिष्टसामर्थ्यवति जीवविशेषे एव, **स्फुरति**—जगत्स्रष्टृत्वेन सिद्धे सति (तेन अर्थान्तरे प्राप्ते) **लघुत्वात्**—लाघवात्मकतर्कसहकारबलेन, **इह**—शारीरकशास्त्रे, **विभुम्**—सृष्टिसमर्थमीश्वरम्, **शास्त्रवेद्यम्**—शास्त्रैकसमधिगम्यम्, **असूत्रयत्**—बादरायणः 'शास्त्रयोनित्वात्' इति सूत्रेण प्रत्यपादयत् ॥ ४१ ॥

[ कार्यत्वहेतुकान्वय्यनुमानदूषणम् ]

क्षित्याद्यं कार्यताद्यैः कटकमकुटवत् कर्तृपूर्वं स कर्ता

सिध्येदत्राऽण्वदृष्टप्रभृतिजनकदृक् सर्वशक्तिश्च, मैवम्।

श्रोत्राद्यैः सौरभादिग्रहणरुचिरियं तादृशव्याप्त्यभावात्

सर्वं हेतुं न पश्येद्घट[3]कृदिह[3] न चाऽकर्तृता तावताऽस्य ॥ ४२ ॥

**क्षित्याद्यम्**—मही-महार्णवादिकं कार्यजातम्, **कार्यताद्यैः**—कार्यत्वसावयवत्वभोग्यत्व-भोगसाधनत्वादि-रूपैर्हेतुभिः, **कटकमकुटवत्**—कार्यान्तर्गतस्वर्णाभरणविशेषवत्, **कर्तृपूर्वम्**—कृतिमत्पुरुषजन्यतया ज्ञाप्यम्, **अत्र**—अनुमाने सिध्यन्, **सः कर्ता**—मह्याद्युपादानोपकरणसंप्रदानप्रयोजनाभिज्ञः समर्थः कर्ता तु, **अण्वदृष्टप्रभृतिजनकदृक्**—उपादानस्य परमाण्वादेः, उपकरणस्य तत्तज्जीवपुण्यापुण्यादेश्च कारणकलापस्य साक्षात्कर्ता, (तथा) **सर्वशक्तिश्च**—अचिन्त्यविविधविचित्रजगन्निर्माणानुगुण-

---

1 युक्ताः, युक्तो—सा. प्र. 2 स्युरिति—सा. प्र. 3 कृदिव—सा. प्र.

सर्वविश्वशक्तिमांश्च भवति । **मैवम्**—एवंरीत्या नैयायिकवर्णनमनुचितम् ; **इयम्**—ईदृशी चिन्ता, **श्रोत्राद्यैः**—श्रवणादिभिः गन्धाद्यग्राहकैः इन्द्रियैः, **सौरभादिग्रहणरुचिः**—गन्धादीनां विषयीकरणाभिलाषसदृशी, (कुतः ?) **तादृशव्याप्त्यभावात्**—(कार्यत्वे हेतुत्वेनाऽभिमते) सर्वज्ञकर्तृकत्वाविनाभावरूपव्याप्तेः असिद्धेः, **इह**—दृष्टान्तेऽपि, **घटकृत्**—घटनिर्माता कुलालादिः, **सर्वं हेतुम्**—सर्वकार्यजनकं कारकसामान्यम्, **न पश्येत्**—न हि पश्यति ; **तावता**—सर्वकारकादर्शनमात्रेण, **अस्य**—कुलालस्य, **अकर्तृता न च**—घटकर्तृत्वाभावः नैव वक्तुं शक्यः इति ॥ ४२ ॥

[ कार्यत्वहेतुकव्यतिरेक्यनुमानदूषणम् ]

कार्यत्वात् स्याद्विवादास्पदमिदमखिलं सर्ववित्कर्तृपूर्वं
यन्नैवं तद्धि नैवं पुरुषवदिति नाऽनन्यथासिद्ध्यभावात् ।
हेतावेतादृशात्मन्यविदुरभिदुरं [1]व्याप्त्य[1]सिद्ध्यादि दौःस्थ्यं
तद्भङ्गे लक्षणानामगणि गमनिका तत्त्वमुक्ताकलापे ॥ ४३ ॥

**विवादास्पदम्**—सर्वज्ञकर्तृकमिति, नेति च विमतिविषयीभूतम्, **इदमखिलम्**—दृश्यमानमब्धादिघटितं कार्यजातम्, **सर्ववित्कर्तृपूर्वं स्यात्**—सर्वज्ञकर्तृकमेव भवेत् ; **कार्यत्वात्**—उत्पत्तिमत्त्वरूपात्, कृतिसाध्यत्वरूपाद्वा लिङ्गात् । **यत्**—यादृशं वस्तु, **एवं न**—सर्वज्ञकर्तृकं न भवति, **तत्**—तादृशं वस्तु, **एवं न हि**—उक्तलक्षणकार्यत्ववत् न भवति खलु, **पुरुषवत्**—चेतनो हि सर्वज्ञकर्तृकोऽपि न, उत्पत्तिमानपि न ; तद्वत्, **इति न**—एवंरूपः नैयायिकाशयः न समीचीनः, (कुतः ?) **अनन्यथासिद्ध्यभावात्**—'कार्यत्वमस्तु, सर्वज्ञकर्तृकत्वं मास्तु' इत्येवंरूपायाः अन्यथासिद्धेः—अप्रयोजकत्वशङ्कायाः सत्त्वात् । **एतादृशात्मनि हेतौ**—केवलव्यतिरेक्यात्मके हेतौ, **व्याप्यसिद्ध्यादिदौःस्थ्यम्**—व्याप्यत्वासिद्ध्यादिरूपदोषदार्ढ्यम्, **अभिदुरम्**—अपरिहार्यमिति, **अविदुः**—(विवेचकाः) निश्चितवन्तः । **तद्भङ्गे**—केवलव्यतिरेक्यनुमाननिरासेऽपि, **लक्षणानाम्**—लक्षणतयाऽभिमतानां तत्तदसाधारणधर्माणाम्, **गमनिका**—सप्रयोजनत्वनिरूपणविधा, **तत्त्वमुक्ताकलापे**—एतन्नामके स्वीये प्रकरणग्रन्थे सन्त्यक्तावीतहेतोः (त. मु. 4–54) इत्यत्र **अगणि**—स्फुटं निरूपिता ॥ ४३ ॥

---

1 व्याप्ति—सा प्र.

[परात्मानुमानस्य, परमात्मानुमानस्य च वैषम्यम्]

यद्यप्यात्मान्तरादेरनुमितिरनघा लिङ्गभेदैस्तथाऽपि

प्रत्यक्षव्याप्तिशैली न खलु शिथिलिता कुत्रचित् पक्षभेदे ।

आम्नाये त्वद्भुतोक्तिर्न भवति वितथा तादृशाप्तोक्तिनीत्या[1]

बाधाभावादिसाम्यात् विहतिमति भवेल्लोकवद्गौणतादि ॥ ४४ ॥

**आत्मान्तरादेः**—देहान्तराधिष्ठातणामात्मनाम् तदीयज्ञानेच्छादीनां च, **अनुमितिः**—अनुमित्यात्मिका प्रमा, **लिङ्गभेदैः**—सप्राणत्वादिभिः हेतुभिः, **यद्यप्यनघा**—निर्दोषैव सिध्यति । **तथाऽपि**—तथा सत्यपि, **पक्षभेदे कुत्रचित्**—परात्मानुमानस्थलीये कस्मिन्नपि पक्षविशेषे, **प्रत्यक्षव्याप्तिशैली**—प्रत्यक्षसिद्धव्याप्तिमर्यादा, **न खलु शिथिलिता**—न भग्ना खलु । (ईश्वरानुमाने तु—नित्यज्ञानादिमतः प्रत्यक्षतोऽसिद्धस्य अनुमानात्, वैषम्यम् ।) **आम्नाये तु**—वेदे तु, **अद्भुतोक्तिः**—अत्यन्तादृष्टविस्मयनीयार्थोक्तिः, (अर्थवादबोध्या), **तादृशाप्तोक्तिनीत्या**—अदृष्टपूर्वदेशान्तरागताप्तवाक्यसाम्येन, **वितथा न भवति**—अप्रमाणभूता न भवति । (कुतः ?) **बाधाभावादिसाम्यात्**—उभयत्राऽपि अबाधितार्थकत्वस्य समानत्वात् । **विहतिमति**—प्रमाणान्तरविरुद्धे अर्थविशेषे 'आदित्यो यूपः' इत्यादौ, **लोकवत्**—लोकदृष्ट इव, **गौणतादि**—मुख्यार्थबाधेन औपचारिकार्थकत्वम्, **भवेत्**—स्वीकार्यं भवेत् ॥ ४४ ॥

[ईश्वरानुमानस्य पुराणसंमतत्वनिरासः]

नन्वाम्नायप्रधानाः क्वचिदनुकथयन्त्यस्मदादेरशक्यैः

कार्यैः कर्ताऽनुमेयः पर इति तदभि[2]प्रैति[2] जन्मादिवाक्यम् ।

तस्मा[3]दीशा[3]नुमानत्यजनमनुचितं वैदिकस्येति चेन्न

काऽप्यौचित्योपदेशाद्यत इति च सदाद्युक्तिसिद्धानुवादात् ॥ ४५ ॥

**आम्नायप्रधानाः**—वेदैकशरणाः व्यास-पराशरादयोऽपि, **अस्मदादेरशक्यैः**—अल्पज्ञाल्पशक्तजीवसामान्यस्य दुष्करैः. **कार्यैः**—मही-ग्रह-मण्डलादिरूपैः जन्यवस्तुभिः ज्ञापकभूतैः, **कर्ता**—तन्निर्माणसमर्थः, **परः**—परमात्मा, **अनुमेय इति**—ऊह्य इति, **क्वचित्**—विष्णुपुराणादौ, 'मेघोदयः सागरसन्निवृत्तिरिन्दोर्विभागः स्फुरितानि वायोः । विद्युद्विभङ्गो गतिरुष्णरश्मेर्विचित्राः

1 रीत्या—सा. प्र. 2 प्रैतु—सा. प्र. 3 दीशेऽ—सा प्र. ।

प्रभवन्ति मायाः ॥' (उल्लेखः गीताभाष्ये-9-6) इति अनुकथयन्ति—तार्किकमतमनुसृत्यैव ज्ञापयन्ति, जन्मादिवाक्यम्—'यतो वा इमानी'त्यादिवाक्यम् तत् अभिप्रैति—अनुमानमेव तात्पर्यविषयीकरोति । तस्मात्—श्रुति-तदुपबृंहणादिषु ईश्वरानुमानस्य स्फुटत्वात्, ईशानुमानत्यजनम्—ईश्वरानुमानापरिग्रहः, वैदिकस्य—वेदप्रामाण्यवादिनः, अनुचितम्—अयुक्तम् ; इति चेत् न—एवं चिन्तनं न सम्यक्, क्वाऽपि— पौराणिकभागे, औचित्योपदेशात्—परमात्मनः अनुमेयत्वमपि संभवतीत्यंशस्य प्रतिपादनात् । यत इति च—'यतो वा इमानी'ति वाक्यगतम् 'यतः'पदमपि, सदाद्युक्तिसिद्धानुवादात्—'सदेव सौम्येदम्' इति सद्विद्यादिगतवाक्यसिद्धार्थस्य अनुवादरूपत्वात् युक्तं भवति, (न तु अनुमानबोधकत्वेन) ॥ ४५ ॥

---

## ॥ अधिकरणार्थसङ्ग्रहः (शा. अधि.) ॥

तृतीये शास्त्रयोनित्वाधिकरणे—

यद्यपि ब्रह्म लक्षणतः प्रतिपत्तुं शक्यम् ; तथाऽपि—कारणभूतस्य ब्रह्मणः अनुमानवेद्यत्वेन, प्रमाणान्तरागोचरस्यैव शास्त्रवेद्यत्वेन, ब्रह्म न वेदान्तवेद्यम्—इत्याशङ्क्य,

सामान्यतोदृष्टानुमानस्य जीवविलक्षणविषयत्वाभावेन, ब्रह्मणः प्रमाणान्तरागोचरत्वेन, ब्रह्म वेदान्तवेद्यम्—इत्युक्तम् ॥



## ॥ नयसंगतिमालिका (शा. अधि.) ॥

ईश्वरस्याऽनुमानेन सिद्धस्याऽप्रास्यसम्भवात् ।
प्रामाण्यस्य समाक्षेपः शास्त्रयोनिनये धुतः ॥ २७ ॥

इति शास्त्रयोनित्वाधिकरणम् ॥ ३ ॥

---

## ॥ अथ समन्वयाधिकरणम् ॥ १-१-४ ॥

न्यायकलापसङ्ग्रहः (स. अधि) (श्लो. १०, ११) ॥

[ शारीरकस्य ब्रह्मणि अप्रामाण्यशङ्का-परिहारौ ]

प्रयोजनं ब्रह्मणि नैव लब्धं सिद्धे प्रवृत्तिस्त्वथवा निवृत्तिः ।

इत्यप्रमात्वं हि विशङ्क्य नुन्नं स्वतःफलत्वेन परस्य पुंसः ॥ १० ॥

सिद्धे—कार्यत्वसम्बन्धानर्हे परे ब्रह्मणि, प्रवृत्तिः अथवा निवृत्तिः—प्रवृत्तिनिवृत्त्यन्यतरात्मकम्, प्रयोजनम्—ज्ञानफलम्, नैव लब्धमिति—नैव सिद्धमिति हेतोः, अप्रमात्वम्—शास्त्रस्य ब्रह्मविषयकप्रमित्यजनकत्वम्, आशङ्क्य—उद्भाव्य, परस्य पुंसः—परमपुरुषस्य, स्वतःफलत्वेन—किंचिदपि अद्वारीकृत्य साक्षादेव पुरुषार्थत्वेन हेतुना, नुन्नम्—तदाशङ्कनं दूरीकृतम् ॥ १० ॥

[ अधिकरणचतुष्टयप्रयोजनम् ]

व्युत्पत्त्यभावात् प्रतिपत्तिदौःस्थ्यादन्येन सिद्धेरफलत्वतश्च ।

अमात्वमाशङ्क्य निराचकार न्यायैश्चतुर्भिः प्रतिपाद्य तत्तत् ॥ ११ ॥

1) व्युत्पत्त्यभावात्—सिद्धरूपे वस्तुनि शब्दशक्तिग्रहानुदयात्, 2) प्रतिपत्तिदौःस्थ्यात्—लक्षणासिद्धिकृतात् लक्ष्यस्य वस्तुनो दुरवगमत्वात्, 3) अन्येन सिद्धेः—शास्त्रेतरेण अनुमानादिना ब्रह्मणो ज्ञानलाभात्, 4) अफलत्वतश्च—ब्रह्मणः परिनिष्पन्नत्वेन फलरूपत्वाभावाच्च, अमात्वम्—शास्त्रस्य ब्रह्मणि अज्ञातार्थज्ञापकत्वाभावम्, (तस्मादेव शारीरकानारम्भणीयतां च) आशङ्क्य—आक्षिप्य, चतुर्भिः न्यायैः—आद्यैः चतुरधिकरणैः, तत्तत्—सिद्धेऽप्यर्थे व्युत्पत्तिलाभम्, लक्षणतः ब्रह्मप्रतिपत्तिसिद्धिम्, ब्रह्मणः शास्त्रेतरस्मादप्राप्तताम्, ब्रह्मणः परमपुरुषार्थतया स्वतःप्रयोजनरूपतां चेति चतुष्टयम्, प्रतिपाद्य—स्पष्टीकृत्य, निराचकार—शास्त्रस्य अनारम्भणीयतां परिहृतवान् बादरायणः, इति ॥ ११ ॥



## ॥ तत्त्वसारः (स. अधि) ॥

[ अर्थवादानामुपनिषद्रूपाणां स्वतःप्रमाणता ]

धिक् कौमारिलदर्शनव्यसनिनः प्राभाकरप्रक्रिया-

विक्रान्तानपि हन्त ! नाथविधुरं विश्वं जगज्जल्पतः ।

दूरे कारणदोष-बाधकधियोर्नाथे पुमर्थे स्वतः

प्रामाण्यं न कथं भजन्ति विधिवन्मन्त्रार्थवादोक्तयः ॥ १५ ॥

**विश्वं जगत्**—निखिलं कार्यजातम् , **नाथविधुरम्**—निरीश्वरमिति, **हन्त**—अविसंवादेन, **जल्पतः**—अविवेकेन निर्लज्जं कथयतः, **कौमारिलदर्शनव्यसनिनः**—भाट्टमीमांसकप्रक्रियायामासक्तान् , (तथा) **प्राभाकरप्रक्रियाविक्रान्तानपि**—प्राभाकरमीमांसकप्रक्रियायां निपुणंमन्यानपि प्रति, **धिक्**— धिक्कारं प्रकाशयामः । (ते शोच्याः) **कारणदोषबाधकधियोः दूरे**—दोषाधीनज्ञानस्य, बाधकज्ञानस्य च अविषये, **स्वतः पुमर्थे**—चेतनानां स्वयंप्रयोजनात्मके किञ्चित् अद्वारीकृत्य परमपुरुषार्थस्वरूपे, **नाथे**—अपेक्षितार्थप्रदे सर्वलोकशरण्ये स्वामिनि विषये, **मन्त्रार्थवादोक्तयः**—मन्त्ररूपाः अर्थवादरूपाश्च औपनिषदगिरः, **विधिवत्**—विधिवाक्यानीव, **स्वतः प्रामाण्यम्**—स्वातन्त्र्येण अबाधितार्थप्रतिपत्तिजनकताम्, **कथं न भजन्ति**—केन वा हेतुना न प्राप्नुवन्ति ? सर्वथा प्राप्नुवन्त्येव ॥ १५ ॥



## अधिकरणसारावलिः (स. अधि) (श्लो. ४६-५३) ॥

[ समन्वयाधिकरणसारः ]

कर्तव्ये ह्यर्थ उक्ते निशमयितृफलं सिद्धरूपे तु न स्यात्

प्रीत्या साफल्य[1]क्लृप्तौ[1] वितथमपि वचः किं न दृष्टं तदर्थम् ।

विद्यार्थत्वेऽन्यदृष्टेर्विषयवदनृतं तत्परीक्ष्यं न भावी-

त्याक्षेपेऽनन्य[2]शेषं[2] निरवधिकसुखे शास्त्रतात्पर्यमाह ॥ ४६ ॥

---

1 सिद्धौ—सा. प्र. 2 शेषे—सा. प्र.

**कर्तव्ये अर्थे**—साध्यरूपे वस्तुनि, **उक्ते हि**—प्रतिपादिते खलु, **निशमयितृफलं स्यात्**—वाक्यश्रोतुः श्रवणप्रयोजनं सिध्येत् । **सिद्धरूपे उक्ते तु**—'अष्टौ काकस्य दन्ताः' इत्यादिवत् प्रवृत्तिनिवृत्त्यनुपयोगिनि निष्पन्नेऽर्थे प्रतिपादिते परम्, **न स्यात्**—प्रयोजनं न सिध्येत् । **प्रीत्या**—'तव गृहे निधिरस्ति' इत्यादिवाक्येष्विव सुखजननमात्रेण, **साफल्यक्लृप्तौ**—प्रयोजनवत्तायाः कल्पने, **तदर्थम्**—प्रीतिमात्रप्रयोजनकम्, **वितथमपि वचः**—अयथार्थमपि वाक्यम्, **किं न दृष्टम्**—लोके अनाप्तैः प्रयुज्यमानं किं नाऽनुभूतम्? (तत् नैव प्रमाणतामर्हति खलु) । **विद्यार्थत्वे**—ब्रह्मपरवाक्यानां विद्याविधिशेषत्वे (उपकारकत्वे), **अन्यदृष्टेर्विषयवत्**—'मनो ब्रह्म' इति ब्रह्मत्वादिदृष्टौ विषयीभूते मनसि ब्रह्मत्वादिरिव, **अनृतम्**—वेदान्तवेद्यमपि वस्तु अवास्तवमेवेति, **तत्**—अनृतं ब्रह्म, **परीक्ष्यं न भावीति**—जिज्ञास्यं न भवितुमर्हतीति । (ततश्च शारीरकमनारम्भणीयम् इति ।) **आक्षेपे**—आशङ्कने प्राप्ते सति, **निरवधिकसुखे**—अपरिमितानन्दात्मके ब्रह्मवस्तुनि, **अनन्यशेषम्**—स्वेतरवाक्यशेषतां विनैव, **शास्त्रतात्पर्यमाह**—वेदान्तशास्त्रपरमप्रतिपाद्यपर्यवसानं सूत्रकारः प्रत्यपादयत् अनेनाऽधिकरणेन ॥ ४६ ॥

[अर्थवादानाम् अन्यशेषत्वे तदभावेऽपि यथाभूतार्थवादितयैव प्ररोचकत्वम्]

तात्पर्यं ब्रह्मतत्त्वेऽप्य[1]विहति[1] विधिनाप्येकवाक्यत्वपक्षे<br>
भेदेऽपि स्वादसिद्धेर्न भवति बलिभुग्दन्तसंख्योक्तिसाम्यम् ।<br>
स्वादार्थत्वं "मृषात्व"[2]क्षममिति न मृषेत्यूहने प्रीत्ययोगात्<br>
बालोपच्छन्दनादिष्वपि विषयतथाभावबुद्ध्यैव हर्षः ॥ ४७ ॥

**विधिना**—विधायकवाक्येन सह, **एकवाक्यत्वपक्षेऽपि**—अर्थवादवाक्यानां मिलित्वा वाक्यैकवाक्यतया अर्थबोधकत्वमिति पक्षेऽपि, **ब्रह्मतत्त्वेऽपि**—परब्रह्मरूपे तत्त्वेऽपि, **तात्पर्यम्**—प्रतिपाद्यपर्यवसानम्, **अविहति**—निर्बाधं वर्तते । **भेदेऽपि**—भिन्नवाक्यत्वेऽपि, **स्वादसिद्धेः**—प्रीतिरूपफलावाप्तेः सत्त्वात्, **बलिभुग्दन्तसंख्योक्तिसाम्यम्**—काकदन्तगणनासादृश्यम्, **न भवति**—नैव आपद्यते । **स्वादार्थत्वम्**—प्रीतिप्रयोजनकत्वम्, **मृषात्वक्षममिति न**—मिथ्याभूतस्याप्यर्थस्य युज्यते. न सत्यत्वेएव इत्यभिप्रायस्तु न समीचीनः; **मृषेत्यूहने**—मिथ्यात्वचिन्तने, **प्रीत्ययोगात्**—सुखानुत्पत्तेः, **बालोपच्छन्दनादिष्वपि**—शिशूनां मृदुवचनैः स्वायत्तीकरणस्थलेऽपि, **विषयतथाभावबुद्ध्यैव**—उक्तार्थस्य वास्तविकताज्ञानेनैव, **हर्षः**—प्रीतिर्जायते इति ॥ ४७ ॥

---

1 विहत—सा. प्र. 2 मृषार्थ—सा. प्र.

[ वेदान्तानां निरतिशयानन्दरूपपरब्रह्मतात्पर्यम् ]

यत् प्रीत्यर्थं वचस्तन्निखिलमनृतमित्यर्भकप्रायवाक्यं
सत्योक्त्याऽऽनन्ददृष्टेर्न च विहतिरिहाऽध्यक्षतः शास्त्रतो वा ।
तेनाऽनन्यार्थसिद्धोक्त्यनृतविषयताशङ्कनस्तम्भनेन
त्रय्यन्ताः सत्यनित्याद्भुतपरमसुखब्रह्मनिष्ठाः प्रमाणम् ।। ४८ ।।

**यत् वचः प्रीत्यर्थम्**—यादृशं वाक्यं प्रीतिप्रयोजनकम्, **तत् निखिलमनृतम्**—असत्यं मिथ्यार्थप्रतिपादकम्, इति **अर्भकप्रायवाक्यम्**—एतत् अपरीक्षकाणामेव वचः। (कुतः ?) **सत्योक्त्या**—यथाभूतार्थवचनेन, **आनन्ददृष्टेः**—प्रीतेः आनुभविकत्वात्। **इह**—अस्मिन् विषये, **अध्यक्षतः, शास्त्रतो वा**—प्रत्यक्षेण, आगमेन वा, **न च विहतिः**—नैव बाधप्रतिपत्तिरस्ति । **तेन अनन्यार्थसिद्धोक्त्यनृतविषयताशङ्कनस्तम्भनेन**—वाक्यान्तरशेषत्वरहितसिद्धार्थपरवाक्यानाम् असदर्थपरत्वाक्षेपनिरासेन हेतुना, **त्रय्यन्ताः**—वेदान्तरूपाः उपनिषदः, **सत्यनित्याद्भुतपरमसुखब्रह्मनिष्ठाः**—निरुपाधिकसत्तायोगि-कालापरिच्छिन्न-विस्मयनीयतमपरमानन्दात्मके परे ब्रह्मणि पर्यवसितार्थकाः सन्तः, **प्रमाणम्**—अबाधितार्थ-प्रतिपत्तिजनकी भवन्ति ।। ४८ ।।

[ अद्वैतिनां ब्रह्मसिद्धिविषये वैविध्यं, तत्र दोषश्च ]

ब्रह्मैके निष्प्रपञ्चीकरणविधिपदं ध्यानविध्यर्थमन्ये
निर्धर्माद्वैतवाक्योपचरितमपरे सिध्यतीति ब्रुवन्ति ।
तेषामेषां स्वपक्षस्ववचनविहतिव्याकुलानेकजल्पः
कल्पोऽयं बाह्यकल्पः कृतमतिपरिषत्पीठमर्दैरमर्दि ।। ४९ ।।

**एके**—जरदद्वैतिनः, **ब्रह्म**—औपनिषदं परं ब्रह्म, **निष्प्रपञ्चीकरणविधिपदम्**—'न दृष्टेर्द्रष्टारं पश्येः (बृ उ. 5-4-2) इत्येतत् श्रुतिपर्यवसानरूपस्य 'ब्रह्म निष्प्रपञ्चं कुर्यात्' इति विधेः विषयीभूतं सत्, **सिध्यति इति ब्रुवन्ति**—बुद्ध्यारूढं भवति इति कथयन्ति। **अन्ये**—नव्याद्वैतिनः, **ध्यानविध्यर्थम्**—ब्रह्म, 'ओमित्यात्मानं ध्यायथ (मुण्ड-उ. 2-2-6) इत्यादिध्यानविधिविषयीभूतं सत्, (ध्यानविधेः अर्थः प्रयोजनं ध्यानविध्यर्थः, सः अस्य अस्ति इति अर्श आद्यच्) सिध्यतीति ब्रुवन्ति। **अपरे**—शाङ्कराद्वैतिनः, **निर्धर्माद्वैतवाक्योपचरितम्**—ब्रह्म, निर्विशेषाद्वैतप्रतिपादकेन 'तत्त्वमसि' इत्यादिवाक्येन लक्षणया बोधितं सत् सिध्यतीति

ब्रुवन्ति । (शाब्दापरोक्षज्ञानविषयीभूतं सिध्यतीति)। **तेषामेषाम्**--अद्वैतिप्रकारभेद-मेवाश्रितानामेतेषां त्रयाणामपि, **स्वपक्षस्ववचनविहतिव्याकुलानेकजल्पः**—अपसिद्धान्तेन, स्वप्रतिज्ञाविरोधेन च व्याहतः विविधः निरर्थकः भ्रामकवाक्यप्रपञ्चात्मकः, अयं कल्पः—अयं पक्षभेदः सर्वोऽपि, **बाह्यकल्पः**—वेदबाह्यबौद्धादिसदृशः इति हेतोः, **कृतमति-परिषत्पीठमर्दैः**—सुशिक्षितमतीनां गोष्ठीषु प्रविष्टैः वेदान्ततत्त्वविद्भिः **अमर्दि**—निष्प्ररोहः कृतः ॥ ४९ ॥

[पूर्वोत्तरकाण्डविरोध-तत्परिहाराभ्याम् ऐकशास्त्र्यदृढीकारः]

अन्यार्थो ह्यर्थवादः स्तुतिमुखमुखतः स्थापितः प्रागिदानीं
स्वातन्त्र्येण प्रमाणीक्रियत इति ततः काण्डयोः स्याद्विरोधः ।
न स्यात् सामान्यतो हि प्रथममभिदधे मानतास्थापनार्थं
केषांचित् सार्थतोक्ता स्वत इह सुभगे बोधमात्रात् पुमर्थे ॥ ५० ॥

**अर्थवादः**—अर्थवादसंज्ञको वेदभागः, **स्तुतिमुखमुखतः**—प्राशस्त्यनिन्दाबोधनद्वारा, **अन्यार्थः**—विधिवाक्यशेषभूतः (यथा—'वायुर्वै क्षेपिष्ठा देवता, वायुमेव स्वेनभागधेयेनोपधावति (तै. सं. 2-1-1) इत्यादिरर्थवादः, 'वायव्यं श्वेतमालभेत भूतिकामः' इत्यादिविधिवाक्यस्य शेषभूतः) इति, **प्राक्**—पूर्वमीमांसायामर्थवादाधिकरणे, **स्थापितः**—स्फुटं प्रतिपादितः, ('आम्नायस्य क्रियार्थत्वात् (पू.मी.सू. 1-2-1) इत्यत्र) । **इदानीम्**—शारीरकीयसमन्वयाधि-करणे, **अर्थवादः**—उपनिषदात्मको भागः, **स्वातन्त्र्येण**—विधिवाक्यशेषतां विनैव-**प्रमाणी-क्रियत इति**—प्रमाभूतार्थबोधजनक इति व्यवस्थाप्यते, **ततः**—तस्माद्धेतोः, **काण्डयोः**—कर्म ब्रह्मकाण्डयोः परस्परम्, **विरोधः स्यात्**—विरुद्धार्थप्रतिपादकत्वनिबन्धनः ऐकशास्त्र्यप्रतिबन्धः भवेत् ? **न स्यात्**—ऐकशास्त्र्यभङ्गो नैव भवेत्, **हि**—यतः, **प्रथमम्**—पूर्वकाण्डप्रक्रियायाम्, **सामान्यतः**--अर्थवादसामान्ये, **मानतास्थापनार्थम्**—प्रामाण्यदृढीकरणाय, **अभिदधे**—विधिशेषतया बोधकत्वमुक्तम् । **इह**—शारीरके तु **केषांचित्**—उपनिषद्रूपाणाम् अर्थवादविशेषणानाम् ('सहस्रशीर्षं देवम्' (तै. ना. उ. 11-1) इत्यादीनाम्) **स्वतः सुभगे**—निरुपाधिकानन्दस्वरूपे, **बोधमात्रात्**—केवलं ज्ञातत्वेनैव, **स्वतः पुमर्थे**--पुरुषार्थ-स्वरूपे ब्रह्मणि, **स्वतः सार्थतोक्ता**—स्वयंप्रयोजनात्मकता प्रतिपादिता । (सामान्यविशेषन्यायः विरोधाभासशामकः इति) ॥ ५० ॥

[ सोदाहरणं सामान्यविशेषभावोपपादनेन विरोधपरिहारः ]

त्रेधा सर्वत्र वेदे नियतविभजने चोदनाद्यंशभेदैः

चत्वारोऽप्यर्थवादा मुनिभिरभिहिता ब्राह्मणांशस्य शेषाः ।

अत्राऽतच्छेषतोक्तौ स्मृतिहतिरिति चेत् 'विद्धि'[1] दत्तोत्तरं तत्

सामान्योक्तिर्हि सेयं तत उपरि यथा मन्त्रविध्यन्यतोक्तिः ॥ ५१ ॥

**चोदनाद्यंशभेदैः**—विधि-मन्त्र-नामधेयेत्येवंरूपैः भागविशेषैः; **त्रेधा नियतविभजने**—प्रकारत्रयेण व्यवस्थितविभागे, **सर्वत्र वेदे**—समग्रे स्वाध्याये, **चत्वारोऽपि अर्थवादाः**—निन्दा-प्रशंसा-*परकृति-*पुराकल्पात्मकचातुर्विध्यवन्तः अर्थवादभागा अपि, **ब्राह्मणांशस्य शेषाः**—मन्त्रब्राह्मणान्यतरात्मकब्राह्मणभागस्य शेषभूताः—तदपेक्षितार्थसमर्पकाः इति, **मुनिभिरभिहिताः**—ऋषिभिरुक्ताः । **अत्र**—शारीरके, **अतच्छेषतोक्तौ**—ब्राह्मणशेषतां विना स्वातन्त्र्येणाऽर्थबोधकत्ववर्णने, **स्मृतिहतिः**—आर्षवाग्विरोधः प्रसजति (इत्येवमाक्षेपे), **तत्**—आक्षेपवचनम्, **दत्तोत्तरं विद्धि**—प्रत्युक्तं जानीहि। **सेयम्**—पूर्वमुक्ता; अत्र स्मृता 'तच्छेषोऽर्थवादः' इति गीः, **सामान्योक्तिर्हि**—उत्सर्गरूपा वाक् ; न तु विशेषान्वयिनी, **तत उपरि**—तदनन्तरम्, **मन्त्रविध्यन्यतोक्तिः यथा**—मन्त्राणां विधीनां च मिथो भेदवचनमिव ('ततोऽन्ये मन्त्राः' इत्युत्सर्गः; 'मन्त्रो हि विधत्ते' इति विधायकत्ववचनम् अपवादः इति, तैरेव यथाङ्गीकृतम्, तथा ब्राह्मणशेषत्ववचनमुत्सर्गः; स्वातन्त्र्यवचनम् अपवाद इति) ॥ ५१ ॥

[ सोदाहरणमुपनिषदां स्वतःप्रामाण्यस्थापनम् ]

आम्नातैरैहिकार्थैरविगुणसफलैः शाकुनज्योतिषाद्यैः

पारत्रिक्या प्रवृत्त्याऽप्यतिनिपुणधियामागमाश्वाससिद्धौ ।

शब्दे तस्माच्च बोधे सति परविषये दोषबाधव्यपेते

मानं तत्र स्वतोऽसौ न कथमितरथा नैगमाध्वापलापः ॥ ५२ ॥

---

1 तद्धि—सा. प्र.

* परकृतिर्नाम स्वदर्श्यमानाचारविरुद्धशाखान्तरीयाद्याचारप्रदर्शनम् ।

* पुराकल्पो नाम पूर्वकालिकानुष्ठानप्रदर्शनम्—सा. प्र.

**ऐहिकार्थैः आम्नातैः**—एतद्देहानुभाव्यफलप्रतिपादकतया श्रुतिप्रतिपन्नैः, **अविगुण-सफलैः**—कर्तृकर्मसाधनावैगुण्ये सति नियमेन फलप्रदैः, **शाकुनज्योतिषाद्यैः**—पक्षिणां गति-रुतादिभिः, तथा सूर्यादिग्रहाणां स्थानविशेषस्थिति-गत्यादिभिश्च, (एवम्) **अतिनिपुण-धियाम्**—अत्यन्तं कुशलमतीनाम्, न तु अन्धानुकारिणाम्, **पारत्रिक्या प्रवृत्त्याऽपि**—स्वर्गापवर्गार्थिया तत्तत्साधनानुष्ठानरूपचेष्टयाऽपि, **आगमाश्वाससिद्धौ**—वेदप्रामाण्यनिश्चयदार्ढ्ये लब्धे, **परविषये शब्दे**—परब्रह्मावबोधिनि शब्दे, तस्मात् **बोधे च**—तादृशात् शब्दात् परब्रह्मविषयके ज्ञाने च, **दोषबाधव्यपेते**—कारणदोष-बाधकप्रत्ययादिरहिते सम्भवति सति, **असौ**—उपनिषदात्मकोऽर्थवादः, तत्र **स्वतो मानम्**—ब्रह्म-तद्विभूत्यादिविषये अन्यमुखनिरीक्षा-राहित्येनैव प्रमाजनको भवति। **अन्यथा**—तदभावे, **नैगमाध्वापलापः कथं न**—वेदमार्गा-सत्यतैव कुतो न प्रतिपादिता भवेत्? ॥ ५२ ॥

[ चतुस्सूत्र्याः शास्त्रारम्भार्थता ]

शास्त्रारम्भोपपत्त्यै चतुरधिकरणी [1]पेटिकेयं[1] प्रवृत्ता
लक्ष्यस्योक्तं विशेषद्वयमिह घटते वक्ष्यमाणोपजीवि।
सद्ब्रह्माद्युक्तिवेद्यः पर इति हि वदेत् कारणत्वाधिकारे
वक्ष्यत्यस्य द्विलिङ्गाद्यधिकृतिषु पुनस्तादृशानन्द[2]तादि[2] ॥ ५३ ॥

**चतुरधिकरणी**—अधिकरणचतुष्कात्मिका, **इयं पेटिका**—निरूपिता उपोद्घातपेटिका, **शास्त्रारम्भोपपत्त्यै**—शारीरकशास्त्रारम्भस्य युक्ततासमर्थनाय, **प्रवृत्ता**—उपक्रान्ता, सम्पन्ना च। **लक्ष्यस्य**—जन्मादिकारणत्वेन लक्षणीयस्य ब्रह्मणः, **उक्तम्**—द्वितीय-चतुर्थाधिकरणयोः प्रतिपादितम्, **विशेषद्वयम्**—जगत्कारणत्व-स्वतःपुरुषार्थत्मकत्वोभयम्, **वक्ष्यमाणोपजीवि**—कारणत्वाधिकरणे, उभयलिङ्गाधिकरणे च प्रतिपादयिष्यमाणमर्थमवलम्ब्य प्रवृत्तं सत्, **इह घटते**—उपोद्घातपेटिकायां युक्तं भवेत्। **कारणत्वाधिकारे**—'कारणत्वेन चाकाशादिषु' (ब्र. सू. 1-4-16) इति सूत्रारब्धे कारणत्वाधिकरणे, **परः**—परमात्मा, **सद्ब्रह्माद्युक्ति-वेद्यः इति वदेत्**—'सत्-ब्रह्म-आत्मा' इत्यादिभिः शब्दैः श्रुतिषु प्रतिपाद्यः इति वक्ष्यति। **अस्य**—परस्य ब्रह्मणः, **द्विलिङ्गाद्यधिकृतिषु तु**—उभयलिङ्गाधिकरणादिषु तु, 'न स्थान-

1. पेटिकैवं—सा. प्र.   2. तादीन्—सा. प्र.

तोऽपि परस्योभयलिङ्गम् सर्वत्र हि ' (ब्र. सू. 3-2-11) इत्यत्र, तादृशानन्दतादि–निरवधिकानन्दत्वादिकम् , वक्ष्यति—प्रतिपादयिष्यति ॥ ५३ ॥

—o—

## ॥ अधिकरणार्थसङ्ग्रहः ॥ (स· अधि·)

चतुर्थे समन्वयाधिकरणे—

यद्यपि प्रमाणान्तरागोचरं ब्रह्म ; तथाऽपि, ब्रह्मणः प्रवृत्तिनिवृत्तिरूपत्वाभावेन, प्रयोजनरूपत्वाभावात्, शास्त्रप्रमाणकत्वं न सम्भवति–इत्याशङ्क्य,

सिद्धरूपस्याऽपि अनवधिकातिशयानन्दरूपतया निरतिशयपुरुषार्थत्वात् ब्रह्मणः, शास्त्रप्रमाणकत्वं सम्भवति— इत्युक्तम् ।



## ॥ नयसङ्गतिमालिका ॥ (स. अधि· श्लो·२८-३०)

प्रामाण्य-फल-यत्नानां क्रमे व्यापकहानितः ।
समन्वयनयस्तुर्यः प्रामाण्याक्षेपमच्छिनत् ॥ २८ ॥

असम्भवो लक्षणस्य लक्ष्यासिद्धिनिबन्धनः ।
योऽयोगः तद्व्यवच्छेदः प्रथमे पाद उच्यते ॥ २९ ॥

अतिव्याप्तिर्योऽन्ययोगः तद्व्यवच्छेदलक्षणः ।
अर्थस्त्रिपाद्यामिति च विवेकस्स्यात् समासतः ॥ ३० ॥

॥ इति समन्वयाधिकरणम् ॥

— चतुस्सूत्री समाप्ता—



# अनुबन्धः—२

## ( प्रमाणकोषः )

[ श्रीभाष्ये चतुःसूत्र्यन्ते प्रथमसम्पुटे उदाहृतानां प्रमाणानां सविवरणः आकरनिर्देशयुतश्च अकाराद्यनुक्रमेण सङ्ग्रहः १—४३२]

॥ श्रीः ॥

श्रीमते रामानुजाय नमः । श्रियै नमः । श्रीधराय नमः ।

# ॥ प्रमाणकोषः ॥

[ चतुःसूत्र्यन्त श्रीभाष्योदाहृतानां प्रमाणानाम् आकरनिर्देशार्थानुवादाभ्यां सहितः अकाराद्यनुक्रमेण सङ्ग्रहः ]

| प्र. सं. | प्रमाणानि सविवरणानि | पृ. सं. |
|---|---|---|

1. 'अकृत्स्नो ह्येषः' *(बृ. उ. 3-4-7) — 34

(पू.)[1] यस्मात् एष आत्मा, अस्मात् प्राणनादिक्रियासमुदायान्तर्गतात् एकैकस्मात् समस्तो न भवति, अपूर्णो भवति, (तस्मात् आत्मेत्येवोपासीत) ॥

(सि) एकैकेन नाम-रूपादिना विशिष्टः एष जीवः यतः अपूर्णः, (अतः एकैकनामरूपादिविशिष्टं जीवात्मानं विहाय, सर्वनाम-रूपभाजं परमात्मानमेवोपासीत ॥

2. 'अजामेकां लोहित-शुक्ल-कृष्णां बह्वीं प्रजां जनयन्तीं सरूपाम् । अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः' ॥ — 237

(तै. ना. उ. 10-5, श्वे. उ. 4-5 )

तेजो-जल-पृथिवीरूपक्षणविकारगतैः लोहित-शुक्ल कृष्णाख्यैः रूपैः युक्तां, समानरूपविविधभूत-भौतिककार्यसन्ततिम्, उत्पत्तिरहितां काञ्चित् प्रकृतिं, जननरहित एव अविद्वान् कश्चित् चेतनः, अहम्बुद्ध्या सेवमानः अनुसृत्य तिष्ठति, भुङ्क्ते वा । अपरो विद्वान् चेतनस्तु इमां पूर्वोपभुक्तां प्रकृतिम्, लब्धवैराग्यः सन् परित्यजति ॥

---

* वि.सू. :—प्रमाणानां पुरतः निर्दिष्टवर्णसंख्यादिविषये स्पष्टीकरणम् उत्तरत्र सङ्केताक्षर सूचन्यां कृतम् ।

1. श्रीभाष्ये पूर्वपक्षप्रस्तावे उदाहृतानां प्रमाणानां पूर्वपक्षरीत्या सिद्धान्तरीत्या च अर्थविवरणं कृतम् । यानि केवलं सिद्धान्ते उदाहृतानि तेषां सिद्धान्तरीत्यैवार्थो वर्णितः ।

3. 'अत्राऽयं पुरुषः स्वयञ्ज्योतिर्भवति' (बृ. उ. 6-3-9) 90

स्वाप्नानुभवदशायामस्यां, जीवः लोके प्रकाशकतया प्रसिद्धानामादित्यादीनां प्रकाशमनपेक्ष्य स्वयंप्रकाश एव भासते ॥

4. 'अथ तस्य भयं भवति' (तै. उ. आन. 7-2) 136

निरन्तरध्यानपरस्य उपासकस्य, ध्यानविच्छेदानुपदमेव महद्भयं जायते ॥

5. 'अथ परा; यया तदक्षरमधिगम्यते। यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुश्श्रोत्रंतदपाणिपादं नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः' (मुण्ड.उ. 1-1-5,6) 25

(पू) अपरविद्याया उपदेशादनन्तरं परा विद्या उपदिश्यते। अनया अत्र वर्ण्यमानं क्षरणरहितं वस्तु प्राप्यते। बुद्धिस्थं च तदक्षरम्— प्रत्यक्षानुमानाद्यविषयभूतम्, स्वस्वरूपलम्भकमूलान्तररहितम्, स्थूलत्व-शुक्लत्वादिधर्मातिगम्, कर्म-ज्ञानेन्द्रियानाश्रयभूतम्, अविनाशि, देश-कालाद्यपरिच्छिन्नम्, सर्वेणाध्यस्यमानेन जगता अधिष्ठानतयाऽऽश्रितम्, स्थूलत्वादिहेतुभूतावयवसम्बन्धशून्यम्, अत एव व्ययविदूरं च यद्वस्तु अस्ति, सर्वभूतात्मकविवर्तोपादानं आत्मभूतं तद्ब्रह्म, विवेकिनः अपरोक्षीकुर्वन्ति ॥

(सि) (विशेषांशः) विवेकादिसाधनसप्तकजन्येन परोक्षज्ञानात्मकापरविद्यानन्तरभाविना परविद्यापदवाच्येन दर्शनसमानाकारतामापन्नेन परब्रह्मज्ञानेन, पूर्ववाक्ये प्राप्यतया निर्दिष्टम् अक्षरपदाभिधेयं परं ब्रह्म आधिक्येन गम्यते, अपरोक्षीक्रियते। सर्वगतम्—सर्वत्राऽन्तःप्रविश्यावस्थितम्, सुसूक्ष्मम्—अन्तःप्रवेशौपयिकसूक्ष्मत्ववत्, व्ययरहिततया च अक्षरं तद्ब्रह्म प्रज्ञाशालिनः सर्वभूतोपादानतया साक्षात्कुर्वन्ति ॥ (अन्यत्सर्वं समानम्)

6. 'अथ योऽन्यां देवतामुपास्ते, अन्योऽसावन्योऽहमस्मीति न स वेद' 33
(बृ.उ. 3-4-10)

(पू) अभेदेन 'अहं ब्रह्मास्मि' इति ब्रह्मोपासनं विहाय, आत्मनो व्यतिरिक्तां यां कांचिद्देवताम् स्तुत्यादिभिः गुणभावेनोपगम्य, यःआस्ते ; (तथा) 'उपास्यमानेयम् अनात्मभूता, मत्तोऽन्या, अहं च तस्याः पृथग्भूतः, तत्पूज दिप्ववधिकृतः परमस्मि, मया च ऋणिवत् प्रतिकर्तव्यम्' इत्येवंप्रत्ययःसन् उपास्ते, सः तत्वज्ञो न भवति ।।

(सि) यादृश उपासकः, धारकत्व-नियन्तृत्वादिभिः स्वस्यात्मभूतत्वेन स्वस्मादनन्यां परमात्मरूपां देवताम्, 'स्वात्मभूतादन्येति', स्वं च धार्यत्वदिना तच्छरीरभूतं, 'तच्छरीरभूतादन्य' इति च विचिन्त्य उपास्ते, सः अज्ञ एव ।।

7. 'अथ यो वेदेदं जिघ्राणीति स आत्मा' (छां.उ. 8-12-4) 90

यः 'घ्राणेन्द्रियेण जानामि' इति घ्रातव्यमर्थं स्वीयेन ज्ञानेन विषयीकरोति, गन्ध-तदाश्रयविषयज्ञानवान् स एव, जीवपद-वाच्यः आत्मा ।।

8. 'अनु म एतां भगवो देवतां शाधि! यां देवतामुपास्से' 17
(छां. उ. 4-2-2)

भो महाज्ञानसम्पन्न ! रैक्व ! त्वं यादृशदेवताविषयकमुपासनं करोपि, तादृशीं देवतामेव मह्यं विविच्य उपदिश ।।

9. I 'अनुविद्य विजानति' (छां. उ. 8–12–6) 15

II 'अनुविद्य' (छां.उ. 8–12–6) 16

सदाचार्यसकाशे श्रवणात् वाक्यार्थज्ञानं सम्पाद्य, ततः (मननं) निदिध्यासनं च कुर्यात् ।।

10. 'अनृतेन हि प्रत्यूढाः' (छां.उ. 8-12-6) 30, 167, 204

(पू) यतः सर्वे एव जीवाः आच्छादिकया अविद्यया बहिरपकृष्टाः ॥

(सि) यतः सर्वे एव जीवाः अविद्याशब्दितेन स्वीयेन कर्मणा प्रतीपं नीताः, स्वभावान्तरं प्रापिताः, आच्छादिताः इति यावत् ॥

11. I 'अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि' (छां.उ.6-3-2) 209,223

II 'अनेन—विश्य' (छां. उ. 6-3-2) 241

प्रमाणप्रतिपन्नचेतनशरीरकेण मया तेजो-जल-पृथिवीः अन्तरनुप्रविष्टाः कृत्वा, देवादिविविधविचित्रसृष्टिम्, विविध-विचित्राणि तत्तन्नामधेयानि च करवाणि ॥

12. 'अन्तवदेवाऽस्य तद्भवति' (बृ. उ. 5-8-0) 6, 10

(पू) ज्ञानेतरस्मिन् यज्ञादिकर्मणि प्रवृत्तस्याऽस्य, यज्ञादेः कर्मणः फलं क्षयिष्ण्वेव भवति ; न स्थास्नु ॥

(सि) विद्याज्ञानरहितं यजमानसम्बन्धि सर्वं कर्म, उपभोगक्षीयमाणफलमेव भवति ; न तु विद्येव शाश्वतफलम् ॥

13. 'अतः प्रविष्टः शास्ता जनानां सर्वात्मा' (तै. आर. 3-11-3) 157, 227

परब्रह्मभूतः परमात्मा, सर्वेषां भूतानामन्तरनुप्रविष्टः सन् आत्मभूतो नियन्ता । 239

14. 'अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात् कृताकृतात् । 323
अन्यत्र भूताद्भव्याच्च यत्तत्पश्यसि तद्वद' ॥ (कठ. उ. 2-14)

(पू) शास्त्रीयधर्मानुष्ठान-तत्फल-तत्कारकेभ्यः पृथग्भूतम्, (तथा) विहिताकरणरूपात् पापात्, परिदृश्यमानकार्य-कारणवर्गाच्च पृथग्भूतम्, भूत-भविष्यद्—वर्तमानात्मकत्रिकालापरिच्छेद्यम्, सर्वव्यवहारगोचरातीतं यद्वस्तु त्वं जानासि, तत् मह्यमुपदिश ॥

(सि) पुण्य-पापाद्यात्मकप्रसिद्धसाधनविलक्षणम् उपासनात्मकमुपायम्, काल-त्रयापरिच्छिन्नं ईश्वर-चेतनात्मकम् उपेयोपेतृस्वरूपम्, उपास्योपासकात्मकं, यत् त्वं 'इदमित्थम्' इति अवधृतवानसि, तत् मे उपदिश ॥

15. 'अन्यदेव तद्विदितादथो अविदितादधि' (केन.उ. 1–4) 327

(पू) मुमुक्षुभिर्ज्ञेयं ब्रह्म, विदिक्रियाकर्मभूताद्व्याकृतात्, तद्विपरीतात् अविद्यालक्षणात् अव्याकृतादपि अत्यन्तं विलक्षणमेव ॥

(सि) उपास्यं ब्रह्मतत्त्वं, सर्वात्मना ज्ञातात् सर्वात्मना अज्ञाताच्च विलक्षणमेव ॥

16. I 'अपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः' (छां.उ. 8–1–5) 225

II 'अपहतपाप्मा....ऽपिपासः' (छां.उ. 8–1–5) (अर्थः प्र. 48. द्रष्टव्यः) 244

17. 'अप्राणो ह्यमनाः शुभ्रः' (मुण्ड.उ. 2-1-2) 323

बाह्याभ्यन्तरेन्द्रियरहितः दोषासंस्पृष्टश्च परमात्मा ॥

18. 'अयमात्मा ब्रह्म' (बृ.उ. 6–4–5) 11,329, 340

(पू) स वा अयम्, य एवं संसरति आत्मा; यत् अशनायाद्यतीतं परं ब्रह्म ॥

(सि) देवादिविविधविचित्रशरीरपरिग्रहवान् अयं जीवः, अपहतपाप्मत्वादि-ब्राह्मरूपयुक्तः ॥

19. 'अविज्ञातं विजानताम्' (केन. उ. 2-3) 131

'ब्रह्म कृत्स्नशः ज्ञातम्' इति जानतां, ब्रह्म याथार्थ्येन अज्ञातमेव ।

20. 'अव्यक्तमक्षरे लीयते, अक्षरं तमसि लीयते' (सुबा. उ. 2) 205, 239

स्फुटगुणसाम्यलक्षणम् 'अव्यक्त' शब्दवाच्यं वस्तु, अस्फुटगुण-

साम्यावस्थे चेतनसमष्टिगर्भे स्वरूपे स्वीयावस्थाप्रहाणपूर्वकं तदवस्थापन्नं भवति। तदवस्थं च 'अक्षर' शब्दवाच्यम्, अक्षरावस्थाप्राप्त्यौन्मुख्यवति विभक्ततमश्शब्दवाच्ये अतिसूक्ष्मावस्थे प्रधाने लयं प्राप्नोति॥

21. 'अशरीरं शरीरेष्वनवस्थेष्ववस्थितम्।
महान्तं विभुमात्मानं मत्वा न धीरो शोचति'। (कठ. उ. 2-22) 323

(पू) स्वेन रूपेण आकाशकल्पम्, अनित्येषु देव-पितृ-मनुष्यादिशरीरेषु प्राप्ताभिमानम्, व्यपित्वात् महान्तं प्रत्यगात्मानम्, 'अयमहम्' इति जानन् धीमान् आत्मवित् न शोचति।

(सि) कर्मकृतशरीररहितम्, अस्थिरेषु शरीरेषु नित्यत्वेन स्थितम्, महावैभवशालिनं परमात्मानमुपास्य, प्राज्ञः पुमान्, शोकादुत्तीर्णो भवति॥

22. 'अष्टवर्षं ब्राह्मणमुपनयीत, तमध्यापयीत (येत्)' (श. ब्रा.) 5

ब्राह्मणमातापितृजन्यं कुमारम्, अष्टमं वयः प्राप्तवन्तमेव, उपनयनाख्येन संस्कारेण संस्कुर्यात्। स च उपनीतः कुमारः वेदाख्याक्षरराशिसम्पादकं गुरूच्चारणानूच्चारणरूपं व्यापारं कुर्यात्॥

23. 'असङ्गो ह्ययं पुरुषः' (बृ. उ. 6-3-15) 323

अयं परमात्मा कर्माविद्योपाधिकेन शरीरेन्द्रियसंघातादिना न सम्बद्धः खलु।

24. 'असन्नेव स भवति। असद्ब्रह्मेति वेद चेत्। अस्ति ब्रह्मेति चेद्वेद। सन्तमेनं ततो विदुः' (तै. उ. आन. 6-1) 132

यः ब्रह्मविषयकज्ञानवान् न भवति; सः अलब्धात्मस्वरूपो भवति। यदि नरः निरन्तरब्रह्मोपासनो भवति, तदा लब्धात्मस्वरूपमेनं 'सत्' पदबोध्यं वदन्ति (ब्रह्मविदः)॥

25. 'अस्थूलमनणु अह्रस्वमदीर्घम्' (बृ.उ. 5–8–8) 38

हे! गार्गि! यत् त्वया पृष्टम् अक्षरं ब्रह्म तत् स्थूलादन्यत्, अणोरन्यत्, ह्रस्वादन्यत्, दीर्घाचान्यत् (लोकदृष्टसर्वविसजातीयम्)।।

26. 'अस्मान्मायी सृजते विश्वमेतत्, तस्मिंश्चाऽन्यो मायया संनिरुद्धः' (श्वे.उ. 4–9) 207, 236

मायाप्रेरकः परमात्मा, मायाशब्दाभिधेयादस्मात्साधनात् चराचरात्मकमिदं जगत्, उत्पादयति। तदाश्रितया च मायया मायिनोऽन्यो जीवः मोहमापन्नो भवति। तेन निरुद्धज्ञानः सम्पन्नः सङ्कुचितस्वाभाविकगुणो भवति ।।

27. 'अहमिमास्तिस्रो देवता अनेन जीवेनात्मनाऽनुप्रविश्य नाम-रूपे व्याकरवाणि' (छां.उ. 6–3–2) [प्र. 217. द्रष्टव्यम्] 242

28. 'अहमेकः प्रथममासं, वर्तामि च भविष्यामि च' (अथ.शि. 2) 114

सर्वश्रुत्यादिप्रसिद्धपरमस्मान्तर्यामिकः अहम्(रुद्रः) कालत्रयेऽपि तदन्तर्यामिक एवास्मि ।।

29. आत्मानमेव लोकमुपासीत' (बृ.उ. 3-4-15) 15, 320, 352

आत्मेतरदखिलं सन्त्यज्य, उपायभूतमात्मानमेव उपेय(फल)तया भजेत ।।

30. 'आत्मा नारायणः परः' (तै. ना. उ. 11-4) 248

यतः नारायण एव शेषित्व-धारकत्व-नियन्तृत्वैः सर्वेषामात्मा, अतः सर्वातिशायी ।।

31. 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' (बृ. उ. 4-4-5, 6-5-6) 15,261, 319

II. 'आत्मा....द्रष्टव्यः' (बृ. उ. 4-4-5, 6-5-6) 17

हे ! मैत्रेयि ! परमात्मैव दर्शनसमानाकारेण ध्यानेनविषयीकार्यः ; तदर्थं च तत्त्वतः इदमित्थमिति स्वात्मनि प्रतिष्ठाप्यः ; तदर्थं च यथावस्थितं गुरुमुखाच्छ्रोतव्यः ।।

32. 'आत्मा वा इदमेक एवाऽग्र आसीत्' (ऐत.उ. 1–1) 41, 308

इदं जगत् सृष्टेः प्राक्, परमात्मना सह अविभक्ततमोवस्थं सत्, एक आत्मैवासीत् ।।

33. 'आत्मेत्येवोपासीत' (बृ. उ. 3-4-7) 34, 320

(पू.) उपास्यं वस्तु, स्वाभिन्नमेव जानीयात् ।।

(सि) स्वोपास्यं परमात्मानं, नाम-रूपात्मकचिदचित्पृथक्सिद्धत्वेनैव उपासीत ।।

34. 'आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः' (कठ. उ. 3-4) 325

(पू.) शरीरेन्द्रियमनोभिः सहितमात्मानमेव, संसारीति विवेकिन आहुः ।।

(सि) ,, ,, कर्तृत्व-भोक्तृत्वादिमानिति प्राज्ञा वदन्ति ।।

35. 'आदित्यवर्णम्' (तै. आर. (पु. सू.) 3-12-16) 145

परमात्मनः स्वरूपं तेजोमयदिव्यविग्रहवत् ।।

36. 'आनन्दो ब्रह्म' (तै. उ. भृ. 6-1) 26,133 309

(पू.) ब्रह्मानतिरिक्तत्वादेव जीवोप्यानन्दरूप एव ।।

(सि) निरवधिकातिशयानन्दः परमात्मैव 'ब्रह्म' पदवाच्यः ।।

37. 'आनन्दं ब्रह्मणो विद्वान्' (तै.उ. आन. 9–1) 134

आनन्दमयस्य परमात्मनः निरवधिकातिशयमानन्दं, श्रवण-मनना-

अनुगृहीतेन अकलुषेण मनसा जानन्-विद्वान्, बहुजन्म-सञ्चितेभ्यः पाप्मभ्यः न कदाचिदपि भीतो भवति ।।

38. 'आहारशुद्धौ सत्वशुद्धिः सत्वशुद्धौ ध्रुवा स्मृतिः (छां.उ. 7-26-2) 21

सात्त्विकाहारसेवने, अन्तःकरणनैर्मल्यम्, तस्मिंश्च सति, विजातीयप्रत्ययान्तराव्यवहितस्मृतिसन्तानात्मकध्यानसिद्धिः ।।

39. 'इदं सर्वं यदयमात्मा' (बृ.उ. 4-4-6) 26, 349

(पू) 'ब्रह्म' इत्यनुक्रम्य उक्तानि सर्वाणि 'आत्मा द्रष्टव्यः श्रोतव्यः' इत्युक्त आत्मैव ||

(सि) 'अयमात्मा' इत्युक्तं यद्ब्रह्म, तदेव चेतनाचेतनसर्वशरीरकत्वात् 'सर्व' शब्द वाच्यम् ।।

40. 'इन्द्रो मायाभिः पुरुरूप ईयते' (बृ.उ. 4-5-19) 30, 207

(पू) परमेश्वरः एकरूप एव प्रज्ञानघनस्सन्नपि, अविद्याप्रज्ञाभिः नाम-रूपकृतमिथ्याभिमानैर्वा बहुरूपो गम्यते ; न तु परमार्थतः ।।

(सि) भगवान् सर्वेश्वरः स्वीयैः सङ्कल्पात्मकैर्ज्ञानैः बहुशरीरो भवति ; स्वेच्छागृहीतानन्तदेहो भवति ; न कर्मवश्यतया ।।

41. I 'ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्ध्ये । 157

छायातपौ ब्रह्मविदो वदन्ति पञ्चाग्नयो ये च त्रिणाचिकेताः' ।।

(कठ. उ. 3-1)

II 'ऋतं पिबन्तौ' (कठ. उ. 3-1) 204

पञ्चाग्निशुश्रूषापरिशुद्धान्तःकरणाः त्रिणाचिकेतसंज्ञकानुवाकत्रय-वेदिनश्चतत्त्वार्थ ये ब्रह्मज्ञाः सन्ति, ते एवं वदन्ति–सुकृतैः कर्मभिः सम्पाद्ये अस्मिन् मानवदेहाख्ये लोके, अज्ञो जीवः, सर्वज्ञः परमात्मा चेति द्वौ आत्मनौ वर्तेते । तयोरेको जीवः अवर्जनीयं कर्मफलम्

अवशःसन् भुङ्क्ते । अपरश्च परमात्मा स्वसङ्कल्पप्रवृत्तलीलारसतया तद्भुङ्क्ते । उभावप्येतौ जीव-परमात्मानौ, एतद्देहसम्बन्धि-हृदयकुहरमेव प्रविश्य वर्तेते । तत्राप्युत्तमे हार्दाकाश एव तिष्ठतः इति ॥

42. 'एकमेवाद्वितीयम्' (छां. उ. 6-2-1) 127, 320

सच्छब्दवाच्यं (परब्रह्मात्मकं वस्तु), अविभक्तनामरूपतया एकत्वाव स्थापन्नमेव अधिष्ठात्रन्तरशून्यमासीत् ॥

43. एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा ।
कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च ॥ 325
(श्वे. उ. 6-11)

देवादिचतुर्विधदेहेष्वपि वर्तमानोऽप्यन्यावेद्यः, सर्वं जगद्व्याप्य वर्तमानः, सर्वान् प्राणिनोऽन्तरनुप्रविश्य प्रेरको धारको नियन्ता च, (तथा) सर्वजगन्निर्माता सन्नपि, त्रैगुण्यातीतत्वात् फलाभिसन्धि-पूर्वककर्तृताविरहाच्च, केवलमुदासीनः दिव्यो देव एक एव ॥

44. 'एको ह वै नारायण आसीत्' (महो. 1-1) 309

जगत्सृष्टेरारम्भकाले 'नारायण'शब्दवाच्यः परमात्मा, एक एवासीत् ॥

45. 'एतमानन्दमयमात्मानमुपसङ्क्रम्य । इमान् लोकान् कामान्नी कामरूप्यनुसञ्चरन्' (तै. उ. भृ. 10–5) 160

(अयमुपासको जीवः) पूर्वोक्तमहामहिमयुक्तं निरवधिकातिशया-नन्दं सर्वशेषिणं व्यापन-भरण-नियमनादिसम्पन्नं परमात्मान-मुपसृत्य, काम्यमानसर्वभोगसमृद्धः, इच्छागृहीतदिव्यशरीरवान्, स्वसङ्कल्पमात्रेण परावरानखिलान् लोकान् व्याप्नुवंश्च (भवति) ॥

46. 'एतं ब्रह्मलोकं न विन्दन्ति ; अनृतेन हि प्रत्यूढाः, (छां.उ. 8–3–1) 205

सर्वा अपि प्रजाः, यतः कर्मरूपया अविद्यया स्वभावान्तरं प्रापिताः, अत एव दहराकाशपदवाच्यं ब्रह्मरूपं लोकं नैव जानन्ति ॥

47. 'एवमेवास्य परिद्रष्टुरिमाः षोडशकलाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्ति' (प्रश्न. उ. 6–5) 91

अनुभवितुर्भोक्तुश्चास्य जीवस्य भोगोपकरणभूताः प्राणादिनामान्ताः षोडशकलाः, पुरुषसङ्कल्पाधीनस्वरूपस्थितिप्रवृत्तिमत्यः, नदी-समुद्र-न्यायेन निरुपाधिकपुरुषशब्दाभिधेयं वासुदेवं प्राप्य, सुख-दुःखादि भोगप्रदाः न भवन्ति ॥

48. I 'एष आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः' (छां.उ. 8–1–5) 129

II 'एष....पाप्मा' (छां.उ. 8–1–5) 346

अयं दहराकाशशब्दितः परमात्मा, अश्लिष्टसुकृत-दुष्कृतः, जरा-मरणवर्जितः, शोक-तद्धेतुकर्मरहितः, अशनाया-पिपासाविदूरः, अक्षरपरमव्योमधामा, अप्रतिहतस्वसङ्कल्पश्च ॥

49. 'एष एव साधुकर्म कारयति तं, यमधो निनीषति' (कौषी. उ. 3–65) 23

प्राज्ञः परमात्मा, यं चेतनं कर्मफलानुभवयोग्येभ्यः मर्त्यादि-लोकेभ्यः अधो नेतुं सङ्कल्पयति, तं स एव उपासनाविरोधिषु कर्मसु नियोजयति ॥

50. 'एष हि द्रष्टा श्रोता घ्राता रसयिता मन्ता बोद्धा कर्ता विज्ञानात्मा पुरुषः' (प्रश्न. उ. 4–9) 91

रूप-रस-गन्ध-स्पर्श-शब्दात्मकबाह्यार्थविषयकज्ञानवान्, (तथा)

ज्ञान-सुखाद्यान्तरार्थविषयकज्ञानवान्, कार्यानुगुणप्रयत्नवान्, ज्ञान-स्वरूपश्चायं जीव एव ॥

51. I 'ऐतदात्म्यमिदं सर्वं, तत्सत्यं, स आत्मा तत्त्वमसि श्वेतकेतो' (छां.उ. 6-8-7) 240

II 'ऐत....सर्वम्' (छां.उ. 6-8-7) 225, 229, 248

प्रमाणप्रतिपन्नं चेतनाचेतनात्मकमिदं विश्वं, उपादानभूतेनान्तर्यामिभूतेन च ब्रह्मणा व्याप्तम्। स च परमात्मा सर्वस्यास्य नियन्ता। अतः हे श्वेतकेतो! त्वम्, तादृशब्रह्मात्मकोऽसि ॥

52. 'ओमित्येवात्मानं ध्यायथ' (मुण्ड. उ. 2-2-6) 15

हे धीराः! परब्रह्मभूतं परमात्मानं तद्वाचकेन 'ओम्' इति प्रणवेनैव सततं चिन्तयत ॥

53. 'कतम आत्मेति, योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः (बृ.उ. 6-3-7) 90

आत्मनः स्वरूपं कीदृशमिति (जनकस्य प्रश्नः)। विज्ञान-धर्मकः प्राणशब्दितेन्द्रिय-मुख्यप्राणमध्यगः हृत्कमलान्तस्थः ज्योतिःशब्दितप्रकाशस्वरूपः यः पुरुषः (जीवः) स एवात्मा इति (याज्ञवल्क्यस्योत्तरम्) ॥

54. 'क्रियागुणैरात्मगुणैश्च तेषां संयोगहेतुरपरोऽपि दृष्टः' (श्वे.उ. 5-12) 341

अयं जीवः यागादिक्रियात्मकैः दैहिकैर्गुणैः, रागाद्यात्मकैः आत्म-संबन्धिभिर्गुणैश्च कारणभूतैः, विविधानि शरीराण्याप्नोति। तत्तद्गुणसम्बन्धश्च पूर्वपूर्वकर्मात्मकः शास्त्रेषु प्रसिद्धः ॥

55. 'क्रियावानेष ब्रह्मविदां वरिष्ठः' (मुण्ड उ. 3-1-4) 21

अनभिसंहितफलश्शास्त्रचोदितकर्मपरः तज्जन्यान्तःकरणशुद्ध्या लब्ध-विद्यः पुरुषः, श्रेष्ठो ब्रह्मज्ञः ॥

56. 'क्षरं प्रधानममृताक्षरं हरः क्षरात्मानावीशते देव एकः' (श्वे. उ. 1-10) 236,247

प्रधानशब्दिता प्रकृतिः क्षरमित्युच्यते। तत् भोग्यतया स्वस्मै हरन् जीवः अमरणधर्मत्वात् अक्षरपदवाच्यः। तौ च क्षराक्षरौ प्रकृति-पुरुषौ निरस्तसमाभ्यधिकः ईश्वरः नियमयति ।।

57. I 'जानात्येवायं पुरुषः' (?) 91

II 'जानात्येव' (?) 87

अयं सर्वोऽपि चेतनः सर्वास्वप्यवस्थासु ज्ञानाश्रय एव ; न ज्ञानरहितः ।।

58. 'ज्ञाज्ञौ द्वावजावीश-नीशौ' (श्वे. उ. 1-9) 129, 236, 341

नित्यासङ्कुचितज्ञानवान् परमात्मा, सङ्कुचितज्ञानवान् बद्धो जीवश्चेत्युभावपि जन्मरहितावेव। तयोराद्यः सर्वनियन्ता, द्वितीयस्तु तन्नियाम्यः ।।

59. 'तत् त्वमसि (छां. उ. 6-8-7) 11, 34, 208, 225, 229, 329, 340

(पू.) अविद्योपाधिना युष्मच्छब्दबोध्यस्त्वम्, सर्वोपाधिशून्यतच्छब्दबोध्यब्रह्माभिन्नोऽसि ।।

(सि.) अचिद्विशिष्टजीवशरीरकं ब्रह्म, सर्वज्ञ-सत्यसङ्कल्प-जगत्कारणभूत-परब्रह्माभिन्नम्। (इति सामान्यतः) हे श्वेतकेतो ! त्वच्छरीरकः परमात्मा, सर्वज्ञत्वादिविशिष्टपरमात्माभिन्नः। (इति विशेषतः) [त्वं, सर्वशरीरकपरमात्मशरीरतया तदभिन्नोऽसि] ।।

60. 'तत्राऽपि दह्रं गगनं विशोकस्तस्मिन्यदन्तस्तदुपासितव्यम्' 261

(तै. ना. उ.10-23)

परमात्मनः परवेश्मभूते दहरपुण्डरीके, ततोऽपि सूक्ष्मतमम्,

शोकादिसकलहेयप्रतिभटम्, अपहतपाप्मत्वादिगुणकम्, गगनवद-परिच्छेद्यं च यत्परं ब्रह्म, तत्, (तथा) तदाश्रयकम् अपहतपाप्म-त्वादिगुणजातं चेत्युभयमपि, (मुमुक्षुभिः) उपास्यम् ।।

61. 'तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो' (छां. उ. 6-8-7) 320
(प्र. 51.द्रष्टव्यम्)

62. I 'तत्सृष्ट्वा । तदेवानुप्राविशत् । तदनुप्रविश्य । सच्चात्यच्चाऽभवत् ।....
....विज्ञानं चाविज्ञानं च । सत्यं चानृतं च सत्यमभवत्' ।।
(तै. उ. आन. 6-2-3) 241

II 'तत्सृष्ट्वा ।.........भवत् ।।' (तै. उ. आन. 6-2-3) 227,228

III 'तदनु.........भवत्' (तै. उ. आन. 6-2-3) 228,241

स्थूल-सूक्ष्मात्मकं चराचरात्मकं चेतनाचेतनरूपं जगत् उत्पाद्य, तत्र सर्वत्र अनुवृत्ततया प्रविष्टवान् । तथा प्रविश्य च, निर्विकार-चेतनरूपं सविकाराचेतनरूपं च ब्रह्मैव अभवत् । तथाहि ; तदेव च ब्रह्म, जातिगुणाद्यनाश्रय-अचेतनवर्गाधार-अजड - सत्यशब्दवाच्य-चेतनगतानि, (तथा) जातिगुणाद्याश्रय- चेतनाश्रित-जड-अनृतशब्द वाच्याचेतनगतानि च, यानि यानि नाम-रूपाणि, तेषाम् अन्ततः स्वयमेवाश्रयभूतो भवन्नपि निर्विकारत्वात्मकस्वकीयस्वभावाप्रहाणेन सत्यमेवाऽभवत् ।।

63. 'तदा विद्वान् पुण्य-पापे विधूय निरञ्जनः परमं साम्यमुपैति'
(मुण्ड. उ. 3-1-3) 161

उपासनपूर्तिमान् पुरुषः परमात्मानं यदा अपरोक्षीकरोति, तदा ब्रह्म-प्राप्तः, अश्लिष्टसुकृत-दुष्कृतः निरस्तसमस्तप्रकृतिलेपः, परब्रह्मणा साकं परमसाम्यं स्वाभाविकब्राह्मगुणाविर्भावलक्षणं सम्पन्नो भवति ।।

64. I 'तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते' (केन. उ. 1-5) 327

II 'तदेव....विद्धि' (केन. उ. 1-5) 337

अमुमुक्षवो जनाः, इन्द्रियग्राह्यतया इदङ्कारास्पदत्वात् सुविदितं भोग्यबुद्ध्या यद्वस्तु सेवन्ते, न तत् उपास्यं ब्रह्म ; अपि तु इन्द्रियागोचरतया यत् तत्पदास्पदीभवति, तदेवोपास्यतया शास्त्रगम्यं ब्रह्मेति जानीहि ॥

65 I 'तदैक्षत बहुस्यां प्रजायेयेति । तत्तेजोऽसृजत' (छां. उ. 6-2-3) 127,240, 278,279,308

II 'तदै........स्याम्' (छां. उ. 6-2-3) 222,223 245

III 'तदैक्षत' ( ,, ,, ) 128

तत् सच्छब्दाभिधेयं परं ब्रह्म, 'विचित्रानन्त-चिदचिन्मिश्र-व्यष्टि जगद्रूपेण अहमेव नानारूपं भवेयं, तदर्थं च तेजोबन्नादिसमष्टिरूपेण प्रकर्षेण जायेय' इति समकल्पयत् । ततश्च तेजः ससर्ज ॥

66. 'तद्धेदं तर्ह्यव्याकृतमासीत् । तन्नाम-रूपाभ्यां व्याक्रियत' (बृ. उ. 3-4-7) 241

तदिदं स्त्रीपुंसादिलक्षणमखिलं जगत् , सृष्टेः पूर्वं नामरूपा-संसर्गात् , अनभिव्यक्तशरीरकं ब्रह्मासीत् । तदेव नामरूपवत्तया विविच्य, समन्तात् (स्वेनैव) कृतमभवत् ॥

67. 'तद्धैतत्पश्यन् ऋषिर्वामदेवः प्रतिपेदे, अहं मनुरभवं सूर्यश्चेति' (बृ. उ. 3-4-10) 113

उपास्यं तदेतत्परंब्रह्म उपासीनो वामदेवाख्य ऋषिः, 'ममात्मैव मन्वादीनां सूर्यादीनां च आत्मभूतः', इति, परमात्मस्वरूपं स्वात्मत्वेन सर्वात्मत्वेन च साक्षात्कृतवानासीत् ॥

68. 'तद्यथेह कर्मचितो लोकः क्षीयते, एवमेवामुत्र पुण्यचितो लोकः क्षीयते ' (छां. उ. 8–1–6) 6, 10

अस्मिँल्लोके, लौकिकैः सेवादिरूपैः कर्मभिरार्जितं भोग्यं फलं यथा क्षीणं भवति, तथैव, इष्टापूर्तादिरूपैः पुण्यैः कर्मभिः सम्पादितं आमुष्मिकं फलमपि क्षीणमेव भवति ॥

69. 'तद्योऽहं सोऽसौ, योऽसौ सोऽहमस्मि' (ऐत. आर. 2-2-4) 34

तस्मात्, उपासकः योऽहमात्माऽस्मि, उपास्यः परमात्मैव सः ; नान्यः । उपास्यः यः परमात्मास्ति, तदभिन्न एवोपासकोऽहमस्मि ; उभयोर्मिथः शरीरात्मभावात् ।।

70. 'तन्नामरूपाभ्यां व्याक्रियत' (बृ. उ. 3-4-7) [प्र. 66. द्रष्टव्यम्] 245

71. 'तम आसीत्तमसा गूढमग्रे प्रकेतम् ' (तै. ब्रा. 2-8-9-10) 30

(पू) प्राक्, आच्छादिकया अविद्यया तिरोहितम्, अविद्याधिष्ठानभूतं च ; अत एव 'तमः 'शब्देनाभिधेयं सदसद्विलक्षणं ब्रह्मैकमेवासीत् ॥

(सि) सृष्टेः पूर्वम् अविभक्तं तम आसीत् । तच्छरीरकं च ब्रह्मैकमेवासीत् ॥

72. I 'तमीश्वराणां परमं महेश्वरं तं देवतानां परमं च दैवतम् ।
पतिं पतीनां परमं परस्तात् विदाम देवं भुवनेशमीड्यम् ' ॥
(श्वे. उ. 6-7) 129

II 'तमीश्वरा........श्वरम् ' (श्वे. उ. 6-7) 225

ईशितृत्ववतां ब्रह्मादीनां मध्ये निरवधिकमहत्त्ववन्तमीश्वरम्, यज्ञादिकर्मभिराराध्यानां अग्नीन्द्रादीनां मध्ये श्रेष्ठं सर्वकर्मसमाराध्यम्, रक्षणपराणां राजादीनां मध्ये राजाधिराजं सम्राजम् निरुपाधिकस्वामित्ववन्तम्, स्तुत्यर्हम्, सकलजगदन्तर्यामिणम्, रजस्तमोऽतीते शुद्धसत्त्वमये दिव्ये प्रदेशे विराजमानं परमात्मानं परज्ञानेन साक्षात्कुर्मः ॥

73. 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽना-शकेन' (बृ. उ. 6–4–22) 21

ज्ञेयत्व-प्राप्यत्वाद्युपयोगिसर्वेश्वरत्वादिगुणविशिष्टं परमात्मानम्, गुरु-मुखगृहीतानां वेदशाखाविशेषाणां नियमयुक्तेनाध्ययनेन, देवता-राधनरूपेण द्रव्ययज्ञादिना कर्मणा, न्यायार्जितस्य धनस्य सत्पात्रेषु समर्पणरूपेण दानेन, फलाभिसन्धिरहिततया अनुष्ठीयमानेन कृच्छ्र-चान्द्रायणादिरूपेण तपसा, अनशनेन च उपासनोपयोगिना प्राप्तुम्, त्रैवर्णिकाः तीव्रमभिलषन्ति ॥

74. I तमेव विदित्वा अतिमृत्युमेति, नाऽन्यः पन्थाः' (श्वे. उ. 3-8-6-15) 33

II 'तमेव....मेति '(श्वे. उ. 3-8-6-15) 10, 19,326, 341

(पू.) सर्वस्याप्यपरमार्थत्वात् परमार्थभूतं ब्रह्मैकमेव स्वाभेदेन ज्ञात्वा, मृत्युशब्दवाच्यां भेदज्ञानादिरूपामविद्याम् अतिक्रान्तो भवति— निवृत्ताविद्यो भवति; मृत्युतरणे, ब्रह्मात्मैकत्वविज्ञानादतिरिक्तः याग-होम-दानादिः यः कोऽपि उपायो न भवति ॥

(सि) प्रकृतेः परस्तात् स्वयंप्रकाशज्ञानस्वरूपतया 'ज्योतिः'शब्द-वाच्यम् परं पुरुषमुपास्यैव 'मृत्यु' शब्दाभिधेयात् संसारादुत्तीर्णो भवति ; भगवदुपासनं विना अतिरिक्तःकोप्युपायो न भवितुमर्हति ॥

75. 'तमेवं विद्वानमृत इह भवति। नाऽन्यः पन्था अयनाय विद्यते' (तै. आर. 3–12–17) [प्र. 189 द्रष्टव्यम्]

76. 'तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्न्यो अभिचाकशीति' 237,325
(मुण्ड. उ. 3–1–1) [प्र. 94 द्रष्टव्यम्] 341

77. 'तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः' (तै. उ. आन. 1-2) 309

'सत्यं ज्ञानमनन्तं' इत्युक्तसत्यत्वज्ञानत्वानन्तत्वाख्यस्वरूपनिरूपक-धर्मवतः परब्रह्मभूतात् मुमुक्षुजनोपास्यात् मुक्तभोग्यात् परमात्मनः आकाशः समुत्पन्नः ॥

78. 'तस्माद्वा एतस्मान्मनोमयात्। अन्योऽन्तर आत्मा विज्ञानमयः' (तै उ. आन. 4–1) 91

मनोबुद्ध्यहङ्कारचित्ताख्यान्तःकरणवृत्तिचतुष्टये प्रचुरतया वर्तमाना-न्मनोमयात् अतिरिक्तः, मनोमयान्तर्वर्ती च विज्ञानधर्मको विज्ञान-स्वरूपश्च जीवात्मा ॥

79. 'तस्मिन्यदन्तस्तदन्वेष्टव्यम्' (छां. उ. 8–1–1) [प्र. 93. द्रष्टव्यम्] 131

80. 'तस्मिँल्लोकाः श्रिताः सर्वे तदुनात्येति कश्चन' (कठ. उ. 5-8-6-1) [प्र. 156 द्रष्टव्यम्] 199

81. 'तस्मिंश्चाऽन्यो मायया संनिरुद्धः' (श्वे. उ. 4–9) [प्र. 26. द्रष्टव्यम्] 207

82. 'तस्मै मृदितकषायाय तमसः पारं दर्शयति भगवान् सनत्कुमारः' (छां. उ. 7-26-2) 326

दिव्यज्ञानसम्पन्नः देवर्षिः सनत्कुमारः, परिशुद्धान्तःकरणाय स्वात्मानमुपसन्नाय नारदाय भवान्धकारदूरीकरणक्षमोपासनानुभव-गोचरं परमात्मानं स्पष्टमुपादिशत् ॥

83. 'तस्मै स विद्वानुपसन्नाय सम्यक्प्रशान्तचित्ताय शमान्विताय। येनाऽक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्याम्' ॥ (मुण्ड. उ. 1-2-13) 7

ब्रह्मदर्शी गुरुः शास्त्रोक्तया रीत्या स्वात्मानमुपसेदुषे नियमितान्त-र्बाह्येन्द्रियाय जिज्ञासवे शिष्याय, ब्रह्मदर्शनसाधनीभूतां विद्यां याथार्थ्येन उपदिशेत्।

येनोपदिष्टेन विद्यात्मकेन ज्ञानेन, स्वरूप-स्वभावाभ्यामविकारं सर्वत्र परिपूर्णं परंब्रह्म शिष्यः उपास्य जानीयात् ॥

84. ‘तस्य तावदेव चिरं यावन्न विमोक्ष्ये, अथ सम्पत्स्ये’ (छां. उ. 6–14–2) 333

ब्रह्मात्मकतया स्वात्मानुसन्धाननिष्ठस्य पुरुषस्य परमात्मप्राप्तौ तावानेव विलम्बः ; कर्मारब्धाच्छरीरात् यावत् न विमुच्यते । अनुपदमेव तु ब्रह्म सम्पत्स्यते ॥

85. ‘तस्य ह वा एतस्य महतो भूतस्य निःश्वसितमेतत् ; यदृग्वेदो यजुर्वेदः’ (सुबा. उ. 2) (बृ. उ. 4–4–10, 6–5–11) 246

पूर्वं प्रस्तुतस्य जगदभिन्ननिमित्तोपादानकारणस्य, महद्भूतशब्द-वाच्यस्य परमात्मनः सकाशात्, ऋगादिरूपं वेदजातं, निःश्वासवत् अनायासेनाविर्भूतम् ॥

86. ‘तासां त्रिवृतं त्रिवृतमेकैकाम्’ (छां. उ. 6–3–3, 4) 195

स्वस्वाभिमानिदेवताधिष्ठितानां अन्योन्यासंसृष्टतया विशेषसृष्ट्य-समर्थानां तेजो-जल पृथिवीनां मध्ये एकैकामपि देवतारूपां, विशेषसृष्टिसामर्थ्याय, अन्योन्यसंसर्गवतीं करवाणि, इति सङ्कल्पमकरोत् ॥

87. ‘तिस्रो देवताः’ (छां. उ. 6–3–2) [प्र. 217 द्रष्टव्यम्] 242

88. ‘ते ये शतम्’ (तै. उ. आन 8–2) 130

(मनुष्यैः प्रार्थनीयतया श्रुतिप्रतिपन्नाः) ये आनन्दाः ते उत्तरोत्तरं शतगुणिताः एकत्र मिलिताश्चेत्, मनुष्यगन्धर्वाद्यानन्दा भवन्ति ॥

89. ‘तेषामेवैष....विरजो ब्रह्मलोकः’ (प्रश्न. उ. 1-15-16) 22

येषां ब्रह्मचर्यादिसम्पत्तिः, तेषामेव ईदृशो निर्दुष्टः परिपूर्णब्रह्मानु-भवः सिध्यति ॥

90. 'तेषां सत्यानां सतामनृतमपिधानम्' (छां.उ. 8-3-1) 30

(पू) स्वाश्रयाणामेव सतां-परमार्थाभूतानां काम्यमानानामर्थनां, बाह्यविषयेषु स्वेच्छाप्रचारस्वरूपं यत् अनृतम्-मिथ्याज्ञाननिमित्तं, तत् अपिधानमिव अपिधानम्–तिरोधायकम्, स्थितस्याऽपि स्वरूपलाभस्य प्रतिबन्धकम् ॥

(सि) परमार्थतया स्वात्मभूतपरमात्मगतानां अपहतपाप्मत्वादीनां धर्माणां अविद्यापदवाच्यं (अनृतं) कर्मैव तिरोधायकम् । अतः सतोऽपि नोपलम्भः ॥

91. 'त्वं वा अहमस्मि भगवो देवते !, अहं वै त्वमसि भगवो देवते' (वरा.उ. 2-34) 34

(पू) हे महामहिमसम्पन्ने देवते ! त्वदुपासकोऽहम् ; उपास्यभूतत्वदभिन्न-एवाऽस्मि । (तथैव) मदुपास्या त्वमपि, उपासकभूतमदभिन्नैवाऽसि ; जीवस्य ब्रह्माभेदात् ॥

(सि) " ; मम त्वच्छरीरत्वात् (समानमितरत्) ॥

92. 'त्वं हिनः पिता, योऽस्माकमविद्यायाः परं पारं तारयसीति' (प्रश्न. उ. 6-8) 326

त्वमेव अस्माकं पिता—विद्यानिमित्तं श्रेष्ठं जन्म दत्त्वा जनकोऽसि । अविद्याख्यसंसारार्णवस्य परं तीरं प्रापयित्वा स्वरूपलाभप्रदोऽसि ॥

93. 'दहरोऽस्मिन्नन्तर आकाशः, तस्मिन् यदन्तः तदन्वेष्टव्यं ; तद्वाव विजिज्ञासितव्यम्' (छां. उ. 8-1-1) 261

प्रस्तुते ब्रह्मपुरशब्दवाच्यदेहान्तर्वर्तिनि दहरपुण्डरीकाख्ये वेश्मनि अन्तर्वर्तमानः यः अतिसूक्ष्मत्वात् 'दहर' शब्दवाच्यः, सर्वत्र प्रकाशमानत्वात् 'आकाश' पदवाच्यश्च, सः, परमात्मा,

तदन्तर्वर्ति च यत् तदीयं पावनं कल्याणतमं अपहतपाप्मत्वादिगुण-जातं, तदुभयमपि श्रवण-मननाभ्यामवगन्तव्यं, ध्यातव्यं च ॥

94. 'द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते । तयोरन्यः पिप्पलं स्वाद्वत्ति अनश्नन्यो अभिचाकशीति' ॥ 157

(मुण्ड. 3-1-1) (श्वे.उ. 4-6)

समानगुणकौ, परस्पराविनाभूतौ, प्रवृत्ति-निवृत्त्यनुगुणत्वात् पक्ष-सदृशज्ञानादिगुणवन्तौ द्वौ चेतनौ, वृक्षवत् छेदनार्हम्, एकं शरीरं समाश्रित्य वर्तेते । तयोरेकतरो जीवः, परिपक्वम् अश्वत्थफल-सदृशं कर्मफलमास्वादयन्ननुभवति । इतरः परमात्मा तु, तत् अननुभवन् असङ्कुचितज्ञानप्रकाशो विजृम्भते ॥

95. 'धर्मेण पापमपनुदति' (तै.ना.उ. 63-7) 23

फलमनभिसन्धाय अनुष्ठितेन 'धर्म'पदवाच्येन श्रुति-स्मृत्युदितेन कर्मणा, ज्ञानोत्पत्तिविरोधि पुण्य-पापात्मकं सर्वं कर्म दूरीकरोति ॥

96. 'ध्रुवा स्मृतिः ; स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षः' 17

(छां.उ. 7-26-2)

(पूर्वोक्तेन आहारशुद्ध्यादिना) विजातीयप्रत्ययान्तराव्यवहितशुभा-श्रयस्मृतिसन्ततिरूपं ध्यानं सम्पद्यते । तेन च दुर्मोचतया 'ग्रन्थि'-शब्दवाच्यानाम् अविद्या-रागादीनाम् आत्यन्तिकमोक्षः सिद्ध्यति ॥

97. 'न कलञ्जं भक्षयेत्' ( ? ) 312

विषदिग्धबाणहतमृगसम्बन्धिमांसं न खादेत् ॥

98. 'न चक्षुषा गृह्यते नाऽपि वाचा' (मुण्ड. उ. 3-1-8) 336

हृदयगुहायां निहितं सत्यरूपं वस्तु, चक्षुरादिना इन्द्रियेण, (तथा) शब्दप्रयोगादिना वाग्व्यवहारेण च याथात्म्येन ग्रहीतुं नैव शक्यते ॥

99. 'न तत्र रथाः न रथयोगाः न पन्थानो भवन्ति। अथ रथान् रथयोगान् पथः सृजते। न तत्र आनन्दा मुदः प्रमुदो भवन्ति। अथ आनन्दान् मुदः प्रमुदः सृजते। न तत्र वेशांताः पुष्करिण्यः स्रवन्त्यो भवन्ति। अथ वेशांतान् पुष्करिण्यः स्रवन्त्यः सृजते। स हि कर्ता'। (बृ.उ. 6-3-10) 198

स्वप्नदशापन्नस्य जीवस्य, स्वप्नस्थाने–रथाः, तद्योजनार्हास्तुरगादयः, तत्सञ्चरणयोग्यानि वर्त्मानि चेत्यादीनि तदवस्थायामनुभूतान्यपि, जाग्रद्दशानुभवयोग्यानि न भवन्ति। तत्तत्पुरुष-तत्तत्कालमात्रानुभाव्यान् तान् सर्वान् ईश्वर एव सृजति। (तथा) सुखविशेषान्, तद्धेतुभूतांश्च पल्वल-वापी-कूप-तटाकादीन् तत्र अविद्यमानानेव ईश्वरः सृजति॥

100. 'न तस्य कार्यं करणं च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते। पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञान-बलक्रिया च॥ 129
(श्वे. उ. 6–8)

कार्यभूतं शरीरम्, ज्ञानसाधनमिन्द्रियं च परमात्मनो नास्ति। तस्य सदृशः, तदपेक्षया उत्कृष्टश्च (देवासुरमनुष्येषु, कालत्रयेऽपि चतुर्दशभुवनेष्वपि) यःकोऽपि नैव दृष्टः। अस्येश्वरस्य विचित्रजगन्निर्माणाद्यनुगुणा असदृशी शक्तिः, (तथा) स्वस्वरूपायत्ता ज्ञानबलादिसहिता विचित्रक्रियासम्पत्तिश्च श्रुतिप्रतिपन्नाऽस्ति॥

101. 'न तस्येशे कश्चन तस्य नाम महद्यशः' (तै. ना. उ. 2–10) 221

अत्याश्चर्यवैभवयुक्तोऽपि इतरश्चेतनः, तस्य परमात्मनः शासनं कर्तुं नैव समर्थो भवति। ईदृशं सर्वनिर्माणाद्यनुगुणाचिन्त्यशक्तिसर्वेश्वरत्वादिनिमित्तं यशः तस्यैव खलु।

102. I 'न दृष्टेर्द्रष्टारं पश्येः....न मतेर्मन्तारं मन्वीथाः' (बृ. उ. 5-4-2) 26, 313

II 'न दृष्टेर्द्रष्टारम्.........न मतेर्मन्तारम्' (बृ. उ. 5-4-2) 133

III 'न दृष्टेर्द्रष्टारं पश्येः' (बृ. उ. 5-4-2) 327

(पू) लौकिक्या दृष्टेः कर्मभूतायाः द्रष्टारं–स्वकीयया नित्यया दृष्ट्या व्याप्तारं न पश्येः, याऽसौ लौकिकी दृष्टिः कर्मभूता सा रूपोपरक्ता रूपाभिव्यञ्जिका न आत्मानं स्वात्मनो व्याप्तारं प्रत्यञ्चं व्याप्नोति। तस्मात् तं प्रत्यगात्मानं दृष्टेर्द्रष्टारं न पश्येः। (तथा) मतेः - मनोवृत्तेः केवलायाः व्याप्तारं न मन्वीथाः॥ एष वस्तुनः स्वभावः; अतः नैव दर्शयितुं शक्यते गवादिवत्॥ (शं. भा)

(सि) श्रवण-मनन-निदिध्यासनानां यः कर्ता जीवः, स न द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः; किन्तु तदन्यः सर्वान्तरः परमात्मैव दर्शनादिकर्मभूतः। इन्द्रियाधीनदर्शनादीनां कर्तारं जीवं, प्राणनादिकर्तृत्वेन न पश्येः, न मन्वीथाः इत्यर्थः। (रं. भा)

103. I 'न पश्यो मृत्युं पश्यति न रोगं नोत दुःखताम्' (छां. उ. 7-26-2) 91

II 'न पश्यो मृत्युं पश्यति' (छां. उ. 7-26-2) 7, 32

(पू) यथोक्तब्रह्मात्मैकत्वदर्शी विद्वान्, मरणं, ज्वरादिकं, दुःखभावं चापि नैव पश्यति। मृत्युपदाभिधेयाविद्यानिर्मुक्तो भवतीत्यर्थः॥

(सि) पूर्वोक्तभूमाख्यानवच्छिन्नब्रह्मदर्शी विद्वान्, भगवद्विभूतिभूते जगति भगवल्लीलारसाधायकतया शास्त्रप्रतिपन्ने, भगवच्छेषतैकरसं स्वं प्रति प्रतिकूलभावं नैव चिन्तयति॥

104. 'न पुनर्मृत्यवे तदेकं पश्यति' (?) 7. 32

निःसमाभ्यधिकस्य परस्य ब्रह्मणः साक्षात्करणं, मृत्युशब्दवाच्यस्य प्रमादस्य पुनरापत्तौ हेतुर्न भवति॥

105. 'न स वेद अकृत्स्नो ह्येषः....आत्मेत्येवोपासीत'(बृ.उ. 3-4-7) 16

यतः एकैकनामरूपविशिष्टो जीवः, अपूर्णः, अतः तच्चिन्तयिता मोक्षार्थोपासको नैव भवितुमर्हतीति, सर्वेषामन्तः प्रविश्य नियन्तृतया सर्वशरीरकत्वेन सर्वेषां नामरूपादिभाजः परमात्मन एव आत्मत्वेनोपासनं कुर्यात् ॥

106. 'न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति । अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः' (छां. उ. 8-12-1) 322

(पू.) देहात्मभावविवेकशून्यस्य, (अत एव) 'बाह्यविषयसंयोग-वियोगौ मम' इति अभिमन्यमानस्य, तादृशसंयोग-वियोगयोः सन्तानविच्छेदः कदाऽपि नैव भवति। तमेव च अशरीरात्मस्वरूप-याथात्म्यविज्ञानेन प्राप्तविवेकं, प्रियाप्रिये पुनर्न सम्बध्नीतः ॥

(सि) पुण्य-पापात्मककर्मारब्धशरीरसम्बन्धं यावत्, देहिनः तत्प्रयुक्तसुख-दुःखयोर्दूरीकरणं असम्भवि । कर्मणां तन्निमित्तस्य शरीरस्य च विनाशे, सुख-दुःखयोर्वर्जननमपि अयत्नतः सिध्यति ॥

107. 'न हि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते' (बृ. उ. 6-3-30) 90

ज्ञानाश्रयस्य जीवात्मनो धर्मभूतं यत् ज्ञानं, तदुच्छित्तिः कदाऽपि नैव भवति ॥

108. 'न ह्यध्रुवैः प्राप्यते' (कठ. उ. 2-10) 7

नश्वरफलसाधनतया श्रुतिप्रतिपन्नैः कर्मभिः, (अपरिच्छिन्नं ब्रह्म, तत्पदं वा) नैव लभ्यते ॥

109. 'नाऽन्योऽतोऽस्ति द्रष्टा' (बृ. उ. 5-7-27) 340,342

(पू.) अस्मादन्तर्यामिभूतादात्मनोऽन्यः द्रष्टा नाम कश्चन नास्ति; किन्तु स एव ॥

(सि) निरुपाधिकद्रष्टृत्ववतः अन्तर्यामिणोऽन्यः करणायत्तज्ञानो जीवः, स्वयमन्यैरदृष्टःसन् रूपादिज्ञानवान् न भवति ॥

110. 'नाम ब्रह्म' (छां. उ. 7–1–5) — 350

नाम्नि–बोधके शब्दे, ब्रह्मदृष्ट्या (उपासनं कर्तव्यम्)

111. 'नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्'। (मुण्ड. उ. 3–2–8) — 162

निष्पन्नोपासनो ब्रह्मज्ञः, औपाधिकेन देवादिनाम्ना देवाद्याकारेण च विगतसंसर्गः सर्वातिशायिनं (असङ्कुचितज्ञानैकाकारं)दिव्यंपुरुषं सयुग्भावेन सम्पन्नो भवति ॥

112. 'नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन।
यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम् ॥ (मुण्ड.उ. 3–2–3) — 18

प्रस्तुतः परमात्मा, स्वाराधनवेषतारहितैः अत्यन्तं नियमेन कृतैरपि श्रवण-मनन-निदिध्यासनैः नैव प्राप्यो भवति। अपि तु यमुपासकं स्वात्मानं प्रापयितुं प्रीत्या स्वयमेवेच्छति, तम्, स्वरूप-गुण-विग्रहादिभिः सह स्वम् अनुभावयति। अतः प्रीतिरूपापन्न-ध्यानैकलभ्यः परमात्मा ॥

113. 'नायमात्मा बलहीनेन लभ्यः' (मुण्ड. उ. 3-2-4) — 22

पूर्वमुक्तः परमात्मा अवसन्न(दीन)मनसा उपासकेन नैव प्राप्यो भवति ॥

114. I 'नासदासीन्नो सदासीत्तदानीम्' (तै.ब्रा. 2-8-9-8)
'तम आसीत्तमसा गूढमग्रे प्रकेतम्' (तै.ब्रा. 2–8–9–10) } — 30

II 'नासदासीन्नो सदासीत्' (तै.ब्रा. 2–8–9–8) — 205

(पू.) सृष्टेःप्राक् सच्छब्दवाच्यम् असच्छब्दवाच्यं च वस्तु नैवाभवत्; किन्तु आच्छादिकया अविद्यया तिरोहितं, तदधिष्ठानभूतं तत एव च 'तमः'पदाभिधेयं ब्रह्मासीत् ॥

(सि) अग्रे कार्यावस्थं चेतनमचेतनं वा नैवावर्तत । किन्तु 'तमः' पदवाच्ये अचित्समष्टिभूते वस्तुनि, व्यष्टिभूतं चिदचिद्रूपं जगत् लीनमासीत् ॥

115. 'निचाय्य तं मृत्युमुखात् प्रमुच्यते' (कठ. उ. 3-15) 15

पूर्वोक्तं परमात्मानं दर्शनसमानाकारेण ध्यानेन साक्षात्कृत्य, भीषणात् संसारात् मुक्तो भवति ॥

116. 'नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्' (कठ. उ. 5-13, श्वे. उ. 6-13) 129, 237, 341

परमात्मा हि स्वयं नित्य एक एव सन्नपि, नित्यानां असङ्ख्यातानां चेतनानामपेक्षितानर्थान् अनायासेनैव प्रयच्छति ; (तत्साक्षात्कारः परमशान्ति हेतुः) ॥

117. 'निदिध्यासितव्यः' (बृ. उ. 4-4-5, 6-5-6) [प्र. 31 द्रष्टव्यम्] 15

118. 'निरञ्जनम्' (श्वे. उ. 6-19) [प्र. 121 द्रष्टव्यम्] 39, 42, 127, 128

119. 'निरञ्जनः परमं साम्यमुपैति' (मुण्ड. उ. 3-1-3) [प्र. 63 द्रष्टव्यम्] 162

120. 'निर्गुणः' (श्वे. उ. 6-11) [प्र. 43 द्रष्टव्यम्] 38, 42, 127, 128

121. I 'निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्' (श्वे. उ. 6-19) 26

II 'निष्कलं........शान्तम्' (श्वे. उ. 6-19) 11, 128

(पू) परं ब्रह्म निरवयवम्, चलनादिक्रियारहितम्, अशनायाद्यूर्मिषट्क-सम्बन्धरहितम्, कर्मसम्बन्ध-तत्फलसम्बन्धविदूरम् ।

(सि) निरवयवम्, कृतकृत्यत्वात् निष्क्रियम्, अशनायादिभिरसंस्पृष्टम्, आश्रितपराङ्मुखत्वाद्यवद्यरहितं असङ्गस्वभावं च परं ब्रह्म ॥

122. 'नेदं यदिदमुपासते' (केन.उ. 1-15) [प्र. 64 द्रष्टव्यम्] 336

123. I 'नेह नानाऽस्ति किञ्चन । मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति' (बृ.उ. 6-4-19) 26, 134

II 'नेह नानाऽस्ति किञ्चन' कठ.उ. 4–11, (बृ. उ. 6–4–19) 245, 321

(पू) अनुद्रष्टव्ये ब्रह्मणि किञ्चिन्मात्रमपि भेदो नैव विद्यते । ईदृशे अद्वितीये ब्रह्मणि, यः पुरुषः अविद्यया नानात्वमध्यारोपयति, सः अविद्यापरम्परया आवृतो भवति ॥

(सि) द्रष्टव्यतया पूर्वप्रस्तुते परे ब्रह्मणि सर्वाधारे सर्वशरीरके, (सर्वान् प्रति आत्मत्वे आधारत्वे वा) अल्पोऽपि भेदो नैवाऽस्ति । सर्वां-श्चेतनाचेतनान् प्रति एकरूपे तस्मिन्नात्मनि (अत एव परमात्मनि) अत्यल्पमपि भेदं यः स्वबुद्ध्या चिन्तयति, सः नैव मुक्तो भवति; अविरतमेव संसारं प्राप्नोति ॥

124. I 'पतिं विश्वस्यात्मेश्वरं शाश्वतं शिवमच्युतम्' (तै. ना. उ. 11–3) 236

II 'पतिं........श्वरम्' (तै. ना. उ. 11-3) 247

सर्वेषां जगतः निरुपाधिकरक्षकं, स्वाधीनसर्वैश्वर्यं, नित्यनिरुपाधिक-मङ्गलात्मकं, स्वस्वरूपतः स्वाश्रितान् प्रति च च्युतिरहितं, परमात्मानं नारायणम् आश्रित्य, इदं जगत् लब्धस्वरूपं वर्तते ॥

125. I 'पराऽस्य शक्तिर्विविधैव श्रूयते स्वभाविकी ज्ञानबलक्रिया च' 38,244

II 'पराऽस्य....श्रूयते' (श्वे. उ. 6-8) [प्र. 100 द्रष्टव्यम्] 225

126. 'परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन । तद्विज्ञानार्थं स गुरुमेवाऽभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्' ॥(मुण्ड उ. 1–2–12) 7

अधीतसाङ्गसशिरस्कवेदस्त्रैवर्णिकः, याग-दानादिकर्मसम्पाद्यान् ,

आराध्यदेवतानश्वरत्वकृतनश्वरतावतः लोकान् भोगान् वा, न्याय-चिन्तनपूर्वकं अनुपेयान् निर्णीय, 'नित्यः परमपुरुषः अनित्य-साध्यकर्मसम्पाद्यो न भवितुमर्हतीति' निश्चित्य, तेषु वितृष्णतां प्राप्नुयात् । ततश्च शाश्वतं परमात्मानं, ध्यानेन साक्षात्कर्तुं, श्रुत-वेदान्तं साक्षात्कृतपरमपुरुषस्वरूपं स्वीयाज्ञाननिवारकत्वेन स्वीकृत्य, समिद्धस्तः तं गुरुमभिमुखीकृत्य गच्छेत् ॥

127. 'परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते' (छां.उ. 8–12–2) 162

सम्प्रसादाख्यः एष जीवः, परमव्योमाख्यस्थानविशेषविशिष्टं परं ब्रह्म, अर्चिरादिना मार्गेण प्राप्य, संसारित्वप्रहाणपूर्वकम् , अप-हतपाप्मत्वादिना ब्राह्मरूपेणाविर्भवति ॥

128. I 'पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनामृतत्वमेति' (श्वे.उ. 1-6) 7, 237

II पृथगा....मत्वा' (श्वे.उ. 1-6) 250

संसारचक्रे भ्रम्यमाणं जीवरूपं स्वात्मानं, तत्र भ्रमयितारं परमात्मानं च, भ्रम्यमाणत्व-भ्रमयितृत्वाख्यां तद्गताभ्यां धर्माभ्यां पृथक्तया श्रवण-मननादिना निश्चित्य, तत्प्रभवोपासनतः सुप्रीतेन परमात्मना प्रीति-विषयीकृतो जीवात्मा, मुक्तो भवति ॥

129. 'प्रज्ञां कुर्वीत' (बृ. उ. 6-4-21) [प्र. 186 द्रष्टव्यम्] 16

130. I 'प्रधानक्षेत्रज्ञपतिर्गुणेशः संसारमोक्षस्थितिबन्धहेतुः' (श्वे. उ. 6-16) 341

II 'प्रधान....गुणेशः' 236

परमात्मा हि, प्रकृति-पुरुषयोः शेषिभूतः, सत्व-रजस्-तमसां नियन्ता, संसारप्रवृत्तेः, तन्मोक्षस्य, संसारानुवृत्तेश्च यथायोग्यं कारणभूतो भवति ॥

131. I प्राज्ञेनात्मनान्वारूढ उत्सर्जन् याति' (बृ. उ. 6-3-35) 341

II 'प्राज्ञेनात्मनान्वारूढः' (बृ. उ. 6-3-35) 158

शकटस्थानीयोऽयं जीवः, सारथिस्थानीयेन सर्वज्ञेन परमात्मना सम्बन्धविशेषं प्राप्तः सन् , शरीरमुत्सृज्य याति ।।

132. I 'प्राज्ञेनात्मना सम्परिष्वक्तः न बाह्यं किञ्चन वेद' (बृ.उ. 6-3-21) 341

II 'प्राज्ञेन .......ष्वक्ताः' 158

स्वस्य अत्यन्तं प्रियेण सर्वज्ञेन परमात्मना सम्यक् संश्लिष्टः अयं जीवात्मा, स्वस्मादितरत् बाह्यमान्तरं वा किमपि नैव जानाति ॥

133. 'प्लवा ह्येते अदृढा यज्ञरूपाः' (मुण्ड.उ. 1-2-7) 7

परमपुरुषाराधनानात्मककेवलयज्ञादिकर्मप्रधानाः पुरुषाः, जीर्णा नौका इव, स्वात्मनः संसारार्णवतारणे असमर्था एव भवन्ति ।।

134. I 'बहु स्यां प्रजायेय' (छां.उ. 6-2-3, तै.उ.आन. 6-2) 114,135,245

II 'बहु स्याम्' ( „ „ ) [प्र. 65 द्रष्टव्यम्] 195

135. 'ब्रह्म दाशा ब्रह्म दासा ब्रह्मेमे कितवा उत ।
स्त्री-पुंसौ ब्रह्मणो जातौ स्त्रियो ब्रह्मोत वा पुमान्' ।। 340
(अथ.सं.उ.)

धीवराः, भृत्याः, द्यूतजीविनश्चेति सर्वेऽपि परं ब्रह्मैव । स्त्रियः तथा पुमांसः इति ये वर्तन्ते ते सर्वेऽपि परब्रह्मणो जातत्वात् , परं ब्रह्मैव ॥

136. 'ब्रह्म वा इदमेक एवाऽग्र आसीत्' (बृ.उ. 3-4-11) 308

सृष्टेः पूर्वम् , इदं ब्रह्मैकमेवासीत् ; विविधनामरूपापन्नं जगत् नासीत् ।।

137. 'ब्रह्मविदाप्नोति परम्' (तै. उ. आन. 1–1) 7,10,131,160,261,336,352

(पू) सत्यज्ञानानन्तरूपं बृहत्तमं वस्तु स्वात्मैक्यविज्ञानेन विजानन् निरतिशयं ब्रह्मभावं प्राप्नोति ।।

(सि) निरतिशयबृहत्त्वाश्रयब्रह्मोपासकश्चेतनः परं ब्रह्मैव सम्पन्नो भवति ।।

138. 'ब्रह्म वेद ब्रह्मैव भवति' (मुण्ड. उ. 3-2-9) 7,32,132,162,326,335,341

(पू) यः 'ब्रह्मैवाहमस्मि' इति स्वात्मनि ब्रह्माभेदं जानाति, सः अन्यां गतिं न गच्छति ; अपि तु देवादीनां सर्वेषामपि आत्मैव भवति ।

(सि) य उपासकः प्रीतिरूपापन्नदर्शनसमानाकारध्यानेन ब्रह्म-साक्षात्करोति, सः आविर्भूतब्राह्मरूपो भवति । असङ्कुचित-ज्ञानाद्याविर्भाववान् भवति ।।

139. 'ब्रह्म सर्वानुभूः' (बृ. उ. 4–5–19) 349

त्रिविधपरिच्छेदरहितं ब्रह्मशब्दवाच्यं वस्तु, असङ्कुचितज्ञानवत् ।

140. 'ब्रह्मेमे द्यावापृथिवी' (अथ. सं. उ.) 340

दिवमारभ्य पृथिव्यन्तं सर्वं जगत्, (ब्रह्मशरीरत्वात्) ब्रह्मैव ।

141. 'ब्राह्मणा विविदिषन्ति' (बृ. उ. 6-4-22) [प्र. 188 द्रष्टव्यम्] 12

142. 'भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद' (छां. उ. 3-18-3, 4,5,6) 16

यः पुरुषः पूर्वोक्तया रीत्या उपास्ते, सः दानादिजन्यया प्रथया, पराक्रमादिजन्येन यशसा च प्रकाशते । तथा वृत्ताध्ययनमृद्धि-रूपेण ब्रह्मवर्चसेन च संपन्नः स्वकार्ये उत्साहवान् भवति ।

143. 'भिद्यते हृदयग्रन्थिः छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे' ॥ 17,32

(मुण्ड.उ. 2-2-9)

(पू) कारणात्मके कार्यात्मके च (परावरे) आत्मनि, 'अहमेवाऽस्मि ब्रह्म' इति शाब्दापरोक्षैक्यज्ञानेन विषयीकृते सति, तद्बुद्ध्याश्रयः अविद्यावासनाप्रचयः समूलं भिद्यते–विनष्टो भवति। अनादेः कालात् प्रवृत्ताः ज्ञेयविषयाः सर्वेऽपि संशयाः, विच्छिन्ना भवन्ति। विद्योत्पत्तेः प्राक्तनानि, तत्सहभावीनि च सर्वाणि कर्माणि, अप्रवृत्त-फलान्येव नश्यन्ति ॥

(सि) उत्कृष्टापकृष्टसमस्तजन्तुशरीरके परमात्मनि प्रत्यक्षतापन्नध्यानगोचरे कृते, मनोगताः ग्रन्थितामापन्ना रागादयो दोषाः, दूरीभवन्ति। मोक्षान्तरायाः सर्वे च संशयाः, (तथा) सुकृत-दुष्कृताख्यानि कर्माणि च, निरवशेषं विनष्टानि भवन्ति ॥

144. 'भीषास्माद्वातः पवते' (तै. उ. आन. 8-1) 130

परमात्मनः शासनातिक्रमभीतः वाय्वादिर्देवतागणः, स्वे स्वे कर्मणि जागरूकः सन् प्रवृत्तो भवति ॥

145. 'भूरि त्वष्टेव राजति' (?) 208

विश्वनिर्माता अयं परमात्मा, सभा-भवनादिनिर्माता वर्धकिरिव प्रकाशते ॥

146. 'भृगुर्वै वारुणिः। वरुणं पितरमुपससार। अधीहि भगवो ब्रह्म' (तै. उ. भृ. 1-1) 273

वरुणपुत्रो भृगुः, स्वजनकं वरुणं ब्रह्मज्ञानार्थमुपसन्नः, 'भगवन्! ब्रह्मोपदेशं कुरु' इति प्रार्थयामास ॥

147. 'भोक्ता भोग्यं प्रेरितारं च मत्वा' (श्वे. उ. 1-12) 237

उपास्यं परमात्मानं, भोक्तृशरीरकत्वेन, भोग्यशरीरकत्वेन, तदुभय-प्रेरकसत्य-ज्ञानादिस्वरूपत्वेन च त्रिधा उपास्य, चेतनः मुक्तो भवति ॥

148. 'मनो ब्रह्मेत्युपासीत' (छां. उ. 3-18-1) 16

मनोरूपमन्तरिन्द्रियं, ब्रह्मबुद्ध्या उपासीत ॥

149. 'मन्तव्यः' (बृ. उ. 6-5-6) [प्र. 32 द्रष्टव्यम्] 16

150. I मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्' (श्वे. उ. 4-10) 30, 126

II 'मायां....विद्यात्' (श्वे. उ. 4-10) 206

(पू.) जगदुपादानतया श्रुतिषु प्रतिपन्ना प्रकृतिः, मायापदवाच्या अविद्यैव, नान्येति जानीयात्। अविद्यायाः सत्ता-स्फूर्त्यादिप्रद एव तु तत्प्रेरयिता महेश्वर इति जानीयात् ॥

(सि) 'त्रिगुणात्मिका प्रकृतिरेव विचित्रार्थसर्गकरत्वात् 'माया' पदवाच्या; तदधिष्ठाता परमात्मैव तु महेश्वरः' इति अवगच्छेत् ॥

151. 'मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति'
(कठ. उ. 4-10 ; बृ. उ. 6-4-19) [प्र. 123. द्रष्टव्यम्] 245

152. I 'य आत्मनि तिष्ठन् आत्मनोऽन्तरो यमात्मा न वेद, यस्यात्मा शरीरं, य आत्मानमन्तरो यमयति, स त आत्माऽन्तर्याम्यमृतः' 227, 239
(बृ. उ. मा.पा. 5-7-26)

II 'य आत्मनि....यमयति' ( „ ) 158

III 'य आत्मनि....तिष्ठन्' ( „ ) 341

यादृश आत्मा, सर्वस्मिन् जीवात्मनि स्थितः, तदन्तर एव सन्नपि

तदवेद्य:, तच्छरीरकश्च सन्, तमन्त:प्रविश्य तत्प्रवृत्ति-निवृत्तिरूप-व्यवहारनियमनं करोति, स एव निरुपाधिकामृतत्वशाली परमात्मा, तवान्तर्यामी ।।

153. 'य आत्मापहतपाप्मा........सोऽन्वेष्टव्य: स विजिज्ञासितव्य:' (छां. उ 8-7-1) 319

य: खलु आत्मा सुकृत-दुष्कृतसंश्लेषरहित:........स एव आत्मा परिमार्गणीय:ध्यातव्यश्च ।।

154. 'य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामांस्तेषां, सर्वेषु लोकेषु कामचारो भवति' (छां. उ. 8-1-6) 160

ये जीवा: एतस्मिन्नेव शरीरे प्रस्तुतं परमात्मानं, तदीयं च गुणजात-मुपास्य, देहादुत्क्रान्ता भवन्ति, तेषाम्, तत्तत्सङ्कल्पानुगुण: लोकेषु सञ्चार:, काम-भोगादिश्च अप्रतिहतो भवति ।।

155. 'य एनं विदुरमृतास्ते भवन्ति' (तै.ना.उ. 1-11, कठ.उ. 6-9) 221

ये तूपासका: ईदृशं परमात्मानं प्रत्यक्षतापन्नेन ध्यानेन गोचरी-कुर्वन्ति, ते संसारमहागर्तादुत्तीर्णा: सन्त:, अपुनरावृत्ति, मुक्ता भवन्ति ।।

156. 'य एषु सुप्तेषु जागर्ति कामंकामं पुरुषो निर्मिमाण: । तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते । तस्मिँल्लोका:श्रिता: सर्वे तदु नात्येति कश्चन ।। (कठ.उ. 5-8) 198

जीवस्य स्वप्नदशायां जीव-तदुपकरणेषु व्यापारादुपरतेषु, स्वीयेन सङ्कल्पविशेषेण जीवार्थं भोग्य-भोगोपकरण-भोगस्थानानि स्वयं निर्माय, अनिद्राणो वर्तते य:पुरुष:, तदेव सर्वप्रकाशकं ब्रह्म, तदेव च अमृतं, तमेव चाधारभूतमाश्रित्य स्थिता: सर्वे लोका: । तदतिवर्तितुं न कस्यापि शक्ति: ।।

157. I 'यतो वा इमानि भूतानि जायन्ते । येन जातानि जीवन्ति । यत्प्रयन्त्यभिसंविशन्ति । तद्विजिज्ञासस्व । तद्ब्रह्म ' 147,273
(तै.उ.भृ. 1–2)

II 'यतो वा........जायन्ते ' (तै.उ.भृ. 1–2) 41,280,308,353

III 'यतो........तानि ' ( ,, ) 286,305

(पू.) प्रत्यक्षादिप्रमाणसिद्धानि ब्रह्मादिस्तम्बान्तानि सर्वाणि भूतानि, उत्पत्ति-स्थिति-लयेषु यदात्मतां नैव जहति, तदेव जिज्ञास्यं ब्रह्मेति जानीहि ।।

(सि) प्रमाणसिद्धानां सर्वेषां भूतानाम्, निमित्तोपादानभूताद्यस्मादेव स्वरूपलाभः, स्वात्मतयावस्थितयद्वस्त्वधीने च प्रवृत्ति-निवृत्ती, कारणावस्थावस्थितिश्च यदाधारा, तदेव उपास्यं ब्रह्म ।।

158. I 'यतो वाचो निवर्तन्ते । अप्राप्य मनसा सह । आनन्दं ब्रह्मणो विद्वान् ' (तै.उ.आन. 9–1) 130

II 'यतो........सह ' (तै.उ.आन. 9–1) 132

यस्मात् ब्रह्मानन्दात्, इयत्तालक्षणं पारमप्राप्य वाङ्मनसे निवर्तेते, तादृशं ब्रह्मानन्दं शुद्धेन मनसा ज्ञात्वाऽवस्थितः उपासकः कदापि नैव भीत्याश्रयो भवति ॥

159. I 'यत्र (वा अ) त्वस्य सर्वमात्मैवाभूत्, तत् केन कं पश्येत् ' 135,341
(बृ.उ. 4–4–14)

II 'यत्र त्वस्य....भूत् ' (बृ.उ. 4-4-14) [प्र. 160 द्रष्टव्यम् ] 246

160. I 'यत्र हि द्वैतमिव भवति....तदितर इतरं पश्यति........ यत्र(वा अ)त्वस्य सर्वमात्मैवाभूत्........तत् केन कं पश्येत् । तत् केन कं विजानीयात् ' (बृ.उ. 4-4-14) 26,245

II 'यत्र........भवति ' (बृ.उ. 4-4-14) 134

(पू.) यदा द्वैतप्रतिभासोऽनुवर्तते, तदा द्रष्टृ-दृश्यभेदः; यदा ब्रह्मात्मैकत्व-

प्रतिपत्त्या मुक्तिः, तदा आत्ममात्रपरिशेषतया, द्रष्टृ-दृश्य-दर्शन-कारणानां ज्ञातृ-ज्ञेय-ज्ञानकारणानां वा मध्ये न किमप्यवशिष्यते ॥

(सि) यस्यामवस्थायां प्रतिपत्तुः वस्तूनां प्रतिपत्तिः परमात्मनः पृथक्तया स्वनिष्ठतयेव वर्तते, तदा परमात्मनः पृथगिव स्थितः, परमात्मनः पृथगिव स्थितं विषयजातं द्रष्टुमर्हति; यदा तु परावरतत्त्वयाथात्म्य-विज्ञानेन सर्वं परमात्मात्मकमेव भासते, तदा को वा स्वनिष्ठतया स्थितः सन् कं वा स्वनिष्ठतया स्थितत्वेन द्रष्टुं ज्ञातुं वा शक्नुयात् ?॥

161. यथाक्रतुरस्मिँल्लोके पुरुषो भवति, तथेतः प्रेत्य भवति' (छां.उ 3–14–1) — 131

उपासकः अस्मिन् शरीरे विद्यमानः उपास्यं वस्तु, यं धर्मं प्रकारीकृत्य उपास्ते, देहादस्माद्विमुक्तोऽपि तद्धर्मप्रकारेणैव तद्वस्त्वनुभवति ॥

162. 'यथा नद्यः स्यन्दमानाः समुद्रे अस्तं गच्छन्ति नाम-रूपे विहाय ।
तथा विद्वान् नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्' ॥ (मुण्ड. उ. 3–29) — 160

यथा स्वस्वोत्पत्तिस्थानेभ्यो निर्गत्य प्रवहन्त्यो नद्यः, महार्णवे मिलन्त्यः, स्वीयानि गङ्गादीनि नामानि शुक्लकृष्णादिरूपाणि च विहाय, महार्णवेन सह एकतामिव भजन्ते ; तथैव निष्पन्नोपासनो ब्रह्मज्ञोऽपि ज्ञानैकाकारेष्वात्मसु मिथो भेदकैः देवदत्तादिनामभिः तत्तदाकृतिभिश्च विदूरः, सर्वातिशायिनं ज्योतिर्मयविग्रहं परमपुरुषं परमसाम्येन भजते ।

163. 'यदग्ने रोहितं रूपं तेजसस्तत्' (छां. उ. 6–4–1) — 195

चक्षुषा दृश्यमानस्य वन्हेः यत् रक्तं रूपं, तत् त्रिवृत्करणात् प्राक्तनस्य तेजसो रूपम् ।

164. 'यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते । अथ सोऽभयं गतो भवति' (तै. उ. आन.7-2) — 32, 136

(पू) अयं मुमुक्षुः अविकारे अशरीरे अत एव निर्विशेषे अनाधारे

सर्वकार्यधर्मविलक्षणे परे ब्रह्मणि निर्भयतामुद्दिश्य ऐक्यबुद्ध्या तन्मात्रपरिशेषतया यदा अवतिष्ठते, तदा सः उद्दिष्टं निर्भयत्वं लभते ।।

(सि) यदाऽयमुपासकः, इन्द्रियाग्राह्ये कर्मायत्तशरीररहिते देवमनुष्यादि-शब्दानिर्देश्ये आधारान्तरशून्ये एतस्मिन् परे ब्रह्मणि संसारकृत-भयविनाशमुद्दिश्य निरन्तरस्मृतिसन्तानरूपां निष्ठां लभते, तदा उद्दिष्टमभयं लभते ।।

165. 'यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते । अथ तस्य भयं भवति' (तै.उ. आन. 7-2) 27, 135

(पू) एष मुमुक्षुः यस्मिन्नेव काले, अद्वितीये ब्रह्मणि सद्वितीयतां कल्पयति, तदैव भेददर्शिनस्तस्य भवभयप्राप्तिर्भवति ।।

(सि) मोक्षार्थोपासक एषः, परमात्मनो ध्यानं यदा किञ्चिदपि वा विच्छेदयति, अनुपदमेव तस्य भीतिर्जायते ।।

166. 'यस्तद्वेद यत् स वेद स मयैतदुक्तः' (छां. उ. 4-1-4,6) 17

स रैक्वः यादृशं वेद्यं जानाति, वेत्ता सर्वोऽपि तदन्तर्गतमेव किंचिज्जानीयात्; तादृशश्च सर्वज्ञो रैक्वः तव मयोपदिष्टः ।।

167. 'यस्य पृथिवी शरीरम्' (बृ. उ. 5-7-7) [प्र. 175 द्रष्टव्यम्] 248

168. 'यस्य मृत्युः शरीरं........यं मृत्युर्न वेद, स एष सर्वभूतान्त-रात्माऽपहतपाप्मा दिव्यो देव एको नारायणः' (सुबा. उ. 7) [प्र. 173 द्रष्टव्यम्] 227

169. 'यस्यात्मा शरीरम्' (बृ. उ. मा. पा. 5-7-26) [प्र. 152 द्रष्टव्यम्] 248

170. I 'यस्यामतं तस्य मतं मतं यस्य न वेद सः ।
अविज्ञातं विजानतां विज्ञातमविजानताम्' ।। (केन.उ. 2-3) 26

II 'यस्यामतं तस्य मतम्' (केन.उ. 2–3) 131,132

(पू.) यस्य ब्रह्मविदः 'ब्रह्म मया अविदितम्' इति ब्रह्मसाक्षात्कारः तेन ब्रह्म सम्यक् ज्ञातम्, यस्य पुनः 'ब्रह्म मया विदितम्' इति ज्ञानं, तेन ब्रह्म सर्वथा नैव ज्ञातम् ॥

(सि) यस्य ब्रह्मविदः, अपरिच्छेद्ये ब्रह्मणि 'ब्रह्म अपरिच्छिन्नम्' इति निश्चयः, तस्यैव ब्रह्म ज्ञातम्; यस्य तु 'ब्रह्म एतावत्' इति निश्चयः, तस्य ब्रह्म नैव ज्ञातम् ॥

171. 'यस्याव्यक्तं शरीरम्....यस्याऽक्षरं शरीरम्....एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः' (सुबा. उ. 7) 248

गुणसाम्यलक्षणम् अव्यक्ताख्यं वस्तु, (तथा) अस्फुटगुणसाम्यावस्थं चेतनसमष्टिगर्भमक्षरपदवाच्यं वस्तु च यस्य आधेयं विधेयं शेषभूतं च, [अवशिष्टं प्र. 173 द्रष्टव्यम्]

172. 'येनेदं सर्वं विजानाति तं केन विजानीयात्' (बृ.उ. 4-4-14) 327

यदाहितशक्तिमन्ति, सर्वविषयकज्ञानजनकानि, इन्द्रियादीनि, तत् परं ब्रह्म ज्ञातुं, किं वा साधनं भवेत्? (अथवा) प्रसन्नेन येन परमात्मना अनुगृहीतः सन् एष चेतनः, ज्ञेयं समस्तं ज्ञातुं शक्नुयात्, तं परमात्मानं कमुपायमवलम्ब्य ज्ञातुं प्रभवेत्? ॥

173. 'योऽक्षरमन्तरे सञ्चरन्, यस्याऽक्षरं शरीरं, यमक्षरं न वेद, यो मृत्युमन्तरे सञ्चरन्, यस्य मृत्युः शरीरम्, यं मृत्युर्न वेद, एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः' (सुबा उ. 7) 239

[अद्यतनोपनिषत्पुस्तकेषु वाक्यक्रमः विपर्यस्तो दृश्यते]

यः परमात्मा अस्फुटगुणसाम्यावस्थे चेतनसमष्टिगर्भे(अक्षरे)

वस्तुनि, (तथा) 'तमोऽपरपर्याये सूक्ष्मावस्थे अचिद्वस्तुनि मृत्यु-पदवाच्ये च अन्तर्नियन्तृतया अवस्थितः, यस्यैतदुभयम् आधेयं विधेयं शेषभूतं च सत्, स्वान्तःस्थितमपि नैव जानीयात्, तादृशः निखिलचराचरान्तर्यामी, अश्लिष्ट सुकृत-दुष्कृतः, दिव्ये परमे व्योम्नि विराजमानः, निस्समाभ्यधिको भगवान् नारायणः ॥

174. I 'यः पृथिवीमन्तरे सञ्चरन्, यस्य पृथिवी शरीरं, यं पृथिवी न वेद' (सुबा. उ. 7) 239

II 'यः पृथिवी....सञ्चरन्' (सुबा. उ. 7) 227

यः परमात्मा अन्तः पृथिव्यां तिष्ठन्, यस्यैव च पृथिवी आधेयत्व-विधेयत्व-शेषत्ववती, यं च स्वान्तरेवाऽवस्थितमपि पृथिवी नैव वेदितुं शक्नोति ॥

175. I यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं, यः पृथिवीमन्तरो यमयति; स त आत्मा अन्तर्याम्यमृतः' (बृ. उ. 5-7-7) 227

II 'यः........यमयति' (बृ. उ. 5-7-7) 238

....[पूर्वेण समानोऽर्थः] यः पृथिवीमन्तःप्रविश्य तत्प्रवृत्तिनिवृत्ति-नियमनं करोति, निरुपाधिकामृतत्वशाली स परमात्मैव तवात्मा ॥

176. 'यः सर्वज्ञः सर्ववित्' (मुण्ड. उ. 1-1-10, 2-2-7) 38,129,224,346

यः पूर्वोक्तलक्षणः परमात्मा अक्षराख्यः, सः सामान्यरूपेण विशेषरूपेण च सर्वं जानाति ॥

177. 'रसो वै सः। रसं ह्येवाऽयं लब्ध्वाऽऽनन्दी भवति' 160
(तै. उ. आन. 7-1)

पूर्वं 'सुकृत'पदव्यपदिष्टं ब्रह्मैव, आनन्दात्मकम्। एतदेव चानन्दात्मकं ब्रह्म प्राप्य, अयं जीवोऽपि आनन्दभाग्भवति ॥

178. 'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्'
(छां. उ. 6-1-4) 27

(पू) मृद्विकारभूतं घट-शरावोदञ्चनादिकं, वाचैव केवलमारभ्यते; नाऽस्ति किञ्चित्तत्र परमार्थभूतम्। अतस्तन्नाममात्रं सत्, व्यावहारिकमेव, विकारजातमूलभूता मृत्तिकैव च, परमार्थभूता ॥

(सि) घट-शरावादिलक्षणो विकारः, तत्तन्नामधेयं च वाक्पूर्वकहानोपादानादिव्यवहारार्थम् आरभ्यते—आलभ्यते, स्पृश्यते मृत्पिण्डेन। मृत्पिण्डमेव च तत्तन्नाम-रूपभाक्। मृत्तिकेत्येव हि तत्सर्वं प्रमाणप्रतिपन्नम् ॥

179. 'वायुश्चान्तरिक्षं चैतदमृतम्' (बृ. उ. 4-3-3) 269

वाय्वन्तरिक्षे, परस्य ब्रह्मणः बहुकालावस्थायिनी अमूर्ते रूपे ॥

180. 'विजानाति' (छां. उ. 8-12-6) [प्र. 9. द्रष्टव्यम्] 16

181. 'विज्ञातमविजानताम्' (केन. उ. 2-3) [प्र. 170. द्रष्टव्यम्] 132

182. I 'विज्ञातारमरे केन विजानीयात्' (बृ. उ. 4-4-14, 6-5-15) 91,133
244

II 'विज्ञातारमरे केन' ( „ ) 87

प्रस्तुतं सर्वज्ञं परमात्मानं, पूर्वोक्तेन ध्यानेन विना, केवलयज्ञ-दानाद्यात्मकेन केनाप्युपायेन नैव ज्ञातुं शक्नुयात् ॥

183. ‘विज्ञानघन एव’ (बृ. उ. 4-4-12) 90

(स्वरूप-गुणाभ्यामपरिच्छेद्यतया प्रस्तुतः परमात्मा) जीवशरीरक एव सन्–जीवद्वारैव, उत्पत्तिविनाशभागिव भवति ॥

184. ‘विज्ञानमानन्दं ब्रह्म’ (बृ. उ. 5-9-28) 33,134

(पू) ब्रह्म विज्ञप्तिस्वरूपम्; आनन्दस्वरूपं च । तद्धि वैषयिकविज्ञानमिव न दुःखानुविद्धम्; अपि तु प्रसन्नं शिवमतुलमनायासं नित्यतृप्तमेकरसं च ॥

(सि) ब्रह्म ज्ञानानन्दस्वरूपं ज्ञानानन्दधर्मकं च ॥

185. ‘विज्ञानं चाऽविज्ञानं च’ (तै. उ. आन. 6-3) 241

ब्रह्मैव स्वशरीरभूतचेतनाचेतननामरूपभाक् ॥

186. I ‘विज्ञाय प्रज्ञां कुर्वीत’ (बृ. उ. 6-4–21) 15, 16, 261

II ‘विज्ञाय’ ( „ ) 16

(मुमुक्षुः पुरुषः) परं ब्रह्म, श्रवण-मननाभ्यां सम्यङ्निश्चित्य, ततः तद्ध्यायेत् ॥

187. ‘विद्यां चाविद्यां च यस्तद्वेदोभयं सह ।
अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते’ ॥ (ईशा. उ. 11) 22

य उपासकः भगवदुपासनात्मिकां विद्यां, तदङ्गत्वेन चोदितकर्मात्मिकामविद्यां च मिथोऽविरुद्धतया अनुष्ठेयं जानाति, सः उक्ताभ्यां विद्याविद्याभ्यां (सम्पन्नपुरुषार्थो भवति) । अविद्याविहितकर्मात्मिकया ज्ञानसङ्कोचलक्षणं मृत्युं दूरीकृत्य, विद्यया चोपासनात्मिकया सर्वदोषातिगम्, अत एवामृतम् उपास्यं ब्रह्म लभते ॥

188. I ' विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन ' (बृ. उ. 6–4–22) 135

II ' विविदिषन्ति ' (बृ. उ. 6-4-22) 10,20

(पू.) त्रैवर्णिकाः, मन्त्र-ब्राह्मणाद्यध्ययनात्मकेन वाग्यज्ञेन (तथा) द्रव्य-यज्ञादिना कायिकेन मानसिकेन च, स्वीयस्य धनादेः सत्पात्र-सात्करणरूपेण दानेन, कामतोऽनशनरूपेण उपवासेन च अनभिसंहितफलेन नित्य-नैमित्तिकाख्यकर्मजातेन, साधनीभूतेन प्रस्तुतौपनिषदपरमपुरुषवेदनविषयिणीं उत्कटामिच्छां सम्पादयन्ति ।।

(सि) [प्र. 73 द्रष्टव्यम् ]

189. 'वेदाहमेतं पुरुषं महान्तम् । आदित्यवर्णं तमसः परस्तात् ।
तमेवं विद्वानमृत इह भवति । नाऽन्यः पन्था विद्यतेऽयनाय' ।। 221
(तै. आर. 3-13-16)

पुरुषसूक्तप्रतिपादितं, सर्वत्र व्याप्तम् , तेजसा सूर्यवर्चसम् , प्रकृतेरूर्ध्वं परमे व्योम्नि विराजमानं, परमपुरुषमहं वेद्मि । एवंरीत्या तस्य परमपुरुषस्योपासकः सन् साक्षात्कर्ता इहैव जन्मनि मुक्तभोग्यं परमात्मानमनुभवति । तादृशानुभवप्राप्तये भगवदुपा-सनादन्य उपायः नैवास्ति ।

190. ' शान्त उपासीत ' (छां. उ. 3-14-1) 21

मुमुक्षुः पुरुषः, राग-द्वेषादिभ्यः आन्तरदोषेभ्यः, (तथा)अन्येभ्यः करणकलेबरव्यापाररूपेभ्यो बाह्यदोषेभ्यश्च निवृत्तः, ब्रह्मोपासनं कुर्यात् ।।

191. I ' शान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वा आत्म-न्येवाऽऽत्मानं पश्येत् ' (बृ. उ. 6-4-23) 10

II ' शान्तो दान्तः' (बृ. उ. 6-4-23) 22

(पू.) एतादृशात्मस्वरूपज्ञः पुरुषः, विरतान्तर्बाह्येन्द्रियव्यापारः एषणात्रय-

निर्मुक्तः निर्द्वन्द्वः, एकाग्रचित्तः, स्वीये कार्य-कारणसङ्घाते एव प्रत्यगात्मानं पश्यति ॥

(सि) श्रवणाद्यधीनपरमात्मयाथात्म्यज्ञानसम्पन्नः उपासकः, नियतेन्द्रियः, निषिद्धकाम्यवर्जितः, क्षमावान्, समाहितान्तःकरणः सन्, स्वात्मनि आत्मान्तर्यामिणं परमात्मानं प्रत्यक्षतापन्नेन ध्यानयोगेन पश्येत् ॥

192. 'श्रुतं ह्येव मे भगवद्दृशेभ्यः, तरति शोकमात्मविदिति सोऽहं भगवः शोचामि, तं मा भगवान् शोकस्य परं पारं तारयतु' (छां.उ. 7-1-3) 326

आत्मज्ञः पुरुषः, शोकादुत्तीर्णो भवतीति, युष्मादृशेभ्यो महद्भ्यः मया पूर्वं श्रुतमासीत् । भोः भगवन्! अहं पुनः शोचन्नेवास्मि ; नोत्तीर्णः । अतश्च मां शोकसागरात्तारय । तारकं चात्मान-मुपदिश ॥

193. I 'श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' (बृ. उ. 6-5-6) 335

II 'श्रोतव्यः' (बृ. उ. 6-5-6) [प्र. 31 द्रष्टव्यम्] 16

194. 'स ईक्षत लोकान्नु सृजा इति' (ऐत. उ. 1-1) 114,129

प्रस्तुतः परमात्मा, 'लोकानां सृष्टिं करवाणि' इति समकल्पयत् ॥

195. 'स उत्तमः पुरुषः....नोपजनं स्मरन्न् इदं शरीरम्' (छां. उ. 8-12-3) 91

मुक्तात्मभिः उपसम्पदनीयः, पुरुषोत्तमपदवाच्यः परमात्मा । तमुपसम्पन्नो जीवः, स्वेन परित्यक्तम् अपुरुषार्थभूतं देहं, मुक्तिदशायां नैव स्मरति ॥

196. 'स एको ब्रह्मण आनन्दः' (तै. उ. आन. 8–4) 134

उपास्यस्य परब्रह्मण आनन्दः, (प्रजापत्यानन्दशतगुणितानन्दो-पलक्षितो) निरवधिकानन्दः ॥

197. I 'स कारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः' (श्वे. उ. 6–9) 236

II 'स कारणं....धिपः' (श्वे.उ. 6-9) 341

परमात्मैव सर्वज्ञानकारणम्, (तथा) इन्द्रियाधिष्ठातुर्जीवस्याप्य-धिष्ठाता । तस्य च कारणभूतः प्रभुश्च नैव कश्चन सम्भावितः ; सर्वकारणत्वात्, सर्वेश्वरत्वाच्च ॥

198. 'स तत्र पर्येति' (छां. उ. 5-12-3)

परमपुरुषस्योपसम्पन्नो जीवः, परिपूर्णतया ब्रह्मानुभवति ॥

199. 'सत्यकामः सत्यसङ्कल्पः (छां.उ. 8-1-4) (प्र. 48.द्रष्टव्यम्) 38,130,244

200. सत्यं चाऽनृतं च सत्यमभवत्' (तै.उ. आन. 6-3) 240

[प्र. 62 द्रष्टव्यम्]

201. 'सत्येन लभ्यः' (मुण्ड. उ. 3-1-5) 22

परमात्मा भूतहितवचनात्मकेन सत्येनैव साक्षात्कार्यः ; न तु असत्यवचनेन ॥

202. I 'सत्यं ज्ञानमनन्तं ब्रह्म' (तै. उ. आन. 1-1) 11, 26, 33, 38, 41, 126, 127, 128, 277, 281, 282, 309, 320, 329, 349

II 'सत्यं ज्ञानम्' ( ,, ) 244

(पू.) 'ब्रह्म' पदवाच्यं (मोक्षार्थं वेदनीयं वस्तु), अनृत-जड-परिच्छिन्नेभ्यो व्यावृत्तम् ॥

(सि) निरुपाधिकसत्तायोगि, नित्यासङ्कुचितज्ञानैकाकारं, त्रिविध-परिच्छेदातीतं च ब्रह्म (यो मुमुक्षुरुपास्ते, सः ब्रह्म तद्गुणांश्चानुभवति)

203. I 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्' (छां. उ. 6-2-1) 11, 25, 41, 240, 248, 278, 308

II 'सदेव.........एकमेव' 128

III 'सदेव.........आसीत्' 41, 125, 320

(पू.) हे सोमार्ह श्वेतकेतो! इदं परिदृश्यमानं जगत्, सृष्टेः प्राक् निर्विशेषं (स्वगत-स्वसजातीय-स्वविजातीय-भेदविदूरं) सत्तामात्रात्मकं वस्त्वेवासीत् (सद्विवर्तरूपमेव सविशेषं जगत्)।

(सि) सोम्य श्वेतकेतो! प्रविभक्तनामरूपतया बहुत्वेन दृश्यमानमिदं जगत्, सृष्टेः प्राक्काले, अविभक्तनामरूपतया एकम्—बहुत्वावस्था-शून्यम्, जगन्निर्माणोपयोगिनिमित्तकारणान्तरशून्यम्, निमित्तो-पादानोभयात्मकं, 'सत्' पदोल्लेख्यकारणवस्त्वात्मनैवासीत्॥

204. 'सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः' 226, 240 (छां. उ. 6-8-4,6)

अचित्संसृष्टं सर्वमपि चेतनजातं सत्पदवाच्यब्रह्माधीनोत्पत्तिमत्, ब्रह्मैककार्यं, ब्रह्मण्येव लीयमानं च वर्तते॥

205. 'स पर्यगाच्छुक्रमकायमव्रणमस्नाविरं शुद्धमपापविद्धम्' 325 (ईशा. उ 8)

सर्वान्तरात्मभूतब्रह्मदर्शी, स्वयंप्रकाशम्, कर्मायत्तशरीररहितम्, तत एव च व्रणस्नाय्वादिदैहिकविकारास्पृष्टम्, अनाघ्राताज्ञानादि-दोषम्, अतएव च तत्कार्यभूतपुण्यापुण्याख्यकर्मानालीढम्, यत् परं ब्रह्म, तत् प्राप्तवान् भवति॥

206. 'समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः ।
जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः ।।'
(श्वे.उ. 4-7, मुण्ड.उ. 3-1-2) 237

अयं जीवात्मा, छेद्यत्वेन रूपेण वृक्षसदृशे एतस्मिन् एकस्मिन्नेव देहे स्वसजातीयेन चेतनान्तरेण ईश्वरेण सह वर्तमानः, स्वभोग्यभूतया अनीश्वरया प्रकृत्या तिरोहितपरमात्मशेषत्वादिस्वस्वरूपः अतएव आरोपितस्वशरीरतादात्म्यः सन्, तत्कृतं दुःखमनुभवति । यदा च धारकत्वादिभिः स्वस्माद्विलक्षणं स्वनियन्तारं प्रीतं परमात्मानमुपास्य तत्प्रीतिविषयतां प्राप्तः, तं तदीयं च महत्त्वं साक्षात्करोति, तदैव शोकातिगः सन् तमेव प्राप्नोति ।।

207. 'स यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एव ;
एवं वा अरेऽयमात्मा अनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एव'
(बृ. उ. 6-5-13) 90

यथैव लवणखण्डः, अन्तर्बहिरवयवेषु अनवशेषेण सर्वांशे रसमय एव नुभूयते, एवमेव परमात्मापि, अनवशेषेण, स्वरूपतो धर्मतश्च ज्ञानमयो यो जीवः तच्छरीरकः ।।

208. 'सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि' (तै.ना.उ. 1-8) 221

कालावयवभूताः सूक्ष्माः कला-काष्ठा-मुहूर्तादयः सर्वेऽपि, विद्युद्वर्ण-दिव्यविग्रहात् परमपुरुषादेव अजायन्त ।।

209. I 'सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत' (छां.उ. 3-14-1) 136

II 'सर्वं....शान्तः' (छां. उ. 3-14-1) 226

III 'सर्वं खल्विदं ब्रह्म' (छां. उ. 3-14-1) 248

परिदृश्यमानं सर्वं जगत्, ब्रह्मायत्तजन्मस्थितिलयत्वात् (तज्जत्वात्,

तज्जत्वात्, तदन्त्वाच्च) ब्रह्मात्मकमेवेति विचिन्त्य, शान्तः सन् (कुत्राऽपि रागद्वेषाद्यकुर्वन्) मोक्षहेतुभूतमुपासनं कुर्यात् ॥

210. 'सर्वं तं परादाद्योऽन्यत्राऽऽत्मनः सर्वं वेद' (बृ. उ. 4-4-6) 246

यश्चेतनः, सर्वमिदं जगत् 'अब्रह्मात्मकं-स्वनिष्ठम्' इति जानीयात्, तं, सर्वमपि जगत् अभिभवेत् ॥

211. 'स स्वराड् भवति' (छां.उ. 7-25-2) 7

'भूम' शब्दवाच्यात्मतत्त्वसाक्षात्कारनिष्ठः उपासकः, अकर्मवश्यो भवति ॥

212. 'सेयं देवतैक्षत' (छां. उ. 6-25-2) 129

'सदेव सोम्येदमग्र आसीत्' इति प्रस्तुतसच्छब्दाभिहिता परा देवता वक्ष्यमाणया रीत्या सङ्कल्पितवती ॥

213. I 'सोऽकामयत । बहु स्यां प्रजायेयेति । स तपोऽतप्यत । स तपस्तप्त्वा । इदं सर्वमसृजत । (तै. उ. आन. 6-2) 240

II 'सोऽकामयत बहु स्याम्' ( " ) 245

पूर्वोक्तः आनन्दमयः परमात्मा, 'अहमेव देव-मनुष्याद्यात्मना बहुरूपो भवेयम्; तदर्थं च आकाशादिव्यष्टि-समष्ट्याख्यचेतना-चेतनरूपेण प्रकर्षेण जातो भवेयम्' इति सङ्कल्प्य, स्रष्टव्यार्था-लोचनरूपं तपः कृत्वा, इदमखिलं जगत् ससर्ज ॥

214. 'सोऽन्वेष्टव्यः स विजिज्ञासितव्यः' (छां.उ. 8-7-1) 15, 261

[प्र. 153. द्रष्टव्यम्]

215. 'सोऽश्नुते सर्वान् कामान् सह । ब्रह्मणा विपश्चिता' 131, 160,
(तै. उ. आन. 1-2) 342

सत्य-ज्ञानानन्तस्वरूपस्य परस्य ब्रह्मणः हृदयगुहानिहितस्य

साक्षात्कर्ता उपासकः, उपासितं परं ब्रह्म, तद्गतान् अनवधिकातिशयासंख्येयकल्याणगुणांश्च दिव्ये धामन्यनुभवति ॥

216. 'स्वाध्यायोऽध्येतव्यः' (तै. आर. 2-15-5, श. ब्रा. 1-5-7) 4, 5

(प्राप्ताधिकारेण त्रैवर्णिकेन पुरुषेण) स्वीयपितृपितामहादिपरम्पराधीनः शाखाविशेषः (साङ्गः सशिरस्कः), गुरुमुखोच्चारणानूच्चारणेनैव सम्पादनीयः ; न पुस्तकपाठादिना ॥

217. I 'हन्ताऽहमिमास्तिस्रो देवता अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि' (छां.उ. 6-3-2) 241

II 'हन्ताऽहमिमास्तिस्रो देवताः' ( ,, ) 114

(सच्छब्दिता परादेवता), 'अहं स्वस्वाभिमानिदेवताधिष्ठितानि तेजो-जल-पृथिव्यात्मकानि त्रीणि भूतानि जीवशरीरकेण मया अनुप्रविष्टानि कृत्वा, नाम-रूपव्याकर्ता भवेयम् ; इदं च हर्षकारणम् इत्यचिन्तयत् ॥

218. 'हृदा मनीषा मनसाऽभिक्लृप्तः' (कठ.उ. 6-9, तै.ना.उ. 1-11) 339

आत्मानात्मविवेचनक्षमबुद्धिसंस्कृतेन विशुद्धेन चेतसा परमात्मा साक्षात्कार्यो भवति ॥



219. 'अक्षय्यं हवै चातुर्मास्ययाजिनः सुकृतं भवति' (आप. श्रौ सू. 2-1-1) 258

चातुर्मास्याख्ययागानुष्ठातुः पुरुषस्य, तद्यागजन्यं फलं, क्षयरहितं स्यात्तु भवति ॥

220. 'अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात्'
(*ब्र. सू. 4-1-16, विवृतौ द्रष्टव्यम्) 20

221. 'अथातो धर्मजिज्ञासा' (पू. मी. सू. 1-1-1) 4
साङ्गसशिरस्कवेदाध्ययनानन्तरं, वेदार्थभूतस्य धर्मस्य आपात-प्रतीतिगोचरत्वाद्धेतोः (अलौकिकश्रेयःसाधनीभूतसिद्ध-साध्यभेद-भिन्नकर्मब्रह्मात्मक) धर्म-सम्बन्धी विचारःकर्तव्यः ॥

222. 'अधिकं तु भेदनिर्देशात्' (ब्र. सू. 2-1-22) 158

223. 'अनावृत्तिः शब्दादनावृत्तिः शब्दात्' (ब्र. सू. 4-4-22) 4

224. 'आत्मेति तूपगच्छन्ति ग्राहयन्ति च' (ब्र. सू. 4-1-3) 34, 235

225. 'आनन्दादयः प्रधानस्य' (ब्र.सू. 3-3-11) 161

226. 'आप्रयाणात्तत्रापि हि दृष्टम्' (ब्र. सू. 4-1-12) 20

227. 'आवृत्तिरसकृदुपदेशात्' (ब्र. सू. 4-1-1) 16

228. 'उभयेऽपि हि भेदेनैनमधीयते' (ब्र. सू. 1-2-21) 158

229. 'कर्तृकर्मणोः कृति' (पा. सू. 2-3-65) 2
कृत्प्रत्ययान्ते धातौ प्रयुज्यमाने, कृदन्तधात्वर्थक्रियाकर्तृकर्मान्यतर-वाचकात् प्रातिपदिकात्, प्रातिपदिकार्थगतकर्तृत्व-कर्मत्वान्यतर-बोधिका षष्ठी विभक्तिर्भवति ॥

230. 'कृद्योगा च षष्ठी समस्यते' (पा. सू. वा. 2-2-8) 3
'कर्तृ-कर्मणोः कृति' इति विहितषष्ठीविभक्त्यन्तं सुबन्तं समर्थसुबन्तं, समर्थेन सुबन्तेन समस्यते ॥

---

* अत्रोदाहृतानां ब्रह्मसूत्राणामर्थविवरणं तु एतत्पुस्तकसंयोजिते ब्रह्मसूत्रविवृतिग्रन्थे द्रष्टव्यम् ॥

231. I 'जगद्व्यापारवर्जं प्रकरणादसंनिहितत्वाच्च' (ब्र. सू. 4-4-17) 159, 342

II 'जगद्व्यापारवर्जम्' ( ,, ) 342

232. 'जन्माद्यस्य यतः' (ब्र. सू. 1-1-2) 283

233. 'ज्योतिष्टोमेन स्वर्गकामो यजेत' (आप. श्रौ. सू. ? ) 37

स्वर्गपदवाच्यामुष्मिकसुखविशेषलिप्सुः अधिकारी, 'ज्योतिष्टोमा' ख्यं यागं कुर्यात् ।।

234. 'ज्ञोऽत एव' (ब्र. सू. 2-3-19) 87, 91, 97

235. 'तत्प्रकृतवचने मयट्' (पा.सू. 5-4-21) 149

प्राचुर्येण प्रस्तुतार्थप्रतिपादकात् प्रथमान्तात् समर्थात्, मयट् प्रत्ययो भवति ।। (अन्नमयो यज्ञः । अन्नं प्रकृतमस्मिन् इति)

236. 'त्र्यात्मकत्वात्तु भूयस्त्वात्' (ब्र. सू. 3-1-2) 196

237. 'दर्शपूर्णमासाभ्याम्' (का. श्रौ. सू. 4-2-47) 247

'स्वर्गकामो यजेत' इति सूत्रशेषः । स्वर्गपदवाच्यसुखविशेष-लिप्सावानधिकारी, 'दर्शपूर्णमास' संज्ञकेन प्रत्येकं यागत्रयघटित-समुदायद्वयात्मकेन यागषट्केन इष्टं सुखविशेषं सम्पादयेत् ।।

238. 'न वियदश्रुतेः' (ब्र. सू. 2-3-1) . 301

239. 'न विलक्षणत्वात्' (ब्र. सू. 2-1-4) 190

240. I 'न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि' (ब्र. सू. 3-2-11) 27

II 'न स्थानतोऽपि' (ब्र. सू. 3-2-11) 137

241. 'नात्मा श्रुतेः' (ब्र. सू. 2-3-18) 87, 97

'तच्छास्त्रैः विप्रतिपिद्धम्। बुद्धे चेत् क्षेमप्रापणमिहैव न दुःखमुपलभेत। एतेन परं व्याख्यातम्'
(आप. ध सू. प्र-2. प-9. ख-21. सू. 13, 14, 15, 16, 17)

वेदाध्ययनतद्विचारादिकं सर्वं वर्जयित्वा, ऐहिकामुष्मिकफलभोगेषु विरक्तः सन् संन्यस्य, आत्मानं, श्रवणेनैव जानीयात्। वाक्यार्थ-ज्ञाने लब्धे च मोक्षप्राप्तिर्भवति, इत्यौडुलोमिमते प्रसक्ते;

उक्तमिदं मतं, कर्मकाण्डार्थविचारविधायिभिः 'परीक्ष्य लोकान्' इत्यादिभिः, मननादिविधायिभिः 'मन्तव्यो निदिध्यासितव्यः' इत्यादिभिश्च प्रबलैः शास्त्रैः पराहतम्। केवलं वाक्यार्थ-ज्ञानमेव यदि मोक्षहेतुः स्यात्; तदा अस्मिन् देह एव क्षुधा तृषादिरूपं दुःखं नानुभवेत्। अनेनोक्तेन, अन्यदप्यौडुलोमिमतं दोषज्ञापनेन निराकृतं भवति। अतः निष्पन्नोपासनस्यैव मोक्ष-लाभः इति सिद्धम्॥

255. 'श्रावण्यां प्रोष्ठपद्यां वाप्युपाकृत्य यथाविधि।
युक्तश्छन्दांस्यधीयीत मासान्विप्रोऽर्धपञ्चमान्॥' (म. स्मृ. 4-95) 5

प्राप्ताध्ययनाधिकारो द्विजः, श्रावणस्य भाद्रपदस्य वा मासस्य पौर्णमास्यां प्राप्तायाम्, विहितया रीत्या उपाकर्म-काण्डव्रतादिकं परिसमाप्य, अवहितमनस्कः सन्, तत आरभ्य सार्धांश्चतुरो मासान् वेदानधीयीत॥

256. 'सन्ध्ये सृष्टिराह हि' (ब्र. सू. 3-2-1) 199

257. 'सम्पद्याविर्भावः स्वेन शब्दात्' (ब्र. सू. 4-4-1) 343

258. 'सर्वापेक्षा च यज्ञादि श्रुतेरश्ववत्' (ब्र. सू. 3-4-26) 9

259. 'सहकारित्वेन च' (ब्र. सू. 3-4-33) 20

260. 'साक्षाद्द्रष्टरि संज्ञायाम्' (पा. सू. 5-2-91) 111

'साक्षात्' इत्येतस्मात् शब्दात्, इन्द्रियतो विषयग्राहिणि पुरुषे बोध्ये, संज्ञायां च गम्यमानायाम्, इनिः प्रत्ययो भवति ॥

261. 'स्वर्गकामो यजेत' (का.श्रौ.सू. 4-2-47) [प्र. 237 द्रष्टव्यम्] 312

262. 'अक्षरं तत् परं ब्रह्म क्षरं सर्वमिदं जगत् ।
एकदेशस्थित(स्येन्दोः)स्याग्नेः ज्योत्स्ना विस्तारिणी यथा ॥
(वि.पु. 1-22-56)

'परस्य ब्रह्मणः शक्तिस्तथेदमखिलं जगत्' ॥ (वि.पु. 1-22-57) 142

पूर्वप्रस्तुतं मुक्तात्मस्वरूपमुत्कृष्टम् 'अक्षर' शब्दाभिधेयम् । इदं च बद्धात्मनः स्वरूपम्, 'क्षर' शब्दवाच्यम् । यत्किञ्चिदेकदेशवर्तिनोऽग्नेः चन्द्रस्य वा प्रभा, यथा बहुदेशव्यापिशक्तिरूपा, तथा चेतनाचेतनात्मकमिदं सर्वं जगत् परस्य ब्रह्मणः सर्वात्मभूतस्य कार्योपयोगि अपृथक्सिद्धं विशेषणम् ॥

263. 'अनात्मन्यात्मबुद्धिर्या' (वि.पु. 6-7-1) [प्र. 348 द्रष्टव्यम्] 116

264. 'अनाशी परमार्थश्च प्राज्ञैरभ्युपगम्यते ।
तत्तु नास्ति न सन्देहो नाशिद्रव्योपपादितम्' ॥
(वि.पु. 2-14-24) 220

'अनश्वर एवार्थः परमार्थः, परिणामिवस्त्वारब्धश्च अपरमार्थः' इति तत्त्वज्ञैरभ्युपगम्यमानत्वात् अस्मिन्नंशे संशयस्य नावकाशः ॥

265. 'अपक्षय-विनाशाभ्यां परिणामर्धिजन्मभिः ।
वर्जितश्शक्यते वक्तुं यः सदाऽस्तीति केवलम्' ॥ 141
(वि.पु. 1-2-11)

परमात्मा हि ! जन्म-तदधीनस्थिति-विपरिणाम-वृद्धि-अपक्षय-विनाशाख्यैः, भावसामान्यगततया उपलभ्यमानैः षड्विधैरपि

| प्र. सं. | प्रमाणानि सविवरणानि | पृ. सं॰ |
|---|---|---|
| | विकारैरसंस्पृष्टः ; अत एव स्वरूपाधीनसत्तामात्राश्रयः इति वक्तुमर्हः ॥ | |
| 266. | 'अविकाराय' (वि.पु. 1–2–1)<br>स्वरूपान्यथाभावात्मकविकारविदूराय परमात्मने नमः ॥ | 150 |
| 267. | I 'अविद्या कर्मसंज्ञाऽन्या तृतीया शक्तिरिष्यते' (वि.पु. 6–7–61) | 157 |
| | II 'अविद्या....ज्ञाऽन्या' ( ,, )<br>'विष्णु' पदवाच्यपरमात्मसम्बन्धिपरापराख्यद्विविधशक्तिविलक्षणा तृतीया शक्तिः, अविद्यापदेन कर्मपदेन च शास्त्रेषु व्यवह्रियते ॥ | 165 |
| 268. | 'आत्मभावं नयत्येनं तद्ब्रह्म ध्यायिनं मुने ।<br>विकार्यमात्मनः शक्त्या लोहमाकर्षको यथा' ॥ (वि.पु. 6–7–30)<br>हे मुने ! उपासकेन नैरन्तर्येण चिन्तितं परं ब्रह्म, निष्पन्नोपासनं चेतनम्, आविर्भूतब्राह्मभावं करोति ; यथा हि ! अग्निः, स्वनिष्टप्तं सुवर्णं, स्वीयया शक्त्या आविर्भूतस्वसमानवर्णयुक्तं करोति, तद्वत् ॥ | 159 |
| 269. | 'आब्रह्मस्तम्बपर्यन्ता जगदन्तर्व्यवस्थिताः ।<br>प्राणिनः कर्मजनितसंसारवशवर्तिनः' ॥ (भ. पु.वि.ध. 104–23)<br>चतुर्मुखप्रभृतितृणपर्यन्ताः, विकारिवस्त्वन्तर्गताः सर्वेऽपि जन्तवः, कर्मायत्तसंसाराख्यजालनियन्त्रितस्वभावा एव भवन्ति ॥ | 146 |
| 270. | 'इतिहास-पुराणाभ्यां वेदं समुपबृंहयेत् ।<br>बिभेत्यल्प-श्रुताद्वेदो मामयं प्रतरिष्यति ॥ (म.भा.आ.प. 1–273)<br>तत्त्व-हित-पुरुषार्थविदकत्वेन वेदपदाभिधेयं शास्त्रम्, रामायणादिना इतिहासेन, वैष्णवादिना पुराणेन च, स्फुटतयानिर्णीतार्थं कुर्यात् ; यतो हि ! अबहुश्रुतं पुरुषं दृष्ट्वा, 'अयं मां विपर्यस्तार्थकं करोति' इति, भीतिमद्भवति वेदाख्यं शास्त्रम् ॥ | 148 |

61

271. 'इयाज सोऽपि सुबहून् यज्ञान् ज्ञानव्यपाश्रयः ।
ब्रह्मविद्यामधिष्ठाय तर्तुं मृत्युमविद्यया' ।। (वि.पु. 6-6-12) 23

राजा केशिध्वजोऽपि, पूर्वम् आगमजन्यं ज्ञानमाश्रित्य स्थितः, अनन्तरं मोक्षसाधनतया वेदान्तविहितं 'ब्रह्मविद्या'पदवाच्यमुपासनमवलम्ब्य, ततः 'मृत्यु'पदाभिधेयं प्राक्तनं कर्म निर्मूलयितुम्, विद्याङ्गम् 'अविद्या' पदवाच्यं विविधं यज्ञादिकर्म, अनुष्ठितवान् ॥

272. 'एकस्वरूपभेदस्तु बाह्यकर्मवृतिप्रजः ।
देतादि भेदेऽपध्वस्ते ना(स्त्येवाव)स्त्यनावरणो हि सः' ।।
(वि. पु. 2-14-33) 164

ज्ञानैकाकारात्मस्वरूपस्वभावबहिर्भूतकर्मवेष्टननिबन्धनः, आत्मगतो देवादिरूपो भेदः, निमित्तभूते कर्मणि विनष्टे सति, नैवावशिष्यते ; औपाधिकस्य, उपाधेरपगमे अनवस्थानात् ॥

273. 'एतत्तु यत्' (वि.पु. 2-12-45) [प्र. 352 द्रष्टव्यम्] 217

274. 'एवमेष महाशब्दो मैत्रेय! भगवानिति ।
परमब्रह्मभूतस्य वासुदेवस्य नान्यगः' ।। (वि.पु. 6-5-70) 140

हे मैत्रेय! 'भगवान्' इत्ययं उत्कृष्टः शब्दः, उक्तावयवार्थयोगेन बृहत्त्व-बृंहणत्ववतः परस्य ब्रह्मणो वासुदेवस्यैव वाचकत्वात्, अन्यवाची नैव भवितुमर्हति ॥

275. 'एवं प्रकारममलं नित्यं व्यापकमक्षयम् ।
समस्तहेयरहितं विष्ण्वाख्यं परमं पदम्' ।। (वि.पु. 1-22-53) 140

मुक्तात्मवर्तित्वेन पूर्वमुक्ताः ये ये प्रकारविशेषाः तद्विशिष्टम्, सर्वहेयप्रतिभटम्, शाश्वतं, सर्वत्र पूर्णं, स्वरूपतो धर्मतश्च अविकारि, अखिलहेयविदूरम्, 'विष्णु'संज्ञकं भगवत्स्वरूपं चेतनानां परमप्राप्यम् ।।

276. 'ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः ।
ज्ञान-वैराग्ययोश्चैव षण्णां भग इतीरणा ' ।। (वि.पु. 6-5-74) 139

निरवधिकानां षड्गुणानाम् , (ऐश्वर्य-पराक्रम-कीर्ति-सम्पत्-ज्ञान-वैराग्यरूपाणाम् ) एकत्रैव अनुपरोधेन मिलितानां, 'भग 'शब्देन प्रतिपादनं शास्त्रेषु दृष्टम् ।।

277. 'क्षेत्रज्ञः करणी, ज्ञानं करणं तस्य वै द्विज ।
निष्पाद्य मुक्तिकार्यं हि कृतकृत्यं निवर्तयेत् ' ।। ((वि.पु. 6-7-94) 163

चेतनः, क्षेत्रपदवाच्यानादिमायातिरोहितस्वस्वरूपः सन् यावत्पर्यन्तं क्षेत्रज्ञावस्थः, तावत्कालम् , उपासनात्मकस्यमोक्षसाधनास्य आश्रय एव वर्तेत । तच्च साधनं, मुक्तिरूपं परमपुरुषार्थम् अस्य सम्पाद्य, स्वयं निवृत्तं भवति ।।

278. 'चतुर्विधोऽपि भेदोऽयं मिथ्याज्ञाननिबन्धनः' (वि.ध. 100–2।) 164

क्षेत्रज्ञगतः, सुर-नर-तिर्यक्-स्थावरात्मकः चतुष्प्रकारोऽपि, ज्ञानाकारात् परमात्मनो भेदः, आत्मस्वरूपविषयकभ्रान्तिज्ञानकृतः ; न तु स्वाभाविकः ।।

279. I 'जगच्च सः ' (वि.पु. 1-1-31) [प्र. 313 द्रष्टव्यम्] I, II, III 149

IV „ ( „ ) 150

280. 'जगतामुपकाराय न सा कर्मनिमित्तजा ।
चेष्टा तस्याप्रमेयस्य व्यापिन्यव्याहतात्मिका ' ।। 140
(वि पु. 6-7-72)

भगवतो देवाद्याकारेणाविर्भावरूपा लोकक्षेमार्था क्रिया, न कर्मपरवशा ; किन्तु अचिन्त्यशक्तेस्तस्य तत्तद्देश-कालाद्यनुगुणव्याप्तिमती अकुण्ठितस्वसङ्कल्पायत्ता ।।

281. 'ज्योतींपि विष्णुः' (वि.पु. 2-12-38) 209, 212, 220

हे विप्रोत्तम ! आदित्यादिज्योतींषि, भूरादयो लोकाः, तथा गिरिनद्यादीनि च भावाभावात्मकानि यानि यानि, तानि सर्वाण्यपि विष्ण्वात्मकान्येव ।।

282. 'ज्ञान-शक्ति बलैश्वर्य-वीर्य-तेजांस्यशेषतः ।
भगवच्छब्दवाच्यानि विना हेयैर्गुणादिभिः' ।। (वि.पु. 6-5-79) 140

त्याज्यैः गुण-तत्कृतक्लेशादिभिः साकम् असहभावीनि, ज्ञानादीनि समस्तान्येकत्र विद्यन्ते चेत् ! तादृशः तेषामेक आश्रय एव 'भगवान्' इति शब्दस्य मुख्योऽर्थः ।।

283. I 'ज्ञानस्वरूपमखिलं जगदेतदबुद्धयः ।
अर्थस्वरूपं पश्यन्तो भ्राम्यन्ते मोहसंप्लवे' ।। (वि.पु. 1–4–40) 27

II 'ज्ञानस्वरूपमखिलम्' ( ,, ) 153

III 'ज्ञानस्वरूपम्' ( ,, ) 146

(पू.) अविद्यानष्टदृष्टयो जनाः, वस्तुतो ज्ञानमात्रमिदं विश्वं जडवस्त्वात्मना भावयन्तः संसारार्णवे अन्तर्भ्रमन्ति ।।

(सि) चेतनजातं ज्ञानैकाकारतया शास्त्रसिद्धमपि, अविवेकिनः देवमनुष्याद्यर्थाकारेण भ्रान्त्या पश्यन्ति, तेन च संसारनिमग्ना भवन्ति ।।

284. I 'ज्ञानस्वरूपमत्यन्तनिर्मलं परमार्थतः ।
तमेवार्थस्वरूपेण भ्रान्तिदर्शनतः स्थितम्' ।। (वि.पु. 1–2–6) 27

II 'ज्ञानस्वरूपम्' ( ,, ) 157

(पू.) ज्ञातृ-ज्ञेयभावाभावात् ज्ञानमात्रस्वरूपं, परमार्थतो नित्यास्पृष्टाविद्यादिदोषम्, अविद्याकृतया भ्रान्त्या देव-मनुष्यादिपिण्डरूपेणाध्यस्तम्, आत्मस्वरूपमीश्वरं (प्रणम्य) ।।

(सि) वस्तुतो नित्यनिर्मलज्ञानैकाकारजीवशरीरकं, (तथा) कर्मवशात्, आत्मस्वरूपबहिर्भूतदेवाद्याकारवत्तया भ्रान्तिविषयीकृतजीवशरीरकं च परमात्मानं विष्णुं सर्वनियन्तारं (प्रणम्य) ॥

285. I 'ज्ञानस्वरूपो भगवान्यतोऽसावशेषमूर्तिर्न तु वस्तुभूतः ।
ततो हि शैलाब्धिधरादिभेदान् जानीहि विज्ञानविजृम्भितानि' ॥ 31
(वि.पु. 2-12-39)

II 'ज्ञानस्व....यतोऽसौ' (वि.पु. 2-12-39) 209, 212

(पू) ज्ञानात्मना एक एव सन्नपि, इन्द्रियागम्योऽपि, सर्वत्वेन भ्रान्त्या-गृह्यमाणः, अयं परमात्मा यतो न ज्ञेयस्वरूपः ; अत एव गिरि-वारिधि-पृथिव्यादिकान् विशेषान् तस्मिन्नध्यस्तान् आविद्यकान् जानीहि !

(सि) अखिलक्षेत्रज्ञात्मनाऽवस्थितस्य परमात्मनो वास्तविकं रूपं, ज्ञानमेव ; न तु देव-मनुष्यादिकं रूपम् । अतः अचिद्रूपशैलाब्ध्यादयो भेदाः, ज्ञानाकारस्य जीवात्मनः, स्वात्मनि देवाद्याकारेण वैविध्यानुसन्धानमूलकर्मकल्पिताः इत्यवधारय ॥

286. I 'ज्ञानं विशुद्धं विमलं विशोकमशेषलोभादिनिरस्तसङ्गम् ।
एकं सदैकं परमः परेशः स वासुदेवो न यतोऽन्यदस्ति' ॥ 31
(वि. पु 2-12-44)

II 'ज्ञान विशुद्धम्' (वि.पु. 2-12-44) 210, 216

(पू) 'वासुदेवः, परमात्मा, परमेश्वरः' इत्यादिशब्दैर्वाच्यं वस्तु, अविद्योज्झितम्, तन्मूलभूतकर्मरहितम्, तत्फलभूतशोकलोभादि-विदूरम्, निर्विकारम्, 'असङ्गो ह्ययं पुरुषः' इति श्रुतिपन्नं केवलं ज्ञानमेव यतः, अतः ततो भिन्नं किमपि नास्त्येव ॥

(सि) ज्ञानैकाकारमात्मस्वरूपं कर्मरहितं, प्रकृत्यसंस्पृष्टम्, तत एव च तत्कृतशोक-लोभ-मोहादिसमस्तहेयगुणासङ्गि, वृद्धिक्षयविदूरतया एकम्, ततश्च सततैकरूपम् । तच्च वासुदेवस्य परमात्मनः

शरीरभूतत्वात् वासुदेवात्मकमिति हेतोः, सदा 'अस्ति' शब्दवाच्यम् । ततोऽन्यत् अचिद्रूपं तु, सततपरिणामितया एतद्विपरीतमिति, नाशगर्भत्वात् सदा 'नास्ति' शब्दाभिधेयमेव ॥

287. 'तत्याज भेदं परमार्थदृष्टिः' (वि.पु. 2-16-24) [प्र. 360 द्रष्टव्यम्] 156

288. 'तत्र पूज्यपदार्थोक्तिपरिभाषासमन्वितः ।
शब्दोऽयं नोपचारेण ह्यन्यत्र ह्युपचारतः' ॥ (वि.पु. 6-5-77) 140

'भगवान्' इत्ययं शब्दः, यौगिक्या रूढ्या च वृत्त्या, निरवधिकपूज्यतावति वासुदेवे परमात्मनि मुख्यवृत्तः; तद्भिन्ने जीवादौ प्रयुज्यमानश्चेत् अमुख्यवृत्तः ॥

289. 'तत्सर्वं वै हरेस्तनुः' (वि.पु. 1-22-38) 212

तत्र तत्र यस्यकस्यचिदर्थस्य उत्पत्तौ निमित्ततया उपलभ्यमानं सर्वमपि वस्तुजातम्, परमात्मनो हरेः अधिष्ठानं सत् शरीरभूतमेवेति, तच्छरीरकः परमात्मैव निमित्तभूतः ॥

290. 'तदेतदक्षयं नित्यं जगन्मुनिवराखिलम् ।
आविर्भाव-तिरोभाव-जन्म-नाशविकल्पवत्' ॥ (वि.पु. 1-22-60) 143

हे मुनिवर ! भगवच्छक्तिभूतं जीवाख्यं तत्त्वम्, अनवधिकसृष्टिपरम्परायामपि अन्यूनं, (तथा) प्रवाहतो नित्यमपि । अतः सर्वं जगत्, सङ्कोच-विकासात्मकोत्पत्तिविनाशकृतवैविध्यवत् ॥

291. 'तदेव सर्वमेवैतद्व्यक्ताव्यक्तस्वरूपवत् ।
तथा पुरुषरूपेण कालरूपेण च स्थितम्' ॥ (वि.पु. 1-1-14) 141

स्थूल-सूक्ष्माचेतनात्मकं प्रमाणप्रतिपन्नं सर्वमपि, पूर्वोक्तपरब्रह्मशरीरभूतमेवेति, सर्वं ब्रह्मैव । तथैव तद्ब्रह्म, समष्टि-व्यष्टि जीवात्मस्वरूपेण कालात्मना च स्थितमिति, सर्वमपि ब्रह्मैव ॥

292. ' तद्ब्रह्म परमं नित्यमजमक्षरमव्ययम् ।
एकस्वरूपं च सदा हेयाभावच्च निर्मलम् ' ।। (वि.पु. 1-2-13) 141

तत् वासुदेवाख्यं परं ब्रह्म, जन्म-मृतिविदूरम् , अत एव परिणाम-वृद्ध्याविकारशून्यम् , स्वरूपविपर्यासाभाववत् , कालपरिच्छिन्नम्[1] कामादिना अष्टविधेन, सत्त्वादिना त्रिविधेन च मलेन रहितम् ।।

293. ' तद्भाव भावमापन्नस्तदाऽसौ परमात्मना ।
भवत्यभेदी भेदश्च तस्याज्ञानकृतो भवेत् ' ।। (वि.पु. 6-7-95) 163

असावुपासकः, यदा प्रक्षीणाशेषभावनत्वात्मकं ब्राह्मं स्वभावं ब्रह्म-ध्यानबलेन प्राप्नोति, तदा ज्ञानैकाकारस्वरूपं ब्रह्माभेदं च सम्पन्नो भवति । अतः चेतने, तद्विलक्षणो यः देवत्वादिराकारः भेद-पदवाच्यः, सः कर्मरूपाज्ञानमूल एव ; न स्वरूपगतः ॥

294. ' तया तिरोहितत्वाच्च शक्तिः क्षेत्रज्ञसंज्ञिता ।
सर्वभूतेषु भूपाल ! तारतम्येन वर्तते ' ।। (वि.पु. 6-7-63) 142

हे राजन् ! अविद्याख्यया तृतीयया विष्णुशक्त्या आवृतत्वादेव, जीवात्मरूपा विष्णुशक्तिः ब्रह्मादिस्तम्बान्तेषु तेषु तेषु, न्यूनादिक-भावापन्नज्ञानानन्दादि युक्ता सती अनतिष्ठते ॥

295. ' तयोः सैव पृथग्भावकारणं संश्रयस्य च ' (वि.पु. 2-7-30) 142

प्रकृति-पुरुषयोः 'संश्रय' पदवाच्यं बन्धं प्रति, 'पृथग्भाव' पदवाच्यं मोक्षं प्रति च, विष्णुगता सङ्कल्पाख्या शक्तिरेव कारणतया वर्तते ॥

296. ' तवैष महिमा येन व्याप्तमेतच्चराचरम् ' (वि.पु.वि.ध. 1-4-38) 152

हे प्रभो ! जङ्गम-स्थावरात्मकमिदं विश्वम् , त्वया अविभागेनान्त-र्बहिश्च सम्बद्धम् इति यदास्ति, तत् तवासदृशं माहात्म्यमेव ॥

---

1 कामादयः : ८. काम-क्रोध-मोह-हर्ष-मान-मद-मति-विषादाः । सत्त्वादयः ३. सत्त्वं, रजः, तमः ।

297. ‘तस्मात्तदमलं ब्रह्म निसर्गादेव बोधवत्’ (भ.पु.वि.ध. 104–26) 146

बद्ध-मुक्तात्मकानां जीवानां ध्येयत्वायोगात्, स्वाभाविकज्ञान-प्रकाशवत्, अखिलहेय-प्रत्यनीकं, परं ब्रह्मैव, शुभाश्रयमिति, तदेव ध्येयम् ॥

298. I ‘तस्मान्नविज्ञानमृतेऽस्ति किञ्चित् क्वचित् कदाचिद्द्विज वस्तुजातम् ।
विज्ञानमेकं निजकर्मभेदविभिन्नचित्तैर्बहुधाभ्युपेतम् ॥ 31
(वि. पु. 2-12-43)

II ‘तस्मान्न विज्ञानमृते’ (वि.पु. 2-12-43) 210, 215

(पू) हे विप्र ! उक्तात् कारणात्, निर्विशेषचिन्मात्रं ब्रह्म विना, कस्मिन्नपि काले, किमपि वा वस्तु, नैव विद्यते । अद्वितीयं चिन्मात्रमेव च, तत्तज्जीवीयकर्मविशेषौपाधिकभेदग्राहिचित्तबलेन तैस्तैः, वैविध्ययुक्ततया गृह्यते ; न परमार्थतः ॥

(सि) आत्मा हि जीवः, सर्वदा सर्वत्र ज्ञानमात्रस्वरूपत्वेन देव-मनुष्यादि-रूपदैहिकभेदप्रत्यनीकस्वरूपोऽपि, देवाद्याकारशरीरप्रवेशहेतुभूतकर्म-विशेषायत्तवैषम्यवता चित्तेन, तैस्तैः, वैविध्यवत्तया भाव्यते ; न तु आत्मासु ज्ञानातिरिक्त आकारोऽस्ति ॥

299. I ‘तस्यात्म-परदेहेषु सतोऽप्येकमयं हि यत् ।
विज्ञानं परमार्थो हि द्वैतिनोऽतथ्य दर्शिनः’॥ (वि. पु. 2-14-31) 28

II ‘तस्यात्म....मयम्’ ( „ ) 154

III ‘तस्यात्म....सतोऽपि’ ( „ ) 28

(पू) सत्तामात्रस्य परमात्मनः स्वरूपम्, सर्वत्र तत्तद्देहविशेषे अहङ्कार-विशेषावच्छिन्नमपि, पारमार्थिकं स्वरूपं केवलं ज्ञानमात्रमेव अनध्यस्तम्, अतो भेददर्शिनो जनाः, अपरमार्थग्राहिण एव ॥

(सि) स्वदेहे परदेहे वा अधिष्ठातृतया वर्तमानस्य सर्वस्यापि जीवात्मनः, स्वरूपतोगुणतश्च ज्ञानैकाकारत्वमेव, अविपर्यस्तं स्वरूपम्; ईदृशे आत्मस्वरूपे देवाद्याकारताग्राहिणः भ्रान्ताः ॥

300. 'तानि सर्वाणि तद्वपुः' (वि.पु. 1-22-86) 212

जगद्गतानि मूर्तामूर्तात्मकानि सर्वाण्यपि वस्तूनि, परमात्मशरीरभूतान्येव, न अतथाविधानि ॥

301. 'तेजोबलैश्वर्यमहावबोधसुवीर्यशक्त्यादिगुणैकराशिः ।
परः पराणां सकला न यत्र क्लेशादयः सन्ति परावरेशे' ॥ 139
(वि पु. 6-5-85)

यस्मिन् परमात्मनि सकलजगतामीश्वरे, क्लेशकर्मविपाकाशयाख्याः ये केऽपि दोषाः नैव सन्ति, सः, तेजोबलादिनां निरवधिकानां महागुणानां वारिधिरिव एकैक आश्रयोऽस्ति; तथा सर्वातिशायी च ॥

302. 'तेन माया स सहस्रं तत् शम्बरस्याशुगामिना ।
बालस्य रक्षता देहमैकैकश्येन सूदितम्' ॥ (वि.पु. 1-19-20) 206

शिशोः प्रह्लादस्य देहरक्षणे प्रवृत्तेन, भगवतो महाविष्णोः सुदर्शनचक्रेण, शीघ्रगामिना सता, शम्बरासुरप्रयुक्तम् असङ्ख्यं मायाजालम्, एकैकशो निरवशेषितम् ॥

303. 'द्वितीयं विष्णुसंज्ञस्य योगिध्येयं(महामते) परं पदम्' 145
(वि.पु. 6-7-69)

विष्ण्वाख्यस्य भगवतः ये द्वे रूपे पूर्वमुक्ते; तयोर्द्वितीयम् अमूर्तं मुक्तात्मस्वरूपं, प्राप्यं च उत्कृष्टम् । निष्पन्नयोगानां ध्यानेन चिन्तयितुमर्हं च ॥

304. 'द्वे रूपे ब्रह्मणस्तस्य मूर्तं चामूर्तमेव च ।
क्षराक्षरस्वरूपे ते सर्वभूतेषु च स्थिते' ।। (वि.पु. 1–22–55) 142

सशरीरं ब्रह्मादिजीवजातं, अशरीरं च मुक्तात्मस्वरूपमेतदुभयं, परस्य ब्रह्मणो विष्णोः शरीरभूतमेव । तत्राद्यं ज्ञानसङ्कोचात् क्षरम्, द्वितीयं च तदभावादक्षरम् । द्विविधमप्यात्मस्वरूपं सर्वभूतव्यापनक्षमम् ।।

305. 'न तद्योगयुजा शक्यं नृप चिन्तयितुं यतः' (वि.पु. 6–7–55) 145

हे राजन् ! पूर्वमुक्तं यत् भगवत्स्वरूपं प्रत्यस्तमितभेदमित्यादि, तत् प्रक्रान्तयोगेन (अपरिपक्वयोगेन) पुरुषेण ध्यातुमशक्यम्; (अतोऽन्यदेवं ध्यानार्हं शुभाश्रयस्वरूपं योगोपक्रमे ध्येयं भवति) ।।

306. 'नानावीर्याः पृथग्भूतास्ततस्ते संहतिं विना ।
नाऽशक्नुवन् प्रजाः स्रष्टुमसमागम्य कृत्स्नशः' ।। 195
(वि.पु. 1–2–51)

मिथो विभिन्नस्वभावाः, प्रत्येकं वर्तमानाः महदादयोऽर्थाः, पृथक्-स्थितिप्रतिपत्त्यनर्हसर्वांशसंश्लेषमप्राप्य, अमिलिताः सन्तः, सृज्यं जगज्जनयितुमसमर्था अभवन् ।।

307. 'निर्गुणस्याप्रमेयस्य शुद्धस्याप्यमलात्मनः ।
कथं सर्गादिकर्तृत्वं ब्रह्मणोऽभ्युपगम्यते' ।। (वि.पु. 1–3–1) 151

रागादिभिर्गुणैरसंपृक्तस्य, मानातीतस्वरूपस्य, कर्माद्युपाध्यसङ्गिनः, परमात्मनः, कर्तृत्वेन लोकावगतविलक्षणत्वात्, सृष्ट्यादिकार्य-निर्वाहकत्वं कथं संमन्तुं शक्येत ? ।।

308. 'परमात्मा च सर्वेषामाधारः परमेश्वरः ।
विष्णुनामा स वेदेषु वेदान्तेषु च गीयते' ।। (वि.पु. 6-4-40) 141

स एव परमात्मा, स्वायत्तनिखिलचेतनाचेतनस्वरूप-स्थिति-प्रवृत्ति-

भेदः, निःसमाभ्यधिकः, सर्वनियन्ता, वेद-वेदान्तवेद्यः, विष्णुनाम्ना प्रथितः ॥

309. ‘परमात्मात्मनोर्योगः परमार्थ इतीष्यते ।
मिथ्यैं तत् ; अन्यद्रव्यं हि! नैति तद्द्रव्यतां यतः’ ॥ 159
(वि.पु. 2–14–27)

जीव-परमात्मनोः ‘तादात्म्य’ पदवाच्यो योगः, कैश्चिदभ्युपगम्यते । सः नैव समञ्जसः ; यतः स्वरूपतो भिन्नं द्रव्यद्वयं, कथंचिदपि नैव निरस्तभेदं भवितुं शक्नुयात् ।

310. I ‘परमार्थस्त्वमेवैको नान्योऽस्ति जगतः पते’ (वि.पु. 1–4–38) 27
II ‘पर....वैकः’ ( ,, ) 152

(पू) हे प्रपञ्चातीत! परमात्मन्! अशेषविशेषप्रत्यनीकस्त्वमेक एव, सत्यरूपः ; इतरः सर्वोऽपि मिथ्यैव ॥

(सि) सर्वेश्वर! महावराह! त्वमेक एव अपरिच्छिन्नसत्तावान् सर्वात्मभूतः, त्वदात्मकत्वरहितं जगति नैवविद्यते ॥

311. ‘परः पराणां परमः परमात्माऽऽत्मसंस्थितः ।
रूप-वर्णादिनिर्देशविशेषणविवर्जितः’ ॥ (वि.पु. 1–2–19) 141

स्वरूप-रूप-गुणविभवैः सर्वातिशायी, स्वं प्रति नियन्त्रन्तररहितः, स्वयं च सर्वनियन्ता, निराधारः स्वयं सर्वाधारः, परमात्मा, काल्पनिकैः जाति-वर्ण-क्रिया-संज्ञाभिः वर्जितः ॥

312. I ‘परः पराणां सकला न यत्र क्लेशादयः सन्ति परावरेशे’ 157
(वि.पु. 6–5–85)
II ‘परः पराणाम्’ [प्र. 301 द्रष्टव्यम्] ( ,, ) 150

313. पश्चादुद्भूतबोधाश्च ध्याने नैवोपकारकाः ।
नैसर्गिको न वै बोधः तेषामप्यन्यतो यतः’ ॥ (भ.पु.वि.ध. 104-25) 146

मुक्तिसिद्ध्यनन्तरकाले, भगवत्कृपया असङ्कुचितज्ञानतां प्राप्ताः,

मुक्तात्मानोऽपि स्व ध्यायिनां मोक्षप्रदा न भवितुमर्हन्ति ; यतस्तेषां ज्ञानम् ईश्वरकृपायत्तं सत् , सावधिकमेव ; न सहजम् ॥

314. 'पिण्डः पृथग्यतः पुंसः शिरः-पाण्यादिलक्षणः ' (वि.पु. 2-13-89) 156

देहिनः, शिरो-हस्ताद्यात्मकः 'पिण्ड' पदवाच्यः, सङ्घातः स्वावयवभूतशिरःकरादिभिः पृथक्त्वसाधकैः पृथक्त्वं प्राप्त इति, कस्मिन्नवयवे अहम्बुद्धिः विवेकिना कार्यः ? दुर्वचं तत् ॥

315. 'प्रकृतिर्या मयाऽऽख्याता व्यक्ताव्यक्तस्वरूपिणी । पुरुषश्चाप्युभावेतौ लीयेते परमात्मनि ' ॥ (वि.पु. 6-4-39) 141

हे मैत्रेय ! स्थूल-सूक्ष्मात्मिका 'तम 'शब्दाभिधेया प्रकृतिरुक्ता खलु ! तथा पुरुषोऽपि समष्टिव्यष्ट्यात्मक उपदिष्टः । तावुभावपि प्रलयावस्थायां परे ब्रह्मणि अविभक्तावस्थां प्राप्स्यतः ॥

316. I 'प्रत्यस्तमितभेदं यत् सत्तामात्रमगोचरम् । वचसामात्मसंवेद्यं तज्ज्ञानं ब्रह्मसंज्ञितम् ' ॥ (वि.पु. 6–7–53) 27

II 'प्रत्यस्तमितभेदम् ' ( „ ) 143, 144

(पू.) अशेषविशेषप्रत्यनीकं, केवलम् अस्तीत्येवोपलब्धव्यम् , निर्विशेषतया, विशेषग्राहिशब्दावेद्यम् ; चिन्मात्रं च यत् प्रमाणैरवधारितं तदेव, संज्ञामात्रभूत 'ब्रह्म' पदाभिधेयम् ॥

(सि) अशरीरत्वात् देवत्वादिविशेषरहितम् , अत एव च निर्विकारम्, सदा सत्यम् , वाङ्मनसापरिच्छेद्यस्वरूप-स्वभावम् , इतरानपेक्षस्वप्रकाशदिव्यतेजोमयविग्रहम् , निरवधिकातिशयं ज्ञानरूपं ज्ञानधर्मकं च सत् ब्रह्मपदाभिधेयं विष्ण्वाख्यं वस्तु ॥

317. 'प्रधानं च पुमांश्चैव सर्वभूतात्मभूतया । विष्णुशक्त्या महाबुद्धे वृतौ संश्रयधर्मिणौ ' ॥ (वि.पु. 2-7-29) 142

महामते मैत्रेय ! मिथः संश्लिष्टस्वभावौ प्रकृति-पुरुषौ, सङ्कल्पात्मिकया निखिलचराचरव्यापिन्या महाविष्णोः शक्त्या स्वायत्तीकृतौ ॥

318. ' प्रमादं वै मृत्युमहं ब्रवीमि सदाऽप्रमादममृतत्वं ब्रवीमि ' 33
(म.भा.उ.प. 41-4)

सनत्सुजातोऽहम्, 'प्रमाद'पदवाच्या अनवधानतैव मृत्युरिति, अविद्यानिवृत्तिः तत्त्वज्ञानमेववा अमृतत्वमिति च निश्चयेन वदामि। मृत्युरमृतं च अन्यन्नास्ति इत्याशयः॥

319. ' मही घटत्वम् ' (वि.पु. 2-12-42) 209, 215, 218

मृत्पिण्डावस्था, तत्प्रहाणेन घटत्वावस्था, इत्यादिकं पृथिव्यादिष्वनुभूयते खलु! तत्र सततैकरूपतया 'अस्ति'शब्दवाच्यं किमपि नैव दृश्यते; अतः सततज्ञानैकाकारः आत्मैव सदा'अस्ति'-शब्दवाच्यः॥

320. ' मिथ्यैत....तद्द्रव्यतां यतः ' (वि.पु. 2-14-27) 250
[प्र. 309 द्रष्टव्यम्]

321. ' यच्चान्यथात्वम् ' (वि.पु. 2-12-41) [प्र. 338 द्रष्टव्यम्] 214

322. ' यच्चैतत् ' (वि.पु 2-12-47) 217

हे मैत्रेय! अण्डान्तर्वर्तीनि यानि यानि स्थानानि तवोपदिष्टान, तत्र सर्वत्र कर्मवशीकृतो जीवः सञ्चरति। अतः सर्वं दुःखपूर्णं ज्ञात्वा, विवेकी भगवत्सायुज्यसाधनभूते उपाये सततोत्थितो यतेत; न उदासीत॥

323. ' यज्ञः पशुः ' (वि.पु 2-12-46) 217

देवताराधनात्मकानि यागादीनि, तत्साधनीभूतपश्वादीनि च श्रुतिप्रतिपन्नानि यानि, तेषां सर्वेषां, देवादिदेहसम्बन्धः, तदनुभाव्या भोगाश्च फलत्वं भजन्ते। अतो ज्ञानैकाकारस्याप्यात्मनः, अचित्सम्बन्धः, तन्निबन्धनो देवादिव्यवहारश्च सत्यभूत एव॥

| प्र. सं. | प्रमाणानि सविवरणानि | पृ. सं. |
|---|---|---|
| 324. | 'यतश्चैतच्चराचरम्' (वि.पु. 1-1-5) [प्र. 333 द्रष्टव्यम्] | 149 |
| 325. | 'यतस्ततो न ते ध्याने ध्यानिनामुपकारकाः । अविद्यान्तर्गताः सर्वे ते हि संसारगोचराः' ।। (भ.पु वि.ध. 104-24)<br><br>ब्रह्मादयो हि सर्वे जीवाः, कर्मवश्यत्वात् , कर्मकृतसंसाराश्रयत्वाच्च, 'अविद्या'पदवाच्य कर्मवेष्टिता एवेति, ते स्व ध्यायिनां अपवर्गप्रदा नैव भवन्ति ।। | 146 |
| 326. | 'यत्तु कालान्तरेणाऽपि नान्य संज्ञामुपैति वै । परिणामादि सम्भूतां, तद्वस्तु नृप तच्च किम् ?' ।। (वि.पु. 2-31-100)<br><br>यत् कालभेदं प्राप्यापि, परिणामादिनिमित्तकं नामान्तरं नैव भजते, तदेव 'वस्तु' पदवाच्यं भवति । तादृशं यत्किञ्चित् इन्द्रिय-गम्यमस्ति वा ? नैव ।। | 219 |
| 327. | 'यथाऽसक्त जले वातो बिभर्ति कणिकाशतम् । शक्तिः सापि तथा विष्णोः प्रधान-पुरुषात्मनः' ।। (वि.पु. 2-7-31)<br><br>यथा हि वायुः, जलीयं कणसमूहं धारयन्नपि, अविकृतस्वस्वरूपो वर्तते, तथा, प्रकृति-पुरुषशरीरकस्य परमात्मनो महाविष्णोः शक्तिरपि, प्रकृति-पुरुषगतैर्दोषैः अपुरुषार्थभूतैः अलिप्तैव सती, इदं विश्वं धारयति ।। | 143 |
| 328. | 'यदम्बु वैष्णवः कायस्ततो विप्र वसुन्धरा । पद्माकारा समुद्भूता पर्वताब्ध्यादि संयुता' ।। (वि.पु. 2-12-37)<br><br>हे ब्राह्मण ! विष्णोरधिष्ठानभूतान् जलात्मकान् वस्तुनः, नानापर्वत-समुद्रादिविभक्तानेकद्वीपवर्षा, समवर्तुला मेरुकर्णिकाकारा इयं भूमिः सञ्जाता ।। | 211 |
| 329. | 'यदस्ति यन्नास्ति' (वि. पु. 2-12-38) [प्र. 281. द्रष्टव्यम्] | 217 |

330. I 'यदा तु शुद्धं निजरूपि सर्वकर्मक्षये ज्ञानमपास्तदोषम् ।
तदा हि सङ्कल्पतरोः फलानि भवन्ति नो वस्तुषु वस्तु भेदाः' ॥ 21
(वि. पु. 2-12-40)

II 'यदा तु शुद्धं निजरूपि' (वि. पु. 2-12-40) 209,213

(पू.) निर्विशेषचिन्मात्रं ब्रह्म, कर्मणां निरवशेषतया नाशे सति, अविद्या-तत्कृतभेददर्शनरहितम्, कर्मनिमित्तकक्लेशाद्यसंस्पृष्टं च यदा भवति, तदा सर्वविधकल्पनाहेतुभूताविद्यावृक्षफलभूताः, सांसारिकाः अपारमार्थिकाः वस्तुगततया भासमानाः भेदाः सर्वे, नैव भासन्ते ॥

(सि) जीवात्मनः, यदा आत्मनि देवाद्याकारवैचित्र्यानुसन्धानहेतु-भूतसर्वकर्मापगमो भवति, तदा, ज्ञानैकाकारम् आत्मवस्तु, निरस्तसमस्तबन्धम्, आविर्भूतस्वाभाविकस्वरूपगुणं च भवति । तथा, देहात्मभ्रमसङ्कल्पमूलकर्मफलतया भोग्याः देवादिभेदा अपि-आत्मवस्तुनि नैवाऽवशिष्यन्ते ॥

331. I 'यदेतद् दृश्यते मूर्तमेतज्ज्ञानात्मनस्तव ।
भ्रान्तिज्ञानेन पश्यन्ति जगद्रूपमयोगिनः' ॥ (वि. पु. 1-4-39) 27

II 'यदेतद् दृश्यते' ( „ „ ) 153

(पू.) अलब्धयोगाः पामराः, आविद्यकं मूर्तं जगदात्मकं रूपं, चिन्मात्रा-त्मकस्य तव परब्रह्मणः रूपमिति, अध्यासकृतदर्शना भवन्ति ॥

(सि) प्रत्यक्षादिसिद्धं चेतनाचेतनात्मकमिदं जगत्, स्वरूपतो गुणतश्च-ज्ञानरूपेण त्वया सर्वथा व्याप्तमिति, तवैव मूर्तं शरीरम् । एवमपि त्वदात्मकत्वानुभवसाधनभूतयोगसम्पद्रहिताः, भ्रान्तिमहिम्ना, केवलमेव तत्तद्रूपं जानन्ति ; न त्वच्छरीरतया ॥

332. I 'यद्यन्योऽस्ति परः कोऽपि मत्तः पार्थिवसत्तम ।
तदैषोऽहमयं चान्यो वक्तुमेवमपीष्यते' ॥ (वि. पु. 2-13-90) 28

II ‘ यद्यन्योऽस्ति परः कोऽपि’ (वि.पु. 2-13-90) 154

हे नरेन्द्र ! ‘ मदपेक्षया उत्कृष्टः, मदपेक्षया अन्यः ’ वक्तुमर्हः कश्चन यदि स्यात् , तदा ‘ एषः, अहम् , अयम्’ अन्यः, इत्यपि पृथक्-पृथक् वक्तुं शक्यं स्यात् ! तदभावाच्च तदभावः इति ॥

(सि) मदन्येषु आत्मसु, यद्याकारभेदः स्यात् ; तदा ‘ अहमीदृशाकारः, अयं चान्यादृशाकारः ’ इति सुवचं भवेत् ; न हि तथाऽस्ति । देहगताकारभेदस्य आत्मस्वरूपवैषम्यानापादकत्वात् ॥

333. I ‘ यन्मयं च जगद्ब्रह्मन् ! यतश्चैतच्चराचरम् ।
लीनमासीद्यथा यत्र लयमेष्यति यत्र च’ ॥ (वि. पु. 1-1-5) 149

II ‘यन्मयम्’ III. VI. ( „ „ ) 149

V ‘ ,, ’ ( „ „ ) 150

334. ‘ यन्मुहूर्तं क्षणं वाऽपि वासुदेवो न चिन्त्यते ।
सा हानि स्तन्महच्छिद्रं सा भ्रान्तिः सा च विक्रिया’ ॥ 137

सर्वैर्जीविभिः, निरन्तरं अविच्छिन्नस्रोतोरूपतया भगवद्ध्यान-परैर्भाव्यम् ; तद्विना, मुहूर्ते, ततोऽपि सूक्ष्मेक्षणादिरूपे वा काले यदि ध्यानं विच्छिद्येत, तर्हि, तत् पुरुषार्थहानिरूपम् , अपुरुषार्थात्मकदोषप्ररोहस्थानम् , चित्तस्खलनमूलम् , (तथा) अवशादापतितः अज्ञानामयथायथव्यापारश्च ।

335. I ‘ यया क्षेत्रज्ञशक्तिः सा वेष्टिता नृप सर्वगा ।
संसारतापानखिलानवाप्नोत्यतिसन्ततान्’ ॥ (वि.पु. 6-7-62) 142

II ‘ यया........सर्वगा ’ ( „ ) 158

हे नृप ! ब्रह्मादिपिपीलिकापर्यन्तसकलदेहाधिष्ठिता, विष्णोस्तृतीय-शक्तिरूपया अविद्यया आवृता, असंख्याता, क्षेत्रज्ञाख्या अपरा या

विष्णोः शक्तिरस्ति, सैव संसरणजन्यानविरतान् अखिलान् क्लेशानपि प्राप्नोति ॥

336. 'ये तु ज्ञानविदः शुद्धचेतसस्तेऽखिलं जगत् ।
ज्ञानात्मकं प्रपश्यन्ति त्वद्रूपं परमेश्वर' ॥ (वि. पु. 1-4-41) 28

II 'ये तु ज्ञानविदः' ( ,, ,, ) 153, 154

(पू) हे परमेश्वर ! ये खलु निर्मलान्तःकरणाः लब्धात्मैकत्वविज्ञानाः योगिनः, ते त्वदन्यस्य कस्याप्यभावात्, इदं सर्वं जगत्, त्वय्येवाध्यस्तमिति अवधारयन्ति ॥

(सि) हे सर्वनियन्तः ! प्रभो !, ये पुनः 'सर्वे जीवात्मनो ज्ञानैकाकाराः' इति लब्धज्ञानाः तदनुगुणसदाचारसम्पत्त्या निवृत्तरजस्तमस्कतया सत्त्वप्रचुरस्वान्ताश्च, ते ब्रह्मादिस्थावरान्तं चेतनाचेतनात्मकमिदं विश्वं तवैव शरीरात्मकं रूपमिति सम्यङ्निश्चिन्वन्तिं ; नैव विप्रतिपद्यन्ते ॥

337. 'वसन्ति तत्र भूतानि भूतात्मन्यखिलात्मनि ।
स च भूतेष्वशेषेषु वकारार्थस्ततोऽव्ययः' ॥ (वि. पु. 6-5-75) 140

सर्वाणि भूतान्यतःप्रविश्य आत्मतया अवस्थाय तेषां नियन्तरि, परब्रह्मणि वासुदेवे, सर्वाणि भूतानि धार्यतया वर्तन्ते ; स च धारकतयेति, 'भगवान्' इत्यत्रत्यवकारार्थः पूर्णतया तस्मिन् अन्वितोऽस्ति ॥

338. 'वस्त्वस्ति किम्' (वि. पु. 2-12-41) 209, 214, 218

ज्ञानाकारातिरिक्ते परिदृश्यमाने जगति, वस्तुलक्षणलक्षितं किमपि वर्तते वा ? सर्वथा नैव वर्तते ; परिणामित्वेन सततैकरूपं न भवतीति, 'नास्ति'शब्दाभिधेयं हि ! तत् ॥

439. 'विज्ञानमेकम्' (वि. पु. 2-12-43) [प्र. 298. द्रष्टव्यम्] 210, 216

340. 'विज्ञानं प्रापकं प्राप्ये परे ब्रह्मणि पार्थिव !
प्रापणीयस्तथैवात्मा प्रक्षीणाशेषभावनः' ।। (वि. पु. 6-7-93) 162

प्राप्यभूत परब्रह्मविषयकमुपासनं, परब्रह्मप्रापकम् । तथैव भावनात्रयविनिर्मुक्ततया शुद्धस्वरूपतां प्राप्तः चेतनोऽपि उपासनात्मकानुध्यानलभ्यः ।

341. I 'विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते ।
आत्मनो ब्रह्मणो भेदमसन्तं कःकरिष्यति ?' ।। (वि.पु. 6-7-96) 28, 164

II 'विभेदजनकेऽज्ञाने' ( " " )

(पू.) जीव-ब्रह्मणोरभिन्नयोः, भेदभ्रमाधायिकायाः अविद्यायाः निरवशेषक्षये सति, अज्ञानदशायां भासमानस्य जीवे अविद्यमानस्य ब्रह्मभेदस्य कल्पकं किं वा अवशिष्यते ?; येन पुनर्भ्रमः स्यात् ।।

(सि) ज्ञानैकाकारतया अत्यन्तं ब्रह्मसदृशस्वरूपे जीवे, देवाद्याकारकृतस्वरूपवैलक्षण्यभ्रमोत्पादिकायां अनादिकर्मरूपायामविद्यायां निरन्तरध्यानेन अशेषतो विनष्टायां सत्यां, जीवस्वरूपे अविद्यमानं ब्रह्मविलक्षणमाकारं ग्राहयितुं, न किमपि प्रभवति ? ।।

342. 'विष्णुशक्तिः परा प्रोक्ता, क्षेत्रज्ञाख्या तथाऽपरा ।
अविद्या कर्मसंज्ञाऽन्या तृतीया शक्तिरिष्यते' ।। (वि. पु. 6-7-61) 142

'परा, अपरा, उभयविलक्षणा' इति त्रिविधासु विष्णुशक्तिषु आद्या, 'प्रत्यस्तमिते'त्यादिना उक्ता । द्वितीया क्षेत्रज्ञपदाभिधेया, 'हिरण्यगर्भो भगवान्' इत्यादिना अभिहिता । अन्त्याच शक्तिः, श्रुत्युक्तयाग-दानादिरूपा, 'अविद्या-कर्म' शब्दाभ्यां प्रतिपाद्यते ।।

343. 'विष्णोः सकाशादुद्भूतं जगत्तत्रैव च स्थितम् ।
स्थिति-संयमकर्ताऽसौ जगतोऽस्य जगच्च सः' ।। (वि. पु. 1-1-31) 150

अभिन्ननिमित्तोपादानभूतात् स्वसङ्कल्पसहकृतात् परमात्मनो विष्णोः, इदं जगदुत्पन्नम् । प्रलये पुनस्तत्रैव अविभागेनावस्थितम् । अतः परमात्मैवास्य जगतः प्राणयिता चेति स्वायत्त जगत्सृष्टि-स्थिति-संहारत्वात् 'स एव जगत्' इत्यभेदेनोच्यते ॥

344. 'विष्ण्वाधारं यथा चैतत्त्रैलोक्यं समवस्थितम् ।
परमार्थश्च मे प्रोक्तो यथा ज्ञानं प्रधानतः' ।। (वि. पु. 2-13-2) 220

पृथिव्यन्तरिक्षद्युलोकात्मकत्रिलोकान्तर्वर्तिचेतनाचेतनात्मकं सर्वं जगत्, धार्यतया नियाम्यतया शेषतया च यथा विष्णावेव सम्यगवस्थितम्, तत्, यथा च चिदंशःस्वभावसिद्धज्ञानैकाकारतया अविनाशित्वेन परमार्थः, तच्च मां प्रति प्राधान्येन प्रतिपादितं त्वया ॥

345. I 'वेणुरन्ध्रविभेदेन भेदः षड्जादिसंज्ञितः ।
अभेदव्यापिनो वायोस्तथाऽसौ परमात्मनः' ।। (वि. पु. 2-14-32) 28

II 'वेणुरन्ध्रविभेदेन' . . ( " " ) 155

(पू.) सर्वत्र अवैविध्येन व्यापनशीलस्यापि वायोः, सप्तसु वेणुरन्ध्रेषूपाधिभूतेषु निर्गमनायत्त एव षड्जादिविशेषः, न तु स्वभावभूतः ; तथा निर्विशेषचिद्रूपस्यैव सतो ब्रह्मणः, अद्वितीयतया अपरिच्छिन्नस्याऽपि, औपाधिको जगद्भेदः ; न पारमार्थिकः ॥

(सि.) यथा वायुत्वाकारेण सजातीयस्यापि वायोः सर्वत्र अविषमतया व्यापिनोऽपि, विभिन्नेषु वंशसुषिरेषु प्रविशतः, षड्ज-ऋषभादि-स्वरसम्बन्धिनामरूपविभागहेतुत्वम् ; तथा ज्ञानैकाकारतया अविसजातीयस्यापि आत्मनः —चेतनस्य कर्मविशेषेण देवादि-

विविधशरीरप्रवेशं प्राप्नुवतः, परं-केवलम्, स्वस्मिन् ज्ञानैकाकारत्वतिरोधायकदेवादिनामरूपप्रवृत्तिप्रयोजकत्वम् ॥ -

346. 'शक्तयः सर्वभावानामचिन्त्यज्ञानगोचराः ।
यतोऽतो ब्रह्मणस्तास्तु सर्गाद्या भावशक्तयः' ॥ (वि. पु. 1-2-3)
'भवन्ति तपतां श्रेष्ठ ! पावकस्य यथोष्णता ' (वि. पु. 1-3-3) 151

हे द्विजश्रेष्ठ ! लोकपरिदृष्टतत्तत्सर्ववस्तुगतानां तत्तद्वस्तूत्पादनकारणीभूतानां विविधानां शक्तिविशेषाणां दिव्यज्ञानमात्रगोचरत्वेन इन्द्रियागोचरत्वात्, ताः सर्वा अपि शक्तयः, सर्वज्ञ-सर्वशक्तब्रह्मासाधारणाः । यथाहि लोके औष्ण्यं यत्रकुत्रचिदनुभूतमपि वह्निसम्बन्ध्येव ; न इतरतत्तद्वस्तुसम्बन्धि ; तद्वत् ॥

447. 'शुद्धे महाविभूत्याख्ये परे ब्रह्मणि शब्द्यते ।
मैत्रेय ! भगवच्छब्दः सर्वकारणकारणे' ॥ (वि. पु. 6-5-72) 139

हे मैत्रेय ! समस्तहेयविरोधिनि, अचिन्त्याश्चर्यकरविभूतियुक्ततया महाविभूतिपदेनैवाभिधातुं योग्ये, सर्वजगत्स्रष्टुर्ब्रह्मणोऽपि स्रष्टरि, परब्रह्मभूते वासुदेवे, 'भगवान्' इत्ययं शब्दः, प्रवृत्तिनिमित्तपौष्कल्येन वाचको वर्तते ॥

548. 'श्रूयतां चाप्यविद्यायाः स्वरूपं कुलनन्दन !' (वि. पु. 6-7-10)
'अनात्मन्यात्मबुद्धिर्या ' (वि. पु. 6-7-11) 116

हे कुलदीपक ! अविद्यायाः स्वरूपं मया उच्यमानं, त्वया श्रुत्वा अवधार्यताम् । आत्मभिन्ने देहेन्द्रियादौ आत्मत्वग्राहिणी या बुद्धिरस्ति, सैव अविद्येत्युच्यते ॥

349. 'स ईश्वरो व्यष्टिसमष्टिरूपोऽव्यक्तस्वरूपः प्रकटस्वरूपः ।
सर्वेश्वरः सर्वदृक् सर्ववेत्ता समस्तशक्तिः परमेश्वराख्यः' ॥ 139
(वि. पु. 6-5-86)

पूर्वोक्तः ईश्वराभिधानो वासुदेवः, समष्ट्यात्मकवासुदेवादिव्यूहरूपैः,

व्यष्ट्यात्मकरामकृष्णादिविभवरूपैश्च सम्पन्नः, स्वीयेन पररूपेणा-गोचरः, स्वीयेनैव व्यूहादिरूपेण प्रकटरूपश्च सन्, अप्रतिहत-दृष्टिः, सर्वज्ञः अचिन्त्यसर्वशक्तिः सर्वनियन्ता चेति, परमेश्वर-संज्ञो भवति ॥

350. 'स एव सर्वभूतात्मा विश्वरूपो यतोऽव्ययः' (वि. पु. 1-2-69) 212

स भगवन्, यतः अविनाशी सन् सर्वचेतनाचेतनशरीरकः, अतः स एव सर्वनियन्ता ॥

351. 'सङ्क्षेपः श्रूयताम्' (वि. पु. 2-12-36) 211

पूर्वं विस्तरेणोक्त एवार्थः, पुनः शब्दसङ्क्षेपेणोच्यते ; तत् श्रुत्वा अवधार्यताम् ॥

352. I 'सद्भाव एवं भवतो मयोक्तः ज्ञानं यथा सत्यमसत्यमन्यत् ।
एतत्तु यत् संव्यवहारभूतं तत्रापि चोक्तं भुवनाश्रितं ते' ॥
(वि.पु. 2-12-45) 32

II 'सद्भाव....मयोक्तः' ( ,, ,, ) 210

III 'सद्भाव एवम्' ( ,, ,, ) 217

(पू) मया आदिभरतेन त्वामुद्दिश्य, 'चिन्मात्रं ब्रह्मैव परमार्थः ; इतरत्सर्वं तस्मिन् अध्यासतो कल्पितत्वात् मिथ्याभूतम्' इति, 'पूर्वोक्तं ब्रह्म अध्यस्यमानेन भुवनेन अध्यासाधिष्ठानतया आश्रितमस्ति, अविद्ययैव च सर्वव्यवहारविषयतां प्राप्तम्' इति च तत्त्वार्थः प्रतिपादितः ॥

(सि) आत्मसु ज्ञानैकाकारतया एव परमार्थत्वात्, स्वरूपस्य च अविनाशित्वात्, तेषाम् 'अस्ति' शब्दाभिधेयत्वरूपं सत्यत्वम् ; तद्भिन्नाचेतनेषु परिणामितासत्त्वेन विनाशित्वात् तेषां 'नास्ति' शब्दाभिधेयतारूपम् असत्यत्वम्; अचिदाश्रितेषु च चेतनेषु संततत्या

देवादिव्यवहारविषयताहेतुभूतं च, अविद्यापरपर्यायं कर्मैव ; नान्यदिति, वास्तविकोऽर्थः सर्वः त्वां प्रति सम्यगुक्तः ॥

353. I 'समस्तकल्याणगुणात्मकोऽसौ स्वशक्तिलेशाद्धृतभूतसर्गः ।
इच्छागृहीताभिमतोरुदेहः संसाधिताशेषजगद्धितोऽसौ' ॥
(वि. पु. 6-5-84) 139

II 'समस्त....त्मकोऽसौ' ( ,, ,, ) 157

अयं परमात्मा अनवधिकमङ्गलगुणराशिः, अत एव अनन्तायाः स्वीयशक्तेर्लेशमात्रेण निखिलं भूतजातं धारकपोषकभोग्यार्थप्रदानेन पितेव रक्षन्, (तथा) समस्तजगतां हितं साधयितुं कृतसङ्कल्पः असङ्ख्यानि ज्ञानमयानि दिव्यानि शरीराणि स्वीकुर्वंश्च विराजते ॥

354. 'समस्त शक्तिरूपाणि तत्करोति जनेश्वर !
देवतिर्यङ्मनुष्याख्यचेष्टावन्ति स्वलीलया'॥ (वि. पु. 6-7-71) 140

हे नराधिप ! स भगवान् सर्वेश्वरः, अनन्यप्रेरितेन स्वप्रीतिमात्र-प्रयोजनकेन व्यापारेणैव, अनन्तशक्तिसम्पन्नानि देवमनुष्यादि-सदृशतया परिदृश्यमानव्यापारयुक्तानि दिव्यानि शरीराणि स्वीकुर्वन्नवतरति ॥

355. 'समस्ताः शक्तयश्चैता नृप ! यत्र प्रतिष्ठिताः ।
तद्विश्वरूपवैरूप्यं रूपमन्यद्धरेर्महत्' ॥ (वि. पु. 6-7-70) 145

राजन् ! 'विष्णोः परा शक्तिः, (तथा) क्षेत्रज्ञाख्या अपरा शक्तिः, (एवमेव) श्रुत्युक्तयज्ञदानादिरूपा अविद्यापदवाच्या शक्तिः' इति सर्वा अपि शक्तयः, भगवतो यादृग्विधे स्वरूपे स्वाभिमानिदेवताद्वारा सुस्थिताः, तत् जगद्विलक्षणसन्निवेशं, मुमुक्षूणां ध्यानयोग्याकारवत्, स्वरूपतो गुणतश्चापरिच्छेद्यं वा,

आदित्यवर्णमित्यादिश्रुतिसिद्धदिव्यस्वप्रकाशरूपवत् शुभाश्रयदिव्यमङ्गलविग्रहरूपं च, अन्यदेव द्रव्यम् ॥

356. 'समेत्यान्योन्यसंयोगं परस्परसमाश्रयाः' ॥ (वि. पु. 1-2-52) 195

'महदाद्या विशेषान्ता ह्यण्डम्' (वि. पु. 1-2-53) 196

ते च महतत्त्वमारभ्य भूतपञ्चकात्मकविशेषपर्यन्ताः, न्यूनाधिकभावेन परस्परं मिलिताः सन्तः, मिथः आश्रिताश्रयभावं प्राप्ताः, अण्डोत्पत्तौ कारणी भवन्ति ॥

357. 'सर्वत्राऽसौ समस्तं च वसत्यत्रेति वै यतः ।
ततः स वासुदेवेति विद्वद्भिः परिपठ्यते' ॥ (वि. पु-1-2-12) 141

चेतनाचेतनात्मके सर्वस्मिन् परिदृश्यमाने जगति, परमात्मनोऽन्तर्यामितया अवस्थानात्, (तथा) अस्य च जगतः परमात्मनि आधेयत्व-व्याप्यत्व-नियाम्यत्वैः अवस्थानाच्च, तत्त्वज्ञैः परमात्मनः 'वासुदेवः' इति अन्वर्थं नाम परिपठितमास्ते ॥

358. 'स सर्वभूतप्रकृतिं विकारान् गुणादिदोषांश्च मुने! व्यतीतः ।
अतीत सर्वावरणोऽखिलात्मा तेनाऽऽस्तृतं यद्भुवनान्तराले' ॥
(वि. पु. 6-5-83) 138, 157

मुने! स परमात्मा, समस्तजगत्सृष्टिहेतुभूतां मूलप्रकृतिं, तज्जन्यान् महदादीन्, सत्त्वादिगुणतज्जन्यक्लेशादींश्च अतिक्रम्य, तेषामवशो वर्तते । (तथा) स्वस्वरूपतिरोधायकैः प्रकृत्यादिभिः सर्वथा सर्वत्र अतिरोहितस्वरूप एव सन्, भुवनान्तरालगतं सर्वं अन्तर्बहिश्च व्याप्य पूर्णो विजृम्भते सर्वान्तर्यामी ॥

359. 'सोऽहमिच्छामि धर्मज्ञ! श्रोतुं त्वत्तो यथा जगत् ।
बभूव भूयश्च यथा महाभाग! भविष्यति' ॥ (वि.पु. 1-1-4) 148

महामहिमन्! साक्षात्कृतधर्मस्वरूप! भवत्सकाशादेव अधिगतवेदोऽहम्, परिदृश्यमानमिदं विश्वं, पूर्वं यथा सृष्टमासीत्?

पुनश्च सर्गान्तरे कथं वा लक्ष्यते? इत्यादिकं सृष्टितत्त्वं भवत्सकाशे एव श्रुत्वा अधिजिगमिषामि ।।

360. I 'सोऽहं स च त्वं स च सर्वमेतदात्मस्वरूपं त्यज भेदमोहम् ।
इतीरितस्तेन स राजवर्य स्तत्याज भेदं परमार्थदृष्टिः' ।।
(वि. पु. 2-16-23) 28

II 'सोऽहं स च त्वम्' (वि. पु. 2–16–23) 165

(पू) 'अहं, त्वं, सः' इति व्यवह्रियमाणं सर्वमप्यात्मस्वरूपमेव ; नान्यत् । तस्मात् ज्ञातृ-ज्ञान-ज्ञेयात्मना, एकस्मिन्नेवात्मस्वरूपे भेदावगाहनहेतुभूतम् आविद्यकं ज्ञानं दूरीकुरु! इति, आदिभरतेन प्रेरितः सः सौवीरराजः, एकलक्ष्यतापन्नतात्त्विकार्थः, भेदज्ञानं त्यक्तवान् ।।

(सि) 'सः अहं, त्वम्' इत्यादिरूपेण मिथो भिन्नतया व्यवह्रियमाणस्य सर्वस्यापि, ज्ञानैकाकारात्मस्वरूपत्वेन, देहगतदेवाद्याकारभेदकृतम् आत्मन्याकारभेदभ्रमं जहि' इति तेन प्रेरितः सः, तात्त्विके ज्ञानैकाकारे आत्मस्वरूपे एव वास्तविकत्वबुद्ध्या प्राक्तनं भ्रमं-निरस्तवान् ।।

361. 'संज्ञायते येन तदस्तदोषं शुद्धं परं निर्मलमेकरूपम् ।
संदृश्यते वाऽप्यधिगम्यते वा तज्ज्ञानमज्ञानमतोऽन्यदुक्तम्' ।। 139
(वि. पु. 6–5–87)

दोषसंस्पर्शानर्हम्, दोषप्रतिभटम्, दोषासंस्पृष्टं च, (तथा) स्वरूपतः स्वभावतश्चाविकारम्, आश्रितानां संरक्षणे बद्धदीक्षं वा, विष्ण्वाख्यं परं ब्रह्म, येन आगमाधीनज्ञानेन प्रथमं विषयी क्रियते, येन च ध्यानेन अपरोक्षी क्रियते येन परभक्तिपदाभिधेयेन ज्ञानेन प्राप्तिपूर्वकमनुभूयते, एतत् त्रिरूपमेव वस्तुतः अनुपचरितज्ञानपद वोध्यम् ; इतरदज्ञानमेवेति निर्णीतम् ।।

362. ‘संभर्तेति तथा भर्ता भकारोऽर्थद्वयान्वितः ।
नेता गमयिता स्रष्टा गकारार्थस्तथा मुने !’ ॥ (वि.पु. 6-5-73) 139

हे मुने! भगवति प्रयुज्यमानभगवच्छब्दघटकः भकारः, सम्भर्तृत्वम्—प्रकृतेः कारणत्वयोग्यतापादकत्वरूपम्, भर्तृत्वम्—स्वामित्व-पोषकत्वरूपं च अर्थद्वयं बोधयति। गकारस्तु, नेतृत्वम्-गोप्तृतारूपम्, गमयितृत्वम्—सृष्टस्य सर्वस्य स्व-प्रापयितृत्वरूपं च अर्थद्वयं बोधयति ॥



363. ‘अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम् ।
जीवभूतां महाबाहो ययेदं धार्यते जगत्’ ॥ (भ.गी. 7-5) 237

हे अर्जुन! पूर्वप्रस्तुता या भूम्याद्यहङ्कारान्ता अष्टविधा, सा अपरा—अप्रधाना, मदीया प्रकृतिः। एतदपेक्षया विजातीया परा-प्रधाना च प्रकृतिरस्ति; यस्याः पूर्वोक्ता प्रकृतिः भोग्यभूता। सा च परा प्रकृतिः, चेतनाख्या; तया निखिलं जगद्धार्यते। तां च विजानीहि!

364. ‘अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा’। (भ.गी. 7-4) 237

इयम् अहङ्कारपर्यन्ता ‘भूमिरापः’ इत्यादिनोक्ता, अष्टविधा मदीया प्रकृतिः ॥

365. I ‘अहमात्मा गुडाकेश! सर्वभूताशयस्थितः’ (भ.गी. 10-20) 28, 165

II ‘अहमात्मा गुडाकेश!’ ( „ ) 114

(पू) हे जितनिद्र! अर्जुन! अहं प्रत्यगात्मभूतः, सर्वेषां भूताना-मन्तर्हृदि स्थितो ध्येयः ॥

(सि) हे! जितनिद्र! अर्जुन! अहं मच्छरीरतयाऽवस्थितानां सर्वेषां भूतानां हृदयदेशे आत्मतया अवस्थितः ॥

366. 'अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा' (भ.गी. 7–6) 114, 138

चिदचिद्व्यष्टि-समष्ट्यात्मकस्य समस्तस्य जगतः उत्पत्ति-प्रलययोरहमेव स्थानभूतः ॥

367. 'अहं बीजप्रदः पिता' (भ.गी. 14–4) 115

प्राकृते सृष्टिविस्तारे, तत्र तत्र तत्तत्कर्मानुगुण्येन चेतनवर्गसंयोजकः अहमेव ॥

368. 'अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते' (भ.गी. 10–8) 114

सर्वस्य चिदचिदात्मकस्य प्रपञ्चस्य, उत्पत्ति-प्रवृत्ती उभे अपि, मदधीने एव ॥

369. 'इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः ।
सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च' ॥ (भ.गी. 14–2) 159

वक्ष्यमाणं ज्ञानात्मकं साधनमवलम्ब्य, मया सह परमसाम्यं प्राप्ताः उपासितारश्चेतनाः, नैव सृष्टि-प्रलयभागिनो भवेयुः ॥

370. 'ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन ! तिष्ठति' (भ.गी. 18-61) 165

हे अर्जुन ! सर्वेषामेव शरीरिणां हृदयाख्ये सकलप्रवृत्ति-निवृत्ति-मूलज्ञानोदयस्थानभूते प्रदेशे, सर्वनियन्ता वासुदेवाख्यः परमात्मा अवतिष्ठते ॥

371. I 'उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।
यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः' ॥ (भ.गी. 15-17) 138

II 'उत्तमः पुरुषस्त्वन्यः' ( „ ) 165, 250

पूर्वोक्ताभ्यां क्षराक्षरपदाभिधेयाभ्यां बद्ध-मुक्तावस्थचेतनाभ्यां विलक्षणोऽर्थान्तरभूत आत्मा, पुरुषोत्तम-परमात्मशब्दाभ्यां शास्त्रेषु

व्यवह्रियमाणो वर्तते । स एव च, पृथिव्यन्तरिक्षद्युनामानि त्रीण्यपि भुवनान्यन्तः प्रविश्य नियन्तृतयाऽवस्थाय, अविनाशी सन् धारयति पोषयति च ॥

372. 'एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञः [इति]' (भ.गी. 13-1) 87

'इदं 'क्षेत्र' पदेनोक्तं शरीरम्, मम वेद्यम्, अस्य चाहं वेत्ता' इति, वेद्य-वेत्तृभावेन स्वस्मादर्थान्तरतया, यः स्वीयं शरीरं वेत्तुमर्हति, स चेतनः अधिष्ठातैव, 'क्षेत्रज्ञ' पदाभिधेयो भवतीति, आत्मयाथात्म्यज्ञाः वदन्ति ॥

373. 'क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते' (भ.गी. 15-16) 165

अचित्संसृष्टानि ब्रह्मादिस्तम्बान्तानि 'जीव' पदवाच्यानि, क्षरः पुरुष इति, अचिदसंसृष्टानि स्वस्वरूपावस्थितानि तान्येव (मुक्तात्मानः) अक्षरः पुरुष इति च व्यवह्रियन्ते ॥

374. I 'क्षेत्रज्ञं चापि मां विद्धि! सर्वक्षेत्रेषु भारत'! (भ.गी. 13-2) 28

II 'क्षेत्रज्ञं चापि मां विद्धि!' ( " ) 165

(पू.) हे अर्जुन ! यः ब्रह्मादिस्तम्बपर्यन्तक्षेत्रोपाधिप्रविभक्तः सन् 'क्षेत्रज्ञ' पदवाच्यः, तम्, असंसारिणं निरस्तसर्वोपाधिभेदं सदसदादि प्रत्यय-व्यवहारागोचरं परमेश्वरं मामेव विजानीहि !

(सि) सुर-नर-तिर्यक्-स्थावरात्मना चतुर्विधेष्वखिलेष्वपि देहेषु वेदितृत्वैकाकारं क्षेत्रज्ञं, तदधिष्ठितं क्षेत्रमपि च, मदात्मकमेवेति, मच्छरीरभूतमेवेति, निश्चिनु !

375. 'जीवभूतां महाबाहो! ययेदं धार्यते जगत्' (भ.गी. 7-5) 237
[प्र. 363 द्रष्टव्यम्]

376. तेषामहं समुद्धर्ता मृत्युसंसारसागरात्' (भ.गी. 12-7) 115

मां प्राप्तुं सततमभीप्सताम्, अत एव मदुपासनैकपराणां, मत्प्राप्ति-

विरोधिभूतात्, सागरवत् दुस्तरात्, 'मृत्यु 'पदाभिधेयात् संसारात्, अहमेव उत्तारयिता भवेयम् ॥

377. 'तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् ।
ददामि बुद्धियोगं तं येन मामुपयान्ति ते' ॥ (भ.गी. 10-10) 19

मय्येव सततयोगमाशंसमानानां, मामेवोपासतां चेतनानां, योगपद-व्यपदेश्यं विपाकदशापन्नं बुद्धिविशेषं मदीयप्रीत्यात्मकज्ञानाप्यायितम्, अहं वासुदेव एव, अनुगृह्णामि ! येन च बुद्धियोगेन उपासितारः, मां प्राप्नुयुरेव ॥

378. 'न च मत्स्थानि भूतानि पश्य मे योगमैश्वरम् ।
भूतभृन्न च भूतस्थो ममात्मा भूतभावनः' ॥ (भ.गी. 9-5) 138

हे ! अर्जुन ! मदीयं ईश्वरभावसम्बन्धिनं योगं पश्य ! मया सङ्कल्प-मात्रेण सर्वाणि भूतानि धृतानि सन्ति ; घटादेर्जलादिरिव च नाहं तेषां धारकः । सर्वेषां भूतानां धारण-पोषणादिकर्तैवाहं ; न तु भूतान्याश्रित्य अहं वर्ते । मनोमयो मदीयः सङ्कल्प एव च सर्वेषां धारण-नियमनयोर्हेतुः ॥

379. I 'न तदस्ति विना यत्स्यान्मया भूतं चराचरम्' (भ.गी. 10-39) 29

II 'न तदस्ति विना यत्स्यात्' ( „ ) 166

(पू) लोके अस्तीति विषयीक्रियमाणं जङ्गम-स्थावरात्मकं किमपि, मद्भिन्नं नास्त्येव ; 'ब्रह्मैकमेव सत्यम् ; अन्यत्सर्वं मिथ्या' इति यावत् ॥

(सि) सर्वमपि प्रतीति-व्यवहारविषयीभूतं जङ्गम-स्थावरात्मकं विश्वं, सर्वावस्थमपि मदात्मकमेव । अनेवंविधं किमपि नैवास्ति ॥

380. 'नत्वेवाहं जातु नासम्' (भ.गी. 2-12) 114

सर्वेश्वरोऽहम्, अनादौ कालसन्ताने विद्यमान एव ; पूर्वमविद्यमानः इत्येतन्नैव युक्तम् ॥

381. 'नाऽहं वेदैर्न तपसा न दानेन नचेज्यया ।
शक्य एवंविधो द्रष्टुं दृष्टवानसि मां यथा' ॥ (भ.गी. 11-53) 19

हे अर्जुन ! त्वमद्य सर्वेश्वरं परब्रह्मभूतं वासुदेवं मां, येन प्रकारेण, मदनुग्रहमात्रावलम्बनेन दृष्टवानसि, तेन प्रकारेण साक्षात्कर्तुं, मदाराधनवेषतारहिताः केवलाः स्वाध्याय-तपो-दान-यागादयः केऽपि धर्माः नैव साधनीभवितुमर्हन्ति ॥

382. 'निर्दोषं हि समं ब्रह्म' (भ.गी. 5-19) 154

प्रकृतिसंसर्गवियुक्तं, ज्ञानैकाकारतया सर्वत्र अवैषम्येन सम्बद्धं च, आत्मरूपं वस्तु ॥

383. 'पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया' (भ.गी. 8-22) 19

हे पार्थ ! मुमुक्षुप्राप्यः स परमपुरुषः, निरन्तरध्यानसन्ततिरूपया भक्त्यैव लभ्यः ।

384. 'प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि' (भ.गी. 13-19) 238

पुरुष-प्रधानात्मकौ चेतनाचेतनावुभावपि, अनुत्पत्तिधर्मकावेवेति दृढं जानीहि !

385. 'प्रकृतिं स्वामवष्टभ्य विसृजामि पुनः पुनः ।
भूतग्राममिमं कृत्स्नमवशं प्रकृतेर्वशात्' ॥ (भ.गी. 9-8) 238

विविधविचित्रपरिणामिनीं आत्मीयां प्रकृतिमधिष्ठाय, स्वयमस्वतन्त्रं देवादिरूपं सावान्तरभेदं व्यष्टिजीवस्तोमं, गुणमय्याः प्रकृतेः स्वभावमेव निमित्तीकृत्य, सर्गकाले पुनः पुनः विविधनामरूपभाजं करोमि ॥

386. 'प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः' (भ.गी. 7-17) 19

आत्मस्वरूपं, भगवच्छेषतैकरसत्वेन जानतः, (तथा) आत्मनां

भगवन्तमेव परमप्राप्यत्वेन च मन्वानस्य चेतनस्य, अहमत्यर्थप्रियः ; सोऽपि ममात्यर्थप्रियः ॥

387. 'भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन ! ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तप ' ! (भ.गी. 11-54) 19

हे शत्रूणां तापकर ! अर्जुन ! त्वया दिव्यचक्षुषा दृष्टविधः अहम् , मल्लाभानतिरिक्तप्रयोजनया प्रीतिरूपापन्नया धिया साधनभूतयैव, तत्त्वतो ज्ञेयः, साक्षात्कार्यः, सयुग्भावेन प्रवेष्टव्यश्च ॥

388. 'मत्तः परतरं नाऽन्यत्किञ्चिदस्ति धनञ्जय ! मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव ' ॥ (भ.गी. 7-7) 138

उत्कर्षप्रयोजकेन येनकेनापिगुणेन मदवधिकोत्कर्षवत् , चेतनेष्व-चेतनेषु च किञ्चिदपि नैवास्ति । कारणावस्थं कार्यावस्थं च सर्वमपीदं, सर्वशरीरिणि धारके नियन्तरि च मयि, हारसम्बन्धिनि सूत्रे हारान्तर्गताः मणय इव अविभागेनाश्रिताः ॥

389. 'मत्स्थानि सर्वभूतानि न चाहं तेष्ववस्थितः ' (भ.गी. 9-4) 138

जङ्गम-स्थावरात्मकानि सर्वाणि प्रमाणप्रतिपन्नानि, धार्यतया नियाम्यतया च मदायत्तस्वरूप-स्थिति-प्रवृत्तीनि । अहं तु, कथमपि न तदायत्तस्वरूपादिमान् वर्ते ॥

390. 'मम माया दुरत्यया ' (भ.गी. 7-14) 30, 208

सत्त्व-रजस्-तमोमयी 'माया'शब्दवाच्या इयं मदीया शक्तिः, कैरप्यनुल्लङ्घ्या ॥

391. 'मम योनिर्महद्ब्रह्म तस्मिन् गर्भं दधाम्यहम् । सम्भवः सर्वभूतानां ततो भवति भारत ' ॥ (भ.गी. 14-3) 238

हे भरतकुलोत्पन्न अर्जुन ! पूर्वमुक्ता प्रकृतिः, 'महद्ब्रह्म'शब्दाभिधेया

सती, सर्वार्थानां सृज्यानां प्रसवित्री वर्तते । तत्र अहं, 'गर्भ'-शब्दवाच्यं चेतनपुञ्जरूपं सकलप्राणिबीजं संयोजयामि । मत्सङ्कल्पायत्तात् ईदृशसंयोगात्, सर्वभूतसृष्टिर्भवति ॥

392. 'मयाऽध्यक्षेण प्रकृतिः सूयते सचराचरम् ।
हेतुनाऽनेन कौन्तेय जगद्विपरिवर्तते' ॥ (भ.गी. 9–10) 238

हे कुन्तीसुत ! सर्वद्रष्ट्रा सत्यसङ्कल्पेन च मया कारणभूतेन ईक्षिता इयं प्रकृतिः, जङ्गमस्थावरात्मकमिदं जगत्, निरवग्रहं सृजति:। क्षेत्रज्ञकर्मानुगुणमदीक्षणेन च हेतुभूतेन, इदं विश्वं सृष्टि-स्थिति-लयात्मके चक्रे परिवर्तमानमास्ते ॥

393. 'महाभूतान्यहङ्कारो बुद्धिरव्यक्तमेव च' (भ.गी. 13–5) 115

'पृथिव्यप्तेजोवाय्वाकाशाख्यानि पञ्चमहाभूतानि, तामसाहङ्कारः, महत्तत्वम्, मूलप्रकृतिः' इत्येतानि, क्षेत्रारम्भकद्रव्याणि ॥

394. 'यद्यद्विभूतिमत् सत्वं श्रीमदूर्जितमेव वा ।
तत्तदेवावगच्छ ! त्वं मम तेजोंऽशसम्भवम्' ॥ (भ.गी. 10-41) 166

ईशितव्यसम्पन्नं यत् भूतजातम्, यच्च कान्ति-धन-धान्यादि-समृद्धं, कल्याणारम्भेषूद्युक्तं च लोकेऽस्ति, तत्सर्वं, मदीयायाः सर्वनियमनशक्तेरेकदेशेन लब्धात्मकमिति दृढं जानीहि ।

395. 'यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः ।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः' ॥ (भ.गी. 15-18) 114, 138

वासुदेवोऽहम्, यतः मदीयेन दिव्येन स्वभावेन, क्षराक्षराभ्यां अतिशयितः, अत एव, श्रुति-स्मृत्योरुभयोरपि, पुरुषोत्तमत्वेन लब्धप्रथोऽस्मि ॥

396. 'यो मामजमनादिं च वेत्ति लोकमहेश्वरम्' (भ.गी. 10-3) 138

य उपासकः, वासुदेवं मां, अचेतनात् तत्संसृष्टाच्चेतनाच्च

विलक्षणम्, हेयप्रत्यनीकतया मुक्तविलक्षणम्, लोकेश्वराणां सर्वेषा-
मीश्वरं च असम्मूढःसन् वेत्ति, सः सर्वपापविमुक्तो भवति ॥

397. 'विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्' (भ.गी 10-45) 138, 166

परमात्मभूतोऽहं वासुदेवः, कार्य-कारणावस्थं स्थूल-सूक्ष्मरूपं
चेतनाचेतनात्मकमिदं जगत्, मन्महिम्नः अयुतायुतांशेनाधिष्ठाय,
तदीयं स्वाच्छन्द्यं प्रतिरुद्ध्यावस्थितोऽस्मि ॥

398. 'वेदाऽहं समतीतानि' (भ.गी. 7-26) 115

भूतकालसम्बन्धीन्यपि सर्वाणि वस्तूनि, करतलामलकतया अहं
जानाम्येव ॥

399. 'शुनि चैव श्वपाके च पण्डिताः समदर्शिनः' (भ.गी. 5-18) 154

अत्यन्तविषमाकारेषु शुनकादिदेहेषु विद्यमानमप्यात्मानं, ज्ञानैका-
कारत्वेनाविषमतया द्रष्टुं क्षमाः ये आत्मतत्त्वयाथात्म्यज्ञाः; त एव
पण्डिताः ॥

400. 'सत्वात् सञ्जायते ज्ञानम्' (भ.गी. 14-17) 23

देहिनि प्रबोधदशां प्राप्तात् सत्वाख्यात् गुणात्, आत्मतत्त्वापरोक्ष्यं
जायते ॥

401. 'सदा तद्भावभावितः' (भ.गी. 8-6) 21

मुमुक्षुः, आमरणं स्वीये जीवितकाले, अन्तिमस्मृतिहेतुभूतया-
ध्येयवस्तुभावनया वासितो भवेत् ॥

402. 'सर्वभूतानि कौन्तेय प्रकृतिं यान्ति मामिकाम् ।
कल्पक्षये पुनस्तानि कल्पादौ विसृजाम्यहम्' ॥ (भ.गी. 9-7) 237

हे कुन्तीपुत्र! सृष्टानि सर्वाण्यपि भूतानि, अन्तिमब्रह्मदिवसावसाने,
मदात्मिकां प्रकृतिं तमःशब्दवाच्यां, नामरूपविभागानर्हतया

प्राप्नुवन्ति । तान्येव पुनरप्यहम्, सर्गारम्भे स्वसङ्कल्पेन सृष्टिविषयतामापादयामि ॥

403. ' सर्वस्य चाहं हृदि संनिविष्टः ' (भ.गी. 15-15) 165

सर्वस्याऽपि चेतनजातस्य, सकलप्रवृत्ति-निवृत्तिहेतुभूतज्ञानोदयस्थान-भूते हृदयाख्ये शरीरदेशविशेषे, अहमेव अन्तर्यामित्वेन दृढं स्थितः ॥



404. ' अतः प्रत्यक्षसिद्धत्वादुक्तन्यायागमान्वयात् ।
अविद्यायोगतश्चात्मा ज्ञाताऽहमिति भासते ' ॥ (आ.सि.श्लो. 14) 116

उक्तेभ्यो हेतुभ्यः, ' अहं जानामि ' इति ज्ञानं प्रत्याश्रयतया प्रत्यक्षविषयत्वात्, स्थिरत्वास्थिरत्वादिवैषम्य-श्रुत्यर्थापत्तिरूप-न्यायस्य, ' अहं मनुः ' इत्याद्यागमस्य चाबाधात्, ' स्थूलोऽहम् ' इत्यादिदेहात्मभ्रमरूपाविद्यासम्बन्धस्योपपत्तेश्च, चेतन एव, ज्ञाना-श्रयतया अहमर्थो ऽखिलेनि ज्ञाने विषयो भवति ॥

405. ' अनादिमायया सुप्तो यदा जीवः प्रबुध्यते ' (माण्डू.का. 1–16) 30, 207

(पू) जीवपदवाच्यायां दशायामवस्थितः संसारी, अनादिकालतः सन्तत-प्रवृत्तेन मायापदवाच्येन तत्त्वाप्रतिबोधेन, अहङ्कार-ममकारमयान् स्वप्नसदृशान् मिथ्यारूपान् अर्थान् पश्यन् भ्रम्यमाणः, यस्मिंश्च कालविशेषे, तत्त्वज्ञेन गुरुणावबोधितः, प्रबोधं प्राप्नोति; तदा जीव-ब्रह्मणोः अद्वैतं दृढमवबुध्यते ॥

(सि) जीवपदवाच्यश्चेतनः, अनादिसन्ततया मायया करणीभूतया, स्वापपदवाच्यमप्रबोधम् आत्मस्वरूपानवबोधं प्राप्यावस्थितः, यदा कदाचित् गुरुकृपाबलेन आत्मयाथात्म्यावबोधवान् भवतीति, स्वाप-प्रबोधौ जीवस्यैव ; न ब्रह्मणः ॥

406. I 'आत्मेत्येव तु गृह्णीयात् सर्वस्य तन्निष्पत्तेः' (ब्र.न.वा) 34

II आत्मे....ह्णीयात्' ( ,, ) 235

(पू) उपासिता मुमुक्षुः, स्वोपास्यं 'स्वाभिन्न आत्मा' इत्येव जानीयात्; न स्वात्मनः सकाशादन्यतया; सर्वस्यापि जगतः ज्ञातृ-ज्ञान-ज्ञेयात्मकस्य ब्रह्मणि अध्यासत एव लब्धात्मकत्वात् ॥

(सि) उपासको जीवः स्वोपास्यं परमात्मानं, स्वाभिन्नतयैव उपासीत; सर्वस्यापि जगतः उपादानभूतात्परमात्मन एव निष्पन्नत्वात्, उपादेयस्य च उपादानाभिन्नत्वात् ॥

407. 'आलम्बनसंशीलनं पुनः पुनरभ्यासः' (ब्र.न.वा.) 21

ध्यानालम्बनभूतस्य शुभाश्रयदिव्यमङ्गलविग्रहस्य, मुहुर्मुहुः आनुकूल्येन चिन्तनम्, विवेकादिसाधनसप्तकान्तर्गताभ्यासपद-वाच्यम् ॥

408. 'उपासनं स्याद्ध्रुवानुस्मृतिर्दर्शनान्निर्वचनाच्च' (ब्र.न.वा.) 18

'उपासन'पदवाच्यं वेदनं, विजातीयप्रत्ययान्तराव्यवहित-शुभाश्रयस्मृतिसन्तानरूपमेव असकृदावृत्तम्, 'ध्रुवानुस्मृति' शब्देनोच्यते; लोके तथा दर्शनात्, श्रुतिवाक्याच्च ज्ञापकात् ॥

409. 'करणानामभूमित्वात् न तत्सम्बन्धहेतुता' (अहमर्थस्य बोद्धृत्वात् न स तेनैव शोध्यते) ॥ (आ.सि.श्लो. 13) 103

इन्द्रियाणामिन्द्रियागोचरत्वात्, इन्द्रियसन्निकर्षहेतुत्वात्मकमनुग्राह-कत्वं तेषां न सम्भवति; अहमर्थस्यात्मनो बोद्धृतया, स्वस्यैकस्यैव शोध्यत्व-शोधकत्वयोरनुपपन्नत्वात्, तस्याप्यनुग्राहकत्वं न सम्भवतीति, करणभूतेन्द्रियानुग्रहः, कर्तृभूतात्मानुग्रहश्चेत्युभयमपि नैव सम्भवति ॥

410. 'जगद्व्यापारवर्जं समानो ज्योतिषा' (बो.वृ.) 160

मुक्तात्मा हि! निखिलजगन्नियमनरूपं परमात्मगतमैश्वर्यमपहाय,

असङ्कुचितज्ञानाद्यंशे, स्वयंप्रकाशेन परमात्मना सह परमसाम्य-मापन्नोऽवतिष्ठते ॥

411. 'जात्याश्रयनिमित्तादुष्टादन्नात्कायशुद्धिर्विवेकः' (व्र.न.वा) 20

गृञ्जनत्वादिजातितः, पतितादिस्वामितः, उच्छिष्टसम्बन्धादिनिमित्ततश्च अदुष्टं यदन्नम्, तस्मादन्नात् सेवितात्, अन्तर्बाह्येन्द्रियसहिते स्वदेहे, रजस्तमसोरभिभवेन सत्त्वोन्मेपापादनं, विवेकाद्यन्तर्गतः विवेकपदार्थः ॥

412. 'ज्ञानरूपं परं ब्रह्म तन्निवर्त्यं मृषात्मकम् ।
अज्ञानं चेत् तिरस्कुर्यात् ! कः प्रभुस्तन्निवर्तने' ॥ (ना.मु.सू.) 167

स्वयंप्रकाशनिर्विशेषचिद्रूपेण परब्रह्मणा बाध्यं, मिथ्याभूतं भावरूपमज्ञानं(कर्तृ), स्वस्य निवर्तकं. तादृशं परं ब्रह्म कर्मभूतं, यदि नाम आच्छादयेत्–तिरोहितात्मस्वरूपं कुर्याच्चेत्, तादृशस्य ब्रह्मस्वरूपावरणपटोरज्ञानस्य बाधने, को नाम समर्थः स्यात्? न कश्चिदपि ॥

413. 'ज्ञानं ब्रह्मेति चेज्ज्ञानमज्ञानस्य निवर्तकम् !
ब्रह्मवत्तत्प्रकाशत्वात् तदपि ह्यनिवर्तकम्' ॥ (ना.मु.सू.) 167

ज्ञानात्मकं परं ब्रह्म, न भावरूपाज्ञानबाधकम् ; किन्तु अन्तःकरणवृत्त्यात्मकं, ब्रह्म ज्ञानस्वरूपम्' इत्याकारकं प्रमाणजन्यं ज्ञानमेव, अज्ञानपदवाच्याविद्यानिवर्तकम्, इति यद्युच्येत ! तदा ब्रह्मस्वरूपं यथा अज्ञानानिवर्तकम्, तथा तस्यैव प्रकाशरूपं वृत्त्यात्मकं ज्ञानमपि अज्ञाननिवर्तकं नैव भवेत् ; स्वरूपानतिरिक्तप्रकाशत्वात् ब्रह्मणः ॥

414. 'ज्ञानं ब्रह्मेति विज्ञानमस्ति चेत् !. स्यात्प्रमेयता ।
ब्रह्मणोऽननुभूतित्वं त्वदुक्त्यैव प्रसज्यते' ॥ (ना.मु.सू.) 168

किं च–'ब्रह्म ज्ञानस्वरूपम्' इत्येवंरूपं वृत्त्यात्मकं प्रमाणाधीनं ज्ञानं

यदि सम्भवति! तर्हि, 'ब्रह्म अवेद्यम्' इति अद्वैतिनां सिद्धान्तः भज्येत। ततश्च 'ब्रह्म केवलं वित्स्यात्मकम्, अनुभूतिमात्र-स्वरूपम्; न वेद्यम्' इति स्वोक्तस्य अभाव एवापद्यते ॥

415. 'तद्विपर्ययजा तुष्टिः उद्धर्षः' (ब्र.न.वा.) 22

देश-कालसाद्गुण्येन, प्रियवस्त्वादीनामनुस्मृत्या च जाता सन्तोषात्मिका चित्तवृत्तिः, विवेकादिसाधनसप्तकान्तर्गतानुद्धर्षप्रतियोगि-भूतः उद्धर्षपदार्थः ॥

416. 'तल्लब्धिर्विवेक-विमोकाभ्यास-क्रिया-कल्याणानवसादानुद्धर्षेभ्यः संम्भवान्निर्वचनाच्च' (ब्र.न.वा) 20

ध्रुवानुस्मृतिर्मुमुक्षोः, 'विवेकः, विमोकः, अभ्यासः, क्रिया, कल्याणम्, अनवसादः, अनुद्धर्षः, इत्युक्तेभ्यः सप्तभ्यः एकत्र मिलितेभ्यः साधनेभ्यो लभ्यते' इति निश्चीयते; युक्त्या, आगमेन च अस्यार्थस्य प्रमितत्वात् ॥

417. देवतासायुज्यात् अशरीरस्याऽपि. देवतावत् सर्वार्थसिद्धिः स्यात्' (द्र.भा.) 60

देवतासमानगुणकत्वरूपं देवतासायुज्यं प्राप्य स्थितस्य मुक्तात्मनः, कर्मायत्तशरीररहितस्यापि, सर्वार्थगोचरोऽनुभवः, देवतानामिव सुलभः सम्भवति ॥

418. देश-कालवैगुण्यात् शोकवस्त्वाद्यनुस्मृतेश्च, तज्जं दैन्यमभास्वरत्वं मनसोऽवसादः' (ब्र.न.वा.) 22

अनुकूलजीवनविरोधिनः देशवैपरीत्यात्, कालवैपरीत्यात्, इष्ट-वियोगात्मकातीतार्थविषयकात् शोकात्, तादृशागाम्यर्थविषय-काद्भयाच्च जनितम्, दैन्यदर्शनजं च अन्तःकरणस्य अभीष्टकार्य-प्रवृत्त्यक्षमत्वरूपं यत् दैन्यं, तदुभयं, साधनसप्तकान्तर्गतानव-सादप्रतियोगी 'अवसाद' पदार्थः ॥

419. देहेन्द्रियमनःप्राणधीभ्योऽन्योऽनन्यसाधनः ।
नित्यो व्यापी प्रतिक्षेत्रमात्मा भिन्नः स्वतः सुखी ' ।। 116
(आ.सि.श्लो. 3)

निरूपणीय आत्मा, देवादिशरीरात्, बाह्यान्तरिन्द्रियेभ्यः, जीवनोपकरणात्प्राणात्, (तथा) धर्मभूतज्ञानादपि च विलक्षणः, तेषामाधारः, स्वेतरानधीनस्वप्रकाशः, जनिमृतिरहितः, सूक्ष्मत्वेन सर्वत्र व्यापनक्षमः, आनन्दस्वभावः, प्रतिशरीरं भिन्नो वर्तते ॥

420. ' पञ्चमहायज्ञाद्यनुष्ठानं शक्तितः, क्रिया ' (ब्र.न.वा.) 21

'देवयज्ञः पितृयज्ञो मनुष्ययज्ञो भूतयज्ञो ब्रह्मयज्ञः' इत्युक्तानां पञ्च-महायज्ञादीनां नित्य-नैमित्तिकानां काम्यवर्जितानां कर्मणां यथा-शक्त्यनुष्ठानम्, साधनसप्तकान्तर्गतः क्रियापदार्थः ॥

421. ' भिन्नप्रवृत्तिनिमित्तानां शब्दानाम् एकस्मिन् अर्थे वृत्तिः, सामानाधिकरण्यम् ' (कै.वृ.आ.) 126

विशेषणतो भिन्नार्थत्वे सति, विशेष्यत एकार्थत्वम्, पदद्वयप्रवृत्ति-निमित्तयोः एकाश्रयवृत्तित्वम्–सामानाधिकरण्यम् । [वृत्तिः–विशेष्यीभूतप्रधानार्थविषयः शब्दव्यापारः । निमित्तम्–प्रवृत्ति-निमित्तं जातिगुणादिकम् । समानम्-एकम् । अधिकरणम्–विशेषणानामाधारभूतं विशेष्यम् ]

422. ' यद्यपि सच्चित्तः ' (द्र.भा.) 161

यद्यपि सद्विद्यानिष्ठोऽपि दहरविद्यानिष्ठ इव, उपास्यगतमपहतपाप्म-त्वादिकं उपास्याद्दैवतात् पृथग्भावेन न स्मरेत्; तथापि उपास्या देवता, वस्तुस्वरूपानुबन्धिसर्वकल्याणगुणविशिष्टैवोपास्यत इति, तत्रापि सगुणं ब्रह्मैव प्राप्यम् ॥

| प्र. सं. | प्रमाणानि सविवरणानि | पृ. सं. |
|---|---|---|
| 423. | 'युक्तं तद्गुणकोपासनात्' (ब्र.न.वा)<br>वस्तुतः तत्तद्गुणविशिष्टस्यैव परमात्मनः उपासनात्, तत्क्रतुन्यायेन च यथोपासनमेव फलप्राप्तेश्च, सगुणं ब्रह्मैव प्राप्यम्; न निर्गुणम् ॥ | 161 |
| 424. | 'विमोकः कामानभिष्वङ्गः' (ब्र.न.वा.)<br>काम्येषु शब्दादिविषयेषु अत्यन्तादरवर्जनं, साधनसप्तकान्तर्गतो विमोकः । | 21 |
| 425. | 'वृत्तात् कर्माधिगमादनन्तरं ब्रह्मविविदिषा' (बो.वृ.)<br>अवर्जनीयतया पूर्वं सम्पन्नात्कर्मनिर्णयादव्यवहिते जीवितकाले अभिलषितं ब्रह्मोपासनं कार्यम् । | 4 |
| 426. | 'वेदनमुपासनं स्यात्तद्विषये श्रवणात्' (ब्र.न.वा.)<br>श्रुतिषु मोक्षसाधनतया उपदिष्टं 'विद'धातूपात्तं ज्ञानम्, उपासनात्मकमेव, न तु वाक्यार्थज्ञानम्; उपासनरूपार्थविषयकतयैव तत्र विदधातुश्रवणात् । (यद्वा) उपासनशब्दप्रयोगविषये स्थाने अन्यत्र प्रकरणे वेदनार्थकशब्दप्रयोगात् ॥ | 17 |
| 427. | 'व्यङ्क्तृ-व्यङ्ग्यत्वमन्योन्यं न च स्यात्प्रातिकूल्यतः ।<br>व्यङ्ग्यत्वेऽननुभूतित्वमात्मनि स्याद्यथा घटे' ॥ (आ.सि.श्लो. 12)<br>केवलानुभूतिस्वरूपस्यात्मनः, अहङ्कारस्य च मिथो व्यङ्ग्य-व्यञ्जकभावो नोपपद्यते; स्वभावविरोधात् । यद्यात्मनोऽभिव्यङ्ग्यत्वम्, तदा दीपाद्यभिव्यङ्ग्ये घटादाविव, आत्मन्यपि अद्वैतिसंमतस्यानुभूतित्वस्याभावः अङ्गीकार्यः स्यात् ॥ | 101 |
| 428. | 'शान्ताङ्गार इवादित्यमहङ्कारो जडात्मकः ।<br>स्वयञ्ज्योतिषमात्मानं व्यनक्तीति न युक्तिमत्' ॥ (आ.सि.श्लो. 11)<br>प्रथममङ्गारःसन् जलादिनिर्वापिताग्निकः पिण्डः, स्वयम् अप्रकाशः, | 100 |

यथा वा प्रकाशमयं सूर्यं नैव प्रकाशयितुं समर्थः ; तथा, जडः अप्रकाशः अहङ्कारोऽपि, अनुदितानस्तमितनित्यानुभूत्यात्मकं चिन्मयमात्मानं नैव व्यङ्क्तुमलम् ; अयोग्यत्वात् ।।

429. ' सकृत्प्रत्ययं कुर्यात्, शब्दार्थस्य कृतत्वात् ; प्रयाजादिवत् ' (ब्र.न.वा ) 18

मोक्षसाधनतया विहितमुपासनम् एकवारमेवानुष्ठेयम् न बहुवारम् ; तावतैव विधिसार्थक्यात् । यथा दशपूर्णमासाद्यङ्गतया, विधिचोदितः प्रयाजादिः, एकवारमनुष्ठित एव यथाविध्यनुष्ठितो भवति, तद्वत् ।।

430. सत्यार्जवदयादानाहिंसानभिध्याः कल्याणानि ' (ब्र.न.वा.) 22

सर्वभूतहितकारि वचनम्, करणत्रयसमानरूपता, स्वार्थनिरपेक्षा परदुःखासहिष्णुता, न्यायार्जितस्य स्वीयधनादेः यथाविधि सत्पात्रे त्यागः, काय-वाङ्-मनोभिः परपीडावर्जनम्, निष्फलचिन्तावर्जनम्, एतानि साधनसप्तकगतकल्याणपदवाच्यानि ।।

431. ' सिद्धन्तूपासनशब्दात् ' (ब्र.न.वा.) 18

मोक्षसाधनतया श्रुतिविहितं वेदनम्, असकृदावृत्तनिरन्तरचिन्तनात्मकमेव ; न सकृदावृत्तप्रत्ययात्मकम् । ' वेदन 'पदार्थविवरणरूपस्य ' उपासन 'शब्दस्य प्रयोगात् ।।

432. ' संहितमेतच्छारीरकं जैमिनीयेन षोडशलक्षणेनेति शास्त्रैकत्वसिद्धिः ' (बो.वृ.) 4

इदं बादरायणीयं शारीरकाख्यं ब्रह्ममीमांसाशास्त्रम्, जैमिन्याः रचितेन षोडशाध्याययुतेन कर्म-देवतामीमांसाशास्त्रेण सह नियतपौर्वापर्यैकव्याख्येयव्याख्यानतया सङ्गतमिति हेतोः, जैमिनीयबादरायणीययोः एकविद्यास्थानता, एकप्रबन्धता च सिद्धा ॥

इति चतुःसूत्र्यन्तश्रीभाष्यभागगतः

सविवरणः प्रमाणकोषः ।।

॥ श्रीः ॥



# अनुबन्धः—३

॥ श्रीः ॥

# पदार्थकोषः–१ श्रीभाष्ये सङ्गृहीतः

| पदानि तदर्थाश्च | पृ. सं. |
|---|---|
| अज्ञानम्—ज्ञानरूपे आत्मनि देवादिविविधभेदहेतुभूतं कर्म । | 164 |
| अज्ञाननिवृत्तिः—सकलभेददर्शननिवृत्तिः (पू) । | 10 |
| अथ—अनन्तरम् । | 2 |
| अदृष्टम्—उपकरणभूतयागादिशक्तिरूपम् अपूर्वादिशब्दवाच्यम् (पू) । | 290 |
| अध्ययनम्—उपनीतस्य आचार्योच्चारणानूच्चारणरूपं वेदाक्षरराशिग्रहणफलं स्वाध्यायसंस्काररूपं कर्म । | 5 |
| अनन्तम्—देशतः, कालतः वस्तुतश्च परिच्छिन्नात् व्यावृत्तम् (पू) । | 40 |
| अनन्तम्—देश-काल-वस्तुपरिच्छेदरहितं स्वरूपम् (सि) । | 281 |
| अनन्यसाधनः—स्वप्रकाशः । | 116 |
| अनवसादः—तद् (अवसाद) विपर्ययः । | 22 |
| अनिर्वचनीयत्वम्—सदसद्विलक्षणत्वम् । | 172 |
| अनुद्धर्पः—तद् (उद्धर्ष) विपर्ययः । अतिसन्तोषाभावः । | 22 |
| अनुभूतिः—स्वाश्रयं प्रति स्वसद्भावेनैव कस्यचिद्वस्तुनो व्यवहारानुगुण्यापादनस्वभावः ज्ञानावगतिसंविदाद्यपरनामा सकर्मकः, अनुभवितुरात्मनो धर्मविशेषः । | 82 |
| अनुभूतित्वम्—वर्तमानदशायां स्वसत्तयैव स्वाश्रयं प्रति प्रकाशमानत्वम् । स्वसत्तयैव स्वविषयसाधनत्वं वा । | 71 |
| अनृतम्—ऋतेतरत्, सांसारिकफलं ब्रह्मप्राप्तिविरोधि कर्म । | 204 |
| अन्तरम्—अवकाशः, विच्छेदः । | 137 |
| अभेदः—भेदविपरीतत्वम् । | 344 |
| अभ्यासः—पुनः पुनः आरम्बणसंशीलनम् । | 21 |

पदानि तदर्थाश्च — पृ. सं.

| पदानि तदर्थाश्च | पृ. सं. |
|---|---|
| उपबृंहणम्—विदितसकलवेदतदर्थानां स्वयोगमहिमसाक्षात्कृतवेदतत्त्वार्थानां वाक्यैः, स्वावगतवेदवाक्यार्थव्यक्तीकरणम् । | 143 |
| उपासनम् - अपवर्गोपायतया विधिदिसतं वेदनम् । | 16 |
| ऋतम्—फलाभिसन्धिरहितं, परमपुरुषाराधनवेषं, तत्प्राप्तिफलं कर्म । | 204 |
| एकत्वम्—एकसङ्ख्यावच्छेदः । | 81 |
| एकार्थत्वम्—सर्वपदानामर्थैक्यम् । | 39 |
| करणम् (मुक्तेः)—परब्रह्मध्यानरूपम् । | 163 |
| कल्याणानि—सत्यार्जवदयादानाहिंसानभिध्याः । | 22 |
| कामाः—(काम्यन्ते इति) कल्याणगुणाः । | 131 |
| कार्यता—(कारणस्य) अवस्थान्तरापत्तिरेव । | 243 |
| कृतिकर्मत्वम्—कृत्या प्राप्तुमिष्टतमत्वम् । | 263 |
| कृत्युद्देश्यत्वम् - कृतिकर्मत्वम् । | 263 |
| क्रिया - शक्तितः पञ्चमहायज्ञाद्यनुष्ठानम् । | 21 |
| क्षेत्रज्ञाः—अनादिकर्मरूपाविद्यावेष्टनतिरोहितपरावरतत्त्वयाथात्म्य-स्वस्वरूपावबोधाः, देवा-सुर-सिद्ध-गन्धर्व-किन्नर-किम्पुरुष-यक्ष-राक्षस-पिशाच-मनुज-पशु-शकुनि-सरीसृप-वृक्ष-गुल्म-लता-दूर्वादिरूपाः व्यवस्थित धारक-पोषक-भोग्यविशेषाः स्त्री-पुं-नपुंसकभेदभिन्नाः (जीवाः) । | 351 |
| चिद्रूपता—स्वयंप्रकाशता । | 90 |
| छेदनम्—एकस्य सतः द्वैधीकरणम् । | 347 |
| जडम्—अन्याधीनप्रकाशम् । | 40 |
| जातिः—संस्थानम् । | 67 |
| जिज्ञासा—ज्ञातुमिच्छा । इष्यमाणं ज्ञानम् । | 4 |
| जीवः—उपाध्युपहितं ब्रह्म (पू) । | 347 |
| जीवन्मुक्तः—यस्य बाधितोऽपि सशरीरत्वप्रतिभासः, द्विचन्द्रज्ञानवत् अनुवर्तते सः (पू) । | 332 |
| जीवन्मुक्तिः— सशरीरस्यैव मोक्षः (पू) । | 332 |

| पदानि पदार्थाश्च | पृ. सं. |
|---|---|
| ज्ञातृत्वम्—ज्ञानक्रियाकर्तृत्वम् । | 54 |
| ,, ज्ञानगुणाश्रयत्वम् । | 97 |
| ज्ञानम्—अन्याधीनप्रकाशात् जडरूपाद्वस्तुनः व्यावृत्तं ब्रह्म (पू) । | 40 |
| ,, नित्यास चितज्ञानैकाकारं ब्रह्म । | 281 |
| तत्क्षमत्वम्—तत्सामर्थ्यम् । | |
| तद्भावभावापत्तिः (जीवस्य)—ब्रह्मणः प्रक्षीणाशेषभावनत्वं यत्, तदापत्तिः । | 163 |
| तमः—अचित्समष्टिरूपायाः प्रकृतेः सूक्ष्मावस्था । | 206 |
| तीर्त्वा—अपोह्य । | 22 |
| तुच्छत्वम्—प्रमाणसम्बन्धानर्हत्वम् । | 218 |
| त्यत्—अचिद्व्यष्टिः । | 205 |
| दर्शनरूपता—प्रत्यक्षतापत्तिः । | 18 |
| दुःखनिवृत्तिः—अनुकूल-प्रतिकूलान्वयविरहे, स्वरूपेणावस्थितिः । | 264 |
| धियो धीत्वम्—ज्ञातुः विषयप्रकाशनस्वभावता । | 59 |
| धियः प्रकाशता— ,, ,, । | 59 |
| ध्यानम्—तैलधारावदविच्छिन्नस्मृतिसन्ततिरूपम् । | 17 |
| ,, ज्ञातार्थस्मृतिसन्ततिः । | 331 |
| ध्रुवानुस्मृतिः—असकृदावृत्तम् उपासनरूपं वेदनम् । | 18 |
| नास्तिशब्दाभिधेयम्—प्रतिक्षणमन्यथाभूततया कादाचित्कावस्थायोगि अचिद्वस्तु । | 214 |
| नित्यत्वम्—सर्वकालवर्तमानत्वम् । | 81 |
| निदिध्यासनम्—आत्मैकत्वविद्याविरोध्यनादिभेदवासनानिरसनाय 'वेदान्तवाक्यानि आत्मैकत्वविद्याप्रतिपादकानि' इत्यस्यैवार्थस्य अनवरतभावना (पू) । | 12 |
| निर्विकल्पकम्—एकजातीयद्रव्येषु, केनचिद्विशेषेण वियुक्तस्य प्रथमपिण्डस्य ग्रहणम् । | 61 |
| निवृत्तिः—प्रध्वंसाभावरूपा । | 326 |
| पदम्—प्रकृति-प्रत्यययोर्योगः । | 60 |

| पदानि तदर्थाश्च | पृ. सं. |
|---|---|
| परमात्मना अभेदी—परमात्मनो ज्ञानैकाकारात्, यः कर्मकृतो देवादिरूपो भेदः, तन्निवृत्तिमान् । | 163 |
| पापम्—पुण्य-पापरूपं कर्म (ब्रह्मज्ञानोत्पत्तिविरोधि) । | 23 |
| प्रकाशः – व्यवहारानुगुण्यम् । | 80 |
| प्रकाशकत्वम्—अर्थपरिच्छेदः, व्यवहारयोग्यतापादनम् । | 186 |
| प्रकाशतिरोधानम्—प्रकाशनाशः । | 170 |
| प्रकृतिः—भूतसूक्ष्मम् अचिद्वस्तु । | 238 |
| प्रक्षीणाशेषभावनः—'कर्मभावना-ब्रह्मभावना-उभयभावना' इति भावनात्रयरहितः । | 162 |
| प्रमाणस्य अर्थसम्बन्धः—यद्देशकालादिसम्बन्धितया योऽर्थोऽवभासते, तस्य तथाविधाकारमिथ्यात्वप्रत्यनीकता ; न स्वसमकालवर्तिना अविनाभावः । | 73 |
| प्रयोजनम्—प्रवृत्ति-निवृत्तिसाध्यौ इष्टप्राप्त्यनिष्टपरिहारौ । | 311 |
| बन्धः—सशरीरत्वम् (पू) । | 332 |
| बन्धः—द्रष्टृ-दृश्यादिप्रपञ्चः (पू) । | 337 |
| बाधः—यद्देशकालादिसम्बन्धितया यत् अस्तीत्युपलब्धम्, तस्य तद्देशकालादिसम्बन्धितया नास्तीत्युपलब्धिः । | 218 |
| ब्रह्म — स्वभावतो निरस्तनिखिलदोषः अनवधिकातिशयासङ्ख्येयकल्याणगुणगणः पुरुषोत्तमः । बृहत्त्वं च यत्र स्वरूपेण गुणैश्च यत्रानवधिकातिशयं, सः सर्वेश्वरः । | 3 |
| ब्रह्मणो भावः (जीवस्य)—ब्रह्मणः स्वभावः, न तु स्वरूपैक्यम् । | 163 |
| भक्तिः—एवं (साक्षात्कार) रूपा ध्रुवानुस्मृतिः । | 19 |
| भावनात्रयम्—कर्मभावना-ब्रह्मभावना-उभयभावना चेति त्रितयम् । | 162 |
| भूतम्—आत्मपर्यन्तो देहः । | 163 |
| भेदः—गोत्वादिजातिः । | 68 |
| भेदः—कस्यचित् कस्माच्चिद्विलक्षणत्वम् । | 344 |

| पदानि तदर्थाश्च | पृ. सं. |
|---|---|
| मननम्--१. आचार्योपदिष्टस्य स्वात्मनि एवमेव युक्तमिति हेतुतः प्रतिष्ठापनम् । | 12 |
| २. श्रवणावगतनिखिलभेदोपमर्दिब्रह्मात्मैकत्वविज्ञानाभ्यासरूपम् (पू.) । | 118 |
| माया—विचित्रार्थसर्गकरी (विचित्रा भगवतः शक्तिः) । | 207 |
| त्रिगुणात्मिका प्रकृतिः । | 208 |
| मिथ्यात्वम्—प्रतीयमानत्वपूर्वकयथावस्थितवस्तुज्ञाननिवर्त्यत्वम् । | 29 |
| मीमांसा—गृहीतात् स्वाध्यायादवगम्यमानप्रयोजनवदर्थापातदर्शनानन्तरकालिकतत्स्वरूप-प्रकारविशेषनिर्णयफलवेदवाक्यविचाररूपा । | 6 |
| मुक्तिः—सकलभेदनिवृत्तिः (पू.) । | 334 |
| मृत्युः—१. ज्ञानोत्पत्तिविरोधि प्राचीनं कर्म । | 22 |
| २. अविद्या (पू.) । | 33 |
| ३. तमश्शब्दवाच्यम् अचिद्वस्तु । | 239 |
| मोक्षः—१. अविद्यानिवृत्तिः (सि) । | 9 |
| २. प्रपञ्चनिवृत्तिः (पू.) । | 316 |
| ३. निरस्तसमस्ताविद्याकृतविविधभेदाद्वितीयज्ञानैकरसं ब्रह्म (पू.) । | 321 |
| ४. आत्मस्वरूपम् (पू.) । | 324 |
| ५. अशरीरत्वम् (पू.) । | 332 |
| योनिः—कारणम्, प्रमाणम् । | 285 |
| लिङर्थः—धात्वर्थस्य कर्तृव्यापारसाध्यता । | 268 |
| वस्तु—प्रामाणिकविशेषैः विशिष्टम् । | 59 |
| वाक्यम्—पदसङ्घातरूपम् । | 60 |
| विद्या—ज्ञानम् । | 22 |
| विभेदः—देव-तिर्यङ् मनुष्य-स्थावरात्मको विविधो भेदः । | 164 |
| विमोकः—कामानभिष्वङ्गः । | 21 |
| विरोधः—सहानवस्थानं, भिन्नाधारत्वं च । | 337 |

| पदानि तदर्थाश्च | पृ. सं. |
|---|---|
| विमोकः—जात्याश्रयनिमित्तादुष्टादन्नात् कायशुद्धिः । | 20 |
| विवेकादिः—विवेक-विमोकाभ्यास-क्रिया-कल्याणानवसादानुद्धर्षाः । | 20 |
| विशदावभासः—यः सांशः सविशेषः प्रकाशविषयः, तस्य सकलावभासः । | 183 |
| विशेषणत्वम्—व्यावर्तकत्वम् । | 275 |
| व्यापी—अतिसूक्ष्मतया सर्वाचेतनान्तःप्रवेशनस्वभावः । | 116 |
| व्यावहारिकः—आपातप्रतीतिसिद्धः, युक्तिभिर्निरूपितो न तथावस्थितः । | 119 |
| व्यावृत्तिः—बाधफलभूता विषयनिवृत्तिः । | 48 |
| शारीरकमीमांसा—उपनिषद्वाक्यापातप्रतीतानन्तस्थिरफलामृतत्वनिर्णयफलवेदान्तवाक्य-विचाररूपा । | 6 |
| शुभाश्रयः—परशक्तिरूपमिदममूर्तम्, अपरशक्तिरूपं क्षेत्रज्ञाख्यमूर्तं च, परशक्ति-रूपस्यात्मनः क्षेत्रज्ञतापत्तिहेतुभूततृतीयशक्त्याख्यकर्मरूपाविद्या च, इत्येतच्छक्तित्रयाश्रयः भगवदसाधारणम् 'आदित्यवर्णम्' इत्यादिवेदान्तसिद्धं मूर्तस्वरूपम् । | 145 |
| शेषत्वम्—परोद्देशप्रवृत्तकृतिव्याप्यर्हत्वम् (पू) । | 264 |
| शेषित्वम्—तत् (शेष) प्रतिसम्बन्धित्वम् । | 264 |
| श्रवणम्—'वेदान्तवाक्यानि आत्मैकत्वविद्याप्रतिपादकानि' इति, तत्त्वदर्शिनः आचार्यात्, न्याययुक्तार्थग्रहणम् (पू) । | 11 |
| संवेदनम्—स्वसत्तयैव स्वाश्रयं प्रति कस्यचिद्विषयस्य प्रकाशनम् । | 80 |
| संसारः—ब्रह्मादिस्थावरान्तचतुर्विधशरीरसम्बन्धः । | 322 |
| संस्कारः—कार्यान्तरयोग्यताकरणम् । | 5 |
| संस्थानम्—स्वासाधारणं रूपम् । | 67 |
| सत्—चिद्व्याप्तिः । | 205 |
| समन्वयः—सम्यगन्वयः, ब्रह्मणः पुरुषार्थतयाऽन्वयः । | 308 |
| सविकल्पकम्—एकजातीयद्रव्येषु द्वितीयपिण्डग्रहणम् । | 61 |

॥ श्रीः ॥



॥ श्रीः ॥

# पदार्थकोषः–२ (व्याख्यादिषु सङ्गृहीतः)

| पदानि तदर्थाश्च | पृ. सं. |
|---|---|
| अधिकरोति—१. अधिकारी भवति, २. स्वार्थबुद्ध्या उद्युक्तो भवति। | 6 |
| अधिकारः—प्रस्तावः। | 247 |
| अधिकारविधिः—कर्मजन्यफलस्वाम्यबोधको विधिः। | 247 |
| अधिगमः—प्राप्तिः, निर्णयः। | 4 |
| अधिष्ठानम्—आरोपधर्मि। | 233 |
| अध्ययनम् (वेदस्य)—१. सनियमकोच्चारणम्, २. ग्रहणफलावच्छिन्नक्रियाक्षण-निचयः। | 5 |
| अध्ययने प्राथम्यम्—शास्त्रान्तरश्रवणयोग्यावस्थापेक्षया पूर्वभावित्वम्। | 4 |
| [अध्यवसायः—प्रयत्न-निश्चयोभयम्] | |
| [अनध्यवसायः—किं संज्ञकोऽयं वृक्षः? इत्याद्याकारकः ज्ञानावस्थाविशेषः] | |
| अननुभूतित्वम्—कस्यचित् प्रकाशात्मत्वाभावः, अनुभूतिशब्दानभिलप्यत्वम्। | 71 |
| अनन्तः—१. नान्तं गुणानां गच्छन्ति तेनानन्तोऽयमुच्यते, २. त्रिविधपरिच्छेद-रहितः। | 227 |
| अनन्यथासिद्धम्—१. विरुद्धार्थप्रमाणाबाधेन अनुदयम्, २. स्वविषयमिथ्यात्वे अनुपपन्नरूपम्। | 36 |
| [अनन्वितम्—उचितान्वयशून्यम्]। | |
| अनभिधानज्ञः—पदशक्त्यनभिज्ञः। | 39 |
| अनभिध्या—अभिध्याराहित्यम्। | 22 |
| अनभिसंहितफलं कर्म—बन्धकफलसङ्कल्परहितं कर्म। | 253 |
| अनवकाशत्वम्—अप्रमाणकोट्यनन्तर्भाव-विषयान्तरालाभाभ्यां, विरुद्धार्थोपस्थापक-प्रमाणाबाधेन अनुदयत्वम्। | 36 |
| अनवस्था—उपर्युपरि अपेक्षा [अप्रामाणिकापर्यवसितकल्पनाधारा]। | 46 |
| अनात्मत्वम्—पुरुषार्थप्रतिसम्बन्धित्वाभावः। | 96 |
| अनात्म्यः—कर्मकृतशरीररहितः (आत्म्यम्-आत्मना व्याप्यं-शरीरम्)। | 32 |

| पदानि तदर्थाश्च | पृ. सं. |
|---|---|
| अभास्वरत्वम्—१. मनसि जातं दैन्यम्, उपयुक्तप्रकाशनाशक्तत्वम्, दयाविशेषाज्जातं दैन्यं वा। २. भास्वरत्वाभावः, भास्वरत्वविरोधि वा। | 22 |
| अभिचाकशीति—भृशं भाति। | 157 |
| [अभिचारः—शत्रुमारणम्]। | |
| अभिधा—व्युत्पत्तिसिद्धार्थे एव शब्दस्य वृत्तिः। | 196 |
| अभिधानवृत्तिः—मुख्यवृत्तिः। | 42 |
| अभिधानम्—मुख्यवृत्त्या विषयीकरणम्। | 42 |
| अभिधासामर्थ्यम्—कयाचिद्वृत्त्या बोधनार्हत्वम्। | 60 |
| अभिधाभिदा—भूयस्त्वेन अभिधानव्यवस्था। | 196 |
| [अभिधावृत्तिः—शब्दस्य अर्थेन साक्षात्सम्बन्धः।] | |
| अभिध्या—१. परकृतापकारचिन्ता, २. परकीये स्वत्वबुद्धिः, ३. निष्फलचिन्ता, ४. परप्रतिकूलचिन्ता, ५. वितथाभिनिवेशः। | 22 |
| अभिभवः—स्वसजातीयग्रहणकृतमग्रहणम्। | 200 |
| अभिमतत्वम्—अभिमत्यर्हत्वम्; स्वानुरूपत्वम्। | 139 |
| अभियुक्ततमः—भगवज्ज्ञानप्रदो गुरुः। | 353 |
| अभिष्वङ्गः—विषयमभुक्त्वा स्थातुं न शक्नोति येन, स विकारः। अनुवृत्तदृढग्रहणम्। | 21 |
| [अभ्युदयः—पशु-पुत्र-स्वर्गादिः अणिमादिश्च] | |
| अमतमविज्ञातम्—श्रवणमननाद्यविषयः। | 26 |
| अमलात्मत्वम्—कर्मसम्बन्धानर्हस्वभावत्वम्। | 151 |
| अमूर्तत्वम्—मुक्तचेतनत्वम्। | 142 |
| अरम्—द्रुतम्, शीघ्रम्। | 135 |
| अर्थः—१. पदजन्यबोधे विशेष्यम्, २. प्रयोजनम्। | 126 |
| अर्थक्रिया—प्रयोजनात्मकं कार्यम्। | 121 |

पदानि तदर्थाश्च — पृ. सं.

आत्मानुभवः—अहमर्थस्य स्फुरणम् ।	77

[आत्माश्रयणम्—स्वज्ञस्यधीनज्ञप्तिकत्वम्] ।

आत्म्यम् –व्याप्यम् ।	225

[आदेशः—१. प्रशासिता, २. विधिः] ।

[आधेयत्वं (चेतनाचेतनयोः)—ईश्वरतत्त्वस्वरूपप्रयुक्तम् अधीनत्वम्] ।

आनन्दः—विनियोगजा प्रीतिः ।	198

आनन्दत्वम्—१. अनुकूलज्ञानत्वम्, २. स्वानुकूलत्वम् ।	134

आनीतत्वं (वचः सुधायाम्)—बुद्ध्यासन्ने स्वार्थे स्थापितत्वम् ।	2

[आनुभाविकी वृत्तिः—आसत्ति-योग्यता-तात्पर्यादिन्यायपरामर्शेन तैरेव पदैः अन्वितानुभवप्रयोजिका वृत्तिः] ।

आपः—निर्गन्धत्वे सति विशिष्टरसवन्ति द्रव्याणि ।	195

आपरोक्ष्यम्—विशदावभासत्वम् ।	113

आपातप्रतीतिः—अज्ञाननिवृत्तिमात्रेण संशयविपर्ययसहं ज्ञानम् ।	6

आप्तकामता—यत् यदा इष्टं, तस्य तदा सिद्धिः ।	291

आप्तत्वम्—यथार्थवक्तृत्वम् ।	329

आप्नोति—अनुभवति ।	860

[आप्यायनम्—सामर्थ्यव्यञ्जनम् (इन्द्रियाणां भूतैः)] ।

आरम्बणम्—आलम्बनम्–शुभाश्रयः । (आरभ्यते, आलम्भ्यते, स्पृश्यते इति) योगमारुरुक्षोः चित्तालम्बनम्, शुभाश्रयपदाभिधेयं भगवतो रूपम् ।	21

[आरादुपकारकत्वरूपम् अङ्गत्वम्—निष्पन्नस्य करणस्य, फलोत्पत्तौ सहकारित्वम् ।]

आर्जवम्—मनोवाक्कायानाम् ऐकरूप्यम् ।	22

[आवापः—सङ्ग्रहः] ।

आलम्बनम्—विषयः ।	121

आश्रमाः—ब्रह्मचर्य-गार्हस्थ्य-वानप्रस्थ-सन्यासाख्याः चत्वारः ।	20

| पदानि तदार्थाश्च | पृ. सं. |
|---|---|
| आश्रयदुष्टम्—दुष्टस्वामिकम्, अभिशस्तपतितचण्डालादिद्रव्यम्। (आश्रयः द्रव्यस्वामी पुरुषः)। | 20 |
| [आश्रयासिद्धत्वम्—पक्षविशेषणाप्रसिद्ध्यादौ सति, हेतोः आश्रयीभूतस्य पक्षस्य असिद्धिः]। | |
| [आसत्तिः—मुख्यार्थसम्बन्ध-तद्गुणसम्बन्धान्यतरत्।] | |
| इतिकर्तव्यता—क्रियारूपम् अङ्गम्। कर्तव्यस्य इति-प्रकारः—इतिकर्तव्यता। | 24 |
| इतिहासः—पुरावृत्तम्। | 148 |
| इत्थम्भावः—विशेषणम्। | 62 |
| इदम्भावः—विशेष्यम्। | 62 |
| इन्द्रः—सर्वदृक् ईश्वरः। | 30 |
| इन्द्रियम्—सात्त्विकाहङ्कारोपादानकं द्रव्यम्, एकादशसङ्ख्यम्। | 201 |
| [इन्द्रियादिः—सात्त्विकाहङ्कारः]। | |
| इषिः—इच्छा। | 266 |
| इष्टप्राप्तिः (आत्मनः)—स्वाभाविकज्ञानविकासलाभः। | 311 |
| ईश्वरत्वम्—सर्वनियन्तृत्वम्। | 138 |
| [ईश्वरतत्त्वायत्तत्वम् (जगतः)—तत्सङ्कल्पाधीनस्वरूप-स्थिति-प्रवृत्तिमत्त्वम्]। | |
| उत्तरमीमांसा—शारीरकशास्त्रम्। | 4 |
| उत्पत्तिः—प्रथमक्षणयोगः। | 83 |
| [उत्पत्तिः (द्रव्यस्य)—अवस्थान्तरापत्तिः]। | |
| उत्पत्तिवाक्यम्—कर्मस्वरूपविषयकप्रथमप्रतिपत्तिजनकं वैदिकं वाक्यम्। | 247 |
| उत्सर्गापवादन्यायः—विरोधपरिहाराय शब्दोपात्तविशेषव्यतिरिक्तविषये सामान्य-शब्दस्य सङ्कोचः। | 129 |
| उदरम्—अल्पमेव। | 27 |
| उदाहरणम्—सम्यग्व्याप्तिनिर्देशपूर्वकं दृष्टान्तवचनम्]। | |
| उद्देश्यम्—अवगतं धर्मिरूपं वस्तु। | 225 |
| उद्देश्योपादेयविभागः—ज्ञाताज्ञातविभागः। | 225 |

| पदानि तदर्थाश्च | पृ. सं. |
|---|---|
| [उद्वापः—त्यागः] । | |
| उपगच्छन्ति—उपासनं कुर्वन्ति । | 235 |
| [उपकारः—वस्तुनि अतिशयाधानम्] । | |
| उपचयापचयार्हत्वम्—सावयत्वम् । | 216 |
| उपचयापचयौ—वृद्धि-क्षयौ । | 216 |
| उपचारः—मुख्यार्थबाधे सति, तदासन्ने (शब्दस्य) वृत्तिः । | 140 |
| उपदेशः—पुत्रशिष्यादीन् प्रति पित्राचार्यादेः हितवचनम्, आत्मविद्या-मन्त्रादेः प्रदानम् । | 156 |
| [उपनयः—दृष्टान्तनिदर्शनेन, व्याप्ततया पक्षे हेतुमुपसंहरत् वाक्यम् ।] | |
| [उपनिषण्णत्वम्—अद्वारकभगवत्प्रतिपादकत्वम् ।] | |
| उपनिषदः—परतत्त्वप्रधानाः मन्त्रब्राह्मणभागाः । | 1 |
| उपबृंहणम्—अनधीतशाखान्तरार्थैः सह अधीतशाखार्थनिष्कर्षः । | 143 |
| [उपमानम् - प्रतिपन्नवस्तुसादृश्य-संज्ञासंज्ञिसम्बन्धज्ञानान्यतरसाधनम् ।] | |
| उपरतः—यदृच्छालाभसन्तुष्ट्या देहयात्रायामपि नातिप्रवृत्तः । | 10 |
| उपलक्षणम् -तटस्थं ज्ञापकम्, ज्ञाप्यबहिर्भूतः ज्ञाप्यप्रतीत्युपायः । | 278 |
| [उपवर्षः - पूर्वोत्तरमीमांसाव्याख्याता आचार्यः ।] | |
| उपसंहारः—पर्यवसानम् । | 275 |
| उपाख्या—प्रमितिः । | 122 |
| उपादानत्वम्—भाव्यवस्थाविशेषवतः प्रागवस्थायोगः, अवस्थान्तरयोगित्वम्, परिणामिकारणत्वम् । | 149 |
| उपादेयम्—अनवगतं विधेयम्, प्रागज्ञातं वाक्यज्ञाप्यम् । | 225 |
| उपाधिः—साधनाव्यापकत्वे सति साध्यसमव्याप्तः, साधनव्यतिरिक्तो यावत्साधनदेशमवर्तमानः यावत्साध्यदेशवर्ती धर्मः । असतो धर्मस्य आरोपहेतुः । | 290 |
| उपायत्वम्—हेतुत्वम् । | 122 |

| पदानि तदर्थाश्च | पृ. सं. |
|---|---|
| कल्याणत्वम्—अन्येषामनुभवितॄणामपि अनुकूलत्वम् । | 273 |
| कषायः—पापम्, तज्जन्यरागादिश्च । | 11 |
| काचः—दृष्टिमान्द्यहेतुः नेत्ररोगः । | 181 |
| कामः—तीव्रतमसङ्गजन्यः विषयाभिलाषः । | 21 |
| कारणम्—नियतपूर्वसिद्धि सूक्ष्मावस्थम् । | 224 |
| कारणावस्था—अव्याकृतनाम-रूपत्त्वावस्था । | 240 |
| कार्यत्वम्—कृतिसाध्यत्वम्, कृतिं प्रति प्रधानत्वे सति कृत्यधीनसत्ताकत्वम् । | 300 |
| कार्यबुद्धिः—'इदं कार्यं ममैवाद्य साधयितुं शक्यम्' इति बुद्धिः । | 257 |
| कार्यवाक्यार्थवादिनः—अपूर्वाख्यस्य कार्यस्य वाक्यार्थतावादिनः प्राभाकराः । | 43 |
| कार्यावस्था—व्याकृतनामरूपवत्त्वात्मिका अवस्था । | 240 |
| कालः—ज्येष्ठकनिष्ठादेः, क्षणलवादेः, भूतभविष्यदादेश्च व्यवहारस्य, विशेषहेतुभूतं प्रत्यक्षसिद्धं नित्यमेकं विभु द्रव्यम् । | 72 |
| कालपरिच्छेदः—अल्पतरकालवर्तिता, 'इदमिदानीं नान्यदा, इति परिच्छेदः । | 75 |
| [कालात्ययापदिष्टः—(कालस्य अत्यये,—साधनकालस्याभावे, अपदिष्टः-प्रयुक्तो हेतुः) अकालप्रयुक्तः—बलवन्मानबाधितसाध्यको हेतुः ।] | |
| काल्पनिकत्वम्—अपरमार्थत्वम् । | 171 |
| कितवाः—द्यूतकृतः । | 340 |
| कीर्तिः—दानादिजन्या प्रथा । | 16 |
| कुतर्कः—प्रमाणविरुद्धः, मूलशैथिल्य-मिथोविरोधादिदोषान्तराक्रान्तश्च तर्कः । | 57 |
| कूटम्—स्वयमविकृतः सन् लोहान्तरविकारहेतुः अयःपिण्डविशेषः । | 165 |
| कूटस्थः—(कूटवत् तिष्ठति) १. परमात्मा, २. मुक्तात्मा, (निर्विकारः, साधारणो वा) | 165 |
| कूटस्थनित्यम्—विश्वविकाराध्यासे तन्निवृत्तौ च स्वयं कूटवदविकृतम्, कूटे अध्यसनीये स्वयं सत्यतया सर्वाधिष्ठानत्वेन स्थितं ब्रह्म । | 56 |
| कृतिः—आन्तरः प्रयत्नः । | 263 |

पदानि तदर्थाश्च | पृ. सं.
--- | ---
कृत्युद्देश्यत्वम्—कृतिप्रधानत्वम् । | 263
केवलाकारः (कर्मणः)—आत्मयाथात्म्यबुद्धिसंस्कारशून्याकारः । | 253
[केवला विकृतिः—इन्द्रियाणि, पृथिवी च ] |
केवलास्तिबुद्धिबोध्यत्वम्— स्वाभाविकास्तित्वयोग्यताबुद्धिविषयत्वम् । | 220
[कैङ्कर्यम् (भगवतः)—भगवदभिमतानुरोधि सर्वं व्यापारजातम् ।] |
[कैवल्यम्—ज्ञानयोगात् प्रकृतिवियुक्तस्वात्मानुभवः ।] |
कौलेयकाः—श्वानः श्वोपजीविनो वा । | 351
क्लेशादयः—क्लेश-कर्म-विपाकाशयाः । क्लेशाः—अविद्यास्मितारागद्वेषाभिनिवेशाः । कर्म-पुण्यपापे, विपाकाः—जात्यायुर्भोगाः । आशयः—वासना, संस्कारो वा । | 139
क्षरम्—ज्ञानसङ्कोचात्मकक्षरणवत् बद्धचेतनस्वरूपम् । | 142
क्षेत्रज्ञः—(क्षेत्रं जानाति) परमात्मा, जीवात्मा च । 'क्षेत्राणि च शरीराणि बीजानि च शुभानने । तानि वेत्ति स योगात्मा ततः क्षेत्रज्ञ उच्यते' ।। | 163
क्षेमप्रापणम्—मोक्षः । | 333
ख्यातयः—आत्मख्यातिरसत्ख्यातिः अख्यातिः ख्यातिरन्यथा । तथाऽनिर्वचनख्यातिरित्येतत् ख्यातिपञ्चकम् ॥ | 191
[ख्यातिवादिनः—योगाचारा माध्यमिकास्तथा मीमांसका अपि । नैयायिका मायिनश्च प्रायः ख्यातीः क्रमाज्जगुः ॥] | 191
गन्धः—घ्राणग्राह्यः सुरभ्यादिर्गुणः । | 66
[गन्धतन्मात्रम्—अप्-पृथिव्योः मध्यमावस्थाविशिष्टं द्रव्यम् ।] | 196
गाम्भीर्यम्—सम्प्रदानलाघव-दीयमानगौरवानपेक्षत्वम् । | 352
गुणतो बृहत्त्वम्—सद्वारकं बृहत्त्वम्, (असङ्कुचितज्ञानादिगुणवत्त्वम्) । | 3
गुणभूतत्वम्—अयुतसिद्धविशेषणत्वम् । परतन्त्रभूतत्वम् । | 89
गुणादिदोषाः—सत्त्व-रजस्तमोहेतुकाः क्लेशादयः । | 138

| पदानि तदर्थाश्च | पृ. सं. |
| --- | --- |
| गुणेशः—सत्त्व-रजस्तमसां नियन्ता । | 236 |
| गुहा—हृदयगुहा । | 157 |
| [गुरुत्वम्—कठिनावयवाधिक्यम् ।] | |
| [गो-बलीवर्दन्यायः—वैयर्थ्यपरिहाराय, शब्दोपात्तविशेषव्यतिरिक्तविषये अविरोधेऽपि सामान्यशब्दस्य सङ्कोचः] । | 130 |
| [गौणी वृत्तिः—मुख्यार्थबाधे सति तद्गुणसम्बन्धेन तदासन्नेऽर्थे शब्दप्रवृत्तिः] । | |
| [गौरवम्—१. गुरोर्भावः, २. प्रमाणानुग्राहकः तर्कविशेषः ।] | |
| ग्रन्थयः—धर्माधर्मरागद्वेषमोहादयः कर्मोपनीताश्च त्रिगुणविकारभेदाः, बन्धस्य अशैथिल्यकराः ग्रथनविशेषाश्च । | 17 |
| [चित्त्वम्—स्वयंप्रकाशत्वम् ।] | |
| [चित्तम्—चिन्ताकारणं मनः ।] | |
| चिद्व्यष्टिः—सृज्यमानः चेतनः । | 205 |
| चेतनत्वम्—चैतन्यरूपधर्मभूतज्ञानाश्रयत्वम् । देहं प्रति नियन्तृतया अन्तःप्रविष्टत्वम् । आत्मत्वम् । | 96 |
| चेतनाधीनत्वम्—चेतनाधिष्ठितोपादानोपकरणादिजन्यत्वम् । | 288 |
| चैतन्यम्—विषयप्रकाशः, ज्ञानत्वम् । | 88 |
| चैतन्यस्वभावता—ज्ञानधर्मकत्वम् । | 88 |
| [चोदना—क्रियायां प्रवर्तकं श्रुति-स्मृत्यादिरूपं वाक्यम्, विधिः ।] | |
| छायातपौ—अज्ञ-सर्वज्ञौ, जीवेश्वरौ । | 157 |
| छिद्रम्—अनिष्टप्राप्तिरन्ध्रम् । | 137 |
| जगदुपादानम् (कारणम्)—सूक्ष्मचिदचिद्विशिष्टः ईश्वरः । | 279 |
| [जगत्सहकारि—कालाद्युपकरणवान् ईश्वरः ।] | |
| जगन्निमित्तम्—सङ्कल्पविशिष्टः ईश्वरः । | 279 |
| जडत्वम्—दृश्यतैकस्वरूपत्वम्, ज्ञानव्यतिरिक्तत्वम्, अचित्त्वम् । | 55 |

निमित्तं कारणम्—विकाराश्रयत्वव्यतिरिक्ताकारेण कार्योपयोगि(अपरिणामि)कारणम् । 149

नियतम्—१. व्याप्तम्, २. व्यापकम् । 288

[नियमविधिः—पक्षे अप्राप्तस्य विधिः, (यथा व्रीहीनवहन्तीत्यादौ अवघातस्य) । 6

'विधिरत्यन्तप्राप्ते नियमः पाक्षिके सति ।
तत्र चाऽन्यत्र च प्राप्ते परिसंख्येति गीयते' ।।]

नियोगः—यागादिसाध्यस्वर्गादिसाधनतया कल्प्यम् अपूर्वाख्यं कार्यम् । 314

'कार्यत्वेन नियोज्यं च स्वात्मनि प्रेरयन्नसौ ।
नियोग इति मीमांसानिष्णातैरभिधीयते' ॥

निरञ्जनम्—प्रकृतिसंसर्गरहितम् । 26

निरधिष्ठान (ख्यातिः) भ्रमः—सर्वशून्यवादिभिः बौद्धमाध्यमिकैः अभ्युपगता आरोपधर्मिभूतमधिष्ठानं विनैव अर्थप्रतिभासात्मिका सांवृतिकी ख्यातिः । 94

निरवद्यं निरञ्जनम्—कर्म-तत्फलसम्बन्धरहितम् । 26

निरुपाख्यत्वम्—प्रमित्यविषयत्वम्, प्रमाणशून्यत्वम्, तुच्छत्वम् । 122

निरुपाधिकी सत्ता—देवादिकतिपयशरीरविशेषानवच्छिन्ना सत्ता । निर्विकारत्वम् । 281

[निरूपितस्वरूपविशेषणभूताः धर्माः (भगवतः)—जगत्कारणत्व-सर्वज्ञत्व-सर्वशक्तत्व-पराक्रमैश्वर्यादयो धर्माः] ।

निरोधः—विनाशः । 83

निर्गुणः—प्राकृतहेयगुणरहितः, गुणवश्यतारहितः । 182

निर्णयः—तर्कानुगृहीतप्रमाणपूर्वकः तत्त्वाध्यवसायः । 36

निर्देशः—बोधकः शब्दः । 156

निर्धूतः—निरस्तः, दूरीकृतः । 53

निर्वचनम्—अतीन्द्रियार्थे निश्चायकमानतया निष्कृष्टं श्रुत्यादिवाक्यम् । निष्कृष्य वचनम्, उपबृंहणम् । 18

निर्विकल्पकम्—सर्वविधानुवृत्तिविकलग्रहणम् । संस्कारनिरपेक्षेन्द्रिय-सन्निकर्षजं प्रत्यक्षम् । 61

[परकृतिः—एकानुबन्धी वेदगतः कथाविशेषः] ।

[परज्ञानम्—उपासकस्य कादाचित्कः भगवत्साक्षात्कारः] ।

परत्वम् (परमात्मनि)—१. कारणत्वम्, २. सर्वातिशायिता, ३. विभूतिपारम्यम् । 17

[परभक्तिः—अनन्यप्रयोजना अनवरता निरतिशयप्रिया विशदमप्रत्यक्षतापन्नानुध्यानरूपा मोक्षाव्यवहितप्राक्कालिकी परमात्मविषयिणी भक्तिः] ।

परमं पदम्—(पद्यते इति पदम्) १. दिव्यात्मस्वरूपम्, २. परमात्मनो दिव्यस्थानम् । 140

परमपुरुषार्थः—अपवर्गः, स्वाभाविकात्मस्वरूपाविर्भावपूर्वकसमस्तविभूतिविशिष्ट-निरतिशयानन्दब्रह्मानुभवगर्भः मोक्षपदवाच्योऽर्थः । दुःखान्तरा-समानाधिकरणदुःखनिवृत्तिरूपः । 250

[परमभक्तिः—परमात्मनो निरन्तरानुबुभूषा] ।

परमार्थः—तत्त्वावेदकप्रमाणविषयः । 25

परं रूपम्—वैकुण्ठे परे लोके सदा नित्यसूरिसंसेव्यः, स्वयं च नित्यः, दिव्यमहिषी-परिजनपरिच्छदसहितः, भगवतो दिव्यमङ्गलविग्रहः, मुक्तानां परमा गतिः, वासुदेवाख्यः । 144

परविद्या—अमृतत्वप्रापिका ब्रह्मविद्या । 161

परं ब्रह्म—'बृहति बृंहयति तस्मादुच्यते परं ब्रह्म' इत्युक्तलक्षणं, चेतनाचेतनविलक्षणं परं तत्त्वम् । 269

पराक्त्वम्—परस्मै भासमानत्वम् । 55

परागर्थः—परस्मा एव भासमानः अर्थः । 107

परार्थत्वम्—परप्रयोजनैकफलत्वम् । 96

परावरः—१. पराः ब्रह्मादय एव यदपेक्षया अवराः तादृशः, २. कारणात्मना परः, कार्यात्मना अवरश्च यः तादृशो वा । 17

पराशरः—परान् प्रमाणतर्कशरैः आशृणाति इति । 148

परिकल्पितम्—अविद्यमानत्वेऽपि अस्तीति प्रतीतम् । 25

| पदानि तदर्थाश्च | पृ. सं. |
|---|---|
| पुरुरूपः—बहुरूपः । | 30 |
| पुरुषः—१. परमात्मा, २. जीवः । (पूर्णत्वात् पूर्वसत्त्वाच्च पुरुषः) । | 91 |
| पुरुषार्थाः—अभ्युदयनिःश्रेयसात्मकाः धर्मार्थकाममोक्षाः । | 5 |
| पूर्णम्—स्वतः अन्यतश्च पूर्तिमत् । | 152 |
| पूर्वमीमांसा—जैमिनीया कर्ममीमांसा । | 4 |
| पूर्वाचार्याः—ब्रह्मनन्द्यादयः । | 2 |
| पृथक्त्वम्—भेदः । | 7 |
| [पृथगवभासः—व्यधिकरणतया भानम् ।] | |
| पृथग्भावः—१. उपकरणोपकरणित्वलक्षणसंबन्धराहित्यम्, २. संहारः । | 142 |
| पृथक्संस्थानसंस्थिताः—विशेषणत्वमन्तरेणाऽपि उपलब्धिमन्तः । | 63 |
| पृथिवी—विशिष्टगन्धवत् द्रव्यम् । | 201 |
| [पौरुषेयत्वम्—पुरुषस्वातन्त्र्याधीनरचनाविशेषवत्त्वम्] । | |
| प्रकटत्वम्—स्वयमपि व्यवहारानुगुण्यापादकत्वम् । | 93 |
| [प्रकरणम्—१. प्रस्तावः । २. अङ्गत्वग्राहकं प्रमाणम् । उभयाकांक्षारूपम्] | |
| [प्रकरणसमः—'अतुल्यं तुल्यमपि वा यं तुल्यमभिमन्यते ।<br>तेन यः प्रतिरुध्येत तमाहुः प्रक्रियासमम्' ॥<br>सत्प्रतिपक्षः । प्रकरणेन सन्दिग्धसाध्यवता पक्षेण, समः-तुल्यः, सन्देहपर्यवसितो हेतुः] | |
| प्रकारः—विशेषणम् । | 231 |
| प्रकारद्वयविशिष्टैकवस्तुत्वम्—विशेषणद्वयविशिष्टैकधर्मित्वम्, विशिष्टाद्वैतम् । | 224 |
| प्रकारविशेषाः—अङ्गानि । | 6 |
| [प्रकारी—१. विशेष्यभूतोऽर्थः, २. अङ्गी] । | |
| [प्रकार्यैक्यम्—चिदचिदात्मकजगद्विशिष्टस्य, स्वरूपेण गुणैश्च निरतिशयबृहत्त्वविशिष्टस्य चैक्यम् । विशिष्टाद्वैतम् ।] | 226 |

| पदानि तदर्थाश्च | पृ. सं. |
|---|---|

| पदानि तदर्थाश्च | पृ. सं. |
|---|---|
| प्रातिकूल्यम्—स्वभावविरोधः । | 101 |
| प्राधान्याप्राधान्ये—उत्कर्षापकर्षौ । | 220 |
| प्रामाणिकाः—श्रुत्यादिप्रमाणानुसारेण अर्थं स्वीकुर्वन्तो विद्वज्जनाः । | 55 |
| प्रामाण्यम्—यथावस्थितव्यवहारनुगुणज्ञानत्वम्, तत्करणत्वं च । | 106 |
| प्रामाण्ये स्वतस्त्वम्—ज्ञानोत्पादकसामग्रीजन्यत्वम् । | 106 |
| प्रेरकत्वम्—कृत्युद्देश्यत्वम् । | 263 |
| प्रीतिः—धीविशेषः । | 19 |
| बद्धो जीवः—अनुवृत्तसंसारः, कर्मप्रयोज्यज्ञानसङ्कोचवान् जीवः । | 145 |
| बन्धः—जन्मजरामरणादिः । | 12 |
| बलहीनः—मनोबलरहितः । | 22 |
| बहुमतिव्याघातः—स्वारसिकधीविरोधः । | 2 |
| बाधः—१. अदुष्टकारणजन्या निषेधबुद्धिः, २. आरोपितविरुद्धाधिष्ठानाकारावगाहीनी बुद्धिः । | 69 |
| बाधकत्वम् (उत्तरज्ञाने)—पूर्वज्ञानजन्यप्रवृत्तिनिवारकत्वम् । | 197 |
| [बाधकल्पनम्—अप्रकाशितविरोधिप्रकाशनम् ।] | |
| बाधकज्ञानम्—भ्रमाधीनव्यवहारनिवर्तकम् असाधारणधर्मग्रहणम् । | 14 |
| बाधितत्वम्—प्रबलप्रमाणान्तरप्रतिरोधः । | 14 |
| [बाधितविषयत्वम्—प्रबलप्रमाणेन पक्षे निश्चितसाध्याभाववत्त्वम् ] । | |
| बाध्यत्वं (पूर्वज्ञानस्य)—बाध्यप्रवृत्तिकत्वम् । | 197 |
| बाध्यत्वं (वस्तुनि)—नास्तीति वेद्यत्वम् । | 29 |
| बाह्यकर्मवृतिः—अस्वाभाविकं कर्म । | 164 |
| बाह्येन्द्रियाणि—(कर्मेन्द्रियाणि ५, ज्ञानेन्द्रियाणि ५, आहत्य दश) स्वसंनिकर्षाधीनबहिरर्थविषयकग्रहणसाधनानीन्द्रियाणि । | 287 |
| बीजाङ्कुरन्यायः—कार्य-कारणतावच्छेदकयोः धर्मयोः सामानाधिकरण्यम् । | 343 |

| पदानि तदर्थाश्च | पृ. सं. |
| --- | --- |
| बुद्धम्—अतिरोहितनित्यस्वप्रकाशम्। | 36 |
| बुद्धिः—१. अर्थप्रकाशः २. अध्यवसायकारणं मनः। | 290 |
| बोधायनः—शारीरकशास्त्रस्य परम्परागतार्थप्रकाशकविस्तीर्णवृत्तिकृत् ; उपवर्ष एव वा ?। | 2 |
| बृंहणत्वम् (ब्रह्मणः)—गुणतो बृहत्त्वम्, जीवानां बन्धकालीनसकलविधसङ्कोचनिवृत्तिपूर्वकनिरवधिकज्ञानविकासरूपानन्त्यावहत्वम्। स्वप्राप्तिसाधनत्वम्। | 278 |
| ब्रह्म—निरतिशयबृहत्, बृंहणं च। 'बृहत्त्वात् बृंहणत्वाच्च तद्ब्रह्मेत्यभिधीयते'। | 1 |
| ब्रह्मजिज्ञासा—ब्रह्मविचारः। | 2 |
| ब्रह्मज्ञानम्—ब्रह्मोपासनम्। | 4 |
| ब्रह्मदृष्टिः—अब्रह्मणो ब्रह्मत्वेनोपासनम्। | 24 |
| ब्रह्मनिष्ठः—साक्षात्कृतपरमपुरुषस्वरूपः। | 7 |
| ब्रह्मभावना—'वयं ब्रह्मैव प्राप्नुमः' इत्येवंरूपा सनकादिगता भावना। | 162 |
| ब्रह्ममीमांसा—वेदान्तवाक्यार्थविचारोपयोगिन्यायनिबन्धनरूपं शास्त्रम्। | 4 |
| ब्रह्मविदः—अध्यात्मविदः। | 157 |
| ब्रह्मविद्या—ब्रह्मोपासनात्मकं ज्ञानम्। | 23 |
| ब्रह्मसंज्ञितम्—ब्रह्मत्वाद्यभावेऽपि 'ब्रह्म'शब्देनोपचरितम् (पू)। मुख्यया वृत्त्या ब्रह्मशब्देन शब्दितम् (सि)। | 27 |
| ब्रह्मात्मकत्वं जगतः—ब्रह्मप्रकारतैकस्वभावतया पृथगवस्थानाभावात् ब्रह्मान्तर्गतत्वम्। | 228 |
| ब्रह्मात्मभावः—ब्रह्मण एव प्रत्यगात्मत्वम् (पू)। ब्रह्मणः चेतनाचेतनेषु अन्तःप्रविश्य नियन्तृत्वम्। | 229 |
| ब्राह्मणः—(ब्रह्मणि अणति) वेदाभ्यासरतः, अधीतसाङ्गसशिरस्कवेदः। | 7 |
| भक्तिः—महनीयविषयिणी प्रीतिः। स्नेहपूर्वमनुध्यानम्। | 1 |
| [भक्तियोगः—जीवपरयाथात्म्यज्ञानपूर्वकः वर्णाश्रमधर्मेतिकर्तव्यताकः यमाद्यष्टाङ्गवान् परमपुरुषचरणयुगलध्यानार्चनप्रणामादिसहकृतः अत्यर्थप्रियः शुभाश्रयविषयकतैलधारावदविच्छिन्नस्मृतिसन्तानरूपः मोक्षोपायविशेषः]। | |

| पदानि तदर्थाश्च | पृ. सं. |
|---|---|
| भगवान्—१. परमात्मा । 'ज्ञानशक्तिबलैश्वर्यवीर्यतेजांस्यशेषतः । भगवच्छब्दवाच्यानि विना हेयैर्गुणादिभिः' ॥ २. अध्यात्मबोधातिशयवान् । | 2 |
| भङ्गः—लयः, नित्यनैमित्तिकप्राकृतात्मकः । | 1 |
| भयम्—भाव्यनिष्टगोचरधीरूपं दुःखम् । | 27 |
| भावना—वासना, अनुभवजन्यः संस्कारः, निरन्तरचिन्ता वा । | 17 |
| भावविकाराः—भावरूपाः भावानां सम्भवन्तो वा विकाराः । (जायते, अस्ति, विपरिणमते, वर्धते, अपक्षीयते, नश्यति इत्येवरूपाः षट्) । | 52 |
| भावशक्तयः—भावानां स्वाभाविक्यः शक्तयः । | 151 |
| भाष्यकारः—द्रमिडाचार्यः । ब्रह्मनन्दिकृतस्य छान्दोग्यवार्तिकस्य वाक्यनाम्नः भाष्यकृत् । | 21 |
| भाष्यम्—'सूत्रार्थो वर्ण्यते यत्र वाक्यैः सूत्रानुसारिभिः । स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः' ॥ | 21 |
| भास्वरत्वम्—प्रकाशकत्वम् । | 22 |
| भुवनम्—१. कार्यवर्गः २. सजीवात्मकम् अचिद्वस्तु । | 1 |
| भुवनान्तरालम्—उभयविभूत्योः (त्रिपात्-लीला) अन्तरालम् । | 138 |
| भुवनाश्रितम्—१. अण्डान्तर्गतम्, २. स्वाप्नप्रपञ्चकल्पेन भुवनेन स्वाध्यासाधिष्ठानतया श्रितम् (पू) । | 32 |
| भूतभावनः—भूतानां सत्तानुवर्तकः । | 138 |
| भूतम्—१. पृथिव्यन्तेषु सर्वतत्त्वेष्ववस्थितम् उद्भूतं शब्दादिकम् । २. आकाशादिभूतपञ्चकम् । २. शरीरम् । (भूतानि विशेषाः) । | 196 |
| भूतयोनित्वम्—१. जगत्कारणत्वम् । २. अविद्याशबलितरूपेण भूतरूपविवर्तोपादानत्वम् (पू) । | 125 |
| भूतव्रातः—भूतसम्बन्धी व्रातः, समूहः । भूताः—भगवज्ज्ञानेन लब्धसत्ताकाः । [भूतादिः—तामसाहङ्कारः] । | 1 |
| भेदः—१. जात्यादिर्धर्मः । २. असद्विषयबुद्धिरूपः भ्रमः (पू) । | 144 |

| पदानि तदर्थांश्च | पृ. सं. |
|---|---|
| भेदप्रपञ्चः—१. भेदसमुदायः । २. अविद्याकल्पितः चिदचिद्विस्तारः (पू) । | 36 |
| भोक्तृत्वम्—सुखदुःखाद्यनुभवरूपभोगाश्रयत्वम् । | 243 |
| [भोगोपकरणत्वम्—भोगसिद्धिप्रयोजकत्वम्] । | |
| भोग्यत्वम्—भोगात्मकानुभवकर्मत्वम् । | 243 |
| भौमाः सुमनसः—सारासारविवेकज्ञाः त्रैवर्णिकाः । | 2 |
| भ्रमः—१. सम्यगग्रहणम् । २. व्यवहाराननुगुणसाधारणधर्मग्रहणम् । | 224 |
| भ्रान्तिः—१. भ्रमः । २. अनिष्टप्राप्तिकृतं चित्तस्खलनम् । ३. विद्यमानभेदाग्रहणपूर्वकसाधारणाकारग्रहणजन्या स्वविषयान्यथात्वविशेषिता प्रवृत्त्यादिहेतुभूता धीः । | 137 |
| मदः—उन्मादावस्थारूपः रोगभेदः । | 76 |
| मनः—ज्ञानसामान्यकारणं, सङ्कल्पस्मृत्याद्यसाधारणकारणम् आन्तरमिन्द्रियं हृदयदेशवर्ति । | 296 |
| मननम्—श्रुतार्थविषयकयुक्तायुक्तविचारपूर्वकनिर्णयरूपं ज्ञानम् । | 12 |
| मन्त्रः—अनुष्ठेयार्थप्रकाशको वेदभागः । | 6 |
| महत्त्वम्—अपरिच्छेद्यत्वम् । | 140 |
| महदाद्या विशेषान्ताः—महान्, अहङ्कारः, पञ्चतन्मात्राणि, पञ्चभूतानि च । | 196 |
| महान्—मूलप्रकृतेः प्रथमो विकारः, बुद्धिः । | 196 |
| [महाप्रलयः—सत्त्वरजस्तमसां नियतकालेन ईश्वरसङ्कल्पेन समावस्था] । | |
| मात्रया—अल्पम् । | 14 |
| माया—१. अविद्या, २. भगवतः सङ्कल्पः, ३. आश्चर्यभूतोऽर्थः, ४. मिथ्याभूतम् । | 30 |
| मिथ्याज्ञानम्—१. आत्मविषयभ्रान्तिज्ञानम् (ज्ञानैकाकारे आत्मनि देहाद्याकारताग्रहः) २. अनिर्वचनीयमज्ञानम् । | 9 |
| मिथ्यात्वम्—प्रतीयमानत्वनियमपूर्वकयथावस्थितवस्तुगोचरज्ञानमात्रनिवर्तनीयत्वम् । बाधार्हत्वम् । | 29 |

| पदानि तदर्थाश्च | पृ. सं. |
|---|---|
| मिथ्यात्वप्रत्यनीकता—अनारोपितत्वम् । | 73 |
| [मिश्रसृष्टिः—लीलाविभूतिसृष्टिः] । | |
| मीमांसा—१. जिज्ञासाविशेषोत्थाप्यः पूजितो विचारः । २. तादृशविचारानुबन्धी प्रशस्तो न्यायः । ३. तादृशन्यायनिबन्धात्मकं शास्त्रम् । | 4 |
| मुक्तम्—१. परमार्थतः अविद्या-तत्कार्यभेददर्शनजन्मादिबन्धरहितं ब्रह्म (पू) । २. निवृत्तसंसारं जीवस्वरूपम् । | 36 |
| मुक्तिः—अविद्या-तत्कार्यजन्मादिराहित्यम् । परमात्मना परमसाम्यापत्तिः । | 334 |
| मुख्यवृत्तः (शब्दः)—प्रवृत्तिनिमित्तपौष्कल्येन स्वार्थविषयकशीघ्रप्रतीतिजनकः शब्दः । | 3 |
| मुत्—साधारणभोग्यविषयदर्शनजा प्रीतिः । | 198 |
| मुमुक्षुः—प्राग्भवीयपुण्यमहिमक्षीणकाम्यरुचिः । | 7 |
| मूर्च्छा—पित्ततमःप्रायः सुखदुःखव्यपोहकृत् शरीरपतनहेतुः रोगविशेषः । | 76 |
| मूर्तत्वम्—१. परिच्छिन्नपरिमाणवत्वम् । २ बद्धचेतनत्वम् । | 142 |
| [मूलप्रकृतिः—समावस्थगुणत्रयाश्रयभूता प्रकृतिः] । | |
| मृत्युः—१. प्रमादः, २. अविद्या, ३. मरणम्, ४. तमश्शब्दवाच्या प्रकृतिः । | 33 |
| मृदितकषायः—नष्टपापः । | 11 |
| मेधा—१. निदिध्यासनम्, ध्यानम् । २. धारणावती धीः । | 18 |
| मोक्षः—१. भ्रान्तिज्ञानस्य निरवशेषनिवृत्तिः, २. निरतिशयानन्दपरिपूर्णब्रह्मानुभवः । | 9 |
| मोक्षशास्त्रम्—बन्धरूपभेदनिवर्तकं तत्त्वावेदकं वेदवाक्यम् (पू) । | 37 |
| मोहः—भ्रान्तिज्ञानम्, विपरीतज्ञानं वा । | 201 |
| [यजूंषि—वृत्त-गीतवर्जितत्वेन प्रश्लिष्टपठिताः मन्त्राः] । | |
| यथार्थ(ख्यातिः)ज्ञानम्—प्रमायामप्रमायां च यथावस्थितमर्थमनुरुद्ध्यैव भानम् । | 195 |
| यशः—पराक्रमादिजन्या गुणवत्ताप्रथा । | 16 |
| यागः—देवताराधनम् । | 269 |
| याथात्म्यज्ञानम्—यथावस्थितवस्तुस्वरूपावगमः । | 217 |

| पदानि तदर्थाश्च | पृ. सं. |
|---|---|
| लिङ्गम्—ज्ञापकम्, हेतुः, व्याप्यम्। | 288 |
| ,, —शब्दगतम् अर्थप्रकाशनसामर्थ्यम्। (अङ्गत्वग्राहकप्रमाणम्)। | 24 |
| लिङ्गि—१. ज्ञाप्यम्, साध्यम्, व्यापकम् २. हेतुमान् पक्षः। | 291 |
| लीला—१. स्वबुद्धिपूर्वकः स्वप्रीत्यर्थो व्यापारः २. तद्विषयः प्रपञ्चोऽपि। | 1 |
| [लीलाविभूतिः—एकपाद्विभूतिः, त्रिगुणमण्डलम्] | |
| लोकः—(लोक्यते इति) १. फलम्, भोग्यम् २. प्रमाणसिद्धः त्रिविध-चेतनाचेतनवर्गः। | 138 |
| लौकिकः शब्दः—स्वातन्त्र्येणोच्चारितः शब्दः। | 43 |
| वरणम् (भगवतः)—'माम् अयं चेतनः प्राप्नुयात्' इत्येवंरूपः सङ्कल्पः। | 19 |
| वरणीयत्वम्—प्रीतिविषयत्वे सति, स्वयमुपस्थितस्य स्वीकारः। | 18 |
| वर्णः-१. शुक्लादिकं रूपम्। २. अकारादिरूपो वर्णः ३. ब्राह्मणादिश्च। | 141 |
| वर्तमानदशा—१. विषयग्रहणकालः, २. प्रारब्धस्य अपरिसमाप्तदशा। | 71 |
| वस्तुत्वम्—प्रमाणसम्बन्धार्हत्वम्। | 69 |
| वस्तुभेदाः—देवाद्याकारशरीरभेदाः। | 214 |
| वस्त्वपरिच्छेदः—सर्ववस्तुसामानाधिकरण्यार्हत्वम्। | 282 |
| वाक्यकारः—ब्रह्मनन्दी, टङ्काचार्यापराभिधानः आत्रेयवंश्यः, छान्दोग्यस्य वाक्यनामक-व्याख्यानकर्ता (इति दर्शनोदये।) | 161 |
| वाक्यम्—अनेकपदार्थसंसर्गविशेषाभिधायी पदसङ्घातः। | 60 |
| [ ,, समभिव्याहारः। (अङ्गत्वग्राहकं प्रमाणम्)]। | - |
| वाचाऽनभ्युदितम्—१. वक्तुमशक्यम्, २. अपरिच्छिन्नम्। | 337 |
| वाचारम्भणम्—वाग्व्यवहारः। | 27 |
| वात्सल्यम्—मातुः वत्से इव स्वाश्रितविषये दोषेष्वपि गुणत्वबुद्धिः। | 352 |
| [वादः—तत्त्वबुभुत्सोः वीतरागस्य कथा, प्रमाण-तर्काभिमानास्पदसाधननिश्चितार्थ-विषयो व्यवहारः]। | 209 |

| पदानि तदर्थाश्च | पृ. सं |
|---|---|
| वृद्धः—व्युत्पन्नः, पद-तदर्थसङ्गतिज्ञः । (प्रयोजकः, प्रयोज्यश्च) | 255 |
| वेदः—पुरुषार्थ-तदुपायादिबोधकः अपौरुषेयोऽक्षरराशिः । निरपेक्षवेदकः शब्दसन्दर्भः । | 148 |
| [वेदनित्यत्वम्—स्वघटकशब्दगतानुपूर्व्याः परतन्त्रपुरुषपराधीनतया प्रवाहाविच्छेदः । (परतन्त्रपुरुषपराधीनत्वम्—तज्जातीयानुपूर्वीज्ञानजन्यत्वव्याप्यज्ञानविषयत्वम् )] । | |
| वेदस्य प्रतारणम्—वेदाभिप्रेतविपरीतार्थवर्णनम् । | 148 |
| वेशान्ताः—गृहाः, पल्वलानि वा । | 198 |
| वैराग्यम्—१. विरक्तिः, रागराहित्यम् । २. परिपूर्णत्वात् अनादरता । | 139 |
| व्यक्तम्—विषमविकारदशावत् त्रिगुणम् । महदादिपृथिव्यन्तम् । | 141 |
| व्यक्तीकरणम्—अज्ञातविशेषैः सह स्वावगतार्थनिष्कर्षः । | 148 |
| व्यतिकरः—मिथः स्थानाक्रान्तिः । | 16 |
| [व्यतिरेकः—भेदः] । | |
| [व्यतिरेकव्याप्तिः—साध्यनिषेधे साधननिषेधरूपेण प्रवृत्ता व्याप्तिः] । | |
| व्यभिचारः—हेतोः साध्य-तदभाववद्वृत्तिता । | 289 |
| व्यवहारः—हानोपादानादिरूपा लोकयात्रा । | 51 |
| व्यवहारयोग्यता—प्रमाणसम्बन्धार्हत्वम् । | 186 |
| व्यवहारव्यवस्थितिः—हानोपादानादिनियमः । | 197 |
| व्यवहारानुगुण्यम्—व्यवहारप्रतिसम्बन्धित्वम्, प्रकाशः । | 80 |
| व्यष्टिः—तत्त्वैकदेशैः पञ्चीकरणप्रक्रियया संहत्य जायमानाः विकाराः । (अण्डानि, अण्डावरणानि, चतुर्दशभुवनानि इत्यादि) । | 205 |
| [व्यष्टिसृष्टिः—अण्डोत्पादनानन्तरसृष्टिः] । | |
| व्यष्टि-समष्टिरूपः—कार्य-कारणावस्थः परमात्मा, चेतनवर्गश्च । | 139 |
| व्याख्यानम्—१. अपेक्षितानपेक्षितांशविवेकेन सङ्क्षेप-विस्ताराभ्याम् आवश्यकार्थविवरणम् । २. अज्ञान-संशय-विपर्ययनिवृत्तिफलकं वाक्यम् । | 2 |

| पदानि तदर्थाश्च | पृ. सं. |
|---|---|
| अद्यतनबुद्ध्यनुगुणम् अनतिसङ्कोचविस्तरा स्पष्टोक्तिः । ('पदच्छेदः पदार्थोक्तिः विग्रहो वाक्ययोजना । आक्षेपस्य समाधानं व्याख्यानं पञ्चलक्षणम्' ॥) | |
| व्याघातः—स्वारसिकधीविरोधः । | 2 |
| व्यापकम्—व्याप्यप्रतिसम्बन्धि । व्याप्येन सह अन्यूनदेशकालवृत्ति । | 149 |
| व्यापिनी—देशकालनियमरहिता । | 140 |
| व्याप्तिः—निरुपाधिकतया नियतः सम्बन्धः । | 288 |
| [व्याप्यत्वासिद्धिः—हेतोः सोपाधिकत्वम् । (रूपवैकल्यकल्पितोपाधिकत्वम्)] । | |
| व्याप्यम्—यादृग्रूपस्य यद्देश-कालवर्तिनः येन अविनाभावः, तदिदम् अनधिक-देशकालनियमम् । | 149 |
| व्यावर्तकत्वम्—विशेषणान्तरविशिष्टात् स्वविशिष्टवस्तुभेदकत्वम् । | 276 |
| व्यावर्तमानत्वम्—उत्तरोत्तरप्रतिपत्तिविषयेषु अविद्यमानत्वम् । | 47 |
| व्यावृत्ताः—अननुयायिनः । | 232 |
| व्यावृत्तिः—१. इतरभेदः, २. इतरभेदविधेयकानुमितिः । | 47 |
| व्युत्पत्तिः—शब्दस्य अर्थविशेषेण सह सम्बन्धग्रहणम् । | 228 |
| व्युत्पन्नः—पद-पदार्थसङ्गतिज्ञः । | 256 |
| [व्यूहः—अवयवसंस्थानविशेषविशिष्टविग्रहरूपेण विभज्य स्थितं भगवद्रूपम् ।] | |
| व्रतविशेषाः (अध्ययनार्थाः)—उपाकर्मसहिताः प्राजापत्य-सौम्यादयः । | 5 |
| व्रातः—सङ्घातः । | 1 |
| शक्तिः—१. अपृथक्सिद्धं कार्योपयोगि विशेषणम् । २. सामर्थ्यम् । सर्वकारणानां कारणतानिर्वाहकः कश्चित् अद्रव्यविशेषः । | 207 |
| [शङ्कितोपाधिः—हेतौ पक्षवृत्तिता-व्याप्त्योः अन्यतरस्याऽपि सन्देहः] । | |
| शतयातना—शतं वत्सरान् यमेन दीयमाना बाधा । नरकविशेषः । | 262 |
| शब्दः—श्रोत्रेन्द्रियग्राह्यो गुणविशेषः । | 66 |

पदानि तदर्थाश्च | पृ. सं.

[शब्दतन्मात्रम्—तामसाहङ्काराकाशयोः मध्यमावस्थाविशिष्टं द्रव्यम्] । 196

शमः—बाह्येन्द्रियाणां नियमनम् । मनसः विजयो वा । 12

शरीरम्—चेतनेन यावदात्मभावितया धार्यं द्रव्यम् । 220

शरीरात्मभावः (जगद्ब्रह्मणोः)—शरीर-शरीरिभावः, नियतः आधाराधेयभावः । नियतः नियाम्य-नियामकभावः । नियतः शेषशेषिभावश्च । 212

शरीरित्वम्—शरीरान्तःप्रवेशेन शरीरनियन्तृत्वम् । 248

शान्तम्—१. वस्तुतः षड्भिर्विकारैः ऊर्मिभिश्च त्यक्तम् । २. करणव्यापारनिवृत्ति-मुखेन कामादिरहितम् । 26

[शाब्दप्रमाकरणम्-शब्दप्रमाणम्, वृत्तिमत्त्वेन ज्ञायमानं सत्पुरुषोच्चारितं वाक्यम् । अनाप्तानुक्तं वाक्यम्] ।

[शाब्दी प्रमा-अनाप्तानुक्तवाक्यजनितं तदर्थविज्ञानम्] ।

शारीरः—(शरीरे भवः) १. जीवात्मा । २. नियन्तृतया अनुप्रविष्टः परमात्मा । 4

शारीरकः—(शरीरमेव शारीरकम् तत्र निवासी) १. जीवः, २. (शारीरं—जीवं, कायति—रक्षति इति शारीरकः) परमात्मा । 9

शारीरकं शास्त्रम्—१. शरीरपदोपलक्षितस्य अचेतनवर्गस्य, शारीरस्य—चेतनस्य, शरीरस्य—चेतनवर्गस्य, शारीरकस्य—परमात्मनश्च तत्त्वयाथात्म्य-प्रतिपादकं वेदान्तशास्त्रम् । २. वेदान्तवाक्यार्थनिर्णायक-न्यायव्युत्पादकं ब्रह्ममीमांसाशास्त्रम् । 9

शारीरकमीमांसा—ब्रह्ममीमांसाशास्त्रम् । 6

शास्त्रत्वम्—इष्टप्राप्त्यनिष्टपरिहारौपयिकप्रवृत्ति-निवृत्त्यन्यतरप्रयोजकानवगतार्थविषयक-ज्ञानजनकवाक्यत्वम् । 'प्रवृत्तिर्वा निवृत्तिर्वा नित्येन कृतकेन वा । पुंसां येनोपदिश्येत तच्छास्त्रमभिधीयते' ॥ 4

शास्त्रयोनित्वम्—शास्त्रैकप्रमाणकत्वम् । 285

शिक्षिताः—उत्पादितज्ञानाः । 259

शुक्रम्—अविद्या-कर्मवासनादिरहितम् । 325

| पदानि तदर्थाश्च | पृ. सं. |
|---|---|
| सङ्कल्पः—१. अविद्यारूपो दोषः (समन्तात् कल्प्यन्ते अनेन भेदाः) २. मनसो व्यापारविशेषः । | 31 |
| सङ्कोचः (ज्ञानस्य)—विषयाग्रहणम् । | 98 |
| सङ्ख्या—तत्तद्द्रव्यस्वरूपा । | 81 |
| सच्चित्तः—सद्विद्यानिष्ठः । | 161 |
| सञ्जीवनी—संसारोन्मोचनकरी । | 1 |
| सततयुक्ताः (भगवति)—भगवता सह सततयोगमाशंसमानाः । | 19 |
| सत्—प्रकृति-पुरुष-कालशरीरकं परं ब्रह्म, प्रलयावच्छिन्नसत्ताविशिष्टं चिदचिच्छरीरकं परं ब्रह्म । | 25 |
| [सत्ख्यातिः–सत एवार्थस्य भ्रम-प्रमयोः विषयभावः] । | 191 |
| सत्ता—शुद्धधीवैशिष्ट्यम् । | 27 |
| सत्तामात्रम्—केवलम् अस्तीति बोध्यम् । | 27 |
| [सत्पुरुषत्वम्—भ्रमप्रमादालस्यविप्रलम्भरूपदोषशून्यत्वे सति पुरुषत्वम् ।] | |
| [सत्प्रतिपक्षत्वम्—समबलप्रमाणान्तरोपरोधः ।] | |
| सत्यम्—१. गुणतोऽविकारम् २. अनृताद्याऽवृत्तम् ३. भूतहितं यथार्थवचनम् । | |
| सत्यसङ्कल्पः—अप्रतिहतसङ्कल्पः । | 203 |
| [सत्त्वम्—१. सत्त्वगुणः २. अन्तःकरणं वा । (चेतनस्य ज्ञानसुखादिहेतुभूतः गुणविशेषः) ३. भूतजातम् ।] | 166 |
| सत्वम्—मानसम्बन्धयोग्यता । | 166 |
| सदैकम्—सर्वदा अनाघ्रातविकारषट्कम् । | 31 |
| सदैकरूपम्—१. वृद्धिक्षयरहितम् । २. स्वरूपतो गुणतश्च ऐकरूप्यवत् । | 216 |
| सद्भावः—तत्त्वम् (परमार्थः) । | 210 |
| सन्ध्यम्—स्वप्नस्थानम् । | 199 |
| सन्निकर्षः—देशासक्तिः । | 287 |

॥ श्रीः ॥

॥ श्रीः ॥

# ब्रह्मसूत्रस्थविशिष्टपदार्थकोषः –३

| | पदानि तदर्थाश्च | अ. | पा. | सू. |
|---|---|---|---|---|
| 1 | अकरणत्वम्—अक्रियत्वम्, क्रियाराहित्यम् । | 2 | 4 | 10 |
| 2 | अकामकारः—स्वच्छन्दप्रवृत्तिप्रतिषेधः । | 3 | 4 | 31 |
| 3 | अकात्स्न्र्यम्—अपरिपूर्णता । | 2 | 2 | 32 |
| 4 | अक्षरधियः—अक्षरब्रह्मसम्बन्धिन्यः अस्थूलत्वादिधियः । | 3 | 3 | 33 |
| 5 | अक्षरम्—क्षरणरहितं ब्रह्म । | 1 | 3 | 9 |
| 6 | अग्नीन्धनम्—अग्न्याधानम् । अग्निहोत्रादि च । | 3 | 4 | 25 |
| 7 | अग्रज्वलनम्—प्रकाशिताग्रम् । | 4 | 2 | 16 |
| 8 | अघस्य विनाशकरणम्—उत्पन्नायाः तत् (अघ) शक्तेः विनाशकरणम् । | 4 | 1 | 13 |
| 9 | अघस्य अश्लेषकरणम् — वैदिककर्मायोग्यतावासनाप्रत्यवायहेतु-शक्त्युत्पत्तिप्रतिबन्धकरणम् । | 4 | 1 | 13 |
| 10 | अङ्गावबद्धाः—अङ्गाश्रयाः । | 3 | 3 | 53 |
| 11 | अचोदनम्—अविधानम् । | 3 | 4 | 18 |
| 12 | अतिदेशः—अन्यत्रैव प्रणीतायाः कृत्स्नाया धर्मसन्ततेः । अन्यत्र कार्यतः प्राप्तिरतिदेशोऽभिधीयते ॥ | 3 | 3 | 45 |
| 13 | अतिवहनम्—(अर्चिरादिद्वारा)गन्तॄणां गमयितृत्वम् । | 4 | 3 | 4 |
| 14 | अत्ता—संहर्ता । | 1 | 2 | 9 |
| 15 | अत्ययः—विनाशः । | 3 | 1 | 8 |
| 16 | अधिकम्—विलक्षणमर्थान्तरम् । | 3 | 4 | 8 |
| 17 | अधिकारः—प्रस्तावः । | 2 | 3 | 13 |
| 18 | अधिष्ठानम्—तत्तत्कार्याभिमुखीकरणरूपं प्रेरणम् । | 2 | 4 | 13 |
| 19 | अध्यक्षः—करणाधिपः । | 4 | 2 | 4 |

| | पदानि तदर्थाश्च | अ. | पा. | सू. |
|---|---|---|---|---|
| 42 | अनुस्मृतिः—प्रत्यभिज्ञा । प्रत्यवमर्शः । | 2 | 2 | 24 |
| 43 | ,, —उपासनसम्पत्तिः । | 1 | 2 | 31 |
| 44 | अनेकप्रतिपत्तिः—अनेकशरीरपरिग्रहः । | 1 | 3 | 26 |
| 45 | अन्तरा (वर्तमानाः)—अनाश्रमिणः । | 3 | 4 | 36 |
| 46 | अन्तर्भावः—अवस्थानम् । | 3 | 2 | 20 |
| 47 | अन्नम्—पार्थिवं घ्राणेन्द्रियम् । अदनकरणं रसनेन्द्रियं च । | 1 | 4 | 13 |
| 48 | अन्यभावः—अन्यत्वम् , भेदः । | 1 | 3 | 11 |
| 49 | अपरिग्रहः—अनभ्युपगमः । | 2 | 2 | 16 |
| 50 | अपवदति—निन्दति । | 3 | 4 | 18 |
| 51 | अपीतिः—अप्ययः, लयः । | 2 | 1 | 8 |
| 52 | ,, —देशविशेषावच्छिन्नब्रह्मप्राप्तिः । | 4 | 2 | 8 |
| 53 | अपूर्वम्—प्रमाणान्तराप्राप्तम् । | 3 | 3 | 18 |
| 54 | अप्रतिसङ्ख्यानिरोधः—सदृशसन्ताने प्रतिक्षणभावी उपलब्ध्यनर्हः सूक्ष्मः निरन्वयविनाशः । (बौद्धानाम्) | 2 | 2 | 21 |
| 55 | अप्रतीकालम्बनाः—नामादिप्राणान्तशब्दनिर्दिष्टप्रत्यगात्मस्वरूपपर्यन्तं सर्वं चिदचिद्वस्तुजातं ब्रह्मदृष्ट्या स्वरूपेण वा ये उपासते तद्व्यतिरिक्ताः पञ्चाग्निविदः परब्रह्मोपासकाश्च । | 4 | 3 | 14 |
| 56 | अप्रस्तुतम्—प्रबलं कर्मान्तरम् । | 3 | 4 | 50 |
| 57 | अब्दः—अर्चिरादिमार्गस्थः संवत्सरापरपर्यायः स्थानविशेषः । | 4 | 3 | 2 |
| 58 | अभाक्तः—मुख्यः, अनुपचरितः शब्दः । | 2 | 3 | 17 |
| 59 | अभिधानम्—प्रतिपादनम् । | 1 | 1 | 25 |
| 60 | अभिध्या—सङ्कल्पः । | 1 | 4 | 24 |
| 61 | अभिध्यानम्—सङ्कल्पः । | 2 | 3 | 14 |

62. **अभिव्यक्तेरित्याश्मरथ्यः** (१-२-३०)—(अपरिच्छिन्नस्याऽपि परमात्मनः वैश्वानरस्य प्रादेशप्रमाणपरिमितत्वोक्तिः) **अभिव्यक्तेः**—उपासकानां बुद्धिसौकर्यार्थम्, **इति**—ईदृशमर्थम्, **आश्मरथ्यः**—आश्मथ्यनामा आचार्यो मन्यते ॥

63. **अनुस्मृतेर्बादरिः** (१-२-३१)—('द्यौर्मूर्धा' इत्यादिना परमात्मनः पुरुषाकारतापरिकल्पनम्) **अनुस्मृतेः**—ब्रह्मप्राप्तिहेतुभूतोपासनसम्पयर्त्यर्थम् इति, **बादरिः**—बादरिनामा आचार्यो मन्यते ॥

64. **सम्पत्तेरिति जैमिनिस्तथा हि दर्शयति** (१-२-३२) (वैश्वानरस्य परमात्मनः, उपासकावयवे वेद्यादिपरिकल्पनम्) **सम्पत्तेः**—तत्कृतायाः प्राणाहुतेः अग्निहोत्रतासम्पादनार्थम्, **इति**—एवमर्थम्, **जैमिनिः**—जैमिनिनामा आचार्यः मन्यते, **तथा हि**—अग्निहोत्रतासम्पत्तिरूपं तमेव प्रकारम्, **दर्शयति**—'य एवं विद्वानग्निहोत्रं जुहोति' इति श्रुतिः विशदयति ॥

65. **आमनन्ति चैनमस्मिन्** (१-२-३३) **एनम्**—द्युपृथिव्यादिशरीरं वैश्वानरं परमात्मानम्, **अस्मिन्**—उपासकसम्बन्धिनि शरीरे, **आमनन्ति**—(उपासनवेलायाम् अनुसन्धानेन आराध्यत्वाय) तत्सदृशाकारवत्तया वदन्ति श्रुतयः ॥

॥ इति प्रथमेऽध्याये द्वितीयः पादः ॥



॥ तृतीयः पादः ॥ [अधि. १० सू. ४४]

१८. द्युभ्वाद्यधिकरणम् [१-३-१] [सू. १-६]

66. **द्युभ्वाद्यायतनं स्वशब्दात्** (१-३-१) **द्युभ्वाद्यायतनम्**—'यस्मिन् द्यौः पृथिवी च' इत्यादिना द्युलोक-पृथिवीलोकादीनामाधारतया श्रूयमाणं वस्तु, (परं ब्रह्मैव ; न जीवः) **स्वशब्दात्**—स्वासाधारणधर्मवाचकात् निरुपाधिकामृतत्वप्रापकत्वबोधकात् श्रुतिस्थात् शब्दात् ॥

67. **मुक्तोपसृप्यव्यपदेशाच्च** (१-३-२)—(द्युपृथिव्याद्याधारतयोक्तः परमात्मैव) **मुक्तानाम्**—संसारनिगलात् विमोकं प्राप्तानां चेतनानाम्, **उपसृप्यव्यपदेशाच्च**—प्राप्यत्वस्य 'विमुक्तः परात्परं पुरुषमुपैति दिव्यम्' इति श्रुतौ स्फुटतया कथनादपि ॥

68. **नाऽनुमानमतच्छब्दात्प्राणभृच्च** (१-३-३) **अनुमानम्**—अनुमानगम्यं प्रधानम्, **अतच्छब्दात्**—तद्वाचकशब्दाभावात्, **न**—अत्र यथा द्युपृथिव्याद्याधारतया न ग्राह्यं तथा, **प्राणभृच्च**—जीवोऽपि, **अतच्छब्दात्**—तदसाधारणवाचकशब्दाभावात्, **न**—द्युपृथिव्याद्याधारतया न ग्राह्यः ॥

69. **भेदव्यपदेशात्** (१-३-४) **भेदस्य** - जीवाद्भेदस्य, **व्यपदेशात्**—'अन्यमीशम्' इति श्रुत्या स्पष्टं प्रतिपादनाद्धेतोः, (अयं द्युपृथिव्यादीनामाधारभूतः, परमात्मैव ; न जीवः) ॥

70. **प्रकरणात्** (१-३-५) **प्रकरणात्**—'अथ परा' इत्यादिना परमात्मन एव प्रकृतत्वाद्धेतोः, (अयं द्युपृथिव्याद्याधारः, परमात्मैव ; न अप्रकृतः इतरः) ॥

71. **स्थित्यदनाभ्यां च** (१-३-६) **स्थितेः**—'अनश्नन्नन्यः' इति कर्मफलभोगराहित्येन दीप्यमानतया स्थितेः, **अदनात् च**—'स्वाद्वत्ति' इति कर्मपारवश्येन तत्फलास्वादनाच्च मिथो भेदकात् श्रुत्युक्तात्, (अयं द्युपृथिव्याद्याधारः, अमृतत्वलम्भकश्च परमात्मैव ; न जीवः) ॥

१९. भूमाधिकरणम् (१-३-२) (सू. ७-८)

72. **भूमा सम्प्रसादादध्युपदेशात्** (१-३-७) **भूमा**—बहुत्व(महत्व)गुणविशिष्टः, निरतिशयवैपुल्यविशिष्टसुखस्वरूपः अर्थः, (परमात्मैव ; न जीवः) **संप्रसादादधि**—जीवात्मापेक्षया अधिकतया, **उपदेशात्**—'एष तु वा अतिवदति यः सत्येनाऽतिवदति' इति श्रुत्या (सत्यरूपपरमात्मातिवादिनः, प्राणसंज्ञकजीवातिवाद्यपेक्षया आधिक्यस्य) ज्ञापनात् ।।

73. **धर्मोपपत्तेश्च** (१-३-८) **धर्माणाम्**—(भूमपदवाच्यार्थसम्बन्धितया उक्तानां) स्वाभाविकामृतत्वादीनाम् धर्माणाम्, **उपपत्तेश्च**—अबाधिततया परमात्मन्येव सम्भवादपि, (भूमगुणविशिष्टः परमात्मैव ; न जीवः) ।।

२०. अक्षराधिकरणम् (१-३-३) (सू. ९-११)

74. **अक्षरमम्बरान्तधृतेः** (१-३-९) **अक्षरम्**—'एतद्वै तदक्षरं गार्गि' इति श्रुतिनिर्दिष्टाक्षरपदाभिधेयम्, परं ब्रह्मैव, **अम्बरान्तस्य**—वायुमदाकाशकारणभूतस्य अव्याकृताकाशशब्दवाच्यस्य प्रधानस्य, **धृतेः**-('कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्च' इति श्रुत्युक्तात्) धारणात् ज्ञापकात् ॥

75. **सा च प्रशासनात्** (१-३-१०) **सा च**—पूर्वमुक्ता अम्बरान्तशब्दवाच्यप्रधानधृतिश्च, **प्रशासनात्**—(अक्षरकृतात्) प्रकृष्टात् शासनात् अप्रतिहताज्ञारूपात् भवतीति, (तादृशमक्षरं, परं ब्रह्मैव ; न जीवः) ।।

76. **अन्यभावव्यावृत्तेश्च** (१-३-११) **अन्यभावस्य**—(अक्षरशब्दवाच्ये) वस्तुनि परमपुरुषाद्भेदस्य, **व्यावृत्तेश्च**—(परमपुरुषाद्भेदवति प्रधाने जीवे च असम्भवनीयार्थस्य सर्वैरदृष्टत्वे सति द्रष्टृत्वात्मकस्य वाक्यशेषे प्रतिपादनेन) निवारणात् ।।

२१. ईक्षतिकर्माधिकरणम् (१-३-४)

77. **ईक्षतिकर्मव्यपदेशात्सः** (१-३-१२) **ईक्षतिकर्म**—'पुरिशयं पुरुषमीक्षते' इत्युक्ते-

क्षणक्रियाविषयभूतं, 'पुरुषमभिध्यायीत' इत्युक्तध्यानविषयभूतं च वस्तु, सः—परमात्मा । व्यपदेशात्—(ईक्षति-ध्यायतिकर्मभूतमर्थमुद्दिश्य परमात्मधर्माणां शान्तत्वामृतत्वादीनां) श्रुतौ स्पष्टतया कथनात् ॥

२२. दहराधिकरणम् (१-३-५) (सू. १३-२२)

78. दहर उत्तरेभ्यः (१-३-१३) दहरः—आकाशशब्दसमानाधिकरणदहरशब्दाभिधेयः, सः—परमात्मैव, उत्तरेभ्यः—'एष आत्माऽपहतपाप्मा' इत्याद्युत्तरवाक्यप्रतिपाद्येभ्यः परमात्मासाधारणेभ्यो धर्मेभ्यो ज्ञापकीभूतेभ्यः ॥

79. गतिशब्दाभ्यां तथा हि दृष्टं लिङ्गं च (१-३-१४) गत्या—अहरहः सर्वासां प्रजानां दहराकाशे ज्ञानराहित्येन गमनपूर्वकं प्राप्त्या, शब्देन—तस्मिन्नेव विषये प्रयुक्तेन ब्रह्मलोकशब्देन च ज्ञापकीभूतेन, दहरः—दहरशब्दवाच्योऽर्थः परमात्मेति ज्ञायते ; हि—यतः, तथा—परस्मिन् ब्रह्मणि एवंरूपं गमनं, ब्रह्मलोकपदं च, दृष्टम्—श्रुतौ प्रतिपादितम्, लिङ्गश्च—इद मेव च पर्याप्तं ज्ञापकम् ॥

80. धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः—(१-३-१५) अस्य—परमात्मासाधारणस्य, धृतेः—जगद्विधरणरूपस्य, महिम्नः—महत्त्वस्य, अस्मिन्—दहराकाशशब्दवाच्येऽर्थे (विद्यमानतया) उपलब्धेश्च—'एष सेतुर्विधरणः' इति श्रुतौ दर्शनादपि ज्ञापकात् (दहरः परं ब्रह्म) ॥

81. प्रसिद्धेश्च (१-३-१६) दहरः (आकाशः)-दहराकाशशब्दवाच्योऽर्थः, परं ब्रह्म, प्रसिद्धेश्च—आकाशशब्दस्य ब्रह्मरूपे अर्थे 'सर्वाणि ह वा ....आकाशादेव' इत्यादिवाक्येषु 'ह वा' इति सुविदिततया उक्तत्वादपि हेतोः ॥

82. इतरपरामर्शात् स इति चेन्नाऽसम्भवात् (१-३-१७) इतरस्य—ब्रह्मणोऽन्यस्य जीवस्य, परामर्शात्—'सम्प्रसादः अस्माच्छरीरात्समुत्थाय' इति दहरविद्यामध्यस्थवाक्ये प्रतिपादनदर्शनात्, सः—जीव एव, दहराकाशशब्दवाच्यः, इति चेत्—एवं कथनं तु, न—न युक्तिमत्, असम्भवात्—पूर्वोक्तानां गुणानां जीवे बाधात् ॥

83. उत्तराच्चेदाविर्भूतस्वरूपस्तु (१-३-१८) उत्तरात्—प्रजापतिवाक्यात्, चेत्—जीवः अपहतपाप्मत्वादिगुणवत्तया अवगम्यते इति कथनं तु न सम्यक्, आविर्भूतस्वरूपस्तु—परब्रह्मोपासनजनिततदुपसम्पत्त्या निरस्ततिरोधानतया प्रकटतापन्नस्वस्वरूप एव जीवः, प्रजापति वाक्योक्तः ; (न तु स्वभावतोऽपहतपाप्मत्ववत्तया) ॥

84. अन्यार्थश्च परामर्शः (१-३-१९) परामर्शश्च—दहरविद्यावाक्ये जीवात्मनः प्रस्तावस्तु,

अन्यार्थः—जीवस्वरूपाविर्भावकारित्वरूपस्य अतिशयितस्य परमात्मवैभवस्य प्रतिपादनार्थ एव ; न तु दहराकाशताप्रतिपादनार्थः ।।

85. **अल्पश्रुतेरिति चेत्, तदुक्तम्** (१-३-२०) **अल्पश्रुतेः**—दहरशब्दबोध्यस्य अल्पस्य परिमाणस्य श्रुत्युक्तत्वात् जीव एव अल्पपरिमाणः दहरवाक्योक्तः, **इति चेत्**—इति कथने तु, **तत्**—अत्र यदुत्तरं वक्तव्यं तत्, **उक्तम्**—'निचाय्यत्वादेवम्' (ब्र.सू. १-२-७) इत्यत्र उच्चरितम् ।।

86. **अनुकृतेस्तस्य च** (१-३-२१) **तस्य**—स्वभावत एव अपहतपाप्मत्वादिविशिष्टस्य परमात्मनः, **अनुकृतेश्च**—अनुकारादेव हि, साम्यापत्त्यैव हि ! स्वस्वरूपाविर्भावः ; (अतः दहराकाशः जीवेनानुकार्यः परमात्मा, अनुकर्तुर्जीवादन्य एव) ।।

87. **अपि स्मर्यते** (१-३-२२) **तस्य**—परमात्मनः, **अनुकृतिः**—तत्साम्यापत्तिरूपं जीवगतम् अनुकरणम्, **स्मर्यतेऽपि**— 'इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः' इति स्मृतावुच्यत एव ।।

## २२. प्रमिताधिकरणम् (१-३-६) (सू. २३-२४)

88. **शब्दादेव प्रमितः** (१-३-२३) **प्रमितः**—अङ्गुष्ठप्रमाणप्रमिततया श्रुत्युक्तः पुरुषः, (परमात्मैव), **शब्दादेव**—(तस्यैव अङ्गुष्ठमात्रतया उक्तस्य परमात्मत्वबोधकात्) 'ईशानो भूतभव्यस्य' इति श्रुतिरूपात् शब्दादेव ज्ञापकात् ।।

89. **हृद्यपेक्षया तु मनुष्याधिकारत्वात्** (१-३-२४) **हृदि**—हृदयाख्ये शरीरान्तर्वर्तिनि स्थानविशेषे, (परमात्मनः अवस्थानात्) **अपेक्षया तु**—तस्मिन् स्थाने परमात्मनः उपासकार्थमभिव्यक्तिमभिप्रेत्यैव, **प्रमितः**—अङ्गुष्ठपरिमित इति व्यपदेशः, **मनुष्याधिकारत्वात्**—उपासनविधायकस्य शास्त्रस्य उपासकं मनुष्यमधिकृत्यैव प्रवृत्तत्वात्, (मनुष्यहृदयस्थानस्य तत्तन्मनुष्याङ्गुष्ठप्रमाणत्वात्) ।।

## २३. एतद्धर्मे देवताधिकरणम् (१-३-७) (सू. २५-२९)

90. **तदुपर्यपि बादरायणः सम्भवात्** (१-३-२५) **तत्**—ब्रह्मोपासनम्, **उपर्यपि**—मनुष्येभ्यः ऊर्ध्वलोकवासिषु देवादिष्वपि सम्भवतीति, **बादरायणः**—बादरायणनामा आचार्यो मन्यते । **सम्भवात्**—देवादीनामपि अर्थित्व-सामर्थ्ययोः अबाधितत्वात् ।।

91. **विरोधः कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात्** (१-३-२६)—(देवादीनाम् उपासन-

योग्यपटुतरदेहेन्द्रियाद्यभ्युपगमे) **कर्मणि**—बहुभिः एकदा क्रियमाणे यागादौ कर्मणि, **विरोधः**—एकस्य मूर्तिमतः युगपत् विभिन्नानेकदेशवर्तितानुपपत्तिरूपो विरोधः प्रसज्यते, **इति चेत्**—इति चिन्तनं तु, **न**—नोचितम्, **अनेकप्रतिपत्तेः**—सौभर्यादिषु एकदा अनेकशरीरपरिग्रहेण अनेकत्र संनिधानस्य, **दर्शनात्**—पुराणादिषु श्रवणात् ॥

92. **शब्द इति चेन्नाऽतः प्रभवात् प्रत्यक्षानुमानाभ्याम्** (१-३-२७) **शब्दे**—वेदप्रयुक्ते इन्द्रादिशब्दे, **विरोधः**—अर्थशून्यत्वानित्यत्वाद्यात्मकः अनभ्युपगतार्थप्रसङ्गः, **इति चेत्**—इत्येवमापादनम्, **न**—न सङ्गच्छते, **अतः**—वेदपठितादेव इन्द्रादिशब्दात्, **प्रभवात्**—इन्द्रादिदेवानां सृष्टेरभ्युपगमात्, (अस्यार्थस्य सिद्धिस्तु), **प्रत्यक्षानुमानाभ्याम्**—'वेदेन रूपे व्याकरोत्' इति श्रुत्या (तथा) 'वेदशब्देभ्य एवाऽऽदौ ....निर्ममे' इति स्मृत्या च भवति ॥

93. **अत एव च नित्यत्वम्** (१-३-२८) **अतश्च**—यतः स्रष्टा प्रजापतिः वैदिकेभ्य एव शब्देभ्यः अर्थाकारं स्मृत्वा सर्वं सृजति, अतश्च, **नित्यत्वमेव**—(वसिष्ठादीनां मन्त्रादिकर्तृत्वेऽपि) वेदस्य नित्यत्वं वर्तत एव ॥

94. **समाननामरूपत्वाच्चावृत्तावप्यविरोधो दर्शनात् स्मृतेश्च**(१-३-२९) **आवृत्तावपि**—महाप्रलयानन्तरम् अव्याकृतसृष्टेः पुनरावृत्तावपि, **समाननामरूपत्वाच्च**—सृज्येषु वस्तुषु प्राक्तनसर्गस्थवस्तुगतनाम-रूपसुसदृशनाम-रूपवत्त्वादेव, **अविरोधः**—वेदानां नित्यत्वविरोध्यनित्यत्वाभावः ; (अस्यार्थस्याऽवगतिस्तु) **दर्शनात्**—'यो ब्रह्माणं विदधाति पूर्वम्' इत्यादिश्रुतेः, **स्मृतेश्च**—'यथर्तुष्वृतुलिङ्गानि' इत्यादिस्मृतेरपि च ज्ञापकात् ॥

## २५. मध्वधिकरणम् (१-३-८) (सू. ३०-३२)

95. **मध्वादिष्वसम्भवादनधिकारं जैमिनिः** (१-३-३०) **मध्वादिषु**—मधुविद्यादिरूपासु विद्यासु, **अनधिकारम्**—प्राप्तवस्वादिपदानां चेतनानाम् अधिकाराभावम्, **जैमिनिः**—जैमिनिनामा आचार्यः मन्यते, **असंभवात्**—उपास्यानाम् उपासकत्वायोगात्, वस्वादिपदस्य प्राप्तत्वेन पुनः प्राप्यत्वासम्भवाच्च ॥

96. **ज्योतिषि भावाच्च** (१-३-३१) **ज्योतिषि**—परस्मिन् ब्रह्मण्येव उपास्यमाने, **भावाच्च**—देवानाम् उपासनाधिकारसद्भावस्य 'तं देवा ज्योतिषां ज्योतिः आयुर्होपासतेऽमृतम्' इति श्रुत्या अवगमादपि, **अनधिकारम्**—परब्रह्मातिरिक्तविषयकोपासनाधिकाराभाव एव ॥

97. **भावं तु बादरायणोऽस्ति हि** (१-३-३२) **भावं तु**—प्राप्तवस्वादिपदानामपि

वस्वाद्युपासनाधिकारसद्भावमेव, बादरायणः—बादरायणो भगवान् मन्यते, हि—यतः, अस्ति—प्राप्तवस्वादिपदानामपि कल्पान्तरे वस्वादिपदस्य प्राप्यत्वम्, ब्रह्मात्मभावानुसन्धानेन स्वात्मनामपि उपास्यत्वं च संभवत्येव ॥

२६. अपशूद्राधिकरणम् (१-३-९) (सू. ३३-३९)

98. शुगस्य तदनादरश्रवणात्तदाद्रवणात्सूच्यते हि (१-३-३३) अस्य—जानश्रुतेः राज्ञः, शुक्—ब्रह्मविद्यायाः अलाभकृतः शोकः, तदनादरश्रवणात्—हंसोक्तानादरवाक्यस्य आकर्णनात् , तदा—अनादरवाक्य-श्रवणसमनन्तरमेव, आद्रवणात्—ब्रह्मोपदेष्टारमाचार्यं प्रति अनुधावनाच्च, हि—यतः, सूच्यते—अनुमीयते, अतः जानश्रुतेः शूद्रत्वं, शोकादेव ; न शूद्रवर्णजातत्वात् ॥

99. क्षत्रियत्वगतेश्च (१-३-३४) अस्य—ब्रह्मविद्याशुश्रूषोः जानश्रुतेः, क्षत्रियत्वस्य—क्षत्रियवर्णजातत्वस्य, गतेश्च—('बहुदायी बहुपाक्यः' इति दानपतित्व-बहुतरपक्वान्नदायित्वाभ्यां राजन्यासाधारणधर्माभ्यां) प्रतीतेरपि ज्ञापकात् (नाऽयं चतुर्थवर्णजः) ॥

100. उत्तरत्र चैत्ररथेन लिङ्गात् (१-३-३५) उत्तरत्र—एतद्विद्यासम्बन्धिनि पश्चात्तने उपनिषद्भागे कीर्त्यमानेन, चैत्ररथेन—चित्ररथवंश्येन अभिप्रतारिनाम्ना क्षत्रियेण, अस्य—जानश्रुतेरपि, क्षत्रियत्वगतिः—अनुमित्यात्मकः क्षत्रियत्वनिर्णयो भवति, (अभिप्रतारिणः चैत्ररथत्वं क्षत्रियत्वं च) लिङ्गात्—कापेयपदसाहचर्यरूपात् ज्ञापकात् सिद्ध्यति ॥

101. संस्कारपरामर्शात्तदभावाभिलापाच्च (१-३-३६) (ब्रह्मविद्योपदेशेषु) संस्कारस्य—उपदेशाङ्गभूतस्य, उपनयनसंस्कारस्य, परामर्शात्—'उप त्वा नेष्ये' इत्यादिवाक्येनोपस्थितेः; (शूद्रे तु) तदभावस्य—उपनयनसंस्कारराहित्यस्य, अभिलापाच्च—'न च संस्कारमर्हति' इत्यादिषु स्पष्टमुक्तेश्च, शूद्रेत्यामन्त्रितः न चतुर्थवर्णीयः ॥

102. तदभावनिर्धारणे च प्रवृत्तेः (१-३-३७) तदभावस्य—जबालापुत्रे शूद्रवर्णीयत्वाभावस्य, निर्धारणे च—निश्चये सत्येव, प्रवृत्तेः—विद्योपदेशप्रवृत्तेः ('नैतदब्राह्मणो विवक्तुमर्हति समिधं सोम्याहर' इत्यादिश्रुतौ) दर्शनात् , (न शूद्रवर्णीयस्य विद्योपदेशः श्रुतिसिद्धः) ॥

103. श्रवणाध्ययनार्थप्रतिषेधात् (१-३-३८) श्रवणस्य—वेदाख्याक्षरराशेः श्रोत्रेण ग्रहणस्य, प्रतिषेधात्—'तस्मात् शूद्रसमीपे नाऽध्येतव्यम्' इति श्रुतौ वाच्यवृत्त्या निषिद्धत्वात्, अध्ययनार्थयोः—गुरुमुखोच्चारणानूच्चारणरूपस्वाध्यायग्रहणस्य, यज्ञादिरूपस्वाध्यायार्थानुष्ठानस्य च कैमुतिकन्यायेन निषेधाच्च (न शूद्रवर्णीयः विद्याधिकारितया श्रुत्युक्तः) ॥

104. स्मृतेश्च (१-३-३९) स्मृतेः च—वेदश्रवण-वेदग्रहण-तदर्थानुष्ठानादीनां निषेधस्य स्मृत्युक्तत्वादपि ज्ञापकात्, (न शूद्रवर्णीयः वेदोक्तविद्याधिकारी) ।।

प्रमिताधिकरणशेषः (सू. ४०-४१)

105. कम्पनात् (१-३-४०) प्रमितः—अङ्गुष्ठप्रमिततया श्रुत्युक्तः अर्थः, (परमात्मैव ; न जीवः) कम्पनात्—'यदिदं किञ्च जगत्सर्वं प्राण एजति ' इति श्रुत्युक्तसर्वकम्पनहेतुभूतभयजनन-योग्यतावत्त्वात् ।।

106. ज्योतिर्दर्शनात् (१-३-४१) प्रमितः—अङ्गुष्ठप्रमिततया श्रुत्युपपादितोऽर्थः, (परमात्मा ; न जीवः) ज्योतिषः—सूर्यादिसकलतेजोऽभिभावकं सर्वतेजोवभासकं च यत् ज्योतिः तत्सम्बन्धस्य, दर्शनात्—'न तत्र सूर्यो भाति....तस्य भासा सर्वमिदं विभाति' इति श्रुत्या प्रतिपादनात् ॥

२७. अर्थान्तरत्वादिव्यपदेशाधिकरणम् (१-३-१०) (सू. ४२-४४)

107. आकाशोऽर्थान्तरत्वादिव्यपदेशात् (१-३-४२) आकाशः—नामरूपनिर्वोढृत्वेन श्रुत्युक्तः आकाशपदार्थः, (परमात्मैव; न बद्धः मुक्तो वा आत्मा) अर्थान्तरत्वादेः—नामरूपनिर्वो-ढत्वस्य (तथा) निरुपाधिकब्रह्मत्वादेश्च प्रत्यगात्मावृत्तिधर्मस्य जीवेतरपरमात्ममात्रवृत्तिधर्मस्य वा, व्यपदेशात्—'आकाशो ह वै . नामरूपयोर्निर्वहिता' इत्यादिश्रुत्या स्पष्टं प्रतिपादनात् ज्ञापकात् ।।

108. सुषुप्त्युत्क्रान्त्योर्भेदेन (१-३-४३) सुषुप्त्युत्क्रान्त्योः—जीवात्मनः गाढनिद्रारूपाया मवस्थितौ, (तथा) देहात् उत्क्रमणरूपायाम् अवस्थितौ च, भेदेन—परमात्मनः, जीवात् भिन्नतया, व्यपदेशात्—'प्राज्ञेनाऽऽत्मना सम्परिष्वक्तः' इति 'प्राज्ञेनाऽत्मनाऽन्वारूढः' इति च श्रुतौ स्पष्टं कथनात्, (परमात्मा, प्रत्यगात्मनो जीवादन्यः) ।।

109. पत्यादिशब्देभ्यः (१-३-४४) पत्यादिशब्देभ्यः—परमात्मनि विषये प्रयुक्तेभ्यः, 'सर्वस्याधिपतिः सर्वस्येशानः' इत्यादिभ्यः श्रुतिगतेभ्यः शब्देभ्यः, ('स्वामित्ववान् परमात्मा अन्यः, स्वत्ववान् जीवः अन्यः' इति निर्णयम्) ।।

।। इति प्रथमेऽध्याये तृतीयः पादः ॥



॥ चतुर्थः पादः ॥ [आधि. ८ सू. १-२९]

## २८. आनुमानिकाधिकरणम् (१-४-१) (सू. १-७)

110. **आनुमानिकमप्येकेषामिति चेन्न, शरीररूपकविन्यस्तगृहीतेर्दर्शयति च** (१-४-१) **एकेषाम्**—कठानां (शाखायाम्), **आनुमानिकमपि**—अनुमानसिद्धतया सांख्यैः वर्ण्यमानं प्रधानमपि, ('महतःपरमव्यक्तम्' इति, जगत्कारणतया आम्नायते) **इति चेत्**—एवं शङ्कनं तु, **न**—समीचीनं न भवति, **शरीररूपकविन्यस्तस्य**--रथित्वेन रूपितस्यात्मनः रथतया रूपितं यत् शरीरम् तस्य, **गृहीतेः**—(अव्यक्तम् इत्यनेन वशीकार्यतया अत्र) ग्रहणात्, **दर्शयति च**—श्रुतिः इममर्थं स्पष्टं प्रतिपादयति च 'यच्छेद्वाङ्मनसी प्राज्ञः') इति ॥

111. **सूक्ष्मं तु तदर्हत्वात्**(१-४-२) **सूक्ष्मं तु**—भूतसूक्ष्मशब्दवाच्यम् अव्यक्तमेव (शरीरावस्थं भवतीति) शरीरमेवाऽत्र अव्यक्तशब्दवाच्यम्, **तदर्हत्वात्**—विकारावस्थस्य अव्याकृतस्यैव पुरुषार्थसाधनप्रवृत्तिरूपकार्यजननसमर्थत्वात् ॥

112. **तदधीनत्वादर्थवत्** (१-४-३) **तदधीनत्वात्**—परमपुरुषशरीरतया तदधीनत्वात्, **सूक्ष्मम्**—भूतसूक्ष्मम् अव्याकृतम्, **अर्थवत्**—प्रयोजनवद्भवति ॥

113 **ज्ञेयत्वावचनाच्च** (१-४-४) (अत्रात्मिकायाःप्रकृतेः) **ज्ञेयत्वस्य**—मुमुक्षुभिर्वेद्यत्वस्य, **अवचनाच्च**—श्रुतौ अनुक्तत्वादपि, 'महतः परमव्यक्तम्' इत्युक्तम् अव्यक्तं, प्रधानं न भवितुमर्हति ॥

114. **वदतीति चेन्न प्राज्ञो हि प्रकरणात्** (१-४-५) **ज्ञेयत्वम्**—महतः परस्य प्रधानस्य वेद्यत्वम्, **वदति**—'महतः परं ध्रुवं निचाय्य' इति श्रुतिः कथयत्येव, **इति चेत्**—इति कथनं तु, **न**—न सम्यक्, **हि**—यतः, **प्राज्ञः**—परमपुरुष एव अत्रोच्यते ; **प्रकरणात्**—'एष सर्वेषु भूतेषु गूढोऽत्मा' इति प्राज्ञस्यैव प्रकृतत्वात् ॥

115. **त्रयाणामेव चैवमुपन्यासः प्रश्नश्च** (१-४-६) **त्रयाणामेव**—उपास्योपासकोपासनानाम् उपायोपेतृपायानामेव च त्रयाणाम्, **एवम्**—ज्ञेयत्वेन, **उपन्यासः**—प्रतिवचनम्, **प्रश्नश्च**—पृच्छा च, (अस्मिन् प्रकरणे आद्यन्तं दृश्यते ; अतः न प्रधानस्य ज्ञेयता) ॥

116. **महद्वच्च** (१-४-७) **महद्वत् च**—'बुद्धेरात्मा महान् परः' इत्यत्र आत्मशब्द-

समानाधिकरणमहच्छब्द इव ('महतः परमव्यक्तम्' इत्यत्र 'अव्यक्त'शब्दोऽपि न प्रधानपरः) ॥

२९. चमसाधिकरणम् (१-४-२) (सू. ८-१०)

117. **चमसवदविशेषात्** (१-४-८) ('अजामेकाम्' इति श्रुतिस्थः अजाशब्दः, न साङ्ख्योक्तप्रधानपरः) **चमसवत्** — 'अर्वाग्बिलश्चमसः' इति वाक्यस्थे 'चमस'शब्द इव. **अविशेषात्**— शब्दस्य शिरोबोधकतया प्रवृत्तौ 'यथेदं तच्छिरः' इति वाक्यशेषस्थो विशेष इव, अत्र अजाशब्दस्य प्रधानबोधकतया प्रवृत्तौ नियामकस्य विशेषस्याऽभावात् ॥

118 **ज्योतिरुपक्रमा तु तथा ह्यधीयत एके** (१-४-९) ('अजामेकाम्' इति श्वेताश्वतरीया अजा) **ज्योतिरुपक्रमा तु**—परब्रह्मकारणिकैव, **एके**—तैत्तिरीयाः, **तथा हि**—परब्रह्मकारणकत्वात्मकम् अजायाः रूपमेव, **अधीयते**—तैत्तिरीयनारायणोपनिषदि 'अणोरणीयान्' इत्यारभ्य, 'अजामेकाम्' इति पठन्ति ॥

119. **कल्पनोपदेशाच्च मध्वादिवदविरोधः** (१-४-१०) **कल्पनायाः**—उपकरणभूतात् प्रधानाख्यवस्तुनो जगत्सृष्टेः, **उपदेशाच्च**—'अस्मान्मायी सृजते विश्वमेतत्' इति श्रुत्या ज्ञापनादपि, **मध्वादिवत्**—एकस्यैव सूर्यस्य कार्यावस्थायां देवमधुत्वस्य, कारणावस्थायां नामरूपप्रहाणेन 'एकल एवे'त्युक्तैकत्वस्येव च, **अविरोधः**—प्रधाने अजात्वस्य, ब्रह्मकारणकत्वस्य च नित्यत्वानित्यत्वात्मकस्य सामानाधिकरण्यं युज्यते ॥

३०. सङ्ख्योपसङ्ग्रहाधिकरणम् (१-४-३) (सू. ११-१३)

120. **न सङ्ख्योपसङ्ग्रहादपि नानाभावादतिरेकाच्च** (१-४-११) **संख्यायाः**— 'यस्मिन् पञ्च पञ्चजनाः' इति श्रुतौ पञ्चपञ्चेति पदेन तत्त्वगतायाः पञ्चविंशत्यात्मिकायाः संख्यायाः, **उपसंग्रहादपि**—बोधकतास्वीकारादपि, **न**—सांख्यतन्त्रोक्तपञ्चविंशतिसंख्याकाब्रह्मात्मकप्रधानसिद्धिर्न भवति, **नानाभावात्**—'यस्मिन्' इति यच्छब्दार्थाधारकाणामेतेषां सांख्यतन्त्रोक्तेभ्यः तत्त्वेभ्यः पृथग्भावात्, (तथा), **अतिरेकाच्च**—उत्तरस्मिन् पादे 'आकाशश्च प्रतिष्ठितः' इति आकाशस्याऽपि पृथङ्निर्देशादपि ज्ञापकात् ॥

121. **प्राणादयो वाक्यशेषात्** (१-४-१२) **प्राणादयः**—पञ्चजनसंज्ञिताः पञ्चपदार्थाः, (ब्रह्मात्मकानि पञ्चेन्द्रियाण्येव) ; **वाक्यशेषात्**—'प्राणस्य प्राणं मनसो ये मनः' इत्येवंरूपात् पूर्वमन्त्रोक्तार्थविवरणरूपात् उत्तरवाक्यात् ज्ञापकात् ॥

122. ज्योतिषैकेषामसत्यन्ने (१-४-१३) एकेषाम्—काण्वानां (वाक्यशेषे), अन्ने—अन्नशब्दे, असति—अविद्यमाने सति, ज्योतिषा—वाक्योपक्रमगतेन 'तं देवा ज्योतिषां ज्योतिः' इति ज्योतिश्शब्देन ज्ञापकेन, (पञ्चजनशब्दवाच्यानि प्रकाशकानि इन्द्रियाणि इति विज्ञायते इति, न प्राकृततत्त्वविचारोऽत्र प्रस्तुतः) ॥

३१. कारणत्वाधिकरणम् (१-४-४) (सू. १४-१५)

123. कारणत्वेन चाकाशादिषु यथाव्यपदिष्टोक्तेः (१-४-१४) आकाशादिषु—आकाशादिपदचिह्नितेषु 'आत्मन आकाशः सम्भूतः' इत्यादिवाक्येषु, आकाशादीन् प्रति, कारणत्वेन च—हेतुतयैव, यथाव्यपदिष्टस्य—सार्वात्म्यादियुक्ततया अस्माभिः व्यपदिष्टस्य परब्रह्मण एव, उक्तेः—कथनात्, (अब्रह्मात्मकं प्रधानं न कारणम्) ॥

124. समाकर्षात् (१-४-१५) समाकर्षात्—('सोऽकामयत'.........इदं सर्वमसृजत' इति निर्दिष्टस्य जगत्स्रष्टुः ब्रह्मण एव 'असद्वा' इत्यत्राऽपि) अनुवर्त्य विशेष्यतया ग्रहणात्, नामरूपासंस्पृष्टकारणावस्थं ब्रह्मैव 'असत्' इति शब्देनोच्यते ; न तु असत्कारणतावादः ।)

३२. जगद्वाचित्वाधिकरणम् (१-४-५) (सू. १६-१८)

125. जगद्वाचित्वात् (१-४-१६) जगद्वाचित्वात्—(कौषीतकिनां 'यस्य वैतत्कर्म' इति वाक्यगत'कर्म' शब्दस्य 'क्रियते' इति व्युत्पत्त्या) सृज्यमानप्रपञ्चवाचकत्वात्, ('स वै वेदितव्यः' इति तच्छब्दार्थः समस्तजगत्कर्ता परमपुरुष एव ज्ञेयतयोपदिष्टः)॥

126. जीवमुख्यप्राणलिङ्गान्नेति चेत्तद्व्याख्यातम् (१-४-१७) जीवलिङ्गात्—'प्रज्ञात्मैतैरात्मभिर्भुङ्क्ते' इति भोक्तृत्वरूपात् जीवलिङ्गात्, मुख्यप्राणलिङ्गात्—'प्राण एवैकधा भवति' इत्येवंरूपात् मुख्यप्राणलिङ्गाच्च, न—'स वै वेदितव्यः' इति निर्दिष्टः, न परमात्मा ; किन्तु जीवः प्राणो वा, इति चेत्—एवमाक्षेपे, तत्—आक्षेपणम्, व्याख्यातम्—विशेषेण परिहारात्मना प्रतर्दनविद्यायां विवृतम् ॥

127. अन्यार्थं तु जैमिनिः प्रश्न-व्याख्यानाभ्यामपि चैवमेके (१-४-१८) अन्यार्थं तु—भोक्तृत्वादिलिङ्गेन जीवादिसङ्कीर्तनम्, तदतिरिक्तस्य परमात्मनः सद्भावप्रतिपादनार्थमेव, प्रश्नेन—'क्वैष एतद्बालाके पुरुषोऽशयिष्ट' इत्येवंरूपेण अनुयोगेन, व्याख्यानेन—'अथाऽस्मिन् प्राण एवैकधा भवति' इत्येवमादिना प्रतिवचनेन च इति, जैमिनिः—जैमिनिराचार्यो मन्यते, अपि च—किं च, एके—वाजसनेयिनः, एवम्—एवमेव स्पष्टमधीयते ॥

३३. वाक्यान्वयाधिकरणम् (१-४-६) (सू. १९-२२)

128. **वाक्यान्वयात्** (१-४-१९) **वाक्यस्य**—'येनेदं सर्वं विजानाति तं केन विजानीयात्' इत्यादेः कृत्स्नस्य वाक्यस्य, **अन्वयात्**—परमात्मन्येव स्वार्थद्वारा अन्वयसम्भवात्, 'आत्मा वा अरे द्रष्टव्यः' इति द्रष्टव्यतया निर्दिष्टः आत्मा, परमात्मैव ॥

129. **प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः** (१-४-२०) **प्रतिज्ञायाः**—एकविज्ञानेन सर्वविज्ञानप्रतिज्ञायाः, **सिद्धेः**—निष्पत्तिं प्रति, **लिङ्गम्**—(जीवात्मवाचिभिः शब्दैः परमात्मनोऽभिधानमित्येतत्) ज्ञापकम् इति, **आश्मरथ्यः**—आश्मरथ्यनामा आचार्यः अभिप्रैति ॥

130. **उत्क्रमिष्यत एवंभावादित्यौडुलोमिः** (१-४-२१) **उत्क्रमिष्यतः**—शरीरं विहाय ऊर्ध्वं क्रमिष्यतः निष्पन्नसाधनस्य जीवस्य, **एवम्भावात्**—परमात्मभावप्राप्तेः (श्रुतिषु जीववाचिना शब्देन परमात्मनः अभिधानम्) इति—एवंरूपं हेतुम्, **औडुलोमिः**—औडुलोमिनामा आचार्यः मन्यते ॥

131. **अवस्थितेरिति काशकृत्स्नः** (१-४-२२) **अवस्थितेः**—जीवात्मनि अन्तरात्मतया परमात्मनः अवस्थानम् अन्तर्यामिब्राह्मणोक्तं हेतूकृत्य, (श्रुतिषु जीवात्मवाचिभिः शब्दैः परमात्माभिधानम्) इति—एवंरूपं समाधानम्, **काशकृत्स्नः**—काशकृत्स्ननामा आचार्यः मन्यते ॥

३४. प्रकृत्यधिकरणम् (१-४-७) (सू. २३-२८)

132. **प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्** (१-४-२३) **प्रकृतिश्च**—(परं ब्रह्म जगतो निमित्तकारणमिव) उपादानकारणमपि, **प्रतिज्ञायाः**—'यस्मिन्नु खलु विज्ञाते सर्वमिदं विज्ञातं भवति' इत्युक्तायाः ब्रह्मणि अभिमतार्थसाधनपरायाः वाचः, (तथा) **दृष्टान्तस्य** (च)—'यथा सोम्यैकेन मृत्पिण्डेन' इति निदर्शनोक्तेश्च, **अनुपरोधात्**—(तथात्वे एव) अविरोधसिद्धेः ॥

133. **अभिध्योपदेशाच्च** (१-४-२४) **अभिध्यायाः**—जगन्निर्मातृब्रह्मकर्तृकस्य 'बहु स्याम्' इति बहुभवनचिन्तनस्य, **उपदेशाच्च**—श्रुतावेव ज्ञापितत्वाद्धेतोरपि, ब्रह्म जगन्निमित्तमिव जगदुपादानमपि ॥

134. **साक्षाच्चोभयाम्नानात्** (१-४-२५) **साक्षाच्च**—स्पष्टतयैव, **उभयस्य**—उपादानत्वस्य निमित्तत्वस्य च, **आम्नानात्**—'ब्रह्मवनं ब्रह्म स वृक्षः' इति, (तथा) 'ब्रह्माऽध्यतिष्ठत्' इति च श्रुतौ परिपाठनात् जगत् प्रति ब्रह्मैव उपादानं, निमित्तं च ॥

135. **आत्मकृतेः** (१-४-२६) **आत्मनः**—परस्य ब्रह्मणः स्वस्यैव, **कृतेः**—जगद्रूपेण करणस्य, **उपदेशात्**—'तदात्मानं स्वयमकुरुत' इति श्रुतौ स्पष्टं ज्ञापनात्, **उभयम्**—ब्रह्मैव उपादानं निमित्तं च ॥

136. **परिणामात्** (१-४-२७) **परिणामात्**—अविभक्तनामरूपसूक्ष्मचिदचिद्वस्तुशरीरकस्य ब्रह्मणः, विभक्तनामरूपस्थूलचिदचिद्वस्तुशरीरतया परिणामस्य 'अव्याकृतमासीत्, तन्नाम-रूपाभ्यां व्याक्रियत' इति श्रुतौ उपदिश्यमानत्वात्, (अपुरुषार्थभूतानां विकाराणां विशेषण-गतानां, विशेष्ये ब्रह्मणि न प्रसक्तिः) ॥

137. **योनिश्च हि गीयते** (१-४-२८) **हि**—यतः, (ब्रह्म) **योनिः**—'भूतयोनिम्' इति, 'ब्रह्म योनिम्' च योनित्वेन, **गीयते**—श्रुतौ कथ्यते, (अतः ब्रह्म) **प्रकृतिश्च**—निमित्तमिव उपादानमपि ॥

### ३५. सर्वव्याख्यानाधिकरणम् (१-४-८) (सू. २९)

138. **एतेन सर्वे व्याख्याता व्याख्याताः** (१-४-२९) **एतेन**—'जन्माद्यस्य यतः' इत्यादिनोक्तेन न्यायकलापेन, **सर्वे**—वेदान्ताः सर्वे, **व्याख्याताः व्याख्याताः**—सर्वथा परब्रह्म-पराः स्पष्टीकृताः ॥

॥ इति प्रथमेऽध्याये चतुर्थः पादः ॥

॥ प्रथमोऽध्यायः समाप्तः ॥



## ॥ द्वितीयोऽध्यायः ॥ [अधि॰ ३३, सू. १४९]

### प्रथमः पादः (अधि. १०, सू. ३६)



### ३६. स्मृत्यधिकरणम् (२-१-१) (सू. १, २)

139. **स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नाऽन्यस्मृत्यनवकाशदोषप्रसङ्गात्** (२-१-१) **स्मृत्यनवकाशदोषप्रसङ्गः**—(परब्रह्मण एव जगन्निमित्तोपादानकारणतावादाङ्गीकारेण कपिल-स्मृत्युक्तप्रधानकारणतावादप्रतिक्षेपे क्रियमाणे सति) कपिलस्मृतेः निरवकाशत्वरूपदोषस्य आपत्तिः, **इति चेत्**—एवंरूपः आक्षेपः, **न**—न युक्तिमान्, (तथासति) **अन्यस्मृत्यनवकाशदोष-प्रसङ्गात्**—कापिलेतरासां वेदान्तोपबृंहणतत्पराणां मन्वादिस्मृतीनां निरवकाशतारूपदोषस्य आपातात् ॥

140. **इतरेषां चाऽनुपलब्धेः**(२-१-२) **इतरेषाम्**—कपिलेतरेषां मन्वादीनां महर्षीणाम् , **अनुपलब्धेश्च**—प्रधानकारणतातात्पर्यस्य तत्तत्स्मृतिषु अदर्शनाच्च हेतोः, (उपनिषदुक्तं ब्रह्म-कारणत्वमेव सम्यक्) ॥

### ३७. योगप्रत्युक्त्यधिकरणम् (२-१-२)

141. **एतेन योगः प्रत्युक्तः** (२-१-३) **एतेन**—कपिलोक्ताब्रह्मात्मकप्रधानकारणतावाद-निरसनेन, **योगः**—हिरण्यगर्भोक्ता अब्रह्मात्मकप्रधानकारणत्वपरा योगस्मृतिरपि, **प्रत्युक्तः**—दत्तोत्तरा । (एतदंशे सा वेदान्तोपबृंहणरूपा न भवति इति ।)

### ३८. विलक्षणत्वाधिकरणम् (२-१-३) (सू. ४-१२)

142. **न विलक्षणत्वादस्य तथात्वं च शब्दात्** (२-१-४) **विलक्षणत्वात्**—ब्रह्मजगतोः चेतनत्वाचेतनत्वरूपविरुद्धधर्माश्रयत्वात् , **न**—तयोः कार्य-कारणभावः न घटते, (समानधर्मा-श्रययोः प्रधान-जगतोरेव तद्युज्यते) **अस्य**—जगतः, **तथात्वं च**—ब्रह्मापेक्षया विरुद्धलक्षणत्वं च, **शब्दात्**—'विज्ञानं चाऽविज्ञानं च' इत्येवमादिरूपात् वैदिकात् शब्दादेव, अवगम्यते ॥

143. **अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम्** (२-१-५) **विशेषानुगतिभ्याम्**—पृथिव्यादेः 'तिस्रो देवताः' इति देवताशब्देन विशेषणात् , अग्न्यादेः वागाद्यनुप्रवेशाच्च

ज्ञापकात्, (पृथिव्यब्रवीत्' 'आपो वा अकामयन्त' इत्यादिषु पृथिव्यादौ चेतनधर्मव्यवहारः) अभिमानिव्यपदेशस्तु—पृथिव्याद्यभिमानिदेवतागतचेतनधर्मव्यपदेश एव ; न केवलपृथिव्यादिगतः ॥

144. दृश्यते तु (२-१-६) दृश्यते तु—लोके कारणाद्विलक्षणस्याऽपि तस्य तस्य कार्यत्वम् उपलभ्यते एव खलु । (यथा माक्षिकाद्यपेक्षया विलक्षणाः क्रिमयः तेभ्यो जायन्ते इति ।।

145. असदिति चेन्न प्रतिषेधमात्रत्वात् (२-१-७) असत् इति चेत्—('कार्याद्विलक्षणं कारणम्' इत्यभ्युपगम्यमाने,) 'उत्पत्तेः पूर्वं कारणम् असत्' इति प्रसज्येत, इत्याक्षेपणं तु न—न युक्तिमत्, प्रतिषेधमात्रत्वात्—('दृश्यते तु' इत्यनेन कारणविलक्षणकार्योत्पत्तिप्रदर्शनस्य तु) अवैलक्षण्यनियमाभावप्रतिपादनमात्रे तात्पर्यात् ।।

146. अपीतौ तद्वत्प्रसङ्गादसमञ्जसम् (२-१-८) अपीतौ—जगतो ब्रह्मणि लयकाले, ब्रह्मणः सकाशादुत्पत्तिकाले वा, तद्वत् प्रसङ्गात्—जगद्गतविकारापुरुषार्थादीनां ब्रह्मण्यपि आपत्तेः, असमञ्जसम्—जगतः ब्रह्मकार्यतावर्णनं वेदान्तासामञ्जस्यकरम् ।।

147. न तु दृष्टान्तभावात् (२-१-९) न तु—ब्रह्मणि विकारादिप्रसङ्गः, तेन वेदान्तासामञ्जस्यप्रसङ्गश्च नैवाऽस्ति, दृष्टान्तभावात्—एकस्यैव अवस्थाद्वयान्वयेऽपि गुण-दोषयोः तत्तन्मात्रपर्यवसितत्वे दृष्टान्तस्य सद्भावात् ('मनुष्यो बालः युवा समभवत्' इति) ।।

148. स्वपक्षदोषाच्च (२-१-१०) स्वपक्षदोषाच्च—प्रधानकारणतावादपक्षेऽपि विरुद्धार्थाभिधानकृतासामञ्जस्यरूपदोषस्य सद्भावादपि सांख्यपक्षः त्याज्य एव ॥

149. तर्काप्रतिष्ठानादपि (२-१-११) तर्काप्रतिष्ठानादपि—तर्कस्य अप्रतिष्ठितत्वादपि हेतोः, तर्कमूलः सांख्यपक्षः न समाश्रयणीयः ; अपि तु श्रुतिमूलो ब्रह्मकारणतावाद एव ।।

150. अन्यथाऽनुमेयमिति चेदेवमप्यनिर्मोक्षप्रसङ्गः (२-१-१२) अन्यथा—प्रतिकूलतर्कैः पराहतिः यथा न भवति तथा, अनुमेयम्—प्रधानकारणत्वं सांख्योक्तम् अनुमानेन स्थापनीयम्, इति चेत्—एवम् आशङ्कनमपि न घटते, (यतः) एवमपि—तर्करूपेणानुमानेन साधनेऽपि, अनिर्मोक्षप्रसङ्गः—तर्काप्रतिष्ठितत्वरूपदोषनिर्दूरत्वाभावापत्तिः ।।

### ३९. शिष्टापरिग्रहाधिकरणम् (२-१-४)

151. एतेन शिष्टापरिग्रहा अपि व्याख्याताः (२-१-१३) एतेन—वेदापरिगृहीतसांख्य-

पक्षक्षपणेन, शिष्टापरिग्रहा अपि—परिशिष्टाः वेदापरिगृहीताः कणादादिपक्षा अपि, व्याख्याताः—क्षपिताः वेदितव्याः ॥

४०. भोक्त्रापत्त्यधिकरणम् (२-१-५)

152. भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवत्— (२-१-१४) (ब्रह्मणः समस्तचेतनाचेतन-शरीरकत्वे अभ्युपगम्यमाने) भोक्त्रापत्तेः—ब्रह्मणोऽपि जीवस्येव शरीरसम्बन्धायत्तसुखदुःखाद्यनु-भवितृत्वप्रसङ्गात्, अविभागश्चेत्—ब्रह्मणः जीवापेक्षया वैलक्षण्याभाव एव; इत्येवमाशङ्कनं न युज्यते, लोकवत्—लोकदृष्टे शासके राजनीव, स्यात्—सर्वजगन्नियन्तरि परमात्मन्यपि स्वनियाम्यजीवापेक्षया वैलक्षण्यम् अविरुद्धमेव ।

४१. आरम्भणाधिकरणम् (२-१-६) (सू. १५-२०)

153. तदनन्यत्वमारम्भणशब्दादिभ्यः (२-१-१५) तदनन्यत्वम्—तस्मात् परमकारणात् ब्रह्मणः, कार्यस्य जगतः अन्यत्वाभावः, आरम्भणशब्दादिभ्यः—'वाचारम्भणं विकारः' इत्येवम् 'आरम्भण'पदघटित श्रुतिवाक्याद्यात्मकेभ्यः प्रमाणेभ्यः (सिध्यति) ॥

154. भावे चोपलब्धेः (२-१-१६) भावे च—घटादिकार्यत्वावस्थायामपि, उपलब्धेश्च—कारणस्य मृदादेः दर्शनादपि हेतोः, तदनन्यत्वम्—कारणात् कार्यस्य अन्यत्वाभावः (सिध्यति) ॥

155. सत्त्वाच्चाऽपरस्य—(२-१-१७) अपरस्य—कारणानन्तरकालिकस्य कार्यस्य घटादेः, सत्त्वाच्च—पूर्वस्मिन् कारणे मृदादौ विद्यमानत्वादपि हेतोः, (अयं घटः पूर्वं हि मृदेवाऽसीत् इति) तदनन्यत्वम्—कार्यस्य कारणादन्यत्वाभावः (सिध्यति) ॥

156. असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण वाक्यशेषाद्युक्तेः शब्दान्तराच्च (२-१-१८) असद्व्यपदेशात्—सृष्टेः पूर्वं जगतः असत्त्वस्यैव 'असदेवेदमग्र आसीत्, इति श्रुतौ व्यवहृतत्वात्, न—कार्ये कारणानन्यत्वं न घटते, इति चेत्—इत्येवमाशङ्कनम्, न—न समीचीनम्, धर्मान्तरेण—नामरूपविभागार्हत्वावस्थाविरोधिसूक्ष्मावस्थाख्यधर्मान्तरसम्बन्धमादाय श्रुतौ असद्व्य-पदेशस्य कृतत्वात्, वाक्यशेषात् –'असदेव सन्मनोऽकुरुत' इति वाक्यशेषे पूर्ववाक्योपकारके वाक्ये असत एव सङ्कल्परूपमनस्करणोक्तेश्च (अयमर्थो निर्णीयते)। युक्तेः–घटत्वावस्थासम्बन्धः घटस्य सत्त्वम्, कपालत्वावस्थासम्बन्धः घटस्य असत्त्वम्' इति व्यवहारव्यवस्थासिद्धौ अतिरिक्त-

स्यासत्त्वस्य अकल्पनरूपयुक्तेः, शब्दान्तराच्च—सृष्टेः पूर्वमसत्त्वेनोक्तस्यैव 'सदेव सोम्येदमग्र आसीत्' इति सत्त्वप्रतिपादकस्य अन्यस्य शब्दस्य सत्वाच्च ॥

157. पटवच्च (२-१-१९) पटवच्च—यथा पूर्वं 'तन्तु'व्यपदेशभाक् योऽर्थः, स एव अनन्तरं तन्तूनां व्यतिषङ्गविशेषभाक्त्वेन 'पटः' इति व्यपदिष्टः, तद्वदेव ब्रह्मणोऽपि सूक्ष्मावस्थस्य असद्व्यपदेशः, स्थूलावस्थस्य सद्व्यपदेशश्च युज्यत एवेति कारणानन्यत्वं कार्यस्य ॥

158. यथा च प्राणादिः (२-१-२०) प्राणादिश्च यथा—प्राणापानाद्यात्मकवृत्तिपञ्चकं भजमानः कार्यो वायुः, एकस्मादेव शरीरस्थात् कारणभूतात् वायोः यथैव अनन्यः, तथा स्थूलचिदचिद्विशिष्टब्रह्मात्मकं कार्यावस्थं जगत् , सूक्ष्मचिदचिद्विशिष्टब्रह्मात्मकात् कारणावस्था-द्वस्तुनः अनन्यदेव ॥

### ४२. इतरव्यपदेशाधिकरणम् (२-१-७) (सू.२१-२३)

159. इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः (२-१-२१) इतरव्यपदेशात्—'तत्त्वमसि' इति श्रुत्या इतरत्वेन-जीवत्वेन ब्रह्मणः व्यवहृतत्वात् , हिताकरणादिदोषप्रसक्तिः—दुःखप्रचुरं जगत् सृजतः ब्रह्मणः 'स्वहितस्य सुखात्मकस्य जगतः असृष्टिः, स्वाहितस्य दुःखात्मकस्य जगतः सृष्टिः' इत्येवं दोषद्वयस्यापत्तिः। (अतः ब्रह्मणः कार्यभूतजगदनन्यत्वं न युज्यते।) ॥

160. अधिकन्तु भेदनिर्देशात् (२-१-२२) अधिकं तु—ब्रह्म, जीवापेक्षया अर्थान्तर-मेव, भेदनिर्देशात्—श्रुतिषु ब्रह्मणः पृथक्त्वस्यैव स्फुटं प्रतिपादनात्। (पृथगात्मानं प्रेरि-तारम्' इत्यादिना) ॥

161. अश्मादिवच्च तदनुपपत्तिः (२-१-२३) अश्मादिवच्च—शिलालोष्टाद्यचेतनस्येव, तदनुपपत्तिः—तस्मिन् जीवे परब्रह्मणा निरतिशयानन्देन सह ऐक्यस्य वस्तुविरोधरूपम् असाङ्गत्यम् ॥

### ४३. उपसंहारदर्शनाधिकरणम् (२-१-८) (सू. २४, २५)

162. उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि (२-१-२४) उपसंहारदर्शनात्—कार्य-जननार्थं तत्तदुपकरणसंपादनस्य कर्तृषु लोकदृष्टत्वात् , न—सृष्टेः पूर्वम् एकाकिनः उपकरणशून्यस्य ब्रह्मणः जगत्कारणत्वं न सम्भवति, इति चेत्—इत्येवमाशङ्कनम् , न—नैव सार्वत्रिकं, क्षीरवद्धि—असन्निहितोपकरणान्तरे दधिजनके क्षीरे कारणत्वमिव हि, ब्रह्मणोऽपि उपकरणान्तर-रहितस्य जगत्कारणत्वं सम्पद्यत एव ॥

163. देवादिवदपि लोके (२-१-२५) लोके—स्वे स्वे लोके, देवादिवत्—देवगन्धर्वादीनां स्वसङ्कल्पेन स्वापेक्षितार्थस्रष्टृत्वमिव, ब्रह्मणोऽपि स्वसङ्कल्पादेव सर्वस्रष्टृत्वं युक्तमेव ।।

४४. कृत्स्नप्रसक्त्यधिकरणम् (२-१-९) (सू. २६-३१)

164. कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा (२-१-२६) कृत्स्नप्रसक्तिः—(निरवयवस्य ब्रह्मणः जगत्कारणत्वाङ्गीकारे) ब्रह्मणः पूर्णस्याऽपि जगदात्मना परिणामप्रसङ्गः । (तदर्थं सावयवत्वाङ्गीकारे) निरवयवत्वशब्दकोपो वा—ब्रह्मणः निरवयवत्वप्रतिपादकानां 'निष्कलम्' इत्यादिश्रुतिवाक्यानां बाधितार्थकता वा स्यात् ।।

165. श्रुतेस्तु शब्दमूलत्वात् (२-२-२७) श्रुतेस्तु—श्रुतिबलादेव (ब्रह्मणः जगत्कारणत्वम्). शब्दमूलत्वात्—ब्रह्मणः शास्त्रैकसमधिगम्यत्वात् (श्रौतेऽर्थे प्रमाणान्तरविरोधस्य अकिञ्चित्करत्वात् ॥

166. आमनि चैवं विचित्राश्च हि (२-१-२८) आत्मनि च—चेतने जीवात्मन्यपि, एवम्—अचेतनविजातीयत्वादेव अचेतनधर्माणाम् अप्रसक्तिः, हि—यतः, विचित्राश्च—अचेतनेष्वपि मिथोविलक्षणाः शक्तयः शैत्योष्णादयः । अतः ब्रह्मणोऽपि चिदचिद्विलक्षणस्य विचित्रा शक्तिः ।।

167. स्वपक्षदोषाच्च (२-१-२९) स्वपक्षे—प्रधानादिकारणतावादिसांख्यादिपक्षेऽपि, दोषाच्च—ब्रह्मणि शङ्कितानाम् अन्येषां च दोषाणां प्रसङ्गादपि, ब्रह्मकारणतावाद एव श्रेयान् ।।

168. सर्वोपेता च तद्दर्शनात् (२-१-३०) सर्वोपेता च—(सकलेतरविजातीया च इयं परमात्मरूपा परादेवता) सर्वविधविचित्रशक्तियुक्ता च भवति, तद्दर्शनात्—'पराऽस्य शक्तिर्विविधैव' इति सर्वशक्तियोगश्रुतेः ।।

169. विकरणत्वान्नेति चेत्, तदुक्तम् (२-१-३१) विकरणत्वात्—करणानां शरीरेन्द्रियादीनां राहित्यात्, न—ब्रह्म कारणं न भवितुमर्हति, इति चेत्—एवमाक्षेपे, तदुक्तम्—अत्र यत् समाधानं वक्तव्यं तत्, पूर्वसूत्रयोः स्पष्टीकृतम् ॥

४५. प्रयोजनवत्वाधिकरणम् (२-१-१०) (सू. ३२—३६)

170. न प्रयोजनवत्त्वात् (२-१-३२) प्रयोजनवत्त्वात्—सृष्टिरूपस्य कार्यस्य सप्रयोजनत्वावश्यंभावात्, न—अवाप्तसमस्तकामं परं ब्रह्म स्रष्टृ न भवितुमर्हति ।।

171. लोकवत्तु लीलाकैवल्यम् (२-१-३३) लीलाकैवल्यम्—केवलाया एव लीलायाः सृष्टिप्रयोजनरूपता, लोकवत्तु—लोकदृष्टे राजनि (पूर्णकामेपि कन्दुकक्रीडाद्यारम्भे) इव युज्यते।

172. वैषम्य-नैर्घृण्ये न सापेक्षत्वात् तथा हि दर्शयति (२-१-३४) वैषम्यनैर्घृण्ये—(देव-मनुष्यादिरूपेण सुख-दुखादिबहुलतया च जगत् सृजतः परस्य ब्रह्मणः) सर्वेषु जीवात्मसु समताराहित्यम् (तथा) दुःखिषु दयाशून्यत्वं च प्रसज्यते इति तु आक्षेपः, न—नाऽऽपतति, सापेक्षत्वात्—सृष्टिवैषम्यस्य तत्तत्क्षेत्रज्ञानां कर्मविशेषानुबन्धित्वात्, तथा—देवादिदेहयोजनं तत्तज्जीवकर्मसापेक्षमिति, दर्शयति हि—श्रुतिरेव बोधयति खलु ॥

173. न कर्माऽविभागादिति चेन्नाऽनादित्वादुपपद्यते चाऽप्युपलभ्यते च (२-१-३५) अविभागात्—सृष्टिप्राक्काले जीवस्य ब्रह्मणा सह अविभागश्रुतेः, नकर्म—विषमसृष्टिप्रयोजकं तत्तज्जीवीयं कर्म न स्थातुमर्हति, इति चेत्—एवं शङ्कनम्, न—न सङ्गतम्, (यतः) उपपद्यते च—(वैषम्यहेतुभूतानां जीवानां तत्कर्मणां च सृष्टेः प्राक् सत्त्वेऽपि)अविभागश्रुतिः नामरूपविभागाभावमात्रादेव युक्ता भवति। अनादित्वात्—(जीवानां तत्कर्मणां च सत्ताया अपि) अनिदंप्रथमत्वात्, उपलभ्यते च—(जीवानामनादित्वमपि) 'न जायते म्रियते वा' इत्यादिभिः श्रुतिभिः ज्ञायत एव ॥

174. सर्वधर्मोपपत्तेश्च (२-१-३६) सर्वधर्मोपपत्तेश्च—सर्वजगत्स्रष्टृत्वोपयोगिनां सर्वेषामपि सर्वज्ञत्वादिधर्माणां प्रधान-परमाण्वादिषु अनुपपन्नानां, परब्रह्मणि युज्यमानत्वादपि हेतोः, परं ब्रह्मैव जगतः कारणम् ॥

॥ इति द्वितीयाध्याये प्रथमः पादः ॥



## द्वितीयः पादः ॥ [अधि. ८, सू. ४२]

### ४६. रचनानुपपत्त्यधिकरणम् (२-२-१) (सू. १-९)

175. रचनानुपपत्तेश्च नानुमानं प्रवृत्तेश्च (२-२-१) रचनानुपपत्तेश्च—(अचेतनभूतेन प्राज्ञानधिष्ठितेन प्रधानेन) जगन्निर्माणासम्भवात्, (तथा) प्रवृत्तेश्च—(चेतनाधिष्ठिते एवाऽचेतने) कार्यनिर्माणप्रवृत्तेः दर्शनाच्च, अनुमानम्—अनुमानगम्यतया सांख्योक्तं प्रधानम्, न—जगतः कारणं न भवितुमर्हति ॥

176. पयोऽम्बुवच्चेत्तत्राऽपि (२-२-२) पयोऽम्बुवत् चेत्—क्षीरनीरयोरिव चेतनानधिष्ठितस्यापि प्रधानस्य प्रवृत्तिः इत्युक्तिः, न—न सम्भवति, तत्राऽपि—क्षीरनीरयोरपि, प्रवृत्तेः—चेतनेन प्राज्ञेन अधिष्ठितयोरेव कार्यानुगुणपरिणामात्मिकायाः प्रवृत्तेः सत्त्वात् ॥

177. व्यतिरेकानवस्थितेश्चानपेक्षत्वात् (२-२-३) अनपेक्षत्वात्—(केवलस्य प्रधानस्य कारणत्वे) प्रधानस्य चेतनापेक्षत्वाभावात्, व्यतिरेकानवस्थितेश्च—सर्गव्यतिरेकेण प्रतिसर्गावस्थया प्रलयरूपया अवस्थानाभावस्य प्रसङ्गाच्च, प्रधानं न कारणम् ॥

178. अन्यत्राभावाच्च न तृणादिवत् (२-२-४) तृणादिवत्—तृणजलादीनां चेतनानधिष्ठितानामपि क्षीराद्यात्मना परिणामवदपि (प्रधानस्याऽपि चेतनानधिष्ठितस्य जगद्रूपपरिणामः सम्भवति, इति तु) न—न समञ्जसम्, अन्यत्र—धेनुव्यतिरिक्ते अडुहादौ, अभावात्—तृणजलादेः क्षीराद्यात्मना परिणामाभावात् ॥

179. पुरुषाश्मवदिति चेत्, तथाऽपि (२-२-५) पुरुषवत्—गमनशक्तिविकले दर्शन शक्तियुक्ते पुरुषे स्वसन्निधिमात्रेण अन्धपुरुषस्य गमनप्रवृत्तिजनकत्ववत्, (तथा) अश्मवत्—अयस्कान्तोपले संनिहितमात्रे अयःप्रवृत्तिजनकत्ववच्च, प्रधानस्याऽपि प्रवृत्तिजनकत्वं पुरुषे, इति चेत्—एवंचिन्तनमपि, न—न युक्तिमत्, तथाऽपि—पुरुषायस्कान्तसादृश्येनाऽपि (प्रधाने प्रवृत्त्ययोगात् ॥)

180. अङ्गित्वानुपपत्तेश्च (२-२-६) अङ्गित्वस्य—उत्कर्षनिबन्धनस्य अङ्गप्रतिसम्बन्धित्वस्य, उपकार्यत्वस्य, अनुपपत्तेश्च—प्रलयकालिकसाम्यावस्थावति एकस्मिन्नेव प्रधाने, अनुपपत्तेश्च—कारणासंनिधानदशायाम् असम्भवादपि हेतोः, (प्रधानस्य जगत्कारणता न युज्यते) ॥

181. अन्यथाऽनुमितौ च ज्ञशक्तिवियोगात् (२-२-७) अन्यथा—दूषितप्रकाराद्भिन्नं प्रकारमनुरुध्य, अनुमितौ च—प्रधानानुमानेऽपि, ज्ञशक्तिवियोगात्—प्रधाने ज्ञातृत्वशक्तेः असम्भवात्, प्रधानस्य स्वतन्त्रजगत्कारणता नैव सम्भवति ॥

182. अभ्युपगमेऽप्यर्थाभावात् (२-२-८) अभ्युगमेऽपि—प्रधानाख्यवस्तुनः अङ्गीकारेऽपि, अर्थाभावात्—निर्विकारे पुरुषे भोग-मोक्षरूपयोः प्रयोजनयोः उपपादयितुमशक्यत्वात्, (प्रधानस्याऽनुमानगम्यता न समस्ति) ॥

183. विप्रतिषेधाच्चाऽसमञ्जसम् (२-२-९) विप्रतिषेधाच्च—परस्परविरुद्धभाषणादपि, असमञ्जसम्—सांख्यमतं न समीचीनम् ॥

## ४७. महद्दीर्घाधिकरणम् (२-२-२) (सू. १०-१६)

184. **महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम् (२-२-१०) ह्रस्वपरिमण्डलाभ्याम्**— द्व्यणुकपरमाणुभ्याम् हेतुभूताभ्याम्, **महद्दीर्घवत्**—त्र्यणुकद्व्यणुकयोः उत्पत्तिवत्, **वा**— अन्यच्च वैशेषिकाङ्गीकृतं प्रमेयम्, **असमञ्जसम्**—युक्तिहीनमेव ॥

185. **उभयथाऽपि न कर्माऽतस्तदभावः (२-२-१२) उभयथाऽपि**—(अणुषु क्रियोत्पादकत्वेनाऽभ्युपगतस्य अदृष्टस्य) अणुगतत्वे जीवगतत्वे वा, **कर्म**—कादाचित्कतया परिदृश्यमानम् अणुगतं स्पन्दात्मकं कर्म, **न**—अदृष्टकारितं न भवितुमर्हतीति, **अतः**—परमाणुगतस्य वा, आत्मगतस्य वा अदृष्टस्य क्रियाहेतुत्वायोगात्, **तदभावः**—जगदुत्पत्तेः अणुगतकर्मपूर्वकत्वाभावः ॥

186. **समवायाभ्युपगमाच्च साम्यादनवस्थितेः (२-२-१२) समवायाभ्युपगमाच्च**— (जातिगुणादिविशिष्टप्रतीतिनिर्वाहकत्वेन) समवायाख्यसम्बन्धस्याऽङ्गीकृतत्वादपि, **असमञ्जसम्**— वैशेषिकमतं निर्युक्तिकमेव। **साम्यात्**—(पटः समवेतः इति विशिष्टप्रतीतिनिर्वाहकतया) समवायनिरूपितस्यान्यस्यापि समवायस्य अभ्युपगमनीयत्वसाम्यात्, **अनवस्थितेः**—(तथा सम्बन्धान्तराभ्युपगमे) अनवस्थाप्रसङ्गात् ॥

187. **नित्यमेव च भावात् (२-२-१३) नित्यमेव भावात् च**—(नित्यसम्बन्धाख्यसमवायस्य) सर्वदैव सत्वादपि, (अनायत्या सम्बन्धिनोरपि नित्यतायाः प्रसङ्गादपि, परमाणुकारणतावर्णनम्) **असमञ्जसम्**—युक्तिहीनमेव ॥

188. **रूपादिमत्त्वाच्च विपर्ययो दर्शनात् (२-२-१४) रूपादिमत्त्वाच्च**—(परमाणूनां) रूपरसादिमत्त्वाङ्गीकारात्, **विपर्ययश्च**—तेषां नित्यत्वविपरीतमनित्यत्वं, निरवयवत्वविपरीतं सावयवत्वं च प्रसज्येत, **दर्शनात्**—रूपादिमत्सु घटादिषु अनित्यत्व-सावयवत्वयोः उपलब्धत्वात् ॥

189. **उभयथा च दोषात् (२-२-१५) उभयथा च**—परमाणूनां रूपादिराहित्ये, साहित्ये च, **दोषात्**—कार्यगुणानां कारणगुणपूर्वकत्वाभावस्य अनित्यत्वस्य च दोषस्य अनिरासात्, (परमाणुकारणतावर्णनम् असमञ्जसमेव) ॥

190. **अपरिग्रहाच्चात्यन्तमनपेक्षा (२-२-१६) अत्यन्तमपरिग्रहाच्च**—(वैशेषिकमतस्य कस्मिन्नप्यंशे शिष्टैर्वैदिकैः) अस्वीकृतत्वादपि, **अत्यन्तमनपेक्षा**—(निःश्रेयसार्थिभिः) सर्वप्रकारेण अपेक्षणीयत्वाभावः, उपेक्षणीयतैव ॥

## ४८. समुदायाधिकरणम् (२-२-३) (सू. १७-२६)

191. **समुदाय उभयहेतुकेऽपि तदप्राप्तिः** (२-२-१७) **उभयहेतुकेऽपि**— परमाणुहेतुकत्वाभिमते, तथा पृथिव्यादिहेतुकत्वाऽभिमतेऽपि च, **समुदाये**—पृथिव्यादिभूतसमुदाये, तथा शरीरेन्द्रियादिसमुदाये च, **तदप्राप्तिः**—समुदायत्वासिद्धिः ; (सर्वेषां क्षणिकत्वाभ्युपगमात्) ।।

192. **इतरेतरप्रत्ययत्वादुपपन्नमिति चेन्न, संघातभावानिमित्तत्वात्** (२-२-१८) **इतरेतरप्रत्ययत्वात्**—अविद्यायाः रागद्वेषादेश्च परस्परं कार्यकारणभावात्, **उपपन्नम्**—लोकव्यवहारादिकं सर्वमबाधितं सम्पन्नम्, **इति चेत्**—इत्याशङ्कनं तु, **न**—न घटते, **सङ्घातभावानिमित्तत्वात्**—(विपरीतबुद्ध्यात्मिकायाः अविद्यायाः) पृथिव्यादीनां समुदायत्वं प्रति कारणत्वासम्भवात्, समुदायत्वस्याऽसिद्धिरेव ।।

193. **उत्तरोत्पादे च पूर्वनिरोधात्** (२-२-१९) **उत्तरोत्पादे च**—उत्तरस्य घटक्षणस्य उत्पत्तिकाले च, **पूर्वनिरोधात्**—पूर्वस्य क्षणस्य विनष्टत्वादपि हेतोः (कार्यकारणभावव्यवस्थाभावेन, बौद्धमतमसमञ्जसम्) ॥

194. **असति प्रतिज्ञोपरोधो यौगपद्यमन्यथा** (२-२-२०) **असति**—अविद्यमानेऽपि कारणे (कार्यस्योत्पत्तौ अभ्युपगम्यमाने), **प्रतिज्ञोपरोधः**—('अधिपत्यादयः चित्त-चैत्तोत्पत्तिहेतवः' इत्येवंरूपायाः) सौगतानां प्रतिज्ञायाः विरोधप्रसङ्गः, **अन्यथा**—(एतद्दोषपरिजिहीर्षया) कारणे कार्यक्षणवृत्तित्वस्याऽप्यभ्युपगमे, **यौगपद्यम्**—क्षणद्वयस्य एककालिकत्वप्रसङ्गः ।

195. **प्रतिसंख्याप्रतिसंख्यानिरोधाप्राप्तिरविच्छेदात्**— (२-२-२१) **प्रतिसंख्यानिरोधस्य**—विषयासत्वग्राहिलौकिकबुद्धिगोचरस्य स्थूलस्य वस्तुविनाशस्य, **अप्रतिसङ्ख्यानिरोधस्य**—केवलं युक्त्या साध्यमानस्य सूक्ष्मस्य वस्तुविनाशस्य च, **अप्राप्तिः**—असम्भव एव; **अविच्छेदात्**—वस्तूनां निरन्वयविनाशसाधकस्य स्वरूपविच्छेदस्य अनुपलम्भात् ।।

196. **उभयथा च दोषात्** (२-२-२२) **उभयथा च**—निरुपाख्यादुत्पत्तेः स्वीकारे, (तथा) उत्पन्नस्य निरुपाख्यत्वप्राप्तेः स्वीकारे च, **दोषात्**—तुच्छादुत्पत्त्यसम्भवरूपस्य दोषस्य, तथा, तुच्छादुत्पत्तेरभ्युपगमे, सर्वदा सर्वत्र सर्वस्योत्पत्तिप्रसङ्गाख्यस्य च दोषस्य प्रसक्त्या, (सौगतानां मतम् असमञ्जसम्) ॥

197. **आकाशे चाऽविशेषात्** (२-२-२३) **आकाशे च**—आकाशविषयेऽपि शून्यत्वाङ्गीकारः युक्तिरहितः, **अविशेषात्**—घट-भूतलादौ 'भूतले घटः', इत्यादिप्रतीतिविषयत्वमिव 'आकाशे खगः पतति' इति प्रतीतिविषयतांशे वैलक्षण्याभावात् ।

198. **अनुस्मृतेश्च** (२-२-२४) **अनुस्मृतेश्च** — 'तदेवेदम्' इति प्रत्यभिज्ञाबलादपि, (क्षणिकत्वविरोधिनः स्थिरत्वस्य सिद्ध्या) क्षणिकत्वं सौगतसम्मतम् असमञ्जसमेव ॥

199. **नाऽसतोऽदृष्टत्वात्**— (२-२-२५) **असतः**—निरन्वयविनष्टस्य धर्मिणः (धर्मस्य अन्यत्र सङ्क्रमः,) **न**—सर्वथा असम्भावितः, **अदृष्टत्वात्**—तस्य कुत्राऽपि अनुपलब्धत्वात् ॥

200. **उदासीनानामपि चैवं सिद्धिः** (२-२-२६) **एवम्**—सर्वेषामपि भावानां क्षणिकत्वाभ्युपगमे सति, **उदासीनानामपि च**—निष्प्रयत्नानामपि च पुरुषाणाम्, **सिद्धिः**—ऐहिकामुष्मिकसर्वार्थनिष्पत्तिः स्यात्, (अतः सौत्रान्तिक-वैभाषिकयोः उभयोरपि मतम् असमञ्जसमेव) ॥

४९. उपलब्ध्यधिकरणम् (२-२-४) (सू. २७-२९)

201. **नाभाव उपलब्धेः** (२-२-२७) **अभावः**—ज्ञानेतरस्य बाह्यार्थस्य असत्त्वम्, **न**—अभ्युपगन्तुं न शक्यते, **उपलब्धेः**—ज्ञानविषयीभूतस्य घटाद्यर्थस्य प्रत्यक्षदृष्टत्वेन अनपलपनीयत्वात् ॥

202. **वैधर्म्याच्च न स्वप्नादिवत्** (२-२-२८) **स्वप्नादिवत्**—स्वाप्नज्ञानानामिव, **न**—(जागरितज्ञानानामपि मिथ्याभूतार्थविषयकत्वम्) न सम्भवति, **वैधर्म्याच्च**—(कारणदोषबाधकप्रत्ययराहित्याभ्यां स्वाप्नजागरितज्ञानयोः) वैषम्यादपि, (अतः जागरितज्ञानानि यथार्थविषयाण्येव) ॥

203. **न भावोऽनुपलब्धेः** (२-२-२९) **भावः**—(अर्थशून्यस्य केवलस्यैव ज्ञानस्य) सत्त्वम्, **न**—नैव सम्भवति, **अनुपलब्धेः**—(अकर्तृकस्याकर्मकस्य च ज्ञानस्य सत्तायाः) अननुभवात् ॥

५०. सर्वथाऽनुपपत्त्यधिकरणम् (२-२-५)

204. **सर्वथाऽनुपपत्तेश्च** (२-२-३०) **सर्वथा**—सर्वेणाऽपि प्रकारेण, **अनुपपत्तेश्च**—सर्वशून्यत्वस्य असङ्गतत्वादपि हेतोः, (बौद्धानां मतम् असमञ्जसमेव) ॥

५१. एकस्मिन्नसम्भवाधिकरणम् (२-२-६) (सू. ३१-३४)

205. **नैकस्मिन्नसम्भवात्** (२-२-३१) **एकस्मिन्**—अभिन्ने धर्मिणि, **असम्भवात्**—युगपत् विरुद्धधर्मसमावेशस्य अयोगात्, **न**—(एकस्मिन् विरुद्धधर्मसम्भवप्रतिपादकं) जैनमतं न युक्तम् ॥

206. एवं चाऽऽत्माकात्स्न्र्यम् (२-२-३२) एवम्—एकस्मिन् विरुद्धधर्माभ्युपगम इव, आत्माकात्स्न्र्यं च—जीवात्मनः अपरिपूर्णत्वमपि (सर्वस्मिन् देहे जीवस्य तत्तद्देहसमपरिमाणत्वं जैनसम्मतम्) न—न युक्तम् ॥

207. न च पर्यायादप्यविरोधो विकारादिभ्यः (२-२-३३) पर्यायादपि—आत्मनि कालभेदेन सङ्कोच-विकासात्मकपरिमाणवैविध्याङ्गीकरणादपि, अविरोधः—परिमाणद्वयस्य असामानाधिकरण्याभावः, न च—नैव संपादयितुं शक्यः, विकारादिभ्यः—स्वरूप-परिणामात्मकविकारस्य तत्प्रयुक्तानां दोषाणां च अपरिहारात् ॥

208. अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषः (२-२-३४) उभयनित्यत्वाच्च—मोक्षा-वस्थस्य जीवीयपरिमाणस्य अविनाशेन स्थितेःसत्त्वात्, उभयनित्यत्वाच्च—जीव-तत्परिमाणो-भयस्याऽपि अविनाशित्वादेव, अविशेषः—मोक्ष-तत्पूर्वावस्थयोः परिमाणवैलक्षण्यासिद्धिः (इति आर्हतं मतमयुक्तमेव) ॥

## ५२. पशुपत्यधिकरणम् (२-२-७) (सू. ३५-३८)

209. पत्युरसामञ्जस्यात् (२-२-३५) पत्युः—पशुपतेः मतम्, (अनादरणीयम्) असामञ्जस्यात्—वेदविरुद्धतत्वाचारावबोधित्वेन असमीचीनत्वात् ॥

210. अधिष्ठानानुपपत्तेश्च (२-२-३६) अधिष्ठानस्य—उपादानकारणं प्रधानमधिष्ठायाऽव-स्थानस्य, अनुपपत्तेश्च—अशरीरे ईश्वरे अयोगादपि, (पशुपतेर्मतम् असमञ्जसम्) ॥

211. करणवच्चेन्न भोगादिभ्यः (२-२-३७) करणवत् चेत्—अशरीरस्य क्षेत्रज्ञस्य स्वीयकरणकलेबराद्यधिष्ठातृत्वमिव, अशरीरस्य पशुपतेरपि प्रकृत्यधिष्ठानं युज्यते, इति समाधानं तु) न—सङ्गतं न भवति। भोगादिभ्यः—(तथा सति जीवे पुण्य-पापफलभूतसुख-दुःखोपभोग इव) पशुपतावपि भोगादिप्रसक्तेः ॥

212. अन्तवत्त्वमसर्वज्ञता वा (२-२-३८) अन्तवत्त्वम्—(पशुपतेरपि पुण्यापुण्ययोः अभ्यु-पगमे, तस्याऽपि) सृष्टिसंहारास्पदत्वम्, असर्वज्ञता वा—सर्वज्ञतायाः अभावश्च प्रसज्येयाताम् (इति पशुपतेर्मतम् असमञ्जसमेव) ॥

## ५३. उत्पत्त्यसम्भवाधिकरणम् (२-२-८) (सू. ३९-४६)

213. उत्पत्त्यसम्भवात् (२-२-३९) उत्पत्तेः-पाञ्चरात्रागमोक्तायाः जीवोत्पत्तेः, असम्भवात्—(उत्पत्तिविनाशरहिततया श्रुतिसिद्धे जीवे) अयोगात्, (जीवोत्पत्तिप्रतिपादकं पाञ्चरात्रम् अप्रमाणम्)।

214. न च कर्तुः करणम् (२-२-४०) करणम्—ज्ञानादिकरणीभूतं मनः, कर्तुः—कर्तृभूतजीवसकाशात्, न च—नैव उत्तुमर्हतीति, (जीवात् मनस उत्पत्तिप्रतिपादकं पाञ्चरात्रम् अप्रमाणम्) ॥

215. विज्ञानादिभावे वा तदप्रतिषेधः (२-२-४१) विज्ञानादिभावे—सङ्कर्षणादीनां शुद्धज्ञानात्मकपरब्रह्मस्वरूपत्वे एव सिद्धे सति, तदप्रतिषेधः—(स्वेच्छावतारात्मकब्रह्मोत्पत्तिप्रतिपादकस्य) पाञ्चरात्रस्य प्रामाण्यप्रतिषेधः नैव सिध्यति ॥

216. विप्रतिषेधाच्च (२-२-४२) विप्रतिषेधाच्च—(अस्मिन्नपि पाञ्चरात्रे) जीवोत्पत्तेः विशेषेण निषिद्धत्वादपि, (न श्रुतिविरुद्धार्थप्रतिपादनमिति, पाञ्चरात्रप्रामाण्यस्य न प्रतिषेधः) ॥

॥ इति द्वितीयाध्याये द्वितीयः पादः ॥



॥ तृतीयः पादः ॥ [अधि ७, सू. ५२]

५४. वियदधिकरणम् (२-३-१) (सू. १-९)

217. न वियदश्रुतेः (२-३-१) वियत्—आकाशः, न—न जायते, अश्रुतेः—आकाशोत्पत्तिप्रतिपादकश्रुत्यभावात् ।

218. अस्ति तु (२-३-२) अस्ति तु—आकाशोत्पत्तिप्रतिपादिका 'आत्मन आकाशस्सम्भूतः' इति श्रुतिः अस्त्येव ।

219. गौण्यसम्भवाच्छब्दाच्च (२-३-३) गौणी—'आत्मन आकाशः' इति आकाशोत्पत्तिश्रुतिः न मुख्यार्था, किन्तु औपचारिकी ; असम्भवात्—(परमात्मना तेजःसृष्टेरेव प्रथमम् उक्तत्वेन) आकाशसृष्टेः अयोगात्, शब्दाच्च—'वायुश्चान्तरिक्षं चैतदमृतम्' इति 'अमृत' शब्देन अन्तरिक्षस्य उत्पत्तिराहित्यप्रतिपादनादपि हेतोः ।

220. स्याच्चैकस्य ब्रह्मशब्दवत् (२-३-४) एकस्य—'आत्मन आकाशः सम्भूतः' इति श्रुतौ सकृदेव प्रयुक्तस्यापि 'सम्भूत, शब्दस्य' ब्रह्मशब्दवत्—एकस्मिन्नेव प्रकरणे प्रयुक्तब्रह्मशब्दे इव, स्याच्च—गौणार्थत्वं मुख्यार्थत्वं च सम्भवेदेव ।

221. प्रतिज्ञाहानिरव्यतिरेकात् (२-३-५) प्रतिज्ञायाः—'येनाऽश्रुतम्' इति ब्रह्मविज्ञानेन सर्वविज्ञानप्रतिज्ञायाः, अहानिः—भङ्गाभावः, अव्यतिरेकात्—ब्रह्मकार्यतानिबन्धनात् ब्रह्मानन्यत्वादेव सिद्ध्यतीति, (आकाशस्य ब्रह्मकार्यत्वमेव) ॥

222. शब्देभ्यः (२-३-६) शब्देभ्यः—सृष्टेः पूर्वं ब्रह्मण एकस्यैव सत्वप्रतिपादकेभ्यः श्रुतिवाक्येभ्यः, (आकाशस्य कार्यता निश्चीयते) ॥

223. यावद्विकारं तु विभागो लोकवत् [२-३-७] यावद्विकारम्—विकारभूतानां यावतामप्यर्थानाम्, विभागस्तु—ब्रह्मणः सकाशादेव उत्पत्तिरित्येतत्, लोकवत्—लौकिकेषु व्यवहारेषु वाचा अनुक्तस्यापि यस्यकस्यचिदंशस्य अर्थातिसिद्धिरिव, अर्थादेव सिध्यति ॥

224. एतेन मातरिश्वा व्याख्यातः (२-३-८) एतेन—आकाशोत्पत्तिसाधकन्यायेनैव, मातरिश्वा—वायुरपि, व्याख्यातः—उत्पत्त्याश्रयतया प्रतिपादितो भवति ॥

225. असम्भवस्तु सतोऽनुपपत्तेः (२-३-९) असम्भवः—उत्पत्तेः असम्भवः, सतस्तु—सच्छब्दवाच्यस्य ब्रह्मण एव, अनुपपत्तेः—एकविज्ञानेन ब्रह्मातिरिक्तसर्वविज्ञानप्रतिज्ञानान्यथानुपपत्त्यैव सिध्यति ॥

### ५५. तेजोऽधिकरणम् (२-३-२) (सू. १०-१७)

226. तेजोऽतस्तथा ह्याह (२-३-१०) तेजः—अग्निः, अतः—केवलात् वायोरेव उत्पद्यते, तथा हि—'अग्नेः वायोः सकाशादुत्पत्तिः' इत्येव हि, आह—'वायोरग्निः' इति श्रुतिः स्पष्टयति ॥

227. आपः (२-३-११) अतः—तेजस एव केवलात्, आपः—जलम् उत्पद्यते, तथा हि—'तेजसः सकाशात् जलस्योत्पत्तिः' इत्येव हि, आह—'अग्नेरापः' इति श्रुतिर्वदति॥

228. पृथिवी (२-३-१२) पृथिवी—पृथिवीतत्वमपि, अतः—केवलात् जलादेव उत्पद्यते, तथा हि—पृथिव्याः जलादुत्पत्तिमेव हि, आह—'अद्भ्यः पृथिवी' इति श्रुतिर्वर्णयति ॥

229. अधिकार-रूप-शब्दान्तरेभ्यः (२-३-१३) अधिकारात्—महाभूतसृष्टिप्रस्तावात्, रूपात्—महाभूतान्तर्गतपृथिवीगतस्य कृष्णरूपस्य सङ्कीर्तनात्, शब्दान्तरात्—समानप्रकरणे 'अद्भ्यः पृथिवी' इति, अन्नशब्दस्थाने 'पृथिवी'शब्दस्य श्रुतौ निर्देशाच्च ज्ञापकात्, ('ता अन्नमसृजन्त' इत्यादौ अन्नशब्दार्थः पृथिव्येव) ॥

230. तदभिध्यानादेव तु तल्लिङ्गात्सः (२-३-१४) तल्लिङ्गात्—असाधारणतया परमात्मत्वज्ञापकात्, तदभिध्यानात्—'बहु स्याम्' इत्येवंरूपसृष्टिविषयकसङ्कल्पात्मकाद्धर्मात्,

स एव—तेज आदिशरीरकः परमात्मैव तत्तदनन्तरभूतानां कारणभूतः ; ('नतु केवलानि तानि भूतानि, इति निश्चीयते) ॥

231. विपर्ययेण तु क्रमोऽत उपपद्यते च (२-३-१५) अतस्तु—तत्तद्भूतद्वारा परमात्मन एव उपादानत्वादेव, विपर्ययेण क्रमश्च—'एतस्माज्जायते प्राणः' इत्यादिश्रुत्युक्तः विपरीतः क्रमोऽपि, उपपद्यते—सङ्गतो भवति ॥

232. अन्तरा विज्ञान-मनसी क्रमेण तल्लिङ्गादिति चेन्नाऽविशेषात्(२-३-१६) अन्तरा—भूत-प्राणयोर्मध्ये, विज्ञान-मनसी—इन्द्रियाणि मनश्च, क्रमेण—पारम्पर्यकृतेन पौर्वापर्येण उत्पद्येते ; न तु ब्रह्मणः अव्यवधानेन (इत्येतत्प्रतिपादकम् 'एतस्माज्जायते प्राणः' इत्यादि वाक्यम्) तल्लिङ्गात्—(श्रुत्यन्तरावगतक्रमयुक्तखा(आकाशा) दिसहपाठरूपात्) भूतसृष्टि-क्रमप्रत्यभिज्ञापकात् 'खं वायुः' इत्यादेः, इति चेत्—इति कथनं तु, न—न युक्तिमत् ! अविशेषात्—प्राण-मनआदिषु ब्रह्माव्यवहितोत्पत्तेः प्रतिपादनस्य समत्वेन तत्परित्यागा-नौचित्यात् ॥

233. चराचरव्यपाश्रयस्तु स्यात् तद्व्यपदेशोऽभाक्तः तद्भावभावित्वात् (२-३-१७) चराचरव्यपाश्रयः—जङ्गमस्थावरात्मकवस्त्वभिधेयकः, तद्व्यपदेशः—ब्रह्मपर्यन्ताभिधायि-तत्तच्छब्दनिर्देशः, अभाक्तः स्यात्—ब्रह्मणि अनौपचारिकः मुख्यो भवेदेव, तद्भावभावित्वात्—चराचरेषु अन्तर्यामितया परमात्मनः प्रवेशानन्तरभावित्वात् ॥

### ५६. आत्माधिकरणम् (२-३-३)

234. नाऽऽत्मा श्रुतेर्नित्यत्वाच्च ताभ्यः (२-३-१८) आत्मा—जीवः, न—न जन्यते, श्रुतेः—'न जायते' इति श्रुत्या जन्माभावप्रतिपादनात्, (तथा) ताभ्यः—'अजो नित्यः' इत्यादिश्रुतिभ्यः, नित्यत्वाच्च—नित्यत्वस्य स्पष्टमवगमादपि ॥

### ५७. ज्ञाधिकरणम् (२-३-४) (सू. १९-३२)

235. ज्ञोऽत एव (२-३-१९) आत्मा—जीवः, ज्ञः—जाग्रत्-स्वप्न-सुषुप्ति-मूर्छासु मोक्षेऽपि च अव्यभिचरितज्ञानधर्मक एव, अत एव—'जानात्येवाऽयं पुरुषः' इत्यादिश्रुतेरेव आत्मनो ज्ञातृत्वे प्रमाणत्वादेव ॥

236. उत्क्रान्तिगत्यागतीनाम् (२-३-२०) आत्मा—जीवः, अणुः—अणुपरिमाण एव, उत्क्रान्ति(श्रुतेः)—'एष आत्मा निष्क्रामति' इति देहादुत्क्रमणश्रवणात्, गति (श्रुतेः)—

'येवै....सर्वे गच्छन्ति' इति गमनश्रुतेः, आगति (श्रुतेः)—'तस्माल्लोकात् पुनरेति' इति आगमनस्याऽपि श्रुतिप्रतिपन्नत्वाच्च ।।

237. स्वात्मना चोत्तरयोः (२-३-२१) उत्तरयोः—उत्क्रान्तेरनन्तरं श्रुतयोः गत्यागत्योः, स्वात्मना च—स्वात्मस्वरूपेणैव, निर्वाह्यत्वात्, (गमनागमनाश्रयीभूतः जीवः अणुरेव ; न विभुः) ।।

238. नाऽणुरतच्छ्रुतेरिति चेन्नेतराधिकारात् (२-३-२२) आत्मा—जीवः, अणुः न—अणुपरिमाणवान् न भवितुमर्हति, अतच्छ्रुतेः—अणुत्वविरुद्धस्य महत्त्वस्य 'महानज आत्मा' इत्यादिषु श्रवणात्, इति चेत्—एवं कथनं तु, न—न युक्तिमत्, इतराधिकारात्—जीवादितरं परमात्मानं प्रस्तुत्य विभुत्वस्योक्तेः ।।

239. स्वशब्दोन्मानाभ्यां च (२-३-२३) आत्मा—जीवः, अणुः—अणुपरिमाण एव, स्वशब्दोन्मानाभ्यां च—साक्षात् अणुपरिमाणवाचकेन 'अणु' शब्देन 'एषोऽणुरात्मा' इति, तथा आराग्ररूपम् अणुभूतं वस्तु पृथङ्निर्दिश्य, तत्समानपरिमाणतायाः 'आराग्रमात्रोह्यवरः' इति च स्फुटीकरणाच्च ।।

240. अविरोधश्चन्दनवत् (२-३-२४) चन्दनवत्—देहैकदेशस्थस्य चन्दनस्य यथा सर्वाङ्गीणाह्लादजनकत्वं तथा, अविरोधः—अणुत्वेन देहैकदेशस्थस्याऽप्यात्मनः स्वीयधर्मभूत-ज्ञानतः सर्वाङ्गीणसुखाद्यनुभवितृत्वे विरोधाभावः (चिन्तनीयः) ।।

241. अवस्थितिवैशेष्यादिति चेन्नाऽभ्युपगमाद्धृदि हि (२-३-२५) अवस्थिति-वैशेष्यात्—आत्मनः अवस्थितेः, चन्दनादेः देहैकदेशावस्थितेश्च वैलक्षण्यसत्त्वात् (आत्मनि चन्दनसाम्यं न युज्यते,) इति चेत्—एवं चिन्तनं तु, न—न सङ्गतम्, अभ्युपगमात्—आत्मनः देहैकदेशावस्थानस्य अङ्गीकृतत्वात्, हृदि हि—हृदयदेशे हि जीवः अवस्थित इति 'हृद्यन्त-र्ज्योतिः' इति श्रुतौ स्पष्टम् ।।

242. गुणाद्वाऽऽलोकवत् (२-३-२६) आलोकवत्—अनेकदेशव्यापिनी द्युमणि-मण्यादीनां प्रभेव, गुणाद्वा—स्वधर्मभूतेन सर्वदेहव्यापिना ज्ञानेनैव (द्वारभूतेन), (आत्मा देहैकदेशस्थोऽपि सर्वदेहसम्बद्धो भवति) ।।

243. व्यतिरेको गन्धवत्तथा च दर्शयति (२-३-२७) व्यतिरेकः—आत्मधर्मस्य ज्ञानस्य स्वरूपे आत्मनः सकाशात् भेदः, गन्धवत्—पृथिवीगुणभूतस्य गन्धस्य पृथवीतो भेद इव

स्वीकरणीयः, तथा च—आश्रयाश्रयिभावनिबन्धनं स्वरूपभेदमेव, दर्शयति—'जानात्येवाऽयं पुरुषः' इत्यादिरूपश्रुतिः स्पष्टं प्रतिपादयति ।।

244. पृथगुपदेशात् (२-३-२८) पृथक्—आत्मानं तदाश्रितं ज्ञानं च तत्तद्वाचकैः शब्दैः प्रत्येकं निर्दिश्य, उपदेशात्—'विज्ञातुः विज्ञातेः' इति श्रुतौ उपदेशनात्, (ज्ञातृ-ज्ञानयोः भेदः नियतः) ।।

245. तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत् (२-३-२९) तद्गुणसारत्वात्तु—जीवात्मनः प्रधानभूतज्ञानाख्यगुणवत्त्वादेव, तद्व्यापदेशः—'विज्ञानम्' इति पदेन जीवस्य शास्त्रेषु व्यवहारः युज्यते ; (न तु ज्ञातृ-ज्ञानयोः अभेदात्), प्राज्ञवत्—प्राज्ञे परमात्मनि आनन्दात्मक-गुणप्राधान्यात् 'आनन्दः' इति, ज्ञानगुणप्राधान्यात् 'सत्यं ज्ञानम्' इति च व्यवहार इव ।।

246. यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात् (२-३-३०) यावदात्मभावित्वाच्च—ज्ञानात्मकस्य धर्मस्य, आत्मनः सत्तामव्यभिचर्य विद्यमानत्वात् (तथा) स्वप्रकाशत्वादपि च आत्मनः, न दोषः—धर्मिणो जीवस्य धर्मवाचकेन ज्ञानशब्देन व्यपदेशकृतदोषस्याभावः, तद्दर्शनात्—खण्ड-मुण्डादिव्यक्तीः अव्यभिचर्य वर्तमानगोत्वादिधर्माश्रयेषु खण्डादिधर्मिषु गवादिशब्दव्यपदेशस्य लोके दृष्टत्वात् ।।

247. पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगात् (२-३-३१) सतः—आत्मनि जाग्रदाद्यासु सर्वास्वप्यवस्थासु अव्यभिचारेण विद्यमानस्य, अस्य—ज्ञानात्मकस्य धर्मस्य, पुंस्त्वादिवत्तु—सप्तधातुमये शरीरे जन्मत एव वर्तमानस्याऽपि सप्तमधातोः युवत्वे एव अभिव्यक्तिरिव, अभिव्यक्तियोगात्—इन्द्रियसंप्रयोगकाले प्रकटावस्थतामात्रस्य युज्यमानत्वात् (आत्मनः न ज्ञानं आगन्तुको धर्मः) ।।

248. नित्योपलब्ध्यनुपलब्धिप्रसङ्गोऽन्यतरनियमो वाऽन्यथा (२-३-३२) अन्यथा—उक्तवैपरीत्येन आत्मनः ज्ञानमात्रतायाः, सर्वत्र विद्यमानतायाश्च अङ्गीकारे, नित्योपलब्ध्यनुप-लब्धिप्रसङ्गः—उपलब्ध्यनुपलब्धी नित्यम्, सहैव प्रसज्येयाताम्, अन्यतरनियमो वा—अथवा आत्मनः नियमेन उपलब्धिरेव वा, नियमेव अनुपलब्धिरेव वा प्रसज्येयाताम् ।।

## ५८. कर्त्रधिकरणम् (२-३-५) (सू. ३३-३९)

249. कर्ता शास्त्रार्थवत्त्वात् (२-२-३३) कर्ता—आत्मा कर्तृत्ववानपि, (न सांख्यमते इव कर्तृत्वशून्यः, इत्यभ्युपगमनीयम्), शास्त्रार्थवत्वात्—यागोपासनादित्रैवर्गिकापवर्गिक-क्रियाविधायिनां शास्त्राणां सप्रयोजनत्वस्य अवश्यं वक्तव्यत्वात् ।।

250. उपादानाद्विहारोपदेशाच्च (२-३-३४) कर्ता—आत्मा कर्तृत्ववानेव, उपादानात्—श्रुतौ आत्मनः इन्द्रियपरिगृहीतृत्वोपदेशात् ज्ञापकात् (तथा) विहारोपदेशाच्च—शरीरे सञ्चरण-कर्तृत्वस्य च श्रुतौ उपदेशाच्च ज्ञापकात् ॥

251. व्यपदेशाच्च क्रियायां न चेन्निर्देशविपर्ययः (२-३-३५) क्रियायां व्यपदेशाच्च—जीवात्मनि यज्ञक्रियां प्रति कर्तृत्वस्य 'विज्ञानं यज्ञं तनुते' इति श्रुतौ स्पष्टं व्यवहृतत्वादपि ज्ञापकात्, आत्मा—जीवः, कर्ता—कर्तृत्ववानेव। न चेत्—'विज्ञान'पदेन अन्तःकरणरूपा बुद्धिरेवोक्ता, नाऽऽत्मा इति कथने तु, निर्देशविपर्ययः—'विज्ञान'पदे प्रथमान्तत्ववैपरीत्येन तृतीयान्तनिर्देशः श्रुतौ अभविष्यत्, इत्येतदुत्तरं चिन्तनीयम् ॥

252. उपलब्धिवदनियमः (२-३-३६)—(आत्मनः कर्तृतामनभ्युमगम्य, प्रधाने एव सर्वान् प्रति साधारणे कर्तृता चेत् निक्षिप्येत तदा) उपलब्धिवत्—आत्मनः सर्वगतत्वाभ्युपगमे, आत्मन उपलम्भस्येव, अनियमः—कर्मफलभूतस्य सुखादेः अयमेव भोक्ता; नेतरः—इति नियमस्याभावप्रसङ्गः ॥

253. शक्तिविपर्ययात् (२-३-३७)—(बुद्धेरेव कर्तृत्वस्याऽभ्युपगमे) शक्तिविपर्ययात्—आत्मनो भोक्तृत्वशक्तेः हानिप्रसङ्गात् (कर्तृत्व-भोक्तृत्वयोः वैयधिकरण्यायोगात्) आत्मा—जीवः, कर्ता—कर्तृत्वाश्रयः ॥

254. समाध्यभावाच्च (२-३-३८)—(बुद्धेरेव कर्तृत्वाभ्युपगमे), समाधेः—मोक्षसाधनतया सांख्याभिमतस्य 'प्रकृतेरन्योऽहमस्मि' इत्येवमाकारस्य प्रकृतिविविक्तात्मज्ञानस्य, अभावाच्च—आश्रयानुपपत्तिप्रसङ्गादपि (तद्दशानुसन्धानकर्तृत्वमपि नाऽऽत्मनिष्ठमिति, प्रकृतौ स्वान्यत्वस्य बाधात्) आत्मा—जीवः, कर्ता—कर्तृत्वाश्रयः ॥

255. यथा च तक्षोभयथा (२-३.३९) तक्षा—तक्षणोपकरणसम्पन्नः वर्धकिः, यथा च—येनैव प्रकारेण, उभयथा—इच्छायां सत्यां तक्षणं करोति, नो चेत् न करोति इति उभयप्रकारवान् तथा, आत्मा—वागाद्युपकरणवान् जीवः, उभयथा—सङ्कल्पे सति कर्तृत्ववान्, तदभावे तदभाववांश्चेति कर्तृत्व-तदभावोभयवानेव, (अतः न सदा कर्तृत्वनैयत्यम्) ॥

## ५९. परायत्ताधिकरणम् (२-३-७) (सू. ४०-४१)

256. परात्तु तच्छ्रुतेः (२-३-४०) तत्—जीवात्मगतं कर्तृत्वम्, परात्तु—नियन्तृभूतात् परस्मात् ब्रह्मण एव, (परमात्मायत्तमेव; न तु पूर्णतया स्वायत्तम् इत्यर्थः) श्रुतेः—'अन्तः प्रविष्टः शास्ता जनानाम्' इति परस्यैव शासितृत्वश्रवणात् ॥

257. **कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैर्थ्यादिभ्यः (२-३-४१) परः**—परमात्मा, **कृतप्रयत्नापेक्षस्तु**—जीवात्मकृतं प्रयत्नम् प्रथमप्रवृत्तिहेतुभूतम् उद्योगं निमित्ततया निरीक्षमाण एव प्रवर्तकः, **विहितप्रतिषिद्धावैयर्थ्यादिभ्यः**—शास्त्रगतयोः विधि-निषेधयोः अवैयर्थ्यावश्यंभावात्, तथा भगवत्कर्तृकनिग्रहानुग्रहाभ्यामपि च ॥

६०. अंशाधिकरणम् (२-३-७) (सू. ४२-५२)

258. **अंशो नाना व्यपदेशादन्यथा चाऽपि दाशकितवादित्वमधीयत एके (२-३-४२)** **आत्मा**—जीवः, **अंशः**—विशिष्टस्य परब्रह्मणो विशेषणतया एकदेशभूतः, **नाना**—भेदेन, **अन्यथा चाऽपि**—अभेदेनाऽपि च, **व्यपदेशात्**—'ज्ञाज्ञौ द्वौ' इति, 'तत्त्वमसि' इति च श्रुतिषु स्पष्टं व्यवहारात्, उभयोरपि मुख्यतायाः सम्पादनीयत्वात्) **एके**—आथर्वणिकाः, **दाश-कितवादित्वम्**—सर्वजीवव्यापित्वनिबन्धनं दाशत्व-कितवत्वादिरूपं धर्मम्, **अधीयते**—ब्रह्माश्रिततया पठन्ति ॥

259. **मन्त्रवर्णात् (२-३-४३) आत्मा**—जीवः, **अंशः**—विशिष्टस्य ब्रह्मणः एकदेशभूतः, **मन्त्रवर्णात्**—अंशार्थक'पाद'शब्दघटितात् 'पादोऽस्य विश्वा भूतानि' इति मन्त्रात् ज्ञापकात् ॥

260. **अपि स्मर्यते (२-३-४४) आत्मा**—जीवः, **अंशः**—विशिष्टस्य ब्रह्मणः एकदेशभूतः (यतः) **स्मर्यतेऽपि**—'ममैवांशः....जीवभूतः' इति भगवद्गीतायां स्मृतावप्युक्तम् ॥

261. **प्रकाशादिवत्तु नैवं परः (२-३-४५) आत्मा**—जीवः, **प्रकाशादिवत्**—प्रभावतां मण्यादीनां यथा प्रभादिः तथा, **अंशः**—चेतनाचेतनविशिष्टस्य परस्य ब्रह्मणः एकदेशः, **परः**—परमात्मा, **एवं न**—स्वरूपतः स्वभावतश्च न जीवसदृशः (नाऽतो जीवदोषाः ब्रह्मगताः) ॥

262. **स्मरन्ति च (२-३-४६) आत्मा**—जीवः, **अंशः**—विशिष्टस्य ब्रह्मण एकदेश इति, **स्मरन्ति च**—पराशरादयः 'परस्य ब्रह्मणः शक्तिः' इति स्वीये पुराणे स्मरन्त्यपि ॥

263. **अनुज्ञा-परिहारौ देहसम्बन्धाज्ज्योतिरादिवत् (२-३-४७) अनुज्ञा-परिहारौ**—परमात्मांशभूतेषु जीवेषु मध्ये केषांचित् वेद-तद्विहितकर्मसु अधिकारानुमतिः, केषांचित् अधिकारनिषेधश्चेत्युभयम्, **देहसम्बन्धात्**—ब्राह्मण-तदितरात्मकशुच्यशुचिदेहसम्बन्धमात्रादेव, **ज्योतिरादिवत्**—ज्योतिषः अग्न्यादेः शुचिगृहसम्बन्धिनः आहरणानुमतिः, अशुचिस्थान-सम्बन्धिनः आहरणनिषेधश्च यथा, तद्वत् ॥

264. **असन्ततेश्चाऽव्यतिकरः (२-३-४८) असन्ततेश्च**—(शरीरभेदेन भेदवतां जीवानाम् अणुतया) सर्वत्र अनुस्यूतसम्बन्धाभावात्, **अव्यतिकरः**—(विभुना सर्वत्र अनुस्यूततया सम्बद्धेन परमात्मना सह) भोगासाङ्कर्यम् (अतः जीवः ब्रह्मांश एव, न ब्रह्म) ॥

265. **आभास एव च (२-३-४९) आभास एव च**—परस्य ब्रह्मण एव अविद्यया स्वरूपतिरोधाने, जीवभावकल्पने च उच्यमानो हेतुः, वस्तुतो न हेतुः; किन्तु दुष्ट एव, तथा कल्पनं निरवद्यत्वश्रुतिविरुद्धञ्च (अतः जीवः ब्रह्मांश एव ; न ब्रह्म) ॥

266. **अदृष्टानियमात् (२-३-५०) अदृष्टानियमात्**—(एकस्मिन्नेव अखण्डे ब्रह्मणि) भोगनियामकादृष्टनियमस्य वक्तुमशक्यत्वात्, अविद्याकृताः दोषाः ब्रह्मणः अवर्जनीयाः स्युः, (अतः जीवः ब्रह्मांश एव, न ब्रह्म) ॥

267. **अभिसन्ध्यादिष्वपि चैवम् (२-३-५१) अभिसन्ध्यादिष्वपि च**—अदृष्टहेतुतया उक्तेषु सङ्कल्पादिष्वपि च, **एवम्**—अदृष्टे चिन्तितस्य अनियमस्य अवर्जनीयत्वात् ब्रह्मणि दोषनियामकाभाव एव, (अतः जीवः ब्रह्मांश एव ; न ब्रह्म) ॥

268. **प्रदेशभेदादिति चेन्नान्तर्भावात् (२-३-५२) प्रदेशभेदात्**—(ब्रह्मणि अविद्याकल्पितजीवभावे) उपाध्युपहितब्रह्मप्रदेशः, तदनुपहितब्रह्मप्रदेशः इति प्रदेशभेदस्याङ्गीकारात्, भोगव्यवस्था युज्यते, **इति चेत्**—एवं कल्पनं तु, **न**—सप्रयोजनं न भवति, **अन्तर्भावात्**—उपाधेः स्थानान्तरगमने अनुपहितब्रह्मप्रदेशोऽपि उपहितब्रह्मप्रदेश एव भवतीति, प्रदेशभेदात्मकनियामकस्याभावात् (भोगव्यवस्थायाः अभाव एव, अतः जीवो, ब्रह्मांश एव ; न ब्रह्म) ॥

॥ इति द्वितीयाध्याये तृतीयः पादः ॥

## ॥ चतुर्थः पादः ॥ [अधि. ८, सू. १९]

### ६१. प्राणोत्पत्त्यधिकरणम् (२-४-१) (सू. १-३)

269. **तथा प्राणाः (२-४-१) तथा**—जीवाः यथा नोत्पद्यन्ते तथा, **प्राणाः**—प्राणसंज्ञकानि इन्द्रियाण्यपि नैवोत्पद्यन्ते ; ('प्राणा वाव ऋषयः' इति श्रुतौ प्राणानां सृष्टिप्राक्कालवृत्तिताश्रवणात्) ॥ (पू)

**तथा**—आकाशः यथा उत्पद्यते तथा, **प्राणाः**—इन्द्रियाण्यपि उत्पद्यन्त एव ('सदेवाऽसीत्' इति इतरासत्त्वस्य स्पष्टमुक्तेः तत्र प्राणपदस्य परमात्मपरत्वात्) ॥ (सि)

270. **गौण्यसम्भवात्तत्प्राक्छ्रुतेश्च** (२-४-२) **गौणी**—' प्राणाः ' इति शब्दे सर्वप्राणन-हेतुपरमात्मपरे बहुवचनश्रुतिः औपचारिकी, **असम्भवात्**—सृष्टिप्राक्कालिके परमात्मनि मुख्यस्य बहुत्वस्य बाधात् , **तत्प्राक्छ्रुतेश्च**—तस्य-परमात्मनः सृष्टिप्राक्कालवृत्तित्वश्रुतेरेव ॥

271 **तत्पूर्वकत्वाद्वाचः** २-४-३) **वाचः**—परमात्मव्यतिरिक्तस्य नाम्नः, **तत्पूर्वकत्वात्**—वियदादिसृष्टिपूर्वकत्वात् ।। अतः प्राणशब्दनिर्दिष्टः परमात्मैव) ॥

### ६२. सप्तगत्यधिकरणम् (२-४-४) (सू. ४, ५)

272. **सप्त गतेर्विशेषितत्वाच्च** (२-४-४) **प्राणाः**—जीवेन सह सञ्चरमाणानि इन्द्रियाणि, **सप्त**—सप्तसंख्याकान्येव ; (ज्ञानेन्द्रियाणि पञ्च, मनः, बुद्धिश्चेति) **गतेः**—सप्तानामेव श्रुतौ गतिश्रवणात् , **विशेषितत्वाच्च**—नाम्ना विशेषतः सप्तानामेव निर्दिष्टत्वादपि।।

273. **हस्तादयस्तु स्थितेऽतो नैवम्** (२-४-५) **एवम्**—इन्द्रियाणि सप्तैव इत्येतत्, **न**—न युक्तम् , **स्थिते**—आत्मनः शरीरे विद्यमाने सति, **हस्तादयस्तु**—पाणिपादादयोऽपि पञ्च उपकुर्वन्ति, **अतः**—कर्मेन्द्रियाणामपि पञ्चानां सत्त्वात् , (आहत्य एकादशेन्द्रियाण्येव) ॥

### ६३. प्राणाणुत्वाधिकरणम् (२-४-५) (सू. ६, ७)

274. **अणवश्च** (२-४-६) **प्राणाः**—इन्द्रियाणि, **अणवश्च**—अणुपरिमाणान्येव, **गतेः**—' प्राणा अनूत्क्रामन्ति ' इति प्राणशब्दाभिधेयानां तेषाम् उत्क्रमणश्रवणात् ।।

275. **श्रेष्ठश्च** (२-४-७) **श्रेष्ठः प्राणश्च**—पञ्चवृत्तिः मुख्यः प्राणोऽपि उत्पद्यत एव ; न नित्यः ।।

### ६४. वायुक्रियाधिकरणम् (२-४-४) (सू. ८-११)

276. **न वायुक्रिये पृथगुपदेशात्** (२-४-८) **प्राणः**—मुख्यः प्राणः, **न वायु-क्रिये**—वायुसामान्यं, वायवीयक्रिया वा न भवितुमर्हति, **पृथगुपदेशात्**—प्राण-वाय्वोरुभयोरपि पार्थक्येन ' एतस्माज्जायते प्राणः ' इति, 'खं वायुः ' इति च श्रुतौ कीर्तनात् ॥

277. **चक्षुरादिवत्तु तत्सहशिष्ट्यादिभ्यः** (२-४-९) **श्रेष्ठः प्राणः**—प्राणशब्दव्यपदेश्यः मुख्यः प्राणः, **पृथगुपदेशात्**—श्रुतौ 'प्राण' इति, 'वायुः' इति च प्रत्येकं व्यपदेशमात्रात् , **न**—आकाशादिवत् भूतान्तरं न भवितुमर्हति, (किन्तु) **चक्षुरादिवत्**—चक्षुः प्रभृतीन्द्रियवत् ,

जीवोपकरणमेव, तत्सहशिष्ट्यादिभ्यः—जीवोपकरणभूतैः चक्षुरादिभिः सह साहचर्येणोपदेशात् 'मुख्यप्राण'शब्देन विशिष्योपदेशाच्च ज्ञापकात् ॥

278. अकरणत्वाच्च न दोषस्तथा हि दर्शयति (२-४-१०) (अस्य—श्रेष्ठप्राणस्य) अकरणत्वात्—अक्रियत्वात्, (जीवं प्रति उपकारविशेषात्मकक्रियाराहित्यनिबन्धनतया उद्भाव्यमानः), दोषः—चक्षुरादिसजातीयत्वाभावरूपो दोषः, न—न आपतति, हि—यतः, तथा—शरीरेन्द्रियधारणात्मकोपकारविशेषरूपां क्रियामेव, दर्शयति—'यस्मिन्नुत्क्रान्ते' इत्यादिना श्रुतिरेव बोधयति ॥

279. पञ्चवृत्तिर्मनोवद्व्यपदिश्यते (२-४-११) श्रेष्ठः प्राणः–मुख्यः प्राणः, पञ्चवृत्तिः–प्राणादिवृत्तिपञ्चकाधीननामपञ्चकवान्, व्यपदिश्यते—श्रुतिषु निर्दिश्यते, मनोवत्–यथा एकमेव मनः वृत्तिभेदेन काम-सङ्कल्पादिनानानामभिः 'कामः सङ्कल्पः....सर्वं मन एव' इति श्रुतौ स्पष्टं निर्दिश्यते तद्वत् ॥

६५. श्रेष्ठाणुत्वाधिकरणम् (२-४-५)

280. अणुश्च (२-४-१२) श्रेष्ठः प्राणः—अयं प्राणः मुख्यः, अणुश्च–इन्द्रियवत् अणुपरिमाणवानपि, गतेः—श्रुतौ उत्क्रान्त्यादेः श्रवणात् ॥

६६. ज्योतिराद्यधिष्ठानाधिकरणम् (२-४-६) (सू. १३, १४)

281. ज्योतिराद्यधिष्ठानं तु तदामननात् प्राणवता शब्दात् (२-४-१३) प्राणवता—जीवेन सह, ज्योतिराद्यधिष्ठानम्—अग्न्यादिदेवतानाम् इन्द्रियेषु स्वस्वकार्याभिमुख्यापादानरूपं कर्तृत्वम्, तदामननात्तु—तस्य परमपुरुषस्य सङ्कल्पादेव भवति, शब्दात्—तत्सङ्कल्पाधीनत्वप्रतिपादकात् शास्त्रात् ॥

282. तस्य च नित्यत्वात् (२-४-१४) तस्य—चेतनाचेतनात्मकानां सर्वेषां परमात्माधिष्ठितत्वस्य, नित्यत्वाच्च—नियतत्वेन अवर्जनीयत्वादेव उक्तोऽर्थ एव समीचीनः ॥

६७. इन्द्रियाधिकरणम् (२-४-७) (सू. १५, १६)

283. त इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात् (२-४-१५) श्रेष्ठात् अन्यत्र—मुख्यं प्राणं वर्जयित्वा, प्राणाः—प्राणशब्दवाच्याः ये विद्यन्ते, ते इन्द्रियाणि—त एव इन्द्रियसंज्ञकानि भवन्ति, तद्व्यपदेशात्—तेष्वेव इन्द्रियशब्दस्य 'त एतस्यैव सर्वे रूपमभवन्' इति, श्रुतौ निर्देशात् ।

284. **भेदश्रुतेर्वैलक्षण्याच्च** (२-४-१६) **भेदश्रुते:**—प्राणे मनस्सहितेभ्य इन्द्रियेभ्यो भेदस्य 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च' इति श्रुतौ प्रतिपन्नत्वात्, (तथा) **वैलक्षण्याच्च**—इन्द्रियवृत्तिविलक्षणायाः वृत्तेः प्राणेषु दर्शनादपि, **ते**—मुख्यप्राणातिरिक्ताः प्राणा एव, **इन्द्रियाणि**—इन्द्रियपदेन व्यपदेश्यानि ; (न तु मुख्यः प्राणः) ॥

६८. संज्ञामूर्तिक्लृप्त्यधिकरणम् (२-४-८) [सू. १७-१९]

285. **संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात्** (२-४-१७) **संज्ञामूर्तिक्लृप्तिः**—नामरूपव्याकरणात्मिका व्यष्टिसृष्टिः, **त्रिवृत्कुर्वतः तु**—त्रिवृत्करणात्मकक्रियानिर्वोढुः परमात्मन एव ; न चतुर्मुखस्य, **उपदेशात्**—'त्रिवृतं त्रिवृतमेकैकां करवाणि' इति सङ्कल्पयित्रैव 'नामरूपे व्याकरवाणि' इति सङ्कल्पितत्वस्य श्रुतौ उपदेशदर्शनात् ॥

286. **मांसादि भौमं यथाशब्दमितरयोश्च** (२-४-१८) **यथाशब्दम्**—'अन्नमशितं त्रेधा' इति श्रुतिवाक्यानुसारेण, **मांसादि**—स्थूलभूतात् पुरीषात् भिन्नं मांसम्, अणिष्ठम् मनोऽपि च, **भौमम्**—पार्थिवमेव, **इतरयोश्च**—'आपः पीताः' 'तेजोऽशितम्' इति वाक्ययोरप्येवमेव ॥

287. **वैशेष्यात्तु तद्वादस्तद्वादः** (२-४-१९) **वैशेष्यात्तु**—एकैकस्य भूतस्याऽपि विशेषभावस्य सत्त्वादेव, **तद्वादः**—तेषु तेषु अन्नादीनां पृथक्शब्दानां श्रुतिषु व्यपदेशः ॥

—चतुर्थः पादः—

(इति द्वितीयोऽध्यायः)



॥ तृतीयोऽध्यायः ॥ [अधि. ५५, सू. १८२]

प्रथमः पादः [अधि. ६, सू. २७]

६९. तदन्तरप्रतिपत्त्यधिकरणम् (३-१-१) (सू. १-७)

288. **तदन्तरप्रतिपत्तौ रंहति सम्परिष्वक्तः प्रश्ननिरूपणाभ्याम्** (३-१-१) **तदन्तरप्रतिपत्तौ**—देहान्तरप्राप्तौ सम्पद्यमानायाम्, (जीवः—चेतनः) **संपरिष्वक्तः**—भूतसूक्ष्मैः संश्लिष्टः सन्, **रंहति**—गच्छति (इति निश्चीयते) ; **प्रश्न-निरूपणाभ्याम्**—पञ्चाग्निविद्याप्रकरणस्थश्रुतिवाक्यगताभ्यां तदर्थज्ञापकाभ्यां प्रश्न-प्रतिवचनाभ्याम् ॥

289. त्र्यात्मकत्वात्तु भूयस्त्वात् (३-१-२) त्र्यात्मकत्वात्—अपां त्रिवृत्करणेन भूतत्रयात्मकत्वात्, (तथा) भूयस्त्वात्तु—अपाम् आधिक्यादपि, ('पञ्चम्यामाहुतावापः' इत्यादौ सर्वेषाम् 'अप्' शब्देनाऽभिधानम्) ॥

290. प्राणगतेश्च (३-१-३) प्राणानाम्—इन्द्रियाणाम्, गतेश्च—'प्राणोऽनूत्क्रामति' इति गच्छता जीवेन सह गमनश्रुतेरपि ज्ञापकात्, जीवः सम्परिष्वक्तः—देहतामापन्नैः भूतसूक्ष्मैः संश्लिष्ट एव सन्, रंहति—देहाद्देहान्तरं गच्छति ॥

291. अग्न्यादिगतिश्रुतेरिति चेन्न; भाक्तत्वात् (३-१-४) अग्न्यादिगतिश्रुतेः—वागादिरूपाणामिन्द्रियाणाम् अग्न्यादिषु अप्ययस्य अग्निं वागप्येति' इत्यादिषु श्रवणात्, प्राणगतिः—इन्द्रियाणां जीवेन साकं गमनश्रुतिः (न मुख्या; किन्तु अन्यथा नेया) इति चेत्—एवं कथनं तु, न—न युक्तम्, भाक्तत्वात्—वागादिशब्दानां वागाद्यभिमानिदेवतासु उपचारतः प्रयुक्तत्वात् ॥

292. प्रथमेऽश्रवणादिति चेन्न; ता एव ह्युपपत्तेः (३-१-५) प्रथमे—पञ्चाग्निविद्यायां द्युलोकात्मकाग्न्यधिकरणके होमे, अश्रवणात्—अपां होमकर्मत्वेन श्रुतौ अपठनात्, (आपः भूतान्तरसंसृष्टतया गच्छन्ति इत्येतत् न सुवचम्) इति चेन्न—इदं कथनं न युक्तम्, हि—यतः, ता एव—आप एव, (द्युलोकाग्निहोम्यश्रद्धापदेनोच्यन्ते); उपपत्तेः—प्रतिवचने प्रश्नानुगुण्यस्य तथा सत्येव उपपादनीयत्वात् ॥

293. अश्रुतत्वादिति चेन्न; इष्टादिकारिणां प्रतीतेः (३-१-६) अश्रुतत्वात्—(अपामेव गमनश्रुत्या) अद्भिः संपरिष्वक्तजीवगमनस्य श्रुतौ अपठितत्वात्, (जीवो गच्छतीति दुर्वचम्) इति चेत् न—एवं कथनं न सङ्गच्छते, इष्टादिकारिणाम्—यागदानादिकाम्यकर्मकृतां जीवानाम्, प्रतीतेः—वाक्ये प्रत्यभिज्ञानात्, 'अप्'शब्दः अप्संयुक्तजीववाच्येव; न केवलाब्वाची ॥

294. भाक्तं वाऽनात्मवित्त्वात्तथा हि दर्शयति (३-१-७)—('तं देवा भक्षयन्ति' इति, धूमपथेन गतस्य देवैः भक्ष्यत्ववचनं) भाक्तं वा—औपचारिकमेव, (देवोपकरणत्वाभिप्रायमेव), अनात्मवित्त्वात्—(परमपुरुषाराधनवेषतां विना केवलेष्टादिकारिणाम्) आत्मवेदित्वाभावात्, तथा हि दर्शयति—श्रुतिः ('यथा पशुः एवं स देवानाम्') इति देवोपकरणत्वमेव बोधयति ॥

### ७०. कृतात्ययाधिकरणम् (३-१-२) (सू. ८-११)

295. कृतात्ययेऽनुशयवान् दृष्ट-स्मृतिभ्यां यथेतमनेवं च (३-१-८) कृतात्यये—

पूर्वकर्मणां भोगेन विनाशे सति, अनुशयवान्—भुक्तशिष्टकर्मवान् चेतनः, यथेतम्—आरोहणप्रकारेण, अनेवं च—प्रकारान्तरेण च, (स्वर्गादेः निवर्तते इति) दृष्ट-स्मृतिभ्याम्—श्रुति-स्मृतिभ्यामवगम्यते ॥

296. **चरणादिति चेन्न, तदुपलक्षणार्थेति कार्ष्णाजिनिः (३-१-९) चरणात्**—शीलाचारादिनैव, (रमणीयादियोनिविशेषप्राप्तिः ; न तु अनुशयात् भुक्तशिष्टात् कर्मणः) **इतिचेत्**—एवं कथनं तु, **न**—न युक्तम्, **तदुपलक्षणार्थेति**—'रमणीयचरणाः' इति श्रुतिः) पुण्य-पापात्मककर्मज्ञापनार्थं प्रवृत्तेति, **कार्ष्णाजिनिः**—कार्ष्णाजिनिनामा आचार्यो मन्यते ॥

297. **आनर्थक्यमिति चेन्न तदपेक्षत्वात् (३-१-१०) आनर्थक्यम्**—(योनिविशेषप्राप्तौ पुण्यापुण्ययोरेव प्रयोजकत्वे) सदाचारनैष्फल्यम्, **इति चेत्**—एवं शङ्कनं तु, **न**—नोचितम्, **तदपेक्षत्वात्**—पुण्यात्मकानां कर्मणां सदाचारसापेक्षत्वात्, (न आचारानर्थक्यम्) ॥

298. **सुकृत-दुष्कृते एवेति तु बादरिः (३-१-११) सुकृत-दुष्कृते एव**—पुण्य-पापे एव 'चरण'शब्दाभिधेये, **इति तु**—इत्येव, **बादरिः**—बादरिनामा आचार्यो मन्यते ॥

### ७१. अनिष्टादिकार्यधिकरणम् (३-१-१०) (सू. १२-२१)

299 **अनिष्टादिकारिणामपि च श्रुतम् (३-१-१२) अनिष्टादिकारिणामपि**—इष्टापूर्तादि अकुर्वतां पापिनामपि, **श्रुतं च**—('चन्द्रमसमेव ते सर्वे गच्छन्ति' इति) चन्द्रगमनमेव श्रुतौ बोधितम् ।

300. **संयमने त्वनुभूयारोहवरोहौ तद्गतिदर्शनात् (३-१-१३) आरोहावरोहौ**—(अनिष्टादिकारिणां पापिनां) चन्द्रारोहः तस्मादवरोहश्च, **संयमने**—यमशासनविषये प्रदेशे, **अनुभूय तु**—पापफलसंवेदनं प्राप्यैव भवति, **तद्गतिदर्शनात्**—यमसदनं प्रति गतेः (वैवस्वतं सङ्गमनं जनानाम्) इति श्रुत्या प्रतिपत्तेः ॥

301 **स्मरन्ति च (३-१-१४) स्मरन्ति च**—पराशरादयो महर्षयः 'सर्वे चैते वशं यान्ति यमस्य' इति यमसदनप्राप्तिं स्मृतौ बोधयन्ति ॥

302. **अपि सप्त (३-१-१५) सप्ताऽपि**—रौरवादीन् सप्त नरकानपि, **स्मरन्ति**—पापिनां गन्तव्यतया मुनयः स्मृतिषु बोधयन्ति ॥

303. **तत्राऽपि तद्व्यापारादविरोधः (३-१-१६) तत्राऽपि**—रौरवादिषु नरकाख्येषु सप्तसु लोकेष्वपि, **तद्व्यापारात्**—यमाज्ञयैव गमनात्, **अविरोधः**—यमसदनप्राप्तिबोधकवाक्यविरोधो नाऽस्ति ॥

304. विद्या-कर्मणोरिति तु प्रकृतत्वात् (३-१-१७) विद्याकर्मणोः—अर्चिरादिना ब्रह्मगमनस्य, विद्यायाः फलत्वात्, धूमादिना चन्द्रगमनस्य च इष्टापूर्तादिकर्मणः फलत्वात्, (तत्फलत्वं च) इति प्रकृतत्वात्—इत्थं विद्या-कर्मणी प्रकृत्य प्रतिपादितत्वात्, (विद्या-कर्मरहितानां पापिनां ब्रह्मगमनस्य चन्द्रगमनस्य चाऽसम्भवः इति ज्ञायते) ॥

305. न तृतीये तथोपलब्धेः (३-१-१८) तृतीये—तृतीयस्थानसंज्ञकानां पापकर्मिणां देहारम्भे, न—पञ्चमाहुत्यपेक्षा न विद्यते, तथा—पञ्चमाहुत्यनपेक्षत्वेन, उपलब्धेः—'तेनाऽसौ लोको न सम्पूर्यते' इति श्रुतौ दर्शनात् ॥

306. स्मर्यतेऽपि च लोके (३-१-१९) लोकेऽपि—शिष्टलोकेऽपि, स्मर्यते च—द्रौपद्यादीनां पुण्यकर्मिणां देहारम्भे पञ्चमाहुतेरनपेक्षा महाभारतादौ स्मर्यत एव ॥

307. दर्शनाच्च (३-१-२०) (स्वेदजोद्भिज्जयोः देहारम्भे पञ्चमाहुत्यनपेक्षायाः) दर्शनाच्च—'त्रीण्येव बीजानि भवन्ति आण्डजं जीवजमुद्भिज्जम्' इति श्रुतौ पठनादपि ज्ञापकात् ॥

308. तृतीयशब्दावरोधः संशोकजस्य (३-१-२१) संशोकजस्य—स्वेदजस्य, तृतीय-शब्देन—उद्भिज्जशब्देन, अवरोधः—संग्रहो भवति अतः स्वेदजोऽपि श्रुतिपठित एव, (तस्मात् केवलपापिनां न चन्द्रारोहावरोहौ सम्भवतः) ॥

### ७२- तत्स्वाभाव्यापत्त्यधिकरणम् (३-१-४)

309. तत्स्वाभाव्यापत्तिरुपपत्तेः (३-१-२२) (चन्द्रमसः सकाशात् अवरोहतां च इष्टादिकारिणां) तत्स्वाभाव्यापत्तिः—आकाशादिसादृश्यप्राप्तिरेव; न तु आकादिशरीरत्वम्, उपपत्तेः—सुखदुःखानुभवाश्रयत्वाभावस्य तथा सत्येव उपपत्तेः ॥

### ७३. नातिचिराधिकरणम् (३-१-५)

310. नाऽतिचिरेण विशेषात् (३-१-२३) नाऽतिचिरेण—(अवरोहतो जीवस्य आकाशादिभावाश्रयणम्) अत्यन्तविलम्बाभावेनैव; न तु अत्यन्तं विलम्बेन, विशेषात्—(उत्तरत्र व्रीह्यादिभावाश्रयणे) 'अतो वै खलु दुर्निष्प्रपतरम्' इति विशेषतः तत्र तत्र चिराव-स्थानस्य श्रुतौ बोधनात् ॥

### ७४. अन्याधिष्ठिताधिकरणम् (३-१-६) (सू. २४-२७)

311. अन्याधिष्ठिते पूर्ववदभिलापात् (३-१-२४) अन्याधिष्ठिते—जीवान्तरेण अधिष्ठिते

व्रीह्यादिशरीरे, (अवरोहतां जीवानां संश्लेषमात्रमेव) पूर्ववत्—आकाशादिमेघपर्यन्तवत्, अभिलापात्—केवलतद्भावस्यैव श्रुतौ कथनात्, (भोगकारणीभूतकर्माकथनात् व्रीह्यादिशरीरावच्छिन्नभोगो नास्ति इत्यर्थः) ॥

312. अशुद्धमिति चेन्न शब्दात् (३-१-२५) अशुद्धम्—(यागादिजन्यं स्वर्गादिकं फलम्-पशुहिंसाजन्यत्वात्) अशुद्धिमिश्रम्, (तेन व्रीह्याद्यशुचिजन्महेतुर्भवति) इति चेत्—एवं शङ्कनम्, न—न सङ्गतम्, शब्दात्—हिंसात्वाभावबोधकात् 'न वा उ वेतन्म्रियसे न रिष्यसि' इत्येवमादेः श्रौतात् शब्दात् ॥

313. रेतस्सिग्योगोऽथ (३-१-२६) अथ—तदनन्तरभावी, रेतस्सिग्योगः—अवरोहतां जीवानाम् अन्नेन संसृष्टानां रेतस्सिग्भिः देहिभिः सह उक्तः सम्बन्धः, यथा केवलं योगमात्रं, तथा व्रीह्यादियोगोऽपि सम्बन्धमात्रमेव ॥

314. योनेः शरीरम् (३-१-२७) योनेः—अवरोहतो जीवस्य योनिप्राप्तेरनन्तरमेव, शरीरम्—शरीरवत्ता भवति; न तु ततः प्राक् ॥

॥ इति तृतीयाध्याये प्रथमः पादः ॥



॥ द्वितीयः पादः ॥ [अधि. ८, सू. ४०]

७५. सन्ध्याधिकरणम् (३-२-१) (सू. १-६)

315. सन्ध्ये सृष्टिराह हि (३-२-१) सन्ध्ये—स्वप्नसम्बन्धि स्थाने, सृष्टिः—श्रूयमाणा रथादिसृष्टिः, स्वप्नद्रष्ट्रा जीवेनैव कृता, हि—यतः, आह—श्रुतिरेव 'स हि कर्ता' इति जीवमेव कर्तृत्वेन स्पष्टं परामृशति ॥

316. निर्मातारं चैके पुत्रादयश्च (३-२-२) एके—कठशाखिनः, (जीवमेव) निर्मातारम्—स्वाप्नानामर्थानां स्रष्टारम्, (अधीयते—'कामं कामं पुरुषो निर्मिमाणः' इति स्वशाखायां पठन्ति), पुत्रादयश्च—(श्रुतौ कामशब्देन निर्दिष्टास्तु) पुत्र-कलत्रादय एव ॥

317. मायामात्रं तु कार्त्स्न्येनाऽनभिव्यक्तस्वरूपत्वात् (३-२-३) सन्ध्ये सृष्टिः—स्वाप्नार्थविषयिणी सृष्टिः, मायामात्रम्—भगवतः परमेश्वरस्य आश्चर्यशक्त्यधीनं निर्माणमेव; न जीवस्य, कार्त्स्न्येन—अनवशेषेण, अनभिव्यक्तस्वरूपत्वात्—अनाविर्भूतसत्यसङ्कल्पत्वादिस्वाभाविकरूपत्वेन (जीवस्य सृष्टिसामग्रीराहित्यात्) ॥

318. पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ ॥ (३-२-४) पराभिध्यानात्तु—परमपुरुषसङ्कल्पादेव, अस्य—जीवस्य स्वाभाविकं रूपम्, तिरोहितम्—अनादिकर्मप्रवाहेण सापराधतया आच्छादितम्, ततो हि—परमपुरुषसङ्कल्पादेव हि, अस्य—जीवस्य, बन्धविपर्ययौ—संसारापवर्गौ श्रुतौ श्रूयेते ॥

319. देहयोगाद्वा सोऽपि (३-१-५) सोऽपि—जीवात्मनः तिरोधानसम्बन्धोऽपि, देहस्य—देवाद्याकारपरिणतस्याऽचितः, (तथा) नाम-रूपविभागानर्हसूक्ष्मदशापन्नस्याऽचितश्च, योगात्—(सृष्टि-प्रलयकालिकात्) संसर्गात् भवति ॥

320. सूचकश्च हि श्रुतेराचक्षते च तद्विदः (३-२-६) हि—यतः, सन्ध्यम्—सन्ध्यपदवाच्यः स्वप्नः, सूचकश्च—न केवलं पुरुषविशेषस्य अनुभवविषयः, भाविनोः शुभाशुभयोः अर्थयोः सूचकोऽपि इति, श्रुतेः—'स्त्रियं स्वप्नेषु पश्यति । समृद्धिं तत्र जानीयात्' इति श्रुतेः ज्ञायते । तद्विदश्च—स्वप्नाध्यायविदोऽपि, आचक्षते—एनमेवार्थं वदन्ति । (ईश्वरस्यैव स्वाप्नार्थस्रष्टृत्वे एव इदं सर्वमुपपद्यते) ॥

७६. तदभावाधिकरणम् (३-२-२) (सू ७, ८)

321. तदभावो नाडीषु तच्छ्रुतेरात्मनि च (३-२-७) तदभावः—जीवस्य स्वप्नाभावः-सुषुप्तिः, नाडीषु—हृदयसम्बन्धिनीषु प्रासादस्थानीयासु नाडीषु, आत्मनि च—पर्यङ्कस्थानीये ब्रह्मणि, तथा खट्वास्थानीये पुरीतति चेत्येतेषु स्थानेषु भवति, तच्छ्रुतेः— 'आसु तदा नाडीषु सुप्तो भवति' 'सता सोम्य तदा सम्पन्नो भवति' 'पुरीतति शेते' इति नाडी-ब्रह्म-पुरीततां त्रयाणामपि सुषुप्तिस्थानत्वश्रुतेः ॥

322. अतः प्रबोधोऽस्मात् (३-२-८) अतः—यतः ब्रह्मैव सुषुप्तिस्थानम् अतः, अस्मात्—ब्रह्मणः सकाशात्, प्रबोधः—जीवस्य जाग्रद्दशाप्राप्तिश्रुतिः उपपद्यते ॥

७७. कर्मानुस्मृतिशब्दविध्यधिकरणम् (३-२-३)

323. स एव तु कर्मानुस्मृतिशब्दविधिभ्यः (३-२-९) स एव तु—सुषुप्त एव जीवः, (प्रबोधकाले उत्तिष्ठति) कर्मणः—तत्त्वज्ञानात् प्राक्तनकर्मणः पुण्यपापात्मकस्य तेनैव भोक्तव्यत्वात्, अनुस्मृतेः—'य एवाऽहं रात्रौ सुषुप्तः स एव प्रबुद्धोऽस्मि' इति प्रत्यवमर्शात्, शब्दात्—'त इह व्याघ्रो वा.........यद्यद् भवन्ति तदा भवन्ति, इत्येवं श्रुतिरूपात् शब्दात्, विधिभ्यः—मोक्षार्थेभ्यः साधनविधिभ्यश्च सफलेभ्यः (एवं निश्चीयते) ॥

## ७८. मुग्धाधिकरणम् (३-२-४)

324. **मुग्धेऽर्धसम्पत्तिः परिशेषात्** (३-२-१०) **मुग्धे**—मूर्च्छिते पुरुषे विद्यमाना अवस्था **अर्धसम्पत्तिः**—अर्धमृतिरेव, **परिशेषात्**—जाग्रत्-स्वप्न-सुषुप्ति-मरणात्मकावस्थाभिन्नावस्थाविशेष-रूपत्वात् ॥

## ७९. उभयलिङ्गाधिकरणम् (३-२-५) (सू-११-२५)

325. **न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि** (३-२-११) **परस्य**—परस्य ब्रह्मणः, **स्थानतोऽपि**—चेतनाचेतनेष्वन्तर्यामित्वेन अवस्थानादपि, (जीवस्येव तत्र तत्रावस्थानकृताः दोषाः) **न**—न सम्भवन्ति, **हि**—यतः, **परम्**—परं ब्रह्म, **सर्वत्र**—श्रुतिषु स्मृतिषु च, **उभयलिङ्गम्**—निरस्तनिखिलदोषत्व-समस्तकल्याणगुणात्मकत्वरूपोभयलक्षणवदेव अवगतम् ॥

326. **भेदादिति चेन्न ; प्रत्येकमतद्वचनात्** (३-२-१२) **भेदात्**—देवादिशरीरसम्बन्ध-कृतात् अवस्थाभेदात् (जीवात्मन इव) **परस्यापि**—परमात्मनोऽपि, **भेदात्**—पृथिव्यादिशरीरि-त्वकृतात् अवस्थाविशेषात् (अपुरुषार्थरूपाः दोषाः अवर्जनीया भवेयुः) **इति चेत्**—एवं शङ्कनम्, **न**—युक्तं न भवति, **प्रत्येकम्**—'यस्य पृथिवी शरीरम्' इत्यादिप्रतिपर्यायम्, **अत-द्वचनात्**—तद्विरोधिनः अमृतत्वस्य 'अन्तर्याम्यमृतः' इति श्रुत्या प्रतिपादनात् ॥

327. **अपि चैवमेके** (३-२-१३) **अपि च**—प्रत्युत, **एके**—आथर्वणिकाः शाखिनः, (मुण्डकोपनिषदि) **एवम्**—जीवपरयोर्देहसम्बन्धिनोरपि सतोः एकस्य दोषाश्रयत्वम्, अन्यस्य तदनाश्रयत्वं च, 'तयोरन्यः पिप्पलं स्वाद्वत्ति अनश्नन्नन्यो अभिचाकशीति' इति अधीयते ॥

328. **अरूपवदेव हि तत्प्रधानत्वात्** (३-२-१४) **तत्**—ब्रह्म, (तेन रूपेण युक्तमपि) **अरूपवदेव हि**—रूपरहितगगनादितुल्यमेव खलु, **प्रधानत्वात्**—नामरूपनिर्वाहकत्वेन प्राधान्यात् (न तस्य कर्मवश्यजीववत् दोषसम्बन्धः) इति, **उभयलिङ्गम्**—पूर्वोक्तोभयलक्षणमेव ब्रह्म ॥

329. **प्रकाशवच्चावैयर्थ्यात्** (३-२-१५) **प्रकाशवत्**—'सत्यं ज्ञानमनन्तम्' इति वाक्ये 'ज्ञानम्' इति श्रवणेन-'ब्रह्म ज्ञानस्वरूपम्' इति अङ्गीकारवत्, **अवैयर्थ्यात्**—'यः सर्वज्ञः' 'पराऽस्य शक्तिः' इत्यादिवाक्यानाम् साफल्यस्य ब्रह्मणि ज्ञान-शक्त्याद्यभ्युपगमेनैव सम्पादनी-यत्वात्, **उभयलिङ्गम्**—ब्रह्म पूर्वोक्तोभयलक्षणमेव अङ्गीकरणीयम् ॥

330. आह च तन्मात्रम् (३-२-१६) तन्मात्रम्—तावन्मात्रम्–'ब्रह्म ज्ञानस्वरूपम्' इत्येतावन्मात्रम्, आह च—'सत्यं ज्ञानम्' इति वाक्यं प्रतिपादयति, च (न तु ब्रह्मणः कल्याणगुणाकरतां निषेधति) अतो ब्रह्म उभयलिङ्गमेव ॥

331. दर्शयति चाथो अपि स्मर्यते (३-२-१७) दर्शयति च—ब्रह्मणः उभयलिङ्गत्वं 'निष्कलं निरवद्यं निरञ्जनम्' 'स्वाभाविकी ज्ञानबलक्रिया च' इत्यादिः वेदान्तवाक्यगणः स्पष्टं प्रतिपादयति च, स्मर्यतेऽपि—'यो मामजमनादिं च वेत्ति लोकमहेश्वरम्' इत्यादिस्मृतावपि ब्रह्मगतम् उभयलिङ्गत्वं प्रतिपाद्यते ॥

332. अत एव चोपमा सूर्यकादिवत् (३-२-१८) अत एव—ब्रह्मणः उभयलिङ्गत्वेन पृथिव्याद्यवस्थानप्रयुक्तदोषगन्धाभावादेव, सूर्यकादिवत्—जल-दर्पणादिप्रतिबिम्बितरविमण्डलादिवत् इति, उपमा—'जलाधारेष्विवांशुमान्' इत्यादिना सादृश्य-वर्णनं शास्त्रेषु क्रियते ॥

333. अम्बुवदग्रहणात्तु न तथात्वम्—(३-२-१९) (परमात्मनः) तथात्वम्—सूर्यप्रतिबिम्बादिसाम्यम्, न—न सम्भवति, अम्बुवत्—जले वस्तुतः अविद्यमानस्य रविमण्डलस्येव, अग्रहणात्तु—ग्रहणाभावादेव; (परमात्मा हि पृथिव्यादिषु वस्तुतो विद्यमान एव खलु गृह्यते)॥

334. वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामाञ्जस्यादेवं दर्शनाच्च (३-२-२०) अन्तर्भावात्—पृथिव्यादिविकारेषु परमात्मनः अवस्थानमात्रात्, वृद्धिह्रासभाक्त्वम्—परमात्मनः विकारभूतवस्तुगतोपचयापचयभागित्वम्, न—न आपतति, उभयसामञ्जस्यात्—घटाकाश-जलाधारगतसूर्यात्मकदृष्टान्तद्वयसाङ्गत्याय एवं वर्णनीयत्वात्, एवं—विवक्षितांशे एव साम्यमित्यत्र, दर्शनाच्च—'सिंह इव माणवकः' इत्यादौ पराक्रमाद्यंशे एव साम्यप्रदर्शनस्य दृष्टान्तोपपादकवाक्येषु उपलम्भादपि ॥

335. प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः (३-२-२१) हि—यतः प्रकृतैतावत्त्वं—मूर्तामूर्तरूपात्मकपूर्वप्रकान्तविशेषवत्ताकृता या इयत्ता तावन्मात्रम्, प्रतिषेधति—'नेति नेति' इति श्रुतिः निषेधति, ततो भूयः—तदपेक्षया अधिकगुणयोगित्वमपि ब्रवीति च—'न ह्येतस्मादिति' इत्यादिना श्रुतिरपि प्रतिपादयत्येव खलु ॥

336. तदव्यक्तमाह हि (३-२-२२) तत्—ब्रह्म, अव्यक्तम्—प्रमाणान्तराप्रज्ञातमिति, आह हि—' न सन्दृशे तिष्ठति रूपमस्य, इति श्रुतिरेव दृढं वदति खलु ॥

337. अपि संराधने प्रत्यक्षानुमानाभ्याम् (३-२-२३) अपि—अपि च, संराधने—सम्यक्प्रीतियुक्ते भजने, उपासने कृते सत्येव, तत्—ब्रह्म, साक्षात्क्रियते; नाऽन्यथा इति,

प्रत्यक्षेण—'नाऽयमात्मा....यमेवैष वृणुते तेन लभ्यः' इत्यादिकया श्रुत्या, अनुमानेन—'भक्त्या त्वनन्यया शक्यः' इति स्मृत्या च ज्ञाप्यते ॥

338. **प्रकाशादिवच्चाऽवैशेष्यं प्रकाशश्च कर्मण्यभ्यासात् (३-२-२४)** प्रकाशादिवत्—(ब्रह्मणः) ज्ञानानन्दादिस्वरूपवत्, अवैशेष्यम्—(मूर्तामूर्तात्मक प्रपञ्चवैशिष्ट्यस्याऽपि परमात्मधर्मत्वे) वैषम्याभावः, (वामदेवादीनां साक्षात्कारे प्रतीयते) प्रकाशश्च—ब्रह्मस्वरूपदर्शनं तु, कर्मणि—संराधनात्मके कर्मणि, अभ्यासात्—असकृदावृत्तिरूपात् नैरन्तर्यात् भवतीति ज्ञायते ॥

339. **अतोऽनन्तेन तथा हि लिङ्गम् (३-२-२५)** अतः—उक्तैर्हेतुभिः, अनन्तेन—ब्रह्मणः निरवधिकेन कल्याणगुणेन योगः, (सिद्धो भवति) तथा हि—तथा सति हि, लिङ्गम्—ब्रह्म उभयलिङ्गमेव भवति ॥

८०. अहिकुण्डलाधिकरणम् (३-२-६) (सू. २६-२९)

340. **उभयव्यपदेशात्त्वहिकुण्डलवत् (३-२-२६)** (ब्रह्मणः जगद्रूपेण अवस्थानम्), अहिकुण्डलवत्—सर्पभावमाश्रितस्यैव सर्पस्य, कुण्डलभाव (वर्तुलत्व) ऋजुभावोभयवत् (ब्रह्मभाववत एव सर्वप्रपञ्चभावात्मकम् इति ज्ञायते), उभयस्य—नानात्वैकत्वोभयस्य, व्यपदेशात्—'अनेन जीवेनाऽऽत्मना' इति, 'ब्रह्मैवेदं सर्वम्' इति च श्रुतिस्थस्य व्यपदेशस्य उपपादनीयत्वात् ॥

341. **प्रकाशाश्रयवद्वा तेजस्त्वात् (३-२-२७)** वा—अथवा, तेजस्त्वात्—तेजस्त्वात्मकैकजात्याश्रयत्वात्, प्रकाशाश्रयवत्—प्रभा-प्रभावतोः यथा भेदसहं तादात्म्यम् तथा, (जगद्ब्रह्मणोरपि अवस्थाविशेषयोगकृतभेदसहं तादात्म्यम्) ॥

342. **पूर्ववद्वा (३-२-२८)** पूर्ववद्वा— पूर्वं अंशाधिकरणे निर्णीते जीवे इवैव (अचिदात्मके जगत्यपि परमात्मानं प्रति पृथक्सिद्ध्यनर्हविशेषणत्वकृतः अंशत्वव्यवहारः अभेद व्यपदेशप्रयोजकः, (तथा) स्वरूप-स्वभाववैलक्षण्यकृतः पृथक्पदार्थत्वव्यवहारः भेदव्यपदेशप्रयोजकः इति व्यपदेशद्वयमपि मुख्यमेव) ॥

343. **प्रतिषेधाच्च (३-२-२९)** प्रतिषेधाच्च—अचेतनधर्माणां जरामरणादीनां परमात्मनि अभावस्य 'स वा ....अजरोऽमरः' इति श्रुत्या ज्ञापनादपि हेतोः, (ब्रह्मणो जगद्रूपत्वं न अपुरुषार्थावहम्) ॥

## ८१. पराधिकरणम् (३-२-७) (सू. ३०-३६)

344. **परमतस्सेतून्मानसम्बन्धभेदव्यपदेशेभ्यः** (३-२-३०) **अतः**—शास्त्रारम्भतः एतदन्तं परमकारणतया निर्णीतात् अस्मात् परस्मात् ब्रह्मणोऽपेक्षया, **परम्**—उत्कृष्टमपि किञ्चित् तत्त्वम् अस्ति ; **सेतुव्यपदेशात्**—'एतं सेतुं तीर्त्वा' इति परमात्मनः सेतुत्वव्यपदेशपूर्वकं तरितव्यत्वज्ञापनात्, **उन्मानव्यपदेशात्**—'चतुष्पात् ब्रह्म' इति पादचतुष्टयात्मकप्रमाणपरिमितत्वव्यपदेशपूर्वकं अपरिमितवस्त्वन्तरसत्तायाः ज्ञापनात्, **सम्बन्धव्यपदेशात्**—जीवात्मनः प्राप्यं स्थानान्तरं प्रति प्रापयितृत्वस्य 'अमृतस्यैष सेतुः इति कथनेन जीवेश्वरयोः जीवप्राप्यामृतत्वप्रापकत्वरूपसम्बन्धकथनपूर्वकं एतदितरस्य प्राप्यत्वज्ञापनात्, **भेदव्यपदेशात्**—सर्वत्र पूर्णवस्त्वपेक्षया अन्यस्मिन् वस्तुनि भेदस्य 'ततो यदुत्तरतरम्' इत्यादिना व्यपदेशादपि ज्ञापकात् ॥

345. **सामान्यात्तु** ॥ (३-२-३१) **सेतुव्यपदेशः**—परमात्मनि 'स सेतुः' इति सेतुपदव्यवहारः, **सामान्यात्तु**—विधृतिरूपात् सेतुसादृश्यादेव, (असाङ्कर्येण सर्वपदार्थस्वभावसंरक्षणकृतसेतुसाम्यवत्वात् ॥

346 **बुद्ध्यर्थः पादवत्** ॥ (३-२-३२) **उन्मानव्यपदेशः**—'चतुष्पाद्ब्रह्म' इत्यादिषु ब्रह्मणः यत्किञ्चित्प्रमाणपरिमितत्वव्यवहारः, **पादवत्**—'वाक् पादः' इत्यादिना ब्रह्मणि अखण्डे वागादीनां पादत्वव्यवहार इव, **बुद्ध्यर्थः**—उपासनफलकः, (न तु परिच्छिन्नत्वद्योतनफलकः ।

347. **स्थानविशेषात् प्रकाशादिवत्** (३-२-३३) **उन्मानव्यपदेशः**—अखण्डस्य पूर्णस्य परमात्मनः वागादिस्थानानां कल्पनेन परिच्छिन्नत्वव्यपदेशः, **स्थानविशेषात्**—वागादिस्थानविशेषात्मकोपाधिसम्बन्धात् सम्भवति, **प्रकाशादिवत्**—सर्वत्र विततस्याऽपि आकाशप्रकाशादेः यथा वातायनघटादिस्थानसम्बन्धः तद्वत् ॥

348. **उपपत्तेश्च** ॥ (३-२-३४) ('अमृतस्यैष सेतुः' इति प्राप्यप्रापकभावात्मकस्य अतिरिक्तताज्ञापकत्वाभिमतस्य सम्बन्धस्य व्यपदेशोऽपि), **उपपत्तेश्च**—(स्वस्यैव स्वं प्रति प्रापकत्वस्य 'यमेवैष वृणुते' इति श्रुतिज्ञाप्यस्य) एकस्मिन्नेव अबाधेन सम्भवादपि हेतोः युज्यत इति, सः न अतिरिक्तत्वज्ञापकः ॥

349. **तथाऽन्यप्रतिषेधात्** ॥ (३-२-३५) **अन्यस्य**—जगत्कारणतया प्रतिपादितात्

ब्रह्मणोऽन्यस्याऽधिकस्य, प्रतिषेधात्—' यस्मात्परं नाऽपरमस्ति ' इत्यादिना अभावबोधनात्, तथा—' ब्रह्मणः परं नाऽस्ति ; ब्रह्मैव परम् ' इत्येव सम्यक् ।।

350. अनेन सर्वगतत्वमायामशब्दादिभ्यः ।। (३-२-३६) अनेन—परब्रह्मणा, सर्वगतत्वम्—सर्वस्य जगतः व्याप्तत्वम्, आयामशब्दादिभ्यः—सर्वव्याप्तिवाचिना ' तेनेदं पूर्णं पुरुषेण सर्वम् ' इत्यादिना श्रुतिवाक्येन (तथा) ब्रह्मैवेदं सर्वम् ' इत्यादिना च विज्ञायते ।।

८२. फलाधिकरणम् (३-२-८) (सू. ३७-४०)

351. फलमत उपपत्तेः (३-२-३७) अतः—कर्मोपासनाभ्याम् आराधितात् परस्मात् ब्रह्मण एव, फलम्—भोगापवर्गात्मकं द्विविधमपि फलम्, (जीवस्य सिध्यति) उपपत्तेः—सर्वेश्वरे परस्मिन् ब्रह्मण्येव अच्युते कर्मभिराराधिते सर्वफलप्रदातृत्वस्य अबाधेन अन्वयात् ।।

352. श्रुतत्वाच्च ।। (३–२–३८) अतः—परस्मात् ब्रह्मण एव, फलम्—भोगापवर्गाख्यं फलम् सम्पद्यते, श्रुतत्वाच्च—' एष ह्येवाऽनन्दयाति ' इति आनन्दमयस्य परमात्मन एव आनन्दयितृत्वस्य श्रुतौ पठनादपि ज्ञापकात् ।।

353. धर्मं जैमिनिरत एव ।। (३-२-३९) जैमिनिः—जैमिनिनामा आचार्यः, धर्मम्—यागोपासनादिक्रियारूपं चोदनाचोदितम् अर्थमेव, भोगापवर्गाख्यफलप्रदानसमर्थं मन्यते, अत एव—फलप्रदानयोग्यतायाः अपूर्वद्वारा धर्मे एवोपपत्तेः ।।

354. पूर्वं तु बादरायणो हेतुव्यपदेशात् (३-२-४०) बादरायणः—बादरायणनामा आचार्यस्तु, पूर्वं तु—पूर्वोक्तं परमपुरुषस्यैव फलप्रदत्वमेव मन्यते, हेतोः—आराध्यस्यैव फलहेतुतायाः ; व्यपदेशात्—'स एवैनं भूतिं गमयति ' इति श्रुत्यादिषु स्पष्टं कथनात् ज्ञापकात् ।।

।। इति तृतीयाध्याये द्वितीयः पादः ।।

———

॥ तृतीयः पादः ॥ [अधि. २६, सू, ६४]

८३. सर्ववेदान्तप्रत्ययाधिकरणम् (३-३-१) (सू. १-५)

355. सर्ववेदान्तप्रत्ययं चोदनाद्यविशेशात् (३-३-१) सर्ववेदान्तप्रत्ययम्—विविधवेदशाखागतासु विविधासूपनिषत्सु प्रतीयमानं दहरवैश्वानरादिरूपं ब्रह्मोपासनम्, एकमेव; न नाना,

**चोदनादेः**—चोदना-संयोग-रूप-आख्यानाम् , **अविशेषात्**—समानत्वात् ॥

356. **भेदान्नेति चेदेकस्यामपि** ((३-३-२) **भेदात्**—अविशेषपुनःश्रुत्या भेदस्याव-गमात् , **न**—दहरादिनां विद्यानाम् ऐक्यं न भवति, **इति चेत्**—एवं कथनं तु, न सम्यक् ; **एकस्यामपि**—एकत्वेन अविप्रतिपन्नायामपि विद्यायाम् , **भेदात्**—प्रतिपत्तॄणां भेदात् (शाखान्तरे अविशेषपुनःश्रवणं सार्थकं सत् विद्याभेदं न नियमयति) ॥

357. **स्वाध्यायस्य तथात्वे हि समाचारेऽधिकाराच्च सववच्च तन्नियमः** (३-३-३) **स्वाध्यायस्य**—परम्परायातस्य अध्येयशाखाविशेषस्य, **तथात्वे हि**—तथात्वसिद्ध्यर्थं हि, अध्ययनजन्यसंस्कारभाक्त्वसिद्ध्यर्थं हि, **तन्नियमः**—आथर्वणिकेषु शिरसि अङ्गारपात्रधारण-रूपस्य व्रतविशेषस्य अध्ययनाङ्गतया अध्येतॄणां नियमः ; न उपासितॄणां नियमः, **समाचारे**—समाचाराख्ये आथर्वणिकानां ग्रन्थविशेषे, **अधिकारात् च**— 'वेदव्रत' शब्देन शिरोव्रतस्य प्रस्तावादपि, (चकारात् ) 'नैतदचीर्णव्रतोऽधीयीत' इति मुण्डकान्ते व्रतानुष्ठानस्याऽध्ययनप्राग्भा-वितानियमोक्तेरपि ज्ञायते, (तथा) **सववच्च**—सवनामकेषु आथर्वणिकैकाग्निसम्बन्धिषु होमे-ष्विव च, (तस्मात् न नियमविशेषकृतो विद्याभेदः) ॥

358. **दर्शयति च**—(३-३-४) (श्रुतिः उपासनस्य सर्ववेदान्तप्रत्ययत्वम् ) **दर्शयति च**—'दहं.........स्तदुपासितव्यम्' इत्येवंरूपा तैत्तिरीयश्रुतिरपि स्पष्टं प्रकाशयति च ॥

359. **उपसंहारोऽर्थाभेदाद्विधिशेषवत्समाने च** (३-३-५) **समाने च**—सर्वेष्वपि वेदान्तेषु दहराद्युपासने अभिन्ने, एकत्ववति सति, **समाने**—अभिन्ने तस्मिंतस्मिन् उपासने, **उपसंहारः**—वेदान्तान्तरे उपास्यधर्मतया श्रुतानां गुणानामुपास्यतावच्छेदकतया स्वीकारः कार्यः; **अर्थाभेदात्**—उपकारात्मकस्य प्रयोजनस्य एकरूपत्वात् , **विधिशेषवत्**—तत्तद्विद्याविधिशेषतया तत्तद्विद्यायां विहितगुणानामिव ॥

### ८४. अन्यथात्वाधिकरणम् (३-३-२) (सू. ६–९)

360. **अन्यथात्वं शब्दादिति चेन्नाऽविशेषात्** (३-३-६) **अन्यथात्वम्**—(वाजिनां छन्दोगानां च उद्गीथविद्ययोः) रूपभेदो वर्तते, **शब्दात्**—एकत्र उद्गीथे प्राणदृष्टिबोधकात् , अपरत्र उद्गातरि प्राणदृष्टिबोधकाच्च श्रुतिरूपात् शब्दात्, (अतः उद्गीथविद्ययोर्भेदः) **इति चेत्**—एवं शङ्कनं तु **न**—युक्तं न भवति, **अविशेषात्**—'उद्गीथेनाऽत्ययाम' 'उद्गीथ-माजह्रुः' इति उद्गीथशब्दे उपास्यबोधके विशेषाभावात् विद्ययोरैक्यम् इति)।

**361. न वा प्रकरणभेदात् परोवरीयस्त्वादिवत्** (३-३-७) **न वा**—अविशेषं हेतूकृत्य विद्यैक्योपपादनं) नैव सङ्गतम् ; **प्रकरणभेदात्**—(उद्गीथावयवभूतप्रणवप्रस्तावेन उद्गीथोपासनं, प्रणवोपासनम्, प्रणवमप्रस्तुत्य कृत्स्नस्य उद्गीथस्य प्रस्तावेन उद्गीथोपासनं न प्रणवस्योपासनम् ; किन्तु उद्गीथस्यैव, इति) प्रस्तावभेदात्, उपास्यस्वरूपे भेदोऽस्त्येवेति न उपासनैक्यम्, **परोवरीयस्त्वादिवत्**— यथा उद्गीथावयवभूते प्रणवे हिरण्मयपुरुषदृष्टिविधानं क्वचित्, अन्यत्र परोवरीयस्त्वादिगुणविशिष्टदृष्टिविधानमिति एकशाखागते एव उद्गीथोपासने, परमात्मदृष्टित्वाविशेषेऽपि रूपभेदात् भेदः, तद्वत् विशेषस्यैव वक्तव्यत्वात् ॥

**362. संज्ञातश्चेत्तदुक्तमस्ति तु तदपि** (३-३-८) **संज्ञातः**—'उद्गीथविद्या' इति एकसंज्ञारूपात् ज्ञापकात्, **तत्**—विधेयभूतोद्गीथोपासनयोः अभिन्नत्वम्, **उक्तम्**—अस्माभिर्वर्णितम्, **चेत्**—इत्येवं शङ्कनं तु, **न वा**—नैव समञ्जसम्, (यतः) **तदपि**—कर्मकाण्डीये नित्याग्निहोत्रे मासाग्निहोत्रे च विधेयभेदेऽपि 'अग्निहोत्रम्' इति संज्ञैक्यमपि, **अस्ति तु**—वर्तत एव खलु ॥

**363. व्याप्तेश्च समञ्जसम्** ॥ (३-३-९) **व्याप्तेश्च**—(छान्दोग्यप्रथमप्रपाठकस्थोद्गीथविद्यासु उपक्रमे इव अन्तेऽपि उद्गीथावयवप्रणवस्यैव) उपास्यत्वसम्बन्धादपि, **समञ्जसम्**—तन्मध्यपतिते 'देवा उद्गीथमाजह्रुः' इत्यस्मिन् उद्गीथशब्देऽपि प्रणवविषयकत्वमेव युक्ततमम् ॥

### ८५. सर्वाभेदाधिकरणम् (३-३-३)

**364. सर्वाभेदादन्यत्रेमे** (३-३-१०) **अन्यत्र**—कौषीतकिनां प्राणविद्यायामपि, **इमे**—प्राणविशेषणीभूताः वसिष्ठत्वादयो गुणाः (उपसंहर्तव्या भवन्ति) ; **सर्वाभेदात्**—प्राणे ज्येष्ठ्यश्रैष्ठ्यप्रतिपादनोपयोगिनां) सर्वेषामपि प्रकाराणाम् (एकरूपतायाः दर्शनात् ॥

### ८६. आनन्दाद्यधिकरणम् (३-३-४) (सू. ११-१७)

**365. आनन्दादयः प्रधानस्य** (३-३-११) **प्रधानस्य**—गुणिनः, उपासनविशेष्यभूतस्य ब्रह्मणः, **अभेदात्**—सर्वेष्वप्युपासनेषु एकत्वात्, गुणानां च गुण्यपृथग्भावात्, **आनन्दादयः**—आनन्दत्व-सत्यत्व-ज्ञानत्व-अनन्तत्वरूपाः ब्रह्मासाधारणाः गुणाः, (सर्वासु विद्यासु उपसंहार्याः) ॥

**366. प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे** (३-३-१२) **प्रियशिरस्त्वादीनाम्**-'तस्य प्रियमेव शिरः' इत्याद्युक्तानां प्रियाख्यसुखविशेषशिरस्कत्वादीनां ब्रह्मगततया प्रतिपन्नानां धर्माणाम्, **अप्राप्तिः**—सर्वासु विद्यासु उपसंहाराभावः ; (तेषां ब्रह्मगुणत्वाभावात्) **भेदे हि**—

शिरःपक्षपुच्छादिरूपे मिथोऽव्यावृत्ते विशेषेऽपि ब्रह्मस्वरूपान्तर्भूते सति हि, **उपचयापचयौ**—(ब्रह्मस्वरूपेऽपि) श्रुतिविरुद्धौ वृद्धि-ह्रासौ प्रसज्येयाताम् ॥

367. **इतरे त्वर्थसामान्यात्** (३-३-१३) **इतरे तु**—आनन्दादयः ब्रह्मस्वरूपनिरूपका धर्मास्तु, (सर्वविद्यासूपसंहार्या एव), **अर्थसामान्यात्**—सर्वविद्यासु उपास्यः ब्रह्मरूपो योऽर्थः तस्य समानत्वात् ॥

368. **आध्यानाय प्रयोजनाभावात्** (३-३-१४) (प्रियशिरस्त्वादिरूपणम्) **आध्यानाय**—अनुचिन्तनसिद्ध्यर्थमेव, **प्रयोजनाभावात्**—(अनुचिन्तनोपयोगिवुद्ध्यारोहातिरिक्तस्य) प्रयोजनस्य विरहात् ॥

369. **आत्मशब्दाच्च** (३-३-१५) **आत्मशब्दाच्च**—(प्रियशिरस्त्वादिना रूपिते आनन्दमये उपास्ये) 'आत्म'शब्दस्य अन्योन्तर आत्मानन्दमयः' इति व्यपदेशादपि ज्ञापकात्, (प्रियशिरस्त्वादिः न ब्रह्मस्वरूपनिरूपको धर्मः); किन्तु अनुचिन्तनार्थ एव ॥

370. **आत्मगृहीतिरितरवदुत्तरात्** (३-३-१६) **आत्मगृहीतिः**—'अन्योऽन्तर आत्मा' इति 'आत्म'शब्देन परमात्मन एव ग्रहणम्, **इतरवत्**—'आत्मा व इदमेक एव' इत्यादिना अन्येनान्येन आत्मशब्देन परमात्मनः ग्रहणवत्, **उत्तरात्**—आनन्दमयविषयात् 'सोऽकामयत' इत्याद्युत्तरवाक्याज्ज्ञापकात् ॥

371. **अन्वयादिति चेत्; स्यादवधारणात्** (३-३-१७) **अन्वयात्**—(प्राणमयादि-वाक्येषु) अनात्मस्वपि आत्मशब्दान्वयात् (उत्तरवाक्येन न आत्मशब्दस्य परमात्मपरताज्ञप्तिः) **इति चेत्**—एवं शङ्कनं तु न युक्तम् **अवधारणात्**—सर्वत्र तत्प्रकरणस्थेन आत्मशब्देन परमात्मैव गृह्यते इति निर्णयात्, **स्यात्**—उत्तरवाक्यस्य तज्ज्ञापकता सिद्ध्येदेव ॥

## ८७. कार्याख्यानाधिकरणम् (३-३-५)

372. **कार्याख्यानादपूर्वम्** (३-२-१८) **अपूर्वम्**—अप्राप्तम् पूर्वं प्रमाणान्तरेणाऽज्ञातम्, (आचमनीयासु अप्सु प्राणाच्छादकवासस्त्वानुसन्धानम्, 'किं मे वासः?........आप' इति' 'आपो वासः' इत्यत्र विधीयते) **कार्यस्य**—अप्राप्तस्यैवाऽर्थस्य, **आख्यानात्**—विधानस्य श्रुतिस्वाभाव्यात्, (आचमनस्य तु स्मृत्याचाररूपप्रमाणान्तरप्राप्ततया अपूर्वत्वाभावात् ।

## ८८. समानाधिकरणम् (३-३- ६)

373. **समान एवं चाऽभेदात् (३-३-१९) एवं च**—यथा अग्निरहस्ये एवं बृहदारण्यकेऽपि, **समाने**—उपास्यस्य ब्रह्मणो गुणभूते मनोमयत्वादौ अभिन्ने सति, **अभेदात्**—अधिकस्य वशित्वादेः सत्यसङ्कल्पत्वाभेदात् , (रूपभेदाभावेन उभयत्र पाठेऽपि शाण्डिल्यविद्यायाः ऐक्यमेव ।।

## ८९. सम्बन्धाधिकरणम् (३-३-७) (सू. २०-२२)

374. **सम्बन्धादेवमन्यत्राऽपि (३-३-२०) एवम्**—समानगुणविशिष्टस्य उपास्यस्य समानत्वे विद्यैक्यवत्, **अन्यत्रापि**—अक्ष्यादित्योभयाधिष्ठानके ब्रह्मणि उपास्येऽपि, **सम्बन्धात्**—एकस्यैव सत्यस्य ब्रह्मणः अक्ष्यादित्याख्यस्थानद्वयसम्बन्धात् , (रूपभेदाभावेन विद्याया अप्यभेदात् 'अहः' 'अहम्' इति द्वयोरपि नाम्नोः अनियमेन उभयोरप्युपासनयोः उपसंहारः) ।।

375. **न वा विशेषात् (३-३-२१) न वा**—(विद्याया ऐक्यत् उभयोरप्यहरहं नाम्नोः उभयत्रोपसंहारः) इत्येतन्न सम्भवति, **विशेषात्**—विद्याभेदकस्य उपास्यगतरूपभेदस्य अक्ष्यादित्यस्थानात्मकस्य स्पष्टं प्रतीतेः ।।

376. **दर्शयति च (३-३-२२) दर्शयति च**—(अक्ष्याधारे, आदित्याधारे च ब्रह्मणि उपास्ये मिथो गुणोपसंहाराभावं) श्रुतिः स्फुटं प्रतिपादयति खलु. ('तस्यैतस्य तदेव रूपं यत् अमुष्य रूपम्' इति रूपातिदेशेन) अतो विद्याभेद एव अत्रेति ।।

## ९०. सम्भृत्यधिकरणम् (३-३-८)

377. **सम्भृति-द्युव्याप्त्यपि चाऽतः (३-३-२३) अतः**–उपासनेषु हृदयादिस्थानविशेषसम्बन्धनियमादेव, **सम्भृति-द्युव्याप्त्यपि च**—'ब्रह्म ज्येष्ठा वीर्या सम्भृतानि' इति अतिप्रशस्तानां विचित्रशक्तीनाम् एकत्रमेलनमुक्तम् (तथा) तत्रैव 'दिवमाततान' इत्युक्तं द्युव्यापनमपि च ब्रह्मगुणभूतम् , उपासनभेदनियतमेव ; न तु सर्वत्रोपसंहार्यम् ।।

## ९१. पुरुषविद्याधिकरणम् (३-३-९)

378. **पुरुषविद्यायामपि चेतरेषामनाम्नानात् (३-३-२४) पुरुषविद्यायामपि च**—तैत्तिरीये आम्नातायां, तथा छान्दोग्ये च आम्नातायामपि 'तस्यैवं विदुषो यज्ञस्य' इति, 'पुरुषो

वाव यज्ञः' इतीदृश्यां च पुरुषविद्यायाम्, (रूपभेदायत्तः विद्याभेदः अस्त्येव) इतरेषाम्—अन्यशाखोदितानां यजमान-पत्न्यादिरूपाणाम्, तथा सवनादीनां च, अनाम्नानात्—इतरासु शाखासु अप्रतिपादनात् ॥

९२. वेधाद्यधिकरणम् (३-३-१०)

379. **वेधाद्यर्थभेदात्** (३-३-२५) अध्ययनारम्भे अधीयमानाः मन्त्राः अध्ययनाङ्गभूताः एव; न विद्याङ्गभूताः, **वेधाद्यर्थभेदात्**—शुक्रं प्रविध्य हृदयं प्रविध्य' इत्याद्युक्तेषु शत्रुवीर्यहृदय-विदारणादिष्वर्थेष्विव 'शंनो मित्रः' इत्यादिमन्त्रगतेषु अध्ययनसम्बन्धादिरूपेष्वर्थेष्वपि भेदस्य सुस्थत्वात् ॥

९३. हान्यधिकरणम् (३-३-११)

380. **हानौ तूपायनशब्दशेषत्वात् कुशाच्छन्दस्स्तुत्युपगानवत्तदुक्तम्** (३-३ २६) **हानौ तु**—श्रुतौ (सिद्धोपासनस्य विदुषः देहादुत्क्रमणदशायां) तत्सम्बन्धिपुण्यपापयोः केवले विमोचने, अन्यत्र सङ्क्रमणे वा केवले श्रूयमाणे सति तु, (तयोः मिथः समुच्चयः नियतश्चिन्त-नीयः ; न विकल्पः) उपायनशब्दस्य—'तस्य पुत्रा दायमुपयन्ति' इत्येवमादेः सङ्क्रमबोधक-वाक्यस्य, शेषत्वात्—'विद्वान् पुण्यपापे विधूय' इत्यादिरूपपुण्य-पापहानिबोधवाक्यं प्रति शेषत्वात्, तदर्थप्रतिपादनौपयिकत्वात्, (कथमिव) कुशावत्—'औदुम्बर्यः कुशाः' इतिवाक्यस्य कुशेषु-तन्नामककाष्ठविशेषेषु उदुम्बरप्रतिकत्वरूपविशेषाभिधायिनःप्रदेशान्तरस्थं'वानस्पत्याःकुशाः' इति सामान्यतः वनस्पतिप्रकृतिकत्वाभिधायि वाक्यं प्रति शेषत्ववत्, छन्दोवत्—'देवछन्दांसि पूर्वम्' इत्यस्य छन्दःक्रमविशेषवाचिनो वाक्यस्य प्रदेशान्तरस्थं 'देवासुराणां छन्दोभिः' इति वाक्यं प्रति शेषत्ववत्, स्तुतिवत्—'समयाविषिते सूर्ये षोडशिनः स्तोत्रमुपाकरोति' इति स्तुतौ कालविशेषबोधकस्य वाक्यस्य, प्रदेशान्तरस्थं 'हिरण्येन षोडशिनः स्तोत्रमुपाकरोति' इति वाक्यं प्रति शेषत्ववत्, उपगानवत्—'नाऽध्वर्युरुपगायेत्' इति उपगाने अध्वर्युकर्तृकत्वनिषेधपर-वाक्यस्य प्रदेशान्तरस्थं 'ऋत्विज उपगायन्ति' इति वाक्यं प्रति शेषत्ववच्च, तत्—सति सम्भवे विकल्पानाश्रयणम्, उक्तम्—पूर्वास्मिन् काण्डे कर्ममीमांसाभागे जैमिनिना प्रतिपादितम्। (पू. मी. सू. १०-८-४) ॥

९४. साम्परायाधिकरणम् (३-३-१२) (सू. २७-३१)

381. **सांपराये तर्तव्याभावात्तथा ह्यन्ये** (३-३-२७) (पूर्वमुक्तं विदुषा कर्तव्यं हानो-पायनचिन्तनम्,) **सांपराये**—देहवियोगकाले एव, **तर्तव्याभावात्**—देहवियोगादूर्ध्वं

तरितव्यस्य कस्याऽपि भोगशेषस्य अभावात् ; अन्ये—छन्दोगाः, तथा हि—उक्तया रीत्यैव, अधीयते—'तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ सम्पत्स्ये' इति पठन्ति ॥

382. **छन्दत उभयाविरोधात् (३-३-२८) उभयाविरोधात्**—'अश्व इव रोमाणि विधूय पापम्' इति, 'तस्य तावदेव चिरम्' इति च द्वयोः श्रुत्योः विरोधाभावं सञ्चिन्त्य, **छन्दतः**—इच्छानुरोधेन (तत्सुकृत-दुष्कृते धूनुते' इति वाक्यगण्डः सङ्क्रमनीयः ; 'एतं देवयानम्' इति वाक्यात् प्राक् योजयितव्यः) ॥

383. **गतेरर्थवत्त्वमुभयथाऽन्यथा हि विरोधः (३-३-२९) गतेः**—देवयानेन पथा विदुषो गतिश्रुतेः, **अर्थवत्त्वम्**—सप्रयोजनत्वम्— **उभयथा**—देहवियोगकाले अध्वनि चेति द्वय्या रीत्या कर्मक्षयाङ्गीकारे एव युज्यते, **अन्यथा**—देहवियोगकाले एव सर्वकर्मक्षयाङ्गीकारे सति, **विरोधो हि**—देवयानगतिश्रुतेः व्याघातो हि प्रसज्यते ॥

384. **उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत् (३-३-३०)** (अन्यथाऽपि—देहवियोगकाले एव सर्वकर्मणां क्षयेऽपि), **उपपन्नः**—(भगवन्तमुपासीनानां देवयानगतिविधिः, सङ्गत एव) **तल्लक्षणार्थस्य**—अकर्मलभ्यजातीयस्य अर्थस्य, **उपलब्धेः**—'स स्वराड् भवति' इत्यादिश्रुत्या तस्मिन् अवगमात्, **लोकवत्**—लोकदृष्टनरेन्द्रोपासके पुरुषे यथा प्राकृतपुरुषसाधारण्यंविना अचिन्तितानां भोगानामपि सम्भवः, तद्वत् ॥

385. **यावदधिकारमवस्थितिराधिकारिकाणाम् (३-३-३१) आधिकारिकाणाम्**—कर्मविशेषेण अधिकारविशेषं प्राप्तानां ज्ञानिनामपि वसिष्ठादीनाम्, **यावदधिकारम्**—कर्मलब्धाधिकारसमाप्तिं यावत्, **अवस्थितिः**—अधिकारे अवस्थानमेव ; न देहपातानन्तरमेव अर्चिरादिका गतिः ॥

### ९५. अनियमाधिकरणम् (३-३-१३)

386. **अनियमः सर्वेषामविरोधः शब्दानुमानाभ्याम् (३-३-३२) सर्वेषाम्**—सर्वविद्योपासननिष्ठानामपि, उपकोसलादिविद्योक्ता अर्चिरादिकागतिः अस्ति (अतः) **अनियमः**—उपकोसलविद्यानिष्ठानामेवेति नियमाभावः, (एवं सत्येव च) **शब्दानुमानाभ्याम्**—'ये चेमेऽरण्ये' इत्यादिश्रुत्या, 'अग्निर्ज्योतिरहः शुक्लः' इति स्मृत्या च सह, **अविरोधः**—विरोधाभावः ॥

### ९६. अक्षरध्यधिकरणम् (३-३-१४) (सू. ३३, ३४)

387. **अक्षरधियां त्ववरोधः सामान्य-तद्भावाभ्यामौपासदवत्तदुक्तम् (३-३-३३)**

**अक्षरधियाम्**—अक्षरपरब्रह्मसम्बन्धिनीनाम् 'अस्थूलमनणु' इत्युक्तधर्मप्रकारकधियाम्, **अवरोधस्तु**—सर्वास्वपि विद्यासु सङ्ग्रहणम् कार्यमेव, **सामान्य-तद्भावाभ्याम्**—ब्रह्मणः उपास्यस्य सर्वासु विद्यासु एकत्वात्, (तथा) तासां सर्वासां धियां ब्रह्मानुसन्धाने अन्तर्भावाच्च, **औपसदवत्**—उपसदाख्यकर्माङ्गभूतमन्त्रवत्, (गुणानां प्रधानानुवर्तित्वात् तस्य सामवेदपठितत्वेन 'उच्चैः साम्नः' इत्युक्तस्य उच्चैष्ट्वस्य आवश्यकत्वेऽपि याजुर्वेदिकोपसत्कर्माङ्गत्वेन 'उपांशु यजुषा' इत्युक्तोपांशुस्वरप्राप्तिवत्) **तत्**—गुणानां प्रधानानुवर्तित्वम्, **उक्तम्**—कर्मकाण्डे पूर्वमीमांसायां 'गुणमुख्यव्यतिक्रमे (पू.मी.सू. ३-३-९) इत्यत्र स्पष्टीकृतम् ॥

388. **इयदामननात् (३-३-३४) इयत्**—(सर्वविद्यासु ब्रह्मसम्बन्धितया अनुसन्धेयम्) एतावदेव; **आमननात्**—ब्रह्मण आभिमुख्येन मननात्—ब्रह्मानुसन्धानरूपत्वात् हेतोः (यावद्गुणजातं विना ब्रह्मानुसन्धानमेव न निष्पद्यते तावन्मात्रम् अनुसन्धेयम् इत्यर्थः) ॥

### ९७. अन्तरत्वाधिकरणम् (३-३-१५) (सू. ३५-३७)

389. **अन्तराभूतग्रामवत् स्वात्मनोऽन्यथा भेदानुपपत्तिरिति चेन्नोपदेशवत् (३-३-३५) अन्तरा**—(उषस्तप्रश्ने 'य आत्मा सर्वान्तरः' इति सर्वान्तरत्वेन पृष्टस्य) 'एष त आत्मा सर्वान्तरः' इति प्रतिवचने सर्वान्तरत्वेन निर्देशः, **भूतग्रामवत्स्वात्मनः**—भूतग्रामशब्दिताचेतनान्तर्यामिजीवात्मविषयकः; न परमात्मविषयकः, **अन्यथा**—परमात्मविषयकत्वे, **भेदस्य**—'यः प्राणेन प्राणिति' इति, 'योऽशनायापिपासाद्यतीतः' इति च प्रत्युत्तरद्वयस्य, **अनुपपत्तिः**—असाङ्गत्यम् (उपास्यस्य ब्रह्मणः एकत्वात्) **इति चेत्**—एवं चिन्तनं तु, **न**—नोचितम्, **उपदेशवत्**—सद्विद्यागते श्वेतकेतुं प्रत्युपदेशो 'भूय एव मा भगवान् विज्ञापयतु' इति प्रश्नावृत्तिवत् अत्राऽपि प्रतिवचनभेदस्य सङ्गतत्वात् ॥

390. **व्यतिहारो विशिंषन्ति हीतरवत् (३-३-३६) हि**—यतः, **विशिंषन्ति**—(याज्ञवल्क्यवचनानि एकमेव परमात्मानं सर्वप्राणिप्राणनहेतुत्व-अशनायाद्यतीतत्वादिभिः धर्मैः) प्रत्यगात्मनो व्यावृत्ततया अवगमयन्ति; अतः, **व्यतिहारः**—(ब्राह्मणद्वयश्रुतानाम्) इतरेतरत्र उपसंहारः कर्तव्यः, **इतरवत्**—इतरस्यां सद्विद्यायां सर्वप्रतिवचनगतानां सर्वेषां धर्माणां सर्वत्रोपसंहारवत्, (अतो नाऽत्र विद्याभेदः) ॥

391. **सैव हि सत्यादयः (३-३-३७) हि**—यतः, **सैव**—सच्छब्दाभिहिता परा देवतैव, ('तत्सत्यं स आत्मा' इति सर्वत्रानुवृत्ता') **सत्यादयः**—सत्यत्वादयश्च धर्माः (नवस्वपि खण्डेषु अनुवर्तमानाः उपास्याभेदं बोधयन्तीति, अतः 'इतरवत्' इति पूर्वसूत्रोक्तो दृष्टान्तः सुस्थ एव) ॥

### ९८. कामाद्यधिकरणम् (३-३-१६) (सू. ३८—४०)

392. **कामादीतरत्र तत्र चाऽऽयतनादिभ्यः (३-३-३८) इतरत्र तत्र च**—वाजसनेयके छान्दोग्ये च, **कामादि**—सत्यकामत्वादिविशिष्टं ब्रह्मैव उपास्यम्, (दहरविद्यायाम्) **आयतनादिभ्यः**—हृदयायतनत्व-सत्यसङ्कल्पत्वविशेषरूपवशित्वादिभ्यः(विद्यैक्यप्रत्यभिज्ञानात् ज्ञापकात्)॥

393. **आदरादलोपः (३-३-३९) आदरात्**—श्रुत्येकसमधिगम्यस्य वशित्वादेः ब्रह्मणि आदरेण भूयो भूयः प्रतिपादनादेव, **अलोपः**—दहरविद्यादिषु पठितानां ब्रह्मगुणानामप्रतिषेधः भावनीयः॥

394. **उपस्थितेऽतस्तद्वचनात् (३-३-४०) उपस्थिते**—ब्रह्मोपसम्पन्ने, **अतः**—ब्रह्मोपसम्परेव हेतोः, **तद्वचनात्**—सर्वलोककामचारस्य श्रुतावुक्तत्वात् (सगुणोपासनं न सांसारिकफलप्रदम्)॥

### ९९. तन्निर्धारणानियमाधिकरणम् (३-३-१७)

395. **तन्निर्धारणानियमस्तद्दृष्टेः पृथग्घ्यप्रतिबन्धः फलम् (३-३-४१) तन्निर्धारणस्य**—कर्मसु उद्गीथादेरुपासनस्य, **अनियमः**—नियमेन अनुष्ठानाभावः; **तद्दृष्टेः**—उद्गीथोपासनरहितस्याऽपि क्रत्वनुष्ठानदर्शनात्, **हि**—यतः, **अप्रतिबन्धः**—प्रबलेन कर्मान्तरेण आरब्धस्य क्रतोः प्रतिबन्धाभावरूपं वीर्यवत्तरत्वम्, **पृथक्फलम्**—क्रतुफलापेक्षया अन्यत् फलमिति, (तत्कारणे उद्गीथाद्युपासने कर्माङ्गत्वाभावः)॥

### १००. प्रदानाधिकरणम् (३-३-१८)

396. **प्रदानवदेव तदुक्तम् (३-३-४२) प्रदानवदेव**—त्रैधातवीयेष्टौ इन्द्राख्यस्य यागोद्देश्यदेवतास्वरूपस्य एकत्वेऽपि यथा राजत्व-अधिराजत्व-स्वराट्त्वरूपविशेषणभेदनिबन्धना हविःप्रदानावृत्तिः तद्वत्, दहरविद्यायामपि परमात्मगुणानां पृथक्चिन्तनवेलायां तत्तद्गुणविशिष्टतया परमात्मचिन्तनावृत्तिः कार्यैव ('सति धर्मिणि धर्माश्चिन्त्यन्ते' इति न्यायात्) **तत्**—विशेषणभेदाधीनं पृथक्प्रदानम्, **उक्तम्**—सङ्कर्षकाण्डे—'नाना वा देवता पृथक्त्वात्' इत्यधिकरणे सम्यक् प्रतिपादितम्॥

### १०१. लिङ्गभूयस्त्वाधिकरणम् (३-३-१९)

397. **लिङ्गभूयस्त्वात्तद्धि बलीयस्तदपि (३-३-४३) लिङ्गानाम्**—सर्वपरविद्योपास्यस्य परमात्मनः चिह्नानाम्, **भूयस्त्वात्**—तैत्तिरीयकान्तर्गते 'सहस्रशीर्षम्' इत्यनुवाके बहुतरम्

उपलम्भात् , (अयम् अनुवाकः सर्वपरविद्योपास्यपरतत्वनिर्धारणपरः), तद्धि—लिङ्गमेव हि, बलीयः—वाक्यप्रमाणापेक्षया अतिशयेन बलवत् , तदपि—वाक्यापेक्षया लिङ्गस्य बलीयस्त्वमपि, उक्तम्—कर्मकाण्डे पूर्वमीमांसायाम्—'श्रुतिलिङ्गवाक्य' (पू. मी. सू. ३-३-१४)इत्यत्र सम्यक् प्रतिपादितम् ॥

१०२. पूर्वविकल्पाधिकरणम् (३-३-२०) (सू. ४४-५०)

398. **पूर्वविकल्पः प्रकरणात् स्यात् क्रिया मानसवत्** (३-३-३४) (वाजसनेयकाग्नि-रहस्योक्तः मनश्चितादिः मनोनिष्पाद्योऽप्यग्निः) **क्रिया स्यात्**—क्रियामयक्रत्वनुप्रविष्ट एव भवितुमर्हति ; न विद्यामयक्रत्वनुप्रविष्टः, **प्रकरणात्**—क्रियामयक्रत्वङ्गस्य इष्टकचिताग्नेः पूर्व-प्रकृतत्वात् तत्संनिहितत्वाचास्य मनश्चितादेः, (तथा च) **पूर्वविकल्पः**—पूर्वप्रस्तुतेन इष्टकचिताग्निना विकल्प्यमानश्च भवति अयं मनश्चितादिः, **मानसवत्**—द्वादशाहान्तर्गते विविधवाक्यरहिततया अविवाक्यसंज्ञके दशमेऽहनि श्रतः, मनोनिष्पाद्यस्वरूपत्वात् 'मानस' शब्दवाच्यः ग्रहविशेषो यथा क्रियामयक्रत्वनुप्रविष्टः, तद्वत् , (निदर्शनमिदं विद्यामयस्याऽपि क्रियामयत्वे) ॥

399. **अतिदेशाच्च** (३-३-४५) **पूर्वविकल्पः**—मनश्चितादीनामग्नीनां पूर्वेण इष्टकचि-तेनाऽग्निना साकं विकल्पः, **अतिदेशाच्च**—इष्टकचिताग्निकार्यस्य मनश्चितादौ एकैकस्मिन्नग्नौ अतिदिश्यमानत्वादपि सिध्यति ; (समान एव हि विकल्प्यते । अतः मनश्चितादिः) **क्रिया स्यात्**— क्रियामय एव ॥

400. **विद्यैव तु निर्धारणाद्दर्शनाच्च** (३-३-४६) **विद्यैव**—मनश्चितादिरग्निः विद्यामय-क्रत्वनुप्रविष्ट एव ; न क्रियामयक्रत्वनुप्रविष्टः, **निर्धारणात्**—'ते हैते विद्याचित एव' इति विद्यासम्पाद्यत्वनिर्णयज्ञापनात् , **दर्शनाच्च**— 'मनोमयमक्रियत' इति श्रुतिवचनाच्च ॥

401. **श्रुत्यादिबलीयस्त्वाच्च न बाधः** (३-३-४७) **श्रुत्यादेः**—श्रुतिलिङ्गयोः वाक्यस्य च, **बलीयस्त्वाच**—प्रकरणापेक्षया प्रबलत्वेन, **न बाधः**—'ते हैते विद्याचित एव' इति श्रुत्यावगतस्य विद्यारूपत्वस्य, इष्टकचितत्वप्रकरणेन क्रियामयत्वज्ञापकेन बाधितत्वं न भवति इति विद्यामयत्वमेव ॥

402. **अनुबन्धादिभ्यः प्रज्ञान्तरपृथक्त्ववद्दृष्टश्च तदुक्तम्** (३-३-४८) **प्रज्ञान्त-राणाम्** दहरादिसंज्ञकानाम् इतरासां विद्यानाम् , **पृथक्त्ववत्**—तत्र तत्र श्रूयमाणेभ्यः भेदज्ञापकेभ्यो धर्मेभ्यः भेदसिद्धिवत् , **अनुबन्धादिभ्यः**—यज्ञोपयोगिभ्यो मानसेभ्य एव

ग्रह-स्तोत्र-शास्त्रेभ्यः, तथा श्रुतिलिङ्गवाक्येभ्यश्च ज्ञापकीभूतेभ्यः— पृथक्त्वम् — मनश्चितादेः क्रियामयक्रत्वपेक्षया भेदः अवगम्यते इति विद्यामयक्रतुविधिः अत्र कल्पनीयो भवति ; दृष्टश्च —अर्थवादसदृशेऽपि वाक्ये कल्पितो विधिः, 'यदेव विद्यया करोति' इत्यादौ श्रुतिवाक्ये ज्ञात एव, तत्—अनुवादसरूपेऽपि वाक्ये विधिकल्पनम्, उक्तम्—'वचनानि त्वपूर्वत्वात्' (पू. मी. सू. ३-५-२१) इति कर्ममीमांसासूत्रे प्रतिपादितम् ।।

403. न सामान्यादप्युपलब्धेर्मृत्युवन्न हि लोकापत्तिः (३-३-४९) सामान्यादपि— 'स एष मृत्युः य एष एतस्मिन् मण्डले पुरुषः' इत्यत्र मण्डलपुरुषे मृत्युत्वातिदेशस्य संहर्तृत्वात्मकसमानधर्मसम्बन्धमात्रादपि, उपलब्धेः—दृष्टत्वात्, न—क्रियामयक्रतुप्रवेशरूपविशेषधर्मातिदेशो न भवति, मृत्युवत्—मृत्यौ विद्यमानं सर्वसंहर्तृत्वं खलु तत्राऽतिदिश्यते, तद्वत् अत्राऽपि मनश्चितादेरपि इष्टकचितवदेव फलवत्तायाः अतिदेशः इति, न हि लोकापत्तिः— मण्डलपुरुषे मृत्युलोकापत्तिः न हि अतिदेशेन लभ्यते ।।

404. परेण च शब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबन्धः (३-३-५०) परेण च— अनन्तरवर्तिना च 'अयं वाव लोकः' इत्यादिना ब्राह्मणेन, शब्दस्य—मनश्चिताद्यभिधायिनः शब्दस्य, ताद्विध्यं—तद्विधत्वम्-विद्यामय-प्रतिपादकत्वम् अवगम्यते, अनुबन्धस्तु—मनश्चितादीनां विद्यासंपाद्यानां क्रियाप्रकरणे संयोजनं तु, भूयस्त्वात्—अग्न्यङ्गानां क्रियामयप्रकरणे आधिक्यात् ।।

## १०३. शरीरे भावाधिकरणम् (३-३-२१) (सू. ५१, ५२)

405. एक आत्मनः शरीरे भावात् (३-३-५१) आत्मनः—उपासितुः प्रत्यगात्मनो जीवस्य, शरीरे—देहे, भावात्—वर्तमानत्वात्, (कर्तृत्व-भोक्तृत्वादिविशिष्टमेव स्वस्वरूपम् उपासनवेलायाम् अनुसन्धेयमिति, एके—पूर्वपक्षिणः, (पञ्चाग्निविद्याध्यायिनो वा) मन्यन्ते ।।

406. व्यतिरेकस्तद्भावभावित्वान्न तूपलब्धिवत् (३-३-५२) आत्मनः—उपासितुः प्रत्यगात्मनः, व्यतिरेकः—मुक्तस्वरूपे विद्यमानः सांसारिकस्वरूपाद्विविक्तः निरुपाधिकः अपहतपाप्मत्वादिः आकार एव उपास्यः, न तु—शरीरे विद्यमानस्याकारः नैवाऽनुसन्धेयः, तद्भावे—तादृशोपासनसद्भावे एव, भावित्वात्—व्यतिरिक्तस्य स्वस्वरूपस्य प्राप्स्यमानत्वात्, उपलब्धिवत्—यथावस्थितब्रह्मानुसन्धाननिष्ठस्यैव ब्रह्मस्वरूपसाक्षात्कारलाभवत् ।।

## १०४. अङ्गावबद्धाधिकरणम् (३-३-२२) (सू. ५३, ५४)

407. अङ्गावबद्धास्तु शाखासु हि प्रतिवेदम् (३-३-५३) अङ्गावबद्धाः—क्रत्वङ्ग-

भूतोद्गीथाद्याश्रिताः—क्रत्वङ्गाविनाभाविन्यः उपासनाः, न शाखासु—तत्तदुपासनविधायक-शाखामात्रनियता न भवन्ति ; तु—किन्तु, हि—यतः, अङ्गावबद्धाः—श्रुत्यैव अङ्गमात्रावबद्धाः, (अतः) प्रतिवेदम्—सर्वास्वपि शाखासु अन्विताः भवेयुः ॥

408 मन्त्रादिवद्वाऽविरोधः (३-३-५४) मन्त्रादिवद्वा—एकैकशाखाभिहितानां क्रत्वङ्ग-भूतानां मन्त्राणाम् तन्मन्त्रपाठशून्यशाखान्तरविहिततत्क्रत्वन्वय इव च, अविरोधः—उद्गीथाद्यु-पासनानां शाखान्तरान्वयेऽपि विरोधाभाव एव ॥

१०५. भूमज्यायस्त्वधिकरणम् (३-३-२३)

409 भूम्नः क्रतुवज्ज्यायस्त्वं तथा हि दर्शयति (३-३-५५) भूम्नः—(वैश्वानर-विद्यायां) समस्तोपासनस्य, ज्यायस्त्वम्—श्रैष्ठ्यम्, प्रामाणिकत्वम्, (न व्यस्तोपासनस्य ; एकवाक्यत्वस्यावगमात्) क्रतुवत्—'वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे जाते' इति विहिते क्रतौ ('यदष्टाकपालो भवति' इति, तदेकदेशस्य अनुवाद, इव, अत्राऽपि मूर्धाद्युपासनैक-देशस्य अनुवाद एव कृतः ; न तु व्यस्तोपासनविधानम्। तथाहि दर्शयति—समस्तोपासनम्, व्यस्तोपासनस्यानर्थकत्वं च श्रुतिः स्पष्टयति हि 'मूर्धा ते व्यपतिष्यत्' इत्यादि का ॥

१०६. शब्दादिभेदाधिकरणम् (३-३ २४)

410. नाना शब्दादिभेदात् (३-३-५६) विद्याः—सद्विद्या-दहरविद्याद्याः उपासनात्मिकाः नानापदैर्बोध्या विद्याः, नाना—मिथोभिन्नस्वरूपाः. शब्दादिभेदात्—विधेयभेदहेतूनां शब्दान्त-रादीनां भिन्नानां दर्शनात्। (अतः उपास्यत्रह्मैक्येऽपि उपासनानां भेद एव) ॥

१०७. विकल्पाधिकरणम् (३-३-२५) [सू. ५७, ५८]

411. विकल्पोऽविशिष्टफलत्वात् (३-३-५७) विकल्पः—ब्रह्मप्राप्तिफलानां सद्विद्यादीनां मध्ये एकेन पुरुषेण व्यवस्थया एकस्या एवाऽनुष्ठानम् ; न समुच्चयः, अविशिष्टफलत्वात्—विद्याफलभूते सिद्धोपासनेन पुरुषेण अनुभूयमाने देशकालस्वरूपैः अनवच्छिन्ननिरतिशयानन्द-स्वरूपे ब्रह्मणि विशेषाभावात् (अथवा) विद्यानाम् अविलक्षणब्रह्मा(नुभवा)त्मकैक-फलकत्वात् ॥

412. काम्यास्तु यथाकामं समुच्चीयेरन् न वा पूर्वहेत्वभावात् (३-३५८) काम्यास्तु—ब्रह्मप्राप्तिव्यतिरिक्तफलाः विद्यास्तु, यथाकामम्—यथेष्टम्, समुच्चीयेरन्—एकस्मिन्नेव पुरुषे मिलिता भवेयुः; न वा—विकल्प्येरन् वा, पूर्वहेत्वभावात्—तत्फलस्याऽपरिमितफलत्वाभावात् (काम्यफलकेषु कर्मसु फलभूयस्त्वापेक्षया समुच्चयः सम्भवति इत्यर्थः) ॥

### १०८. यथाश्रयभावाधिकरणम् (३-३-२६) [सू. ५९–६४]

413. अङ्गेषु यथाश्रयभावः (३-३-५९) अङ्गेषु—कर्माङ्गेषु उद्गीथादिषु, आश्रिततया वर्तमानानाम् उपासनानाम्, यथाश्रयभावः—आश्रयीभूतोद्गीथादिवत् कर्माङ्गभाव एवेति, नियमेन उद्गीथोपादानं कार्यम् ॥

414. शिष्टेश्च (३-३-६०) शिष्टेश्च—शासनादपि 'उद्गीथमुपासीत' इति विधानादपि ज्ञापकात्, उद्गीथाद्याश्रितानाम् उपासनानाम्, यथाश्रयभावः—स्वाश्रयवदेव अङ्गभावः अविरुद्धः इति, उद्गीथाद्युपादानं नियतम् ।

415. समाहारात् (३-३-६१)। उद्गीथवेदनम् अवश्यं संपाद्यम्, समाहारात्—(उद्गातृकर्तृकवेदने नष्टे होतृकर्तृकेन उद्गीथप्रणवयोः एकत्वविज्ञानेन) समाधानस्य–तद्दोषपरिहारस्य ('होतृषदनाद्धैवाऽपि दुरुद्गीथमनुसमाहरति' इति) श्रुत्या उक्तत्वादपि ज्ञापकात् ॥

416. गुणसाधारण्यश्रुतेश्च (३-३-६२) गुणस्य—उपासनगुणभूतस्य-उपासनार्थस्य प्रणवस्य, साधारण्यश्रुतेश्च—आश्रावणशंसनोद्गानेषु सामान्यतः अनुवृत्तेः 'तेनेयं त्रयी विद्या वर्तते' इत्यादिवाक्ये श्रुतत्वादपि ज्ञापकात्, (उद्गीथादेः कर्माङ्गत्वेन उपादानं नियतम्) ॥

417. न वा तत्सहभावाश्रुतेः (३-३-६३) न वा—उद्गीथाद्युपासनानां क्रत्वङ्गतया उपादाननियमो नास्त्येव, तत्सहभावस्य—उद्गीथादेः क्रतुं प्रति अङ्गत्वस्य, अश्रुतेः—श्रुतिसिद्धत्वाभावात्, (वीर्यवत्तरत्वरूपं क्रतुगतं फलं प्रत्येव अङ्गत्वस्य 'यदेव विद्यया करोति' इत्यादिवाक्यावगतत्वेन क्रत्वङ्गत्वाभावात्)॥

418. दर्शनाच्च (३-३-६४) दर्शनाच्च—(ब्रह्माश्रितेन वेदननियमेन 'एवंवित् ह वै ब्रह्मा....अभिरक्षति' इति) सर्वेषाम् ऋत्विजां रक्षणस्य श्रुतिपठितत्वदर्शनादपि, न वा—उद्गात्राश्रितवेदननियमाभाव एव ॥

॥ इति तृतीयाध्याये तृतीयः पादः ॥

## चतुर्थः पादः [अधि. १५, सू. ५१]

### १०९. पुरुषार्थाधिकरणम् (३-४-१) (सू. १–२०)

419. पुरुषार्थोऽतः शब्दादिति बादरायणः (३-४-१) पुरुषार्थः—पुरुषस्याभिलषितम् अमृतत्वात्मकं प्रयोजनम्, अतः—विद्यारूपात् साधनादेव (अयं चाऽर्थः) शब्दात्—'तमेवं

विद्वानमृत इह भवति ' इत्यादिश्रुत्यात्मकात् शब्दात् अवगम्यते, इति—एतादृशमर्थम्, बादरायणः—बादरायणनामा आचार्यो मन्यते ॥

420. शेषत्वात्पुरुषार्थवादो यथाऽन्येष्विति जैमिनिः (३-४-२) शेषत्वात्—विद्यायाः कर्तृसंस्कारतया कर्माङ्गत्वेन क्रतुशेषत्वात्, अन्येषु यथा—द्रव्य-संस्कार-कर्मस्विव, पुरुषार्थवादः—' विद्यया पुरुषार्थः ' इत्ययं वादः, अर्थवादः-विद्याप्रशंसाभिप्रायकः, इति—इममर्थम्, जैमिनिः—जैमिनिनामा आचार्यः मन्यते ॥

421. आचारदर्शनात् (३-४-३) आचारस्य—कर्मप्रधानस्य ब्रह्मविदामनुष्ठानस्य, दर्शनात्—अश्वपतिजनकादिषु वर्तमानतया श्रुति-स्मृतिषु ज्ञापनात्, विद्यैव कर्माङ्गम्; न विद्याङ्गं कर्म ॥

422. तच्छ्रुतेः (३-४-४) तत्—विद्यायाः कर्माङ्गत्वम्, श्रुतेः—(यदेव विद्यया करोति ' इत्यत्र ' विद्यया ' इति तृतीयाविभक्तिश्रुतिरूपात् प्रमाणात्, ('करोति'पदबोध्यक्रियायां विनियोगबोधकात् अवगम्यते) ॥

423. समन्वारम्भणात् (३-४-५) समन्वारम्भणात्—एकस्मिन्नेव अधिकारिणि विद्या-कर्मणोरुभयोरपि साहित्यस्य ' तं विद्या-कर्मणी समन्वारभेते ' इति श्रुत्या ज्ञापनात् (कर्मसमानाधिकरणीभूता विद्या कर्माङ्गमेव) ॥

424. तद्वतो विधानात् (३-४-६) तद्वतः—विद्यावत्कर्तृकतया, विधानात्–'वेदमधीत्य.... कर्मातिशेषेण ' इति कर्मणो विधानात् ज्ञापकात् (विद्या कर्माङ्गम्) ॥

425. नियमात् (३-४-७) नियमात्—' कुर्वन्नेवेह कर्माणि ' इति आत्मविदामायुषः कर्मसु नियमदर्शनात्, (पुरुषार्थः—पुरुषप्रयोजनसिद्धिः, कर्मण एव; न विद्यातः इत्यवगम्यते) ॥

426. अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात् (३-४-८) बादरायणस्य—भगवतोव्यासस्य, एवम्—विद्यातः परमपुरुषार्थप्राप्तिरिति मतम्, अधिकोपदेशात्तु—कर्मणां कर्तुःजीवात् अर्थान्तरभूतस्य परस्य ब्रह्मणः वेद्यतया उपदेशात्, (तथा) तद्वेदनस्य ब्रह्मप्राप्तिसाधनत्वोपदेशाच्च, तद्दर्शनात्—वेदान्तवाक्येषु विद्यायाम् अधिकविषयतायाः दर्शनात् ॥

427. तुल्यं तु दर्शनम् (३-४-९) दर्शनम्—ब्रह्मविदां कर्मानुष्ठानदर्शनम्, तुल्यं तु—विद्यायाः कर्माङ्गत्वेऽपि, कर्मानङ्गत्वेऽपि च समानम्, (अतः विदुषां कर्मानुष्ठानदर्शनं विद्यायाः कर्माङ्गत्वे नियतं न भवति) ॥

428. **असार्वत्रिकी** (३-४-१०) ('यदेव विद्यया करोति' इति श्रुतिश्च), **असार्वत्रिकी**—सर्वविद्याविषयिणी न भवति ; किन्तु उद्गीथविद्यामात्रविषयिणीति, (श्रुत्या विद्यायाः न कर्माङ्गतासिद्धि) ॥

429. **विभागश्शतवत्** (३-४-११) **विभागः**—अङ्गाङ्गिभावानापन्नयोरेव विद्या-कर्मणोः एकस्मिन् पुरुषे पृथगवस्थितिः, (तं विद्या-कर्मणी समन्वारभेते' इत्यत्रोच्यते।) स च विभागः, **शतवत्**—'क्षेत्ररत्नविक्रयिणि पुरुषे शतद्वयस्यान्वये क्षेत्रार्थमेकं शतम्, रत्नार्थमेकं शतम्' इति विभागवत् (सिध्यति) ॥

430. **अध्ययनमात्रवतः** (३-४-१२) **अध्ययनमात्रवतः**—केवलं नियमवदक्षरराशिग्रहणवत एव, (विधानात्—'वेदमधीत्य' इति श्रुत्या कर्मणो विधानात्) 'विद्या न कर्माङ्गम्' इति बादरायणमतमेव युक्तम्। (विद्याखलु न अध्ययनमात्रम् ; किन्तु स्मृतिप्रत्ययावृत्तिरूपा अन्यैव) ॥

431. **नाऽविशेषात्** (३-४-१३)—(ईशावास्योपनिषदि 'कुर्वन्नेवेह कर्माणि' इति यावदायुषं कर्मानुष्ठाननियमविधानम्), **न**—स्वतन्त्रविद्याङ्गककाम्यफलसाधनीभूतकर्मविषयकं न भवितुमर्हति, **अविशेषात्**—तादृशार्थविशेषज्ञापकस्य विशिष्टहेतोरभावात्। ('कर्माणि कुर्वन्नेव' इति सामान्यतः कर्मानुष्ठाननियमस्य विद्योत्पत्तिसहकारिकर्मविशेषविषयत्वेऽपि विधिसार्थक्येन ; स्वतन्त्रकर्मविशेषविषयतायां विनिगमकाभावात्) ॥

432. **स्तुतयेऽनुमतिर्वा** (३-४-१४) **स्तुतये**—(प्रस्तुतायां विद्यायां) प्रशस्तत्वज्ञानोत्पादनाय, **अनुमतिर्वा**—कर्म कुर्वतः कर्मानुष्ठानाभ्यनुज्ञानमेव ('कुर्वन्नेवेह कर्माणि' इति) क्रियते, (प्रशस्तता च संश्लेषस्वभावानामपि कर्मणां प्रकृतविद्यासाहित्ये सति संश्लेषाभाव इति। अतः विद्यायाः कर्माङ्गत्वाभाव एव) ॥

433. **कामकारेण चैके** (३-४-१५) **एके**—वाजसनेयिनः, **कामकारेण च**—इच्छयैव, (**गार्हस्थ्यत्यागम्**—गृहस्थाश्रमकर्मणां त्यागपूर्वकं प्रव्रजनम्, **अधीयते**—'किं प्रजया करिष्यामः' इत्यादिना पठन्ति ; न हि कदाचित् अङ्गी त्यज्येत। अतः विद्यानां न कर्माङ्गत्वमिति) ॥

434. **उपमर्दं च** (३-४-१६)—(उपासनात्मिकया विद्यया,) **उपमर्दं च**—सर्वकर्मविनाशमपि, **एके**—आथर्वणिकाः 'क्षीयन्ते चाऽस्य कर्माणि तस्मिन् दृष्टे' इति अधीयते, (न हि अङ्गिनः अङ्गभूतेन नाशो युक्तः इति, विद्यायाः न कर्माङ्गत्वम्) ॥

435. **ऊर्ध्वरेतस्सु च शब्दे हि** (३-४-१७) **ऊर्ध्वरेतस्सु च**—सन्यासिनामाश्रमेषु च, (ब्रह्मविद्यायाः दर्शनात्, तेषु च कर्मणाम् अग्निहोत्रादीनामभावात् विद्यायाः न कर्माङ्गता ;

न हि अङ्गिनं विना अङ्गानामनुष्ठानं सम्भवति), ऊर्ध्वरेतसः—प्रव्राजिनामाश्रमाश्च सन्त्येव ; हि—यतः, शब्दे—'एतमेव प्रव्राजिनः' इत्येवंरूपे औपनिषदे शब्दे श्रूयते ।।

436. परामर्शं जैमिनिरचोदनाच्चापवदति हि (३-४-१८) अचोदनात्—('त्रयो धर्मस्कन्धाः यज्ञोऽध्ययनं दानम्' इत्यादिषु) प्रव्राजिनामाश्रमस्य अविहितत्वात्, परामर्शम्—श्रुतौ उपासनस्तुत्यर्थं प्रव्रज्याश्रमस्य अनुवादम्, (न तु विधानम्) जैमिनिः—जैमिनिनामा आचार्यः मन्यते, हि—यतः, (शब्दः—श्रौतः 'वीरहा वा एष देवानां योऽग्निमुद्वासयते' इत्ययं शब्दः), अपवदति—अग्निहीनां स्थितिं निन्दति ।

437. अनुष्ठेयं बादरायणः साम्यश्रुतेः (३-४-१९) अनुष्ठेयम्–गृहस्थाश्रमवत् आश्रमान्तरस्याऽपि अनुष्ठेयताम्, बादरायणः—भगवान् व्यासः मन्यते, साम्यश्रुतेः –आश्रमान्तरस्याऽपि गार्हस्थ्येन साकम् ऐकरूप्येण सङ्कीर्तनात् ।।

438. विधिर्वा धारणवत् (३-४-२०) विधिर्वा—(त्रयो धर्मस्कन्धाः इत्यादिः) सर्वेषामप्याश्रमाणां विधिरेव, (न अनुवादः कस्याऽपि) धारणवत्—'उपरि हि देवेभ्यो धारयति' इति अनुवादसरूपेपि वाक्ये धारणांशे विधित्वाङ्गीकारवत् । अतः एताभ्यो युक्तिभ्यः 'विद्यात एव पुरुषार्थः' इति सिद्धम् ।।

### ११०. स्तुतिमात्राधिकरणम् (३-४-२)

439. स्तुतिमात्रमुपादानादिति चेन्नाऽपूर्वत्वात् (३-४-२१) (उद्गीथादौ रसतमत्वादि प्रतिपादकवाक्यानि) स्तुतिमात्रम्—क्रत्वङ्गोद्गीथादेः स्तुतिमात्रतात्पर्यकाणि, उपादानात्—'अष्टमो यदुद्गीथः' इति उद्गीथमुपादाय, 'रसानां रसतमः परमः परार्ध्यः' इति रसतमत्व-परमत्व-परार्ध्यत्वादेरुक्तेः, इति चेत्–एवं शंकनम्, न–न सङ्गच्छते, अपूर्वत्वात्–उद्गीथादीनां एतद्वाक्यातिरिक्तेन प्रमाणेन अप्राप्तत्वात् । (अस्य वाक्यस्य स्तुतित्वे, वाक्यान्तरेण विधान स्यावश्यकत्वात्) विधिर्वा—[अतः] उद्गीथादिषु रसतमदृष्टिविधिरेवाऽयम् ।

440. भावशब्दाच्च (३-४-२२) भावशब्दाच्च–(विधिप्रत्यययुक्तत्वात्) क्रियावाचिनः 'उपासीत' इत्यादिशब्दाच्च, विधिर्वा—उपासनाविधानरूपाण्येव एतानि वाक्यानि ।

### १११. पारिप्लवार्थाधिकरणम् (३-४-३) [सू. २३, २४]

441. पारिप्लवार्था इति चेन्न विशेषितत्वात् (३-४-२३)—(औपनिषदाः आख्यायिकाः सर्वाः) पारिप्लवार्थाः—'आख्यानानि शंसन्ति' 'पारिप्लवं शंसन्ति' इति विहितबहु-

विधोपाख्यानपाठोपयोगिन एव, न विद्याविध्यर्थाः, इति चेत्—एवं शङ्कनं तु, न—नोचितम्, विशेषितत्वात्—विशेषतः मन्वादीनामाख्यानानां पारिप्लवपाठार्थतया उक्तत्वात् [प्रतर्दनविद्याचाख्यायिकाः विद्याविध्यर्था एव ; न केवलं पारिप्लवपाठार्थाः] ॥

442. तथा चैकवाक्योपबन्धात् (३-४-२४) तथा च—'तेजो वै घृतम्' 'सोऽरोदीत्' इत्यादिषु यथा तथैव, याज्ञवल्क्याद्याख्यानेष्वपि, एकवाक्योपबन्धात्—'आत्मा वा अरे द्रष्टव्यः' इत्यादिविधिना एकवाक्यतया अन्वयात्, सर्वाण्याख्यानानि पारिप्लवार्थानि न भवन्ति, किन्तु, विद्याविध्यर्थान्येव ॥

## ११२. अग्नीन्धनाधिकरणम् (३-४-४)

443. अत एव चाग्नीन्धनाद्यनपेक्षा (३-४-२५) अत एव च—ऊर्ध्वरेतसामाश्रमेष्वपि विद्यासम्बन्धस्य श्रुतत्वादेव, (तदाश्रमिणांविद्या), अग्नीन्धनाद्यनपेक्षा—अग्न्याधानाग्निहोत्रादिकर्मसापेक्षा न भवति ॥

## ११३. सर्वापेक्षाधिकरणम् (३-४-५)

444. सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् (३-४-२६)—(गृहस्थेषु उपासनात्मिका विद्या), सर्वापेक्षा च—स्वनिष्पत्तौ अग्निहोत्रादिसर्वकर्मसापेक्षैव भवति, यज्ञादिश्रुतेः—'विविदिषन्ति यज्ञेन' इत्यादिगतया 'यज्ञेने'ति तृतीयाश्रुत्या विद्यां प्रति यज्ञादेरङ्गत्वप्रतीतेः, अश्ववत्—गमनसाधनीभूतस्याश्वस्य स्वसाध्यं गमनं प्रति स्वपरिकरबन्धरूपपरिकर्मापेक्षत्ववत् ॥

## ११४. शमदमाद्यधिकरणम् (३-४-६)

445. शमदमाद्युपेतः स्यात् तथापि तु तद्विधेस्तदङ्गतया तेषामप्यवश्यानुष्ठेयत्वात् (३-४-२७) तथापि—(उपासने प्रवृत्तः गृहस्थः) यज्ञादिकर्मसु विनियुक्तोऽपि, शमदमाद्युपेतस्तु स्यात्—अन्तर्बाह्येन्द्रियनियमनरूपैः शमादिभिः अन्तरङ्गोपायैः युक्त एव भवेत्, तदङ्गतया—विद्यानिष्पत्त्युपयोगितया, तद्विधेः—'नाशान्तः....प्रज्ञानेनैनमाप्नुयात्' इति शमादिविधेः सत्त्वात्, तेषामपि—शमदमादीनामपि, अवश्यानुष्ठेयत्वात्—अवर्जनीयतया सम्पादनीयत्वात् ।

## ११५. सर्वान्नानुमत्यधिकरणम् (३-४-७) [सू. २८-३१]

446. सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात् (३-४-२८)—(प्राणविद्यानिष्ठस्य पुरुषस्य) सर्वान्नानुमतिः—व्यवस्थाराहित्येन सर्वान्नभक्षणाभ्यनुज्ञा, प्राणात्यये च—प्राणभङ्गप्रसंगे

एव ; न तु सर्वदा, तद्दर्शनात्—तस्यार्थस्य सर्वान्नभक्षणस्य चाक्रायणे उषस्तिनामके तादृशदशायामेव श्रुत्या बोधनात् ॥

447. अबाधाच्च (३-४-२९) अबाधाच्च—तथासत्येव 'आहारशुद्धौ सत्वशुद्धिः' इति आहारशुद्धिप्रतिपादकश्रुत्यविरोधस्य सम्पादयितुं शक्यत्वादपि हेतोः ॥

448. अपि स्मर्यते (३-४-३०) प्राणात्यये च—प्राणापायप्रसक्तावेव, सर्वान्नानुमतिः—अव्यवस्थया सर्वान्नभक्षणाभ्यनुज्ञानम्, स्मर्यतेऽपि—'प्राणसंशयमापन्नः योऽन्नमत्ति यतस्ततः । लिप्यते न स पापेन' इति स्मृत्याऽपि स्पष्टीक्रियते ॥

449 शब्दश्चातोऽकामकारे (३-४-३१) अतः—यतः प्राणापायप्रसङ्गे एव सर्वान्नानुमतिः अत एव, अकामकारे—स्वच्छन्दकरणप्रतिषेधकः, शब्दश्च—'तस्माद्ब्राह्मणो न सुरां पिबति' इत्यादिरूपः श्रौतः शब्दोऽपि दृश्यते ॥

११६. विहितत्वाधिकरणम् (३-४-८) (सू. ३२-३५)

450. विहितत्वाच्चाश्रमकर्माऽपि (३-४-३२) विहितत्वाच्च—'यावज्जीवमग्निहोत्रम्' इत्यादिश्रुत्या विहितत्वादपि हेतोः, आश्रमकर्माऽपि—केवलाश्रमिणः प्रति विहितं यज्ञादिकं कर्माऽपि, विद्याधिकारिणाऽपि अनुष्ठेयमेव ॥

451. सहकारित्वेन च (३-४-३३) सहकारित्वेन च—विद्योत्पत्तौ यज्ञादिकर्मणां सहकारितामवलम्ब्यापि, आश्रमकर्म—केवलाश्रमिणः प्रति विहितं यज्ञादिकं कर्म, अनुष्ठेयमेव ॥

452. सर्वथाऽपि त एवोभयलिङ्गात् (३-४-३४) सर्वथाऽपि—विद्यार्थतया तथा आश्रमार्थतया अनुष्ठानेऽपि, ते एव—कृताः यज्ञादयः अभिन्ना एव, (न उद्देश्यभेदकृतस्वरूपभेदवन्तः) उभयलिङ्गात्—उभयत्राऽपि एकेनैव अग्निहोत्रादिशब्देन प्रत्यभिज्ञानरूपात् ज्ञापकात् ॥

453. अनभिभवं च दर्शयति (३-४-३५) अनभिभवं च—विद्याया उत्पत्तौ पापकर्मभिः प्रबलतरैः प्रतिबन्धो यः सम्भावितः तदभावमपि, (यज्ञादिकर्मानुष्ठातुः पुरुषस्य) दर्शयति—'धर्मेण पापमपनुदति' इतीयं श्रुतिः स्पष्टीकरोति, (अतः मुमुक्षुणाऽपि आश्रमिणां विहितं कर्म अनुष्ठेयमेव) ॥

११७. विधुराकरणम् (३-४-९) (३६-३९)

454. अन्तरा चाऽपि तु तद्दृष्टेः (३-४-३६) अन्तराऽपि च—आश्रमानन्तरा वर्तमानानाम्, अनाश्रमिणां विधुरादीनामपि, (विद्याधिकारः वर्तत एव) तद्दृष्टेः—अनाश्रमिष्वपि रैक्वादिषु ब्रह्मविद्यानिष्ठत्वस्य श्रुतिसिद्धत्वात् ॥

455. **अपि स्मर्यते (३-४-३७) अन्तराचाऽपि**—अनाश्रमिणामपि विद्यासिद्धिः, **स्मर्यतेऽपि**—'जप्येनाऽपि च संसिध्येद्ब्राह्मणः' इत्येवमादिस्मृतावपि बोध्यते, (अतः अनाश्रमिणामपि ब्रह्मविद्यायामधिकारः अबाधितः) ॥

456. **विशेषानुग्रहश्च (३-४-३८) विशेषेण**—आश्रमाणामनियतेन तपोब्रह्मचर्यादिना धर्मविशेषेण, **अनुग्रहश्च**—अनाश्रमिणां विद्यायाः उपकारोऽपि, (तपसा ....आत्मानमन्विच्छेत् इति श्रुतौ पठितः, अतः **अन्तराचाऽपि**—अनाश्रमिणामपि, 'विद्यायाः अनुमतिः) ॥

457. **अतस्त्वितरज्ज्यायो लिङ्गाच्च (३-४-३९) अतः**—अनाश्रमित्वापेक्षया, **इतरत्**—आश्रमित्वम्, **ज्यायः**—धर्मभूयस्त्वकृतश्रैष्ठ्यवत्, **लिङ्गाच्च**—'अनाश्रमी न तिष्ठेत्तु' इत्यादिस्मृतिसत्वादपि ॥

## ११८. तद्भूताधिकरणम् (३-४-१०) (सू. ४०-४३)

458. **तद्भूतस्य तु नाऽतद्भावो जैमिनेरपि नियमात्तद्रूपाभावेभ्यः (३-४-४०) तद्भूतस्य**—नैष्ठिकादिभावं प्राप्तवतः, **अतद्भावः**—पश्चात् नैष्ठिकत्वादिकं विहायाऽवस्थितिः, **न तु**—नैव शास्त्रानुमतः, **तद्रूपाभावेभ्यः**—नैष्ठिकाद्याश्रमधर्मरहितस्थितिभ्यः, **नियमात्**—नियमनात्, प्रतिषेधदर्शनात्, **जैमिनेरपि**—उक्तः अनाश्रमित्वाभावः जैमिनेरपि संमतः. (अतः आश्रमभ्रष्टानां न विद्याधिकारः) ॥

459. **न चाऽऽधिकारिकमपि पतनानुमानात्तदयोगात् (३-४-४१) आधिकारिकमपि**—कर्मकाण्डीये अधिकारविचारात्मके अध्याये प्रदर्शितं प्रायश्चित्तमपि, **न च**—आश्रमच्युतस्य नैव सम्भवति ; **पतनानुमानात्**—महापातकनाम्नः पातित्यस्य, प्रायश्चित्तरहितत्वस्यैव 'प्रायश्चित्तं न पश्यामि' इति स्मृत्या बोधनात्, **तदयोगात्**—प्रायश्चित्ताभावसिद्धेः ॥

460. **उपपूर्वमपीत्येके भावमशनवत्तदुक्तम्** । (३-४-४२) (नैष्ठिकादिभावात् प्रच्युतिः) **उपपूर्वम्**—उपपातकमेव ; न महापातकमितिहेतोः, **भावमपि**—आश्रमच्युतेः प्रायश्चित्तसद्भावमपि, **एके**—केचन स्मृतिकाराः मन्यन्ते, **अशनवत्**—मध्वशननिषेधतत्प्रायश्चित्तवदेव तद्युज्यत इति, **तत्**—प्रकृतमिदम्, **उक्तम्**—'उत्तरेषां चैतदविरोधि' इत्यादिना स्मृतिकारैः स्पष्टीकृतम् । (अतः आश्रमभ्रष्टानां प्रायश्चित्तपूर्वकं विद्याधिकार इति) ॥

461. **बहिस्तूभयथाऽपि स्मृतेराचाराच्च (३-४-४३) उभयथाऽपि**—आश्रमप्रच्युतेः उपपातकत्वे वा महापातकत्वेऽपि वा, **बहिस्तु**—आश्रमच्युताः कर्म-ब्रह्म-विद्याधिकारिभ्यो

बहिर्भूता एव, स्मृतेः—पूर्वोक्तात् पतनस्मृतेः, आचाराच्च—भ्रष्टवर्जनरूपात् शिष्टाना-मनुष्ठानाच्च ॥

११९. स्वाम्यधिकरणम् (३-४-११) (सू. ४४, ४५)

462. **स्वामिनः फलश्रुतेरित्यात्रेयः** (३-४-४४) (कर्माङ्गाश्रयाण्युद्गीथाद्युपासनानि) **स्वामिनः**—यजमानकर्तृकाण्येव; **फलश्रुतेः**—क्रतुवीर्यवत्तरत्वाद्यात्मकस्य उद्गीथोपासनफलस्य श्रुतौ कथनात्, (यजमानस्यैव फलभागित्वात्, फलोपासनयोः समानाश्रयत्वाच्च), **इति आत्रेयः**—एतादृशमभिप्रायम् आत्रेयनामा आचार्यो मन्यते ।

463. **आर्त्विज्यमित्यौडुलोमिस्तस्मै हि परिक्रीयते** (३-४-४५) (कर्माङ्गाश्रयोद्गीथाद्युपासनम्) **आर्त्विज्यमिति**—ऋत्विक्कर्तृकम् इति, **औडुलोमिः**—औडुलोमिनामा आचार्यो मन्यते, **तस्मै हि**—यजमानसम्बन्धिकत्वनुष्ठानाय हि, **परिक्रीयते**—ऋत्विक् दक्षिणापूर्कं क्रियते, स्वायत्तीक्रियते ॥

१२०. सहकार्यन्तरविध्यधिकरणम् (३-४-१२) (सू. ४६–४८)

464. **सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत्** (३-४-४६) ('बाल्यं च पाण्डित्यं च निर्विद्य अथमुनिः, इत्यत्र) **तद्वतः**—विद्यावतः, **सहकार्यन्तरविधिः**—(पाण्डित्य-बाल्याभ्यां सह) अन्यत् विद्यानिष्पत्त्युपकारि मौनम्, विधीयमानं भवति, **विध्यादिवत्**—यज्ञ-दानाद्याश्रमधर्मा इव, (तथा) श्रवण-मनने इव च, **तृतीयम्**—मौनमिदं सहकारिषु तृतीयं भवति, (यतः पाण्डित्य–बाल्ये प्रथमद्वितीये), (इदं चाऽर्थकल्पनम्) **पक्षेण**—'मुनि' शब्दस्य प्रकृष्टमननशीले पुरुषे प्रयोगस्य शिष्टपरिग्रहरूपेण ज्ञापकेन ('पक्ष परिग्रहे' पा. धा. १५५) निश्चयात् ॥

465. **कृत्स्नभावात्तु गृहिणोपसंहारः** (३-४-४७) **कृत्स्नेषु**—सर्वेष्वप्याश्रमेषु, **भावात्तु**—ब्रह्मविद्यायाः सद्भावादेव, (सर्वाश्रमान्तःपातिनि गृहस्थाश्रमेऽप्यस्तीति हेतोः) **गृहिणा**—गृहस्थाश्रममाश्रितवता विद्यायोग्येन उपलक्षणतयोक्तेन, **उपसंहारः**—ब्रह्मप्राप्तिनिगमनम्, ('अभिसमावृत्य कुटुम्बे' इत्यादिना क्रियते) ॥

466. **मौनवदितरेषामप्युपदेशात्** (३-४-४८) **मौनवत्**—'अथ मुनिः' इत्यादिना भिक्षाचरणपूर्वकमौनोपदेशवत्, **इतरेषामपि**—अन्याश्रमिणामपि, **उपदेशात्**—'ब्रह्मसंस्थोऽमृत-त्वमेति' इति ब्रह्मप्राप्तेः उपदेशात् (संन्यासिधर्मवत् सर्वाश्रमधर्मोऽपि विद्याङ्गम्)

### १२१. अनाविष्काराधिकरणम् (३-४-१३)

467. **अनाविष्कुर्वन्नन्वयात् (३-४-४९)** **अनाविष्कुर्वन्**—पाण्डित्यप्रयुक्तस्य स्वमाहात्म्यस्य अप्रकटीकाररूपं बालस्वभावमाददानः, (विद्वान् वर्तेत) **अन्वयात्**—'पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत्' इत्येवं विद्यान्वययोग्यतायाः अनाविष्कारात्मिकाया एव विदुषि सम्भवात् ।।

### १२२. ऐहिकाधिकरणम् (३-४-१४)

468. **ऐहिकमप्रस्तुतप्रतिबन्धे तद्दर्शनात् (३-४-५०)** **ऐहिकम्**—मोक्षातिरिक्ताभ्युदयफलकम् उपासनम्, **अप्रस्तुतप्रतिबन्धे**—प्रबलकर्मान्तरेण प्रतिबन्धे अप्राप्ते सति, उपासनानुपदमेव फलप्रदं भवति, (प्रतिबन्धे प्रस्तुते तु, प्रतिबन्धनिवृत्त्यनन्तरं फलप्रदं भवति) **तद्दर्शनात्**—('यदेव विद्यया करोति तदेव वीर्यवत्तरं भवति' इति) कर्मणा प्रतिबन्धस्य श्रुतौ ज्ञापनात् ।।

### १२३. मुक्तिफलाधिकरणम् (३-४-१५)

469. **एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थावधृतेः (३-४-५१)** **एवम्**—अभ्युदयफलानाम् उपासनानामिवैव, **मुक्तिफलानाम्**—मोक्षैकफलानां विद्यानामपि, **अनियमः**—तस्मिन्नेव देहे फलप्राप्तिः इति नियमराहित्यमेव; **तदवस्थावधृतेः**—विद्यासु ब्रह्मविदपचारादिप्रतिबन्धकसांनिध्यतदभावरूपावस्थाविशेषचिन्तनपूर्वकमेन विद्यास्वरूपपूर्णनिष्पत्ति-तदभावात्मकफलसिद्धिनिर्णयस्य सम्पादनीयत्वात् । (अध्यायान्तद्योतिका पदावृत्तिः) ।।

।। इति तृतीये अध्याये चतुर्थः पादः ।।

।। इति तृतीयः अध्यायः ।।



## चतुर्थोऽध्यायः [अधि. ३३, सू. १७८]

## प्रथमः पादः [अधि. ११, सू. १९]

### १२४. आवृत्त्यधिकरणम् (४-१-१) [सू. १, २]

470. **आवृत्तिरसकृदुपदेशात् (४-१-१)**—(मोक्षसाधनतया श्रुतिविहितस्य ब्रह्मवेदनस्य) **असकृत् आवृत्तिः**—नैरन्तर्यपौनःपुन्याभ्यां बहुवारकर्तव्यतैव, मोक्षसाधनतया वेदनविधायक-

शास्त्रतात्पर्यविषयीभूतोऽर्थः ('वेदनं ध्यानापरपर्यायम्' इत्यर्थः) उपदेशात्—मुक्तिसाधनोपदेशपरवाक्ये ध्यानपर्यायतया 'विद्'धातोः प्रयोगात् ॥

471। लिङ्गाच्च (४-१-२)—(मोक्षसाधनीभूतस्य वेदनस्य) असकृत् आवृत्तिः—नैरन्तर्यपौनःपुन्याभ्यां बहुवारमनुष्ठेयतैव शास्त्रार्थः; लिङ्गाच्च—'तद्रूपप्रत्यये चैका सन्ततिश्चाऽन्यनिस्पृहा । तद्ध्यानम्' इत्यादिस्मृतिरूपादपि ज्ञापकात् ॥

## १२५. आत्मत्वोपासनाधिकरणम् (४-१-२)

472 आत्मेतितूपगच्छन्ति ग्राहयन्ति च (४-१-३)—(उपासकाः स्वोपास्यं परं ब्रह्म) आत्मेति तु—'स्वस्मात् अभिन्न' इत्येव, 'अहम्' इत्येव, उपगच्छन्ति—उपासते, (तथा) ग्राहयन्ति च—'य आत्मनि तिष्ठन्' इत्यादीनि शास्त्राण्यपि ग्रहीतॄन् इममर्थं सम्यक् बोधयन्ति च ।।

## १२६. प्रतीकाधिकरणम् (४-१-३) (सू. ४, ५)

473 न प्रतीके न हि सः (४-१-४) प्रतीके—ब्रह्मशरीरभूते मन आदौ, न—आत्मतयोपासनं न कार्यम्; हि—यतः, प्रतीकः—शरीरभूतो मन आदिः, न सः—आत्मा न भवति ॥

474. ब्रह्मदृष्टिरुत्कर्षात् (४-१-५) ब्रह्मदृष्टिः—अब्रह्मभूते मन आदौ ब्रह्मत्वेनोपासनम्, कार्यम्; न तु ब्रह्मणि मनआदिदृष्टिः कार्या) उत्कर्षात्—ब्रह्मणः मन आदिभ्योऽतिशयितत्वात् (निकृष्टे वस्तुनि उत्कृष्टदृष्टेः फलकारित्वात्) ॥

## १२७. आदित्यादिमत्यधिकरणम् (४-१-४)

475. आदित्यादिमतयश्चाऽङ्ग उपपत्तेः (४-१-६) अङ्गे—कर्माङ्गे उद्गीथादौ, आदित्यादिमतयश्च—आदित्यत्वादिना उपासना एव कार्याः; (न तु आदित्यादौ उद्गीथत्वादिना) उपपत्तेः—आदित्यादावेव देवताभूते (उपास्यत्वोपयोगिनः उत्कर्षस्य) सम्भवात् ।।

## १२८. आसीनाधिकरणम् (४-१-५) (सू. ७-११)

476. आसीनः सम्भवात् (४-१-७) आसीनः—उपासकः स्थिरसुखे आसने उपविष्ट एव सन्, (निरन्तरशुभाश्रयचिन्तनात्मकमुपासनं कुर्यात्) सम्भवात्—चिन्तननैरन्तर्योपयोगिन्याः एकाग्रतयाः आसीने एव पुरुषे निर्बाधतया योगात् ।।

477. ध्यानाच्च (४-१-८) ध्यानात् च—('निदिध्यासितव्यः' इति विहितस्य उपासनस्य) विजातीयप्रत्ययान्तराव्यवहितैकाग्रचिन्तनात्मकत्वात्, (तादृशं ध्यानम्) आसीन एव कुर्यात् ॥

478. अचलत्वं चापेक्ष्य (४-१-९) अचलत्वं च—ध्यातरि पुरुषे निष्कम्पावस्थानमेव, अपेक्ष्य—अभिप्रेत्य, अचेतनेष्वपि पर्वतादिषु 'ध्यायन्तीव पर्वताः' इत्येवमादयो व्यपदेशा दृश्यत इति, (ध्यानोपयोगिनिश्चलदेहावस्थितिसिद्धये, ध्यानम् आसीन एव कुर्यात्) ॥

479. स्मरन्ति च (४-१-१०) (मुनयः ध्यानकर्म आसीनस्यैव पुरुषस्य युक्तमिति), स्मरन्ति च—'उपविश्यासने युञ्ज्याद्योगम्' इत्यादिस्मृत्या बोधयन्त्यपि ॥

480. यत्रैकाग्रता तत्राऽविशेषात् (४-१-११) एकाग्रता—चित्तवृत्तेः शुभाश्रयैकावलम्बिता, यत्र—यादृशे देशे यादृशे काले वा सिद्ध्यति, तत्र—तस्मिन्नेव देशे तस्मिन्नेव काले, (उपासकेन ध्यानं कार्यम्) अविशेषात्—योगानुष्ठानं प्रति श्रुत्यादिषु एकाग्रतातिरिक्तदेशकालविशेषाश्रवणात् ॥

१२९. आप्रयाणाधिकरणम् (४-१-६)

481. आप्रयाणात्तत्राऽपि हि दृष्टम् (४-१-१२) (उपासकेन क्रियमाणं ध्यानम्) आप्रयाणात्—देहवियोगपर्यन्तम् अहरहः कार्यम्, हि—यतः, तत्राऽपि—उपासनारम्भ-प्रभृति देहवियोगावधिके मध्यकालेऽपि (ध्यानस्य अहरहः कर्तव्यत्वम्), दृष्टम्—'स खल्वेवं वर्तयन् यावदायुषम्' इति श्रुत्या विहितम् ॥

१३०. तदधिगमाधिकरणम् (४-१-७)

482. तदधिगम उत्तरपूर्वाघयोरश्लेपविनाशौ तद्व्यपदेशात् (४-१-१३) तदधिगमे—ध्याने दर्शनसमानाकारतयाः (विद्यायाः) प्राप्तौ सत्याम्, उत्तरपूर्वाघयोः—विद्यासिद्धेः प्राक्तनस्य पश्चात्तनस्य च पापराशेः, अश्लेपविनाशौ—लोपाभावः, स्वरूपविलयश्च यथायथं भवतः, तद्व्यपदेशात्—'एवंविदि पापं कर्म न श्लिष्यते' इति 'एवं हास्य सर्वे पाप्मानः प्रदूयन्ते' इति च अश्लेपविनाशयोः श्रुतौ स्पष्टं कथनात् ।

१३१. इतराधिकरणम् (४-१-८)

483. इतरस्याऽप्येवमसंश्लेपः पाते तु (४-१-१४) एवम्—उक्तेनैव न्यायेन, इतरस्याऽपि—पुण्यस्याऽपि, असंश्लेपः—विद्याधिगमे सति लेपाभावः, विनाशश्च भवतः, तद्व्यपदेशात्—'सुकृत-दुष्कृते धूनुते' इति, 'सर्वे पाप्मानोऽतो निवर्तन्ते' इति च तयोः स्पष्टं कथनात्, तु—परं तु, पाते—शरीरपाते सति, तदनन्तरमेव आयुरन्नाद्युपयोगिनः पुण्यस्य नाशः ॥

## १३२. अनारब्धकार्याधिकरणम् (४-१-९)

484. **अनारब्धकार्ये एव तु पूर्वे तदवधेः** (४-१-१५) **पूर्वे**—विद्योत्पत्तेः प्राक्तने पुण्यपापे, **अनारब्धकार्ये एव तु**—फलप्रदानाप्रवृत्ते एव, विनाशं प्राप्नुतः इतीदमेव निश्चितम्। **तदवधेः**—'यावन्न विमोक्ष्ये' इति, शरीरमोक्षावधित्वश्रुतेः ॥

## १३३. अग्निहोत्राद्यधिकरणम् (४-१-१०) (सू. १६-१८)

485. **अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात्** (४-१-१६) **अग्निहोत्रादि तु**—आश्रमधर्मतया इतरेभ्यः सुकृतेभ्यो विलक्षणं यावज्जीवानुष्ठेयतया विहितम् सायंप्रातरग्निहोत्रादिकं कर्म तु, **तत्कार्यायैव**—विद्योत्पत्तिरूपं मुक्तिसाधनीभूतं कार्यमुद्दिश्यैव, (उपासकेनाऽप्यवश्यमनुष्ठेयम्) **तद्दर्शनात्**—यज्ञादेः विद्योत्पत्त्यर्थतायाः 'तमेतं.... विविदिषन्ति यज्ञेन, इत्यादिश्रुतिषु अनुष्ठेयतायां ज्ञापनात् ॥

486. **अतोऽन्याऽपि ह्येकेषामुभयोः** (४-१-१७) **हि**—यतः, **अतोऽन्याऽपि**—विद्योत्पत्तिप्रयोजिकायाः आश्रमधर्मभूतायाः अग्निहोत्रादिसाधुकृत्यायाः अतिरिक्ताऽपि, **उभयोः**—विद्योत्पत्तिपूर्वोत्तरोभयकालिकद्विविधपुण्यकर्मप्रविष्टा साधुकृत्या, अस्त्येवेति, (तस्याः सुहृत्संक्रमणज्ञापिका) **एकेषाम्**—शाट्यायनिनामकानां वेदशाखिनां (पाठे परिदृश्यमाना 'सुहृदः साधुकृत्याम्' इति श्रुतिः अबाधिता युज्यत एव।)

487. **यदेव विद्ययेति हि** (४-१-१८) **हि**—यतः, **यदेव विद्ययेति**—'यदेव विद्यया करोति' इत्यादिवाक्यं विद्यया सह अनुष्ठितस्य कर्मणः वीर्यवत्तरत्वज्ञापकम्, (अत एव), **एकेषाम्**—शाट्यायनिनां 'सुहृदः साधुकृत्याम्' इति वचनम्, (प्रतिबन्धवशात् अदत्तफलविद्वन्निष्ठपुण्यकर्मविषयमेव) ॥

## १३४. इतरक्षपणाधिकरणम् (४-१-११) (सू. १९)

488. **भोगेन त्वितरे क्षपयित्वाऽथ सम्पद्यते** (४-१-१९) **इतरे**—आरब्धकार्ये पुण्यपापे उभे अपि, **भोगेन**—स्वारब्धफलभोगेन, **क्षपयित्वा**—निरवशेषीकृत्य, **अथ**—तत्फलभोगसमाप्त्यनन्तरम्, **सम्पद्यते**—ब्रह्म सम्पन्नो भवति ॥

॥ इति चतुर्थाध्याये प्रथमः पादः ॥

### १३५. वागधिकरणम् (४-२-१) [सू. १, २]

489 वाङ्मनसि दर्शनाच्छब्दाच्च (४-२-१) वाक — वागिन्द्रियस्वरूपम्, मनसि— मनोरूपे इन्द्रिये सम्पद्यते जीवस्य देहादुत्क्रमकाले मनस्संयोगं लभते, दर्शनात्—वागिन्द्रियोपरमेऽपि मनोव्यापारस्य लोकसिद्धत्वात्, (तथा) शब्दाच्च—मनसि वाक्स्वरूपसम्पत्तिप्रतिपादकात् 'वाङ्मनसि सम्पद्यते' इति श्रुत्यात्मकात् शब्दादपि ज्ञापकात् ॥

490. अत एव सर्वाण्यनु (४-२-२) अत एव—मनसि वाक्सम्पत्तेः संश्लेषमात्ररूपत्वादेव, सर्वाणि अनु—'सर्वाणि इन्द्रियाणि वाचमनु सम्पद्यन्ते' इति वचनम्, इन्द्रियाणामपि मनसि संश्लेषमात्रपरं सत् उपपन्नमेव ॥

### १३६. मनोऽधिकरणम् (४-२-२) [सू. ३]

491 तन्मनः प्राणः उत्तरात् (४-२-३) तत्— सर्वेन्द्रिययुक्तम्, मनः—मनइन्द्रियम्, (न केवलं मनसो वृत्तिः) प्राणे—प्राणरूपे वस्तुनि, सम्पद्यते—संयुज्यते। उत्तरात्— 'मनः प्राणे' इत्येवंरूपात् अनन्तरश्रुत्यात्मकात् शब्दात् ॥

### १३७. अध्यक्षाधिकरणम् (४-२-३)

492. सोऽध्यक्षे तदुपगमादिभ्यः (४-२ ४) सः—प्राणः, अध्यक्षे—करणाधिपे जीवे, सम्पद्यते—संयुज्यते, तदुपगमादिभ्यः— 'इममात्मानम्........प्राणा अभिसमायन्ति' इत्यादिना श्रूयमाणेभ्यः जीवेनसमागम—जीवेन सहोत्क्रान्ति—जीवप्रतिष्ठानिबन्धनप्रतिष्ठादिभ्यो ज्ञापकेभ्यः ॥

### १३८. भूताधिकरणम् (४-२-४) (सू. ५–६)

493 भूतेषु तच्छ्रुतेः (४-२-५) ('प्राणस्तेजसि' इत्युक्त्वा, जीवसंयुक्तस्य प्राणस्य तेजसि सम्पत्तिः) भूतेषु—तेजउपलक्षितेषु संहतेषु सर्वेषु भूतेष्वेव ; न केवलं तेजसि, तच्छ्रुतेः— 'पृथिवीमयः' इत्यादिना, सञ्चरति जीवे सर्वभूतमयत्वस्य श्रूयमाणत्वात् ।। (यद्वा)

प्राणः—जीवसंयुक्तः प्राणः, भूतेषु—तेजःपदेनोपलक्षितेषु सर्वेष्वेव भूतेषु, सम्पद्यते— संश्लेषं प्राप्नोति, तच्छ्रुतेः–'प्राणस्तेजसि' इति श्रुत्या भूतान्तरसंसृष्टस्य तेजस एवाऽभिधानात् ॥

494. **नैकस्मिन् दर्शयतो हि** (४-२-६) **प्राणः**—जीवसंयुक्तः प्राणः, **एकस्मिन् न सम्पद्यते**—भूतान्तरासंसृष्टे केवले तेजसि न संश्लिष्टो भवति, **हि**—यतः **दर्शयतः**—श्रुतिस्मृती उभे अपि भूतान्तरासंसृष्टस्य एकैकस्य भूतस्य स्वस्वकार्यजननासामर्थ्यं 'त्रिवृतं त्रिवृतम्' इति, (तथा), संहतिं विना ........नाशक्नुवम् ' इति च स्पष्टीकुरुतः ॥

१३९. आसृत्युपक्रमाधिकरणम् (५-२-५) (सू. ७-१३)

495. **समाना चा सृत्युपक्रमादमृतत्वं चानुपोष्य** (४-३-७) **आसृत्युपक्रमात्**—गतेः उपक्रमं यावत् नाडीप्रवेशात् प्राक्, **समाना च**—(विदुषः अविदुषश्च पुरुषस्य देहात् उत्क्रमणरीतिः) एकरूपैव, **अनुपोष्य च**—अनादेः कालादागतं शरीरेन्द्रियादेः सम्बन्धम् अदग्ध्वैव स्थितस्य, **अमृतत्वम्**—'अथ मर्त्योऽमृतो भवति' इत्युच्यमानम् अमृतत्वं तु, (न विदुषः अनुत्क्रान्तिरूपम् ; किन्तु निरन्तरायतया उपासनारम्भपरिकरनिष्पत्तिरूपम्) ।।

496. **तदाऽऽपीतेः संसारव्यपदेशात्** (४-२-८) **तत्**—'अथ मर्त्योऽमृतः' इत्युक्तम् अमृतत्वम्, उक्तप्रकारमेव न्याय्यम्, **आपीतेः**—अर्चिरादिगत्या देशविशेषावच्छिन्नब्रह्मप्राप्ति-पर्यन्तम्, **संसारव्यपदेशात्**—तज्जीवीयस्थितेः संसारपदेन शास्त्र-लोकयोर्व्यवहाररूपात् ज्ञापकात् ।

497. **सूक्ष्मं प्रमाणतश्च तथोपलब्धेः** (४-२-९) **सूक्ष्मम्**—(देहादुत्क्रम्य अर्चिरादिना मार्गेण गच्छतो विदुषः) सूक्ष्मं शरीरमनुवर्तते, (अतः अयम् उत्क्रममाणो विद्वान्) **अनुपोष्य**—अदग्धबन्ध एव स्थितः इत्ययमर्थः **प्रमाणतश्च**—(विदुषो गतिप्रतिपादकात् श्रुतिरूपात् ) प्रमाणादेव सिध्यति, **तथोपलब्धेः**—प्रश्नानुगुणप्रतिवचनकर्तृतया, प्रतिवचनोपयोगिदेहवत्तया च ज्ञानात् ॥

498. **नोपमर्देनाऽतः** (४-२-१०) **अतः**—उक्तात् हेतुकलापात्, **अमृतत्वम्**—'अथ मर्त्योऽमृतः' इत्युक्तम् अमृतत्वम्, **उपमर्देनामृतत्वं न**—प्रकृतिसम्बन्धनिरवशेषतापाद-नानन्तरकालिकं ब्रह्मसायुज्यात्मकममृतत्वं न भवितु मर्हति ॥

499. **अस्यैव चोपपत्तेरूष्मा** (४-२-११) **अस्य**—उत्क्रममाणे पुरुषे सूक्ष्मशरीरसम्बन्धस्य, **उपपत्तेरेव च**—सङ्गतत्वादेव हेतोः, **ऊष्मा**—(सूक्ष्मशरीरधर्मभूतः) तापविशेषः, (स्थूल-देहस्यैकदेशे क्वचित् स्थाने तद्देहं स्पृशद्भिरनुभूयते ।) ॥

500. **प्रतिषेधादिति चेन्न शारीरात् स्पष्टो ह्येकेषाम्** (४-२-१२) (एतावद्भिः सूत्रै-रुक्तोऽर्थः बाधितः) प्रतिषेधात्—विदुषः देहादुत्क्रान्तेरभावस्य 'न तस्य प्राणा उत्क्रामन्ति' इति श्रुत्या ज्ञापनात्, इति चेत्—एवं शङ्कनम्, न—नैव सङ्गतम्, शारीरात्—प्राणानां जीव-सकाशादुत्क्रान्तेरेव, (न तु देहादुत्क्रान्तेः) प्रतिषेधात्—'न तस्य प्राणा, इत्यनेन निषेधात्, हि—यतः, एकेषाम्—माध्यन्दिनशाखिनां 'न तस्मात् प्राणा उत्क्रामन्ति' इति पाठे, स्पष्टः — अयमर्थः स्फुटं प्रतिपन्नः ॥

501. **स्मर्यते च** (४-२-१३) (विदुषोऽपि मूर्धन्यनाड्या उत्क्रान्तिः) स्मर्यते च— 'ऊर्ध्वमेकः स्थितस्तेषाम्.........स याति' इति स्मृत्या स्पष्टमेव प्रतिपाद्यते। (अतः) आसृत्युपक्रमात्—नाडीप्रवेशात् पूर्वम्, समाना च—(विदुषोऽविदुषश्च गतिः) एकरूपैवेति ॥

## १४०. परसम्पत्त्यधिकरणम् (४-२-६)

502. **तानि परे तथाह्याह** (४-२-१४) तानि—'तेजः' शब्दोपात्तानि भूतानि जीव-परिष्वक्तानि' परे—परस्मिन् ब्रह्मणि, सम्पद्यन्ते—संश्लिष्टानि भवन्ति, हि—यतः, तथा— 'तेजः परस्यां देवतायाम्' इति, आह—श्रुतिः कथयति।

## १४१. अविभागाधिकरणम् (४-२-७)

503. **अविभागो वचनात्** (४-२-१५) (उक्ता परसम्पत्तिः) अविभागः—परेण सह अपृथग्भावपदवाच्यः पृथग्व्यवहारानर्हः संसर्ग एव ; न तु घटादेः मृदीव कारणापत्तिः) वचनात् संश्लेषार्थकतया 'वाङ्मनसि सम्पद्यते' इत्यत्र पठितस्य 'सम्पद्यते' इति वचनस्य 'तेजः परस्याम्' इत्यत्राऽपि अनुषङ्गसत्वात् एकस्यैव पदस्य असति कारणे एकैकत्र ऐकैकार्थपरताया अनौचित्यात् ॥

## १४२. तदोकोधिकरणम् (४-२-८)

504. **तदोकोऽग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात् तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतः शताधिकया** १६ (४-२-१६) विद्यासामर्थ्यात्—हार्दपरमपुरुषोपासन-रूपविद्यागतात् स्वफलोत्पादनशक्तेः, (तथा) तच्छेषगत्यनुस्मृतियोगाच्च—विद्याङ्गभूतं यत् गतिचिन्तनं तत्सम्पत्तेश्च, हार्दानुगृहीतः—प्रीतेन सर्वहृदयस्थितेन परमपुरुषेण कृतानुग्रहो भवति जीवः, (तेन च) तदोकः—जीवस्य आवासस्थानभूतं हृदयम्, अग्रज्वलनम्—प्रकाशिताग्रं भवति (एवं) तत्प्रकाशितद्वारः—परमात्मनास स्पष्टीकृतनिर्गमनमार्गो विद्वान्, शताधिकया— शतसङ्ख्याकाभ्यो नाडीभ्योऽधिकया मूर्धन्यया सुषुम्नानाड्या उत्क्रामति ॥

### १४३. रश्म्यनुसाराधिकरणम् (४-२-९)

505. **रश्म्यनुसारी (४-२-१७)** शताधिकया—मूर्धन्यया नाड्या (निर्गतः विद्वान्), **रश्म्यनुसारी**—''अथैतैरेव रश्मिभिरूर्ध्वमाक्रमते' इति श्रुत्युक्तया रीत्या अह्नि रात्रौ वा यदाकदाऽपि) आदित्यरश्म्यनुसारेणैव गमनवान् (ऊर्ध्वं स्थानं प्राप्नोति) ॥

### १४४. निशाधिकरणम् (४-२-१०)

506 **निशि नेति चेन्न सम्बन्धस्य यावद्देहभावित्वाद्दर्शयति च (४-२-१८) निशि**—रात्रौ (मृतस्य विदुषः), **न**—ब्रह्मप्राप्तिर्न सम्भवति, (निशामरणनिषेधात्), **इति चेत्**—एवं शङ्कनं तु, **न**—न सङ्गतं भवति ; **सम्बन्धस्य**—फलप्रदानप्रवृत्तकर्मसम्बन्धस्य, **यावद्देहभावित्वात्**, चरमदेहमात्रपर्यन्तत्वात्, (अधोगतिहेतुकर्मणां सर्वथा विनष्टत्वात् ; ब्रह्मप्राप्तिः सिद्धैव), **दर्शयति च**—इममर्थं श्रुतिः 'तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ सम्पत्स्ये' इति च प्रकटयति ॥

### १४५. दक्षिणायनाधिकरणम् (४-२-११) (सू. १९, २०)

507. **अतश्चायनेऽपि हि दक्षिणे (४-२-१९) अतश्च**—यतः निशि मृतस्याऽपि विदुषः ब्रह्मप्राप्तिः ध्रुवा अत एव, (बन्धहेतुनिखिलकर्मणां क्षीणत्वात्), **दक्षिणे अयनेऽपि**—दक्षिणायने (मृतस्यापि विदुषः), ब्रह्मप्राप्तिः ध्रुवैव ॥

508 **योगिनः प्रति स्मर्येते स्मार्ते चैते (४-२-२०) योगिनः प्रति**—ब्रह्मविद्यानिष्ठान् प्रति, **एते**—देवयान-पितृयाणरूपे गती, **स्मार्ते**—स्मृतिविषयभूते कर्तव्ये, चिन्तनीये इति, **स्मार्ते**—'एते सृती पार्थ जानन्, इति स्मृतावुच्येते ।

॥ इति चतुर्थाध्याये द्वितीयः पादः ॥



## तृतीयः पादः [अधि. ५, सू. १५]

### १४६. अर्चिराद्यधिकरणम् (४-३-१)

509. **अर्चिरादिना तत्प्रथितेः (४-३-१)** (निष्पन्नोपासनी विद्वान्) **अर्चिरादिना**—अर्चिर्मुखेन पथैव (ब्रह्मपदवीं गच्छति) ; **तत्प्रथितेः**—(सर्वत्र श्रुतिषु) अर्चिरादिमार्गस्यैव ब्रह्ममार्गत्वेन प्रत्यभिज्ञानात् ॥

१४७. वाय्वधिकरणम् (४-३-२)

510. वायुमब्दादविशेप-विशेपाभ्याम् (४-३-२) अब्दात्—अर्चिरादिमार्गे संवत्सराद-नन्तरम्, वायुम्—वायुमेकमेव निवेशयेत्, अविशेष-विशेपाभ्याम्—अविशेषेण, 'देवानां लोक:' इति सामान्यशब्देन, (तथा) विशेषेण, तस्यैव 'वायुः' इति विशेषशब्देन च एकस्यैव तत्र तत्र निर्देशस्य अवगन्तव्यत्वात् ॥

१४८. वरुणाधिकरणम् (४-३-३)

511. तटितोऽधिवरुणः सम्बन्धात् (४-३-३) वरुणः—वरुणनामा आतिवाहिक:, तटितः अधि—विद्युन्नाम्नः आतिवाहिकादनन्तरम् निवेशनीयः; सम्बन्धात्—विद्युद्वरुणयोरेव निकटसम्बन्धस्य लोकवेदावगतत्वात् ॥

१४९. आतिवाहिकाधिकरणम् (४-३-४) (सू. ४, ५)

512. आतिवाहिकास्तल्लिङ्गात् (४-३-४) अर्चिरादयः—अर्चिरादिशब्दवाच्यभूताः विदुषां गतिस्थाने पठिताः, अतिवाहिकाः—विदुषाम् अतिवहने परमपदप्रापणे परमपुरुषेण नियुक्ताः देवताविशेषा एव, (न मार्गचिह्नभूताः अर्थाः नाऽपि भोगभूमयः) ॥

513. वैद्युतेनैव ततस्तच्छ्रुतेः (४-३ ५) ततः—पूर्वोक्ताद् विद्युतः अनन्तरम्, वैद्युतेनैव—वैद्युतनाम्ना अमानवेनैव (ब्रह्मप्राप्तिपर्यन्तम् विदुषाम् अतिवहनम्), तच्छ्रुतेः—तस्य-वैद्युतस्यैव 'स एनान् ब्रह्म गमयति' इति गमयितृत्वश्रवणात् ॥

१५०. कार्याधिकरणम् (४-३-५) (सू. ६-१५)

514. कार्यं बादरिरस्य गत्युपपत्तेः (४-३-६) कार्यम्—सृज्यकोटिंप्रविष्टं हिरण्यगर्भम् उपासीनान् पुरुषानेव, आतिवाहिकाः—अतिवहने नियुक्ताः पुरुषाः (नयन्ति; न परंब्रह्मोपा-सीनान्) अस्य—देशविशेषावच्छिन्नहिरण्यगर्भोपासकस्यैव, गत्युपपत्तेः—स्थानात् स्थानान्तर-प्राप्तिरूपायाः गतेः सम्भवात्, इति, बादरिः—बादरिनामा आचार्यो मन्यते ॥

516 विशेषितत्वाच्च (४-३-७) विशेषितत्वाच्च—विशिष्य 'ब्रह्मलोकान् गमयति' इति, 'प्रजापतेः सभाम्' इति च निर्दिष्टत्वादपि ज्ञापकात्, कार्यम्—हिरण्यगर्भमुपासीनानेव, आतिवाहिका नयन्ति ॥

516. **सामीप्यात्तु तद्व्यपदेशः (४-३-८) तद्व्यपदेशः**—(ब्रह्माणं गम्यतया अनिर्दिश्य, परब्रह्मणो गम्यताबोधकः) 'स एनान् ब्रह्म गमयति' इति, नपुंसकशब्दनिर्देशः, **सामीप्यात्तु**—हिरण्यगर्भात्मके कार्ये ब्रह्मणि परब्रह्म प्रति अव्यवहितकार्यत्वनिबन्धनस्य समीपवर्तित्वस्य सत्त्वादेव ।

517. **कार्यात्यये तदध्यक्षेण सहातः परमभिधानात् (४-३-२) कार्यस्य**—सृज्यस्य-हिरण्यगर्भलोकस्य, **अत्यये**—अवसाने, **तदध्यक्षेण सह**—ब्रह्मलोकाधिकारिकेण अवसिताधिकारेण हिरण्यगर्भेण सह, **अतः परम्**—कार्यात् ब्रह्मलोकात् उत्कृष्टमुन्नतं वा परब्रह्मणो लोकम्, (आप्नोति), **अभिधानात्**—ते ब्रह्मलोके तु परान्तकाले' इति श्रुतौ अमृतत्वप्राप्तेः अपुनरावृत्तेश्च प्रतिपादनात् ज्ञापकात् ॥

518. **स्मृतेश्च (४-३-१०)** कार्यब्रह्मोपासकः हिरण्यगर्भेण सह परंपदमाप्नोति इत्ययमर्थः) **स्मृतेश्च**—'ब्रह्मणा सह ते सर्वे....प्रविशन्ति परं पदम्' इति स्मृतेरपि प्रमाणादवगम्यते ॥

519. **परम् जैमिनिर्मुख्यत्वात् (४-३-११) परम्**—परं ब्रह्मोपासीनमेव पुरुषम्) **आतिवाहिकः**—अर्चिरादिः आतिवाहिको गणः, (नयति) **मुख्यत्वात्**—ब्रह्मशब्दस्य परब्रह्मण्येव मुख्यवृत्तत्वात्, अनुपचरितवृत्तिकत्वात् इति, **जैमिनिः**—जैमिनिनामा आचार्यः (मन्यते) ॥

520. **दर्शनाच्च (४-३-१२) परम्**—परं ब्रह्मोपासीनमेव, (आतिवाहिको गणः नयति इति) **दर्शनाच्च**—'परं ज्योतिरुपसम्पद्य....निष्पद्यते' इति श्रुतिरूपात् प्रमाणादपि (स्थिरीभवति) ॥

521. **न च कार्ये प्रत्यभिसन्धिः (४-३-१३) प्रत्यभिसन्धिः**—'प्रजापतेः सभां वेश्म प्रपद्ये' इत्यादिकमनुसन्धानम्, **न च कार्ये**—कार्यहिरण्यगर्भविषयकं च न भवति (प्रजापति शब्दस्य 'पतिं विश्वस्ये' इति रीत्या परमात्मन्येव मुख्यत्वात्) ॥

522. **अप्रतीकालम्बनान्नयतीति बादरायण उभयथा च दोषात्तत्क्रतुश्च (४-३-१४) अप्रतीकालम्बनान्**—प्रतीकालम्बनव्यतिरिक्तान्, नामादिप्राणशब्दनिर्दिष्टप्रत्यगात्मस्वरूपपर्यन्तं सर्वं चिदचिद्वस्तुजातं ब्रह्मदृष्ट्या, स्वरूपेण वा ये उपासते तद्भिन्नान्, (पञ्चाग्निविदः परब्रह्मोपासकांश्च,) **नयतीति**—आतिवाहिको गणः परं पदं प्रापयति, इति; (इममर्थम्) **बादरायणः**—बादरायनामा आचार्यो मन्यते; **उभयथा च**—'कार्यमुपासीनानेव नयति' इति पक्षे, 'परं ज्योतिरुपासीनानेव नयति' इति पक्षे च, **दोषात्**—सकलोपनिषद्विरोधरूपदोषप्रसङ्गात्, **तत्क्रतुश्च**—तत्क्रतुन्यायोऽपि 'यथाक्रतुरस्मिँल्लोके' इति श्रुत्युक्तः विरुद्धो भवेत् ॥

523 विशेषं च दर्शयति (४-३-१५) विशेषं च—प्रतीकालम्बनानां गत्यनपेक्षं परिमित-फलविशेषमपि, दर्शयति—'यावन्नाम्नो गतम्' इत्यादिका श्रुतिः स्पष्टं प्रतिपादयति ॥

॥ इति चतुर्थाध्याये तृतीयः पादः ॥

## चतुर्थः पादः [अधि. ६] [सू. २२]

### १५१. सम्पद्याविर्भावाधिकरणम् (४-४-१) (सू. १-३)

524. **सम्पद्याऽऽविर्भावः स्वेनशब्दात्** (४-४-१) सम्पद्य—(प्रत्यगात्मा) ज्योतीरूपं परं ब्रह्म संश्लिष्य; (यादृशं दशाविशेषम् सम्पन्नो भवति सः दशाविशेषः) आविर्भावः—स्वाभाविकरूपस्यैव अभिव्यक्तिः; न तु अपूर्वाकारोत्पत्तिः । स्वेनशब्दात्—'स्वेन रूपेणाऽभिनिष्पद्यते' इत्येवंरूपायां श्रुतौ रूपांशे स्वाभाविकत्वबोधकात् स्वेनेति शब्दात् ज्ञापकात् ॥

525. **मुक्तः प्रतिज्ञानात्** (४-४-२) मुक्तः—कर्मसंबन्धतत्कृतदेहादिविनिर्मुक्तः स्वाभाविक-रूपेणाऽवस्थितश्चेतनः ('स्वेनरूपेणाऽभिनिष्पद्यते' इति श्रुत्या बोधितः,) प्रतिज्ञानात्—एतं.... व्याख्यास्यामि' इति मुक्तदशाबोधनप्रतिज्ञाया एव श्रवणात् ॥

526. **आत्मा प्रकरणात्** (४-४-३) आत्मा—प्रत्यगात्मभूतो जीवः, (आविर्भवनीयाप-हतपाप्मत्वादिगुणक एव ; न तु उत्पादनीयापहतपाप्मत्वादिकः) प्रकरणात्—जाग्रदाद्यात्मका-वस्थात्रयकलुषितं जीवं प्रक्रम्यैव 'य आत्मा अपहतपाप्मा' इति तद्गुणानामाम्नानात् ॥

### १५२. अविभागेन दृष्टत्वाधिकरणत् (४-४-४)

527. **अविभागेन दृष्टत्वात्** (४-४-४) मुक्तः—(परंज्योतिरुपसम्पद्य) आविर्भूतस्वस्वरूपः चेतनः, (मुक्तावनुभाव्यं परं ब्रह्म) अविभागेन—'अहं ब्रह्माऽस्मि' इति स्वात्मनः सकाशाद-पृथक्त्वेनैव अनुभवति, न तु पृथक्त्वेन, दृष्टत्वात्—ब्रह्मस्वरूपस्य स्वापृथक्सिद्धतयैव साक्षात्कृतत्वात् ॥

### १५३. ब्राह्माधिकरणम् (४-४-३) (सू. ५-७)

528. **ब्राह्मेण जैमिनिरुपन्यासादिभ्यः** (४-४-५) मुक्तः—(परं ज्योतिरुपसम्पद्य)

निवृत्ततिरोधानो जीवः, ब्राह्मेण—ब्रह्मसम्बन्धितया श्रुतिप्रतिपन्नेन अपहतपाप्मत्वदिना धर्मेण (आविर्भवति), उपन्यासादिभ्यः—ब्रह्मगुणानामेव तेषां जीवगुणतया श्रुतौ उपन्यासात् (तथा) सत्यसङ्कल्पत्वप्रयोज्यानां जक्षणादिक्रियाविशेषाणां कथनादेश्च इति, जैमिनिः—जैमिनिनामा आचार्यो मन्यते ॥

529. चितितन्मात्रेण तदात्मकत्वादित्यौडुलोमिः (४-४-६) चितितन्मात्रेण—चैतन्यमात्रात्मकेन स्वरूपेण (जीवः आविर्भवति), तदात्मकत्वात्—अस्य प्रत्यगात्मनः 'विज्ञानघनएवे' त्युक्तचैतन्यैकस्वरूपत्वात्, इति—एवमाशयम्, औडुलोमिः—औडुलोमिनामा आचार्यः मन्यते ॥

530. एवमप्युपन्यासात्पूर्वभावादविरोधं बादरायणः (४-४-७) एवमपि—विज्ञानघनत्वे सत्यपि, उपन्यासात्—'य आत्मा अपहतपाप्मा' इत्याद्यौपनिषदोपन्यासरूपात् प्रमाणात्, पूर्वभावात्—पूर्वेषामपहतपाप्मत्वादिगुणानामपि जीवात्मनि सद्भावात्, अविरोधं—विज्ञानघनत्वापहतपाप्मत्वाद्योः मिथो वैयधिकरण्यानापादकत्वम्, बादरायणः—भगवान् बादरायणनामा आचार्यः मन्यते ॥

१५४. सङ्कल्पाधिकरणम् (४-४-४) (सू. ८, ९)

531. सङ्कल्पादेव तच्छ्रुतेः (४-४-८) (आविर्भूतस्वरूपाणां मुक्तानां कामनायां सत्यां पित्रादिसृष्टिः) सङ्कल्पादेव—प्रयत्नान्तराद्यनपेक्षात् केवलात् मानसव्यापारादेव निष्पद्यते, तच्छ्रुतेः—तस्यैवार्थस्य ('सङ्कल्पादेवाऽस्य पितरः समुत्तिष्ठन्ति' इति) श्रुतिसिद्धत्वात् ॥

532. अत एव चाऽनन्याधिपतिः (४-४-९) अतएव—('स स्वराड्भवति' इति श्रुतेरेव प्रमाणात्, मुक्तः—आविर्भूतस्वरूपश्चेतनः, अनन्याधिपतिश्च—अकर्मवश्योऽपि भवति ॥

१५५. अभावाधिकरणम् (४-४-५) [सू. १०-१६]

533. अभावं बादरिराह ह्येवम् (४-४-१०) अभावम्—मुक्तस्याऽऽत्मनः शरीरेन्द्रियाणामभावम्, बादरिः—बादरिनामा आचार्यः मन्यते, हि—यतः, एवम्—मुक्तस्य शरीरेन्द्रियाद्यसम्बन्धरूपमर्थम्, आह—('अस्माच्छरीरात्समुत्थाय' इत्यादिना) श्रुतिः स्पष्टयति ॥

534 भावं जैमिनिर्विकल्पामननात् (४-४-११) भावम्—मुक्तस्याऽऽत्मनः शरीरेन्द्रियसम्बन्धम्, जैमिनिः—जैमिनिनामा आचार्यः मन्यते, विकल्पामननात्—विकल्पस्य-शरीरेन्द्रियादिकृतवैविध्यस्य, आमननात्—'स एकधा भवति त्रिधा भवति' इत्यादि श्रुत्या प्रतिपादनात् ॥

535. **द्वादशाहवदुभयविधं बादरायणोऽतः** (४-४-१२) **द्वादशाहवत्**—द्वादशाहनाम्नः क्रतोः, 'द्वादशाहमृद्धिकामा उपेयुः' इति 'उपैति' चोदनया सङ्कल्पवैलक्षण्यात् सत्रात्मकत्वम्, 'द्वादशाहेन प्रजाकामं याजयेत्' इति 'यजति' चोदनया सङ्कल्पवैलक्षण्यात् अहीनात्मकत्वं चेत्युभयविधत्वमिव, **उभयविधम्**—मुक्तात्मनोऽपि सशरीरत्वाशरीरत्वोभयप्रकारवत्त्वम्, **अतः**—मुक्तगतात् सङ्कल्पादेव हेतोः सिध्यतीति, **बादरायणः**—बादरायणनामा आचार्यः अभिप्रैति ॥

536. **तन्वभावे सन्ध्यवदुपपत्तेः** (४-४-१३) **तन्वभावे**—स्वसङ्कल्पेन सृष्टस्य शरीरेन्द्रियाद्युपकरणस्य राहित्ये, **सन्ध्यवत्**—स्वप्ने इव, **उपपत्तेः**—परमपुरुषसृष्टैरेव तत्तन्मात्रानुभाव्यैः देहाद्युपकरणैः भोगसिद्धेः, (सत्यसङ्कल्पोऽपि जीवः स्वभोगोपकरणं न सृजेदपि)॥

537. **भावे जाग्रद्वत्**—(४-४-१४) **भावे**—स्वसङ्कल्पसृष्टतन्वाद्युपकरणसत्वे, **जाग्रद्वत्**—प्रबोधदशास्थपुरुष इव, (भोगमनुभवति)॥

538. **प्रदीपवदावेशस्तथा हि दर्शयति** (४-४-१५) **प्रदीपवत्**—एकदेशवर्तिनो दीपस्य स्वप्रभया अनेकदेशप्रवेश इव, **आवेशः**—एकदेशस्थस्यात्मनः स्वप्रभारूपेण ज्ञानेन सर्वदेहेषु यथासङ्कल्पं व्याप्तिः सम्भवति इति। **तथा**—तमेव प्रकारम्, **दर्शयति हि**—'बालाग्र.... आनन्त्याय कल्पते' इति श्रुतिः स्पष्टयति खलु ॥

539. **स्वाप्ययसम्पत्त्योरन्यतरापेक्षमाविष्कृतं हि** (४-४-१६) ('प्राज्ञेनाऽऽत्मना सम्परिष्वक्तः न बाह्यं किंचन वेद नान्तरम्' इत्येतत्), **स्वाप्यय-सम्पत्त्ययोः**—सुषुप्तिमरणयोः **अन्यतरापेक्षम्**—अन्यतरां दशामुद्दिश्य प्रवृत्तम्, **हि**—यतः, **आविष्कृतम्**—'नाह खल्वयम्, इत्यादिश्रुत्या एतदेव स्पष्टीकृतम् (नत्वत्र मुक्तिदशाविचारः)॥

१५६. जगद्व्यापारवर्जाधिकरणम् (४-४-६) (सू. १७-२२)

540. **जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च** (४-४-१७) (आविर्भूतस्वरूपस्य मुक्तस्यैश्वर्यम्) **जगद्व्यापारवर्जम्**—निखिलचेतनाचेतनस्वरूपस्थितिप्रवृत्तिभेदनियमनं वर्जयित्वा इतरदेव, निर्व्याजब्रह्मानुभवमात्ररूपम्; **प्रकरणात्**—सर्वत्र जगद्व्यापारादेः परं ब्रह्म प्रक्रम्यैव श्रुत्यादिषु कथनात्, **असंनिहितत्वाच्च**—जगद्व्यापारप्रकरणे कुत्राऽपि श्रुतौ मुक्तप्रस्तावस्यैवाऽभावादपि ज्ञापकात् ॥

541. **प्रत्यक्षोपदेशादिति चेन्नाधिकारिकमण्डलस्थोक्तेः** (४-४-१८) **प्रत्यक्षेण**—'इमाँल्लोकान् कामान्नी' इत्यादिरूपया श्रुत्या, **उपदेशात्**—मुक्तस्याऽऽत्मनः जगद्व्यापारस्य स्पष्टं

ज्ञापनात्, ('जगद्व्यापारवर्जम्' इत्येतत् न युज्यते), **इति चेत्**—एवं शंकनं तु, **न**—न सम्यक्, **आधिकारिकमण्डलस्थोक्तेः**—भगवता लोकनियमनाधिकारे नियुक्तानां हिरण्यगर्भादीनां लोकेषु विद्यमानाः ये भोगाः, तदनुभवस्यैव तच्छ्रुत्युक्तत्वात्, न जगद्व्यापारसंभवः ।

542. **विकारावर्ति च तथा हि स्थितिमाह** (४-४-१९) **विकारावर्ति च**—निर्धूतनिखिलविकारं परंब्रह्म च सविभूतिकम्, (मुक्तश्चेतनः अनुभवति), **तथा हि**—अनुभवितृत्वेन हि, **स्थितिम्**—निर्विकारे निरतिशयानन्दे परेब्रह्मणि मुक्तात्मनः अवस्थानम्, **आह**—'अभयं प्रतिष्ठां विन्दते', 'लब्ध्वाऽऽनन्दी भवति' इत्यादिश्रुतिः स्पष्टीकरोति ॥

543. **दर्शयतश्चैवं प्रत्यक्षानुमाने** (४-४-२०) **प्रत्यक्षानुमाने**—श्रुतिस्मृती उभे अपि, **एवं च**—'जगद्व्यापारः परपुरुषासाधारणः' इत्येवमेव, **दर्शयतः**—स्पष्टीकुरुतः ।

544. **भोगमात्रसाम्यलिङ्गाच्च** (४-४-२१) **भोगमात्रे**—ब्रह्मयाथात्म्यानुभवरूपे भोगे एव, **साम्यलिङ्गाच्च**—मुक्तिदशायां जीवस्य परात्मना साकं साम्यप्रतिपादनरूपादपि ज्ञापकात्. (मुक्तैश्वर्यं जगद्व्यापारादिकं विहायैवेति निश्चीयते) ॥

545. **अनावृत्तिः शब्दादनावृत्तिः शब्दात्** (४-४-२२) **अनावृत्तिः**—मुक्तस्य जन्मव्याधिजराविपत्तिमरणैरत्यन्तसोपद्रवे संसारचक्रे पुनरप्रवेशः, **शब्दात्**—'आवर्तं नावर्तन्ते' 'न च पुनरावर्तते' 'पुनर्जन्म न विद्यते' इत्यादिश्रुति-स्मृत्यात्मकात् शब्दात् (निश्चीयते) ॥

इति सर्वं शुभम् ॥

आत्रेयश्रीश्रीनिवासराघवाचार्यसूनुना ।
रामभद्रेण विदुषा क्रतुनाथान्वयेन च ॥

शारीरकीयसूत्राणां पदार्थविवृतिः शुभा ।
अध्येतॄणां धारणाय ग्रथिताऽस्तु हरेर्मुदे ॥



श्रीः

[अध्यायानां संख्या नाम च]

शारीरकाभिधे शास्त्रे भगवान् बादरायणः ।
निर्ममे चतुरोऽध्यायान् चतुर्भिश्चरणैर्युतान् ॥ १ ॥

समन्वयोऽविरोधश्च साधनं फलमेव च ।
अध्यायानां तु नामानि ह्यन्वर्थानि यथायथम् ॥ २ ॥

[शास्त्रे अधिकरणानां सूत्राणां च संख्या]

अध्याये प्रथमे(1) न्यायाः पञ्चत्रिंशदुदीरिताः(35) ।
द्वितीये लक्षणे(2) न्यायाः त्रयस्त्रिंशत् (33) प्रकीर्तिताः ॥ ४ ॥

तार्तीयीके लक्षणे तु(3) पञ्चपञ्चाश(55) दीरिताः ।
तुर्ये तु लक्षणे(4) न्यायाः त्रयस्त्रिंशत् (33) स्मृतास्तथा ॥ ५ ॥

[प्रत्यध्यायं सूत्रसंख्या]

(1)अध्याये प्रथमे सूत्राण्यत्रष्टिंशत् शताधिकम् ।(138)
शतञ्चैकोनपञ्चाशत् (149) द्वितीये लक्षणे(2) सिताम् ॥ ६ ॥

अध्याये तु (3) तृतीये स्यात् व्यशीत्युत्तरकं शतम् । (182)
तुर्येऽध्याये तु(4) सूत्राणां (76) संख्या षट्सप्ततिर्मता ॥ ७ ॥

[प्रतिपादम् अधिकरणसंख्या]

आद्ये(1) पादे दशैकं च(11) द्वितीये(2) चरणेतु षट् (6) ।
तृतीये(3) दश संख्याकाः(10) , तुरीये(4) ऽष्टावधिक्रियाः(8) ॥ ८ ॥

पञ्चमे(5) तु दश न्यायाः (10), षष्ठे(6) ऽष्टौ(8) परिकीर्तिताः ।
सप्तमे(7) सप्तसंख्याताः(7), अष्टमेऽष्टौ(8) निरूपिताः ॥ ९ ॥

पादे तु नवमे(9) षट्(6)स्युः, दशमे(10) ऽष्टौ(8) निरूपिताः ।
एकादशे(11) षड्विंशतिः(26) स्युः, द्वादशे(12) दश पञ्च च(15) ॥१०॥

त्रयोदशे(13) दशैकं च(11) स्याद्दशैकं(11) चतुर्दशे(14) ।
पञ्च(5) पञ्चदशे (15) चैव षोडशे(16) षडुदीरिताः(6) ॥ ११ ॥

[प्रतिपादं सूत्रसंख्याः]

(1) पादेऽयोगव्यवच्छेदे सूत्रद्वात्रिंशकं(32) मतम् ।
(2) अन्ययोगव्यवच्छेदे त्रयस्त्रिंशदुदीरिता(33) ॥ १२ ॥

(3) तत्रैव च तृतीये तु चत्वारिंशच्चतुष्टयम् (44) ।
(4) तत्रैव च चतुर्थे स्यादेकोनत्रिंशसूत्रता(29) ॥ १३ ॥

(5) स्मृतिपादे पञ्चमे तु सूत्रषट्त्रिंशकं मतम् (36) ।
(6) षष्ठे तु स्यात्तर्कपादे द्विचत्वारिंशकं मतम् (42) ॥ १४ ॥

(7) सप्तमे तु वियत्पादे पञ्चाशत् द्व्युत्तरं स्मृतम् (52) ।
(8) अष्टमे तु प्राणपादे चैकोनं सूत्रविंशकम् (19) ॥ १५ ॥

(9) वैराग्यपादे नवमे सूत्राणां सप्तविंशकम् (27) ।
(10) द्विलिङ्गे दशमे पादे चत्वारिंशदुदीरितम् (40) ॥ १६ ॥

(11) एकादशे चतुष्षष्टिः(64) गुणानामुपसंहृतौ ।
(12) अङ्गपादे द्वादशे तु पञ्चाशच्चैकमुच्यते(51) ॥ १७ ॥

(13) पादे चावृत्तिसंज्ञेऽस्मिन् एकोनं सूत्रविंशकम् (19) ।
(14) उत्क्रान्तिसंज्ञके पादे सूत्रविंशकमुच्यते(20) ॥ १८ ॥

(15) गतेःपादे पञ्चदशे सूत्राणि दश पञ्च च(15) ।
(16) मुक्तिसंज्ञेऽन्तिमे पादे सूत्रद्वाविंशकं मतम् (22) ॥ १९ ॥

अध्याय-पादाधिकृतिसूत्राणां गणना त्वियम् ।
श्रीमद्रामानुजमते निर्णीता सम्प्रदायतः ॥ २० ॥



॥ श्रीः ॥

# शारीरकशास्त्रस्य तद्गताध्यायानां च सारार्थसङ्क्षेपः—२

## शारीरकशास्त्रसारार्थः—१

'पुरुषोत्तम' शब्दाभिधेयं परतत्वभूतं परं ब्रह्मैव, सकलप्रमाणाविरोधेन परमपुरुषार्थतया सर्ववेदान्तवेद्यम्। अत एव च तापत्रयातुरैः पुरुषैः, तापाभिहतिनिवारणपूर्वकम् अमृतत्व-प्राप्तये, तदेव ब्रह्म जिज्ञास्यम्। ततश्च न्यासोपासनादिभिः औपनिषदीभिः विविधाभिः निखिलाभिरपि विद्याभिः आराधनद्वारा तदेवोपास्यम्, प्रसादनीयं च। प्रसन्नेन तेन प्रीति-विषयीकृतैः मुमुक्षुभिः, तेनैव प्रापकतापन्नेन अर्चिरादिगतिद्वारा तदेव च प्राप्यम्—इति ॥

## शारीरकचतुरध्यायीविभक्तार्थसङ्क्षेपः—२

| अध्यायनाम | अधि. | सू. | प्रतिपाद्या अर्थाः |
|---|---|---|---|
| (१) समन्वयाध्यायः | 35 | 138 | सर्वे च वेदान्ताः परतत्वभूतस्य परस्य ब्रह्मणः परमपुरुषार्थत्वेन रूपेण प्रतिपाद्यत्वान्वययोग्यताप्रमितिजनकाः इति प्रतिपादनम्, तदर्थं च तस्मिन् जगत्कारणत्वायोगव्यवच्छेदस्य, जगत्कारणत्वे ब्रह्मान्ययोगव्यवच्छेदस्य च साधनम् ॥ |
| (२) अविरोधाध्यायः | 33 | 149 | वेदान्तानां प्रथमाध्यायोक्तार्थविषयकप्रमितिजनकत्वविषये, तर्क-तन्त्रादिभिः प्रतिरोधमाशङ्क्य, आवश्यकैः न्यायैः तादृशप्रतिरोधाभावनिर्णयः ॥ |
| (३) साधनाध्यायः | 55 | 182 | वेदान्तेषु परमपुरुषार्थभूतपरब्रह्मप्रापकतया विहितानां हितात्मकानां विविधानां विद्यानां चिन्तनम्। |
| (४) फलाध्यायः | 33 | 76 | वेदान्तोदितसर्वविद्याफलभूतस्य परमपुरुषार्थरूपस्य परिपूर्णब्रह्मानुभवस्य चिन्तनम्। |

आहत्य अधिकरणानि 156 आहत्य सूत्राणि 545



॥ श्रीः ॥

# शारीरकीयानां षोडशपादानाम् अर्थसारः—३

| पादाः | अ. | सू. | पादार्थाः | वेद्यं रूपम् |
|---|---|---|---|---|
| | | | **१. समन्वयाध्यायः** | |
| 1 अयोगव्यवच्छेदः | 11 | 32 | उपनिषद्गतैः अस्पष्टतर जीवादि-लिङ्गकैः वाक्यैः 'ब्रह्म जगत्कारण-मेव, इति समर्थनम् । | स्पष्टत्वम् |
| 2 अन्ययोगव्यवच्छेदः | 6 | 33 | अस्पष्टजीवादिलिङ्गकैः श्रुतिगतैः वाक्यैः 'ब्रह्मैव जगत्कारणम्' इति समर्थनम् । | देहित्वम् |
| 3 अन्ययोग ,, | 10 | 44 | स्पष्टजीवादिलिङ्गकैः श्रुतिगतैः वाक्यैः 'ब्रह्मैव जगतः कारणम्' इति स्थापनम् । | स्वनिष्ठत्वम् |
| 4 अन्ययोग ,, | 8 | 29 | स्पष्टतरजीवादिलिङ्गकैः श्रुतिगतैः वाक्यैः 'ब्रह्मैव जगतो निदानम्' इति साधनम् । | निरवधि-महिमत्वम् |
| | | | **२. अविरोधाध्यायः** | |
| 5 स्मृतिपादः | 10 | 36 | ब्रह्मणः जगदुपादानत्वे, जगन्नि-मित्तत्वे च आशङ्कितानां अशेषाणां दोषाणां निरसनम् । | अपास्तबाधत्वम् |
| 6 तर्कपादः | 8 | 42 | साङ्ख्यादिपक्षाणां प्रतिक्षेपः, पाञ्च-रात्रप्रामाण्यसमर्थनं च । | श्रितासत्वम् |
| 7 वियत्पादः | 7 | 52 | वियदादेः प्रपञ्चस्य ब्रह्मकार्यत्व-चिन्ता | आकाशात्मादेः उचितजनकत्वम् |
| 8 प्राणपादः | 1 | 19 | प्राणादीनां जीवोपकरणानां ब्रह्म-कार्यत्वचिन्तनम् । | इन्द्रियादेः उचितजनकत्वम् |

| | पादाः | अ. | सू. | पादार्थाः | वेद्यं रूपम् |
|---|---|---|---|---|---|
| | | | | **३. साधनाध्यायः** | |
| 9 | वैराग्यपादः | 6 | 27 | जाग्रदवस्थजीवगतानां दोषाणां चिन्तनम् | संसृतौ तन्त्रवाहित्वम् |
| 10 | उभयलिङ्गपादः | 1 | 40 | परस्य ब्रह्मणः हेयप्रत्यनीकत्व कल्याणगुणाकरत्वयोः चिन्तनम् | निर्दोषत्वदिरम्यत्वम् |
| 11 | गुणोपसंहारपादः | 26 | 64 | उपनिषदुक्तानां विद्यानां मिथो भेदाभेदचिन्ता | वहुभजनपदत्वम् |
| 12 | अङ्गपादः | 15 | 51 | विद्याङ्गकर्मादिविषयिणी चिन्ता | स्वार्हकर्मप्रसाद्यत्वम् |
| | | | | **४. फलाध्यायः** | |
| 13 | आवृत्तिपादः | 11 | 19 | विद्यास्वरूपशोधनपूर्वकं विद्याफल चिन्तनम् । | पापच्छेतृत्वम् |
| 14 | उत्क्रान्तिपादः | 11 | 20 | निष्पन्नोपासनस्य तदितरस्य च देहादुत्क्रमणप्रकारचिन्ता | ब्रह्मनाडीगतिकृत्त्वम् |
| 15 | गतिपादः | 5 | 15 | देहादुत्क्रान्तस्य अर्चिरादिना मार्गेण गतिप्रकारचिन्ता | अतिवोढृत्वम् |
| 16 | मुक्ति(फल)पादः | 6 | 22 | मुक्तैश्वर्यप्रकारचिन्ता | साम्यदत्वम् |

आहत्य अधिकरणानि 156 आहत्यसूत्राणि 545

॥ इति शारीरकीयाणां षोडशपादानामर्थाः ॥



